| | | श्लोकसङ्ख्या |
|---|---|---|
| ५३ | नृसिंहाष्टादशाक्षरानुष्टुभयोः पूर्वमेवोक्तत्वम् । | ११९ |
| ५४ | पुनरपि केषाञ्चित्पूर्वोक्तत्वम् । | १२० |
| ५५ | यन्त्रधारकाणां मन्त्रोद्धारः । | १२१ |
| ५६ | नारायणास्त्रमन्त्रोद्धारः । | १२३ |
| ५७ | चक्रादि षोडशास्त्र मन्त्रोद्धारः । | १२५ |
| ५८ | मन्त्रमाहात्म्य ज्ञानपूर्वकं दिग्बन्धादिमन्त्रैरर्चने फलम् । | १२७ |
| ५९ | दिग्बन्ध मन्त्रोद्धारः । | " |
| ६० | वह्नि प्राकार मन्त्रोद्धारः । | १३१ |
| | चक्रगायत्र्युद्धारः । | १३२ |
| ६१ | तस्यैव प्रणवर्वैशिष्ट्यम् । | १३४ |
| ६२ | आवाहन मन्त्रोद्धारः । | १३६ |
| ६३ | सम्प्रदान मन्त्रोद्धारः । | १४२ |
| ६४ | विसर्जनमन्त्रोद्धारः । | १४४ |
| ६५ | शक्तिहासमन्त्रोद्धारः । | १४६ |
| ६६ | सुदर्शनानुष्टुभ मन्त्रोद्धारः । | १५२ |
| ६७ | नृसिंहगायत्र्युद्धारः । | १५५ |
| ६८ | एतदादि मन्त्राणां विनियोगः निगमनम् । | १५९ |


॥ चतुर्विंशाध्यायविषयाः पूर्णाः ॥

---

॥ श्रीः ॥

## ॥ पञ्चविंशाध्यायविषयाः ॥

---


| | | |
|---|---|---|
| १ | सनकस्य सुदर्शनाराधन प्रश्नः । | १ |
| २ | आराधनस्य फलकथनपूर्वं उत्तरदानप्रतिज्ञा । | २ |
| ३ | आचार्यस्य देहशुद्ध्यादि । | ४ |
| ४ | कवाटोद्घाटनादि । | ५ |
| ५ | प्रासादासनशुद्धिः । | ७ |
| ६ | करशुद्धिस्थानशुद्धिविघ्नविरेचनदिग्बन्धनावकुण्ठन प्राणायामाः । | ८ |
| ७ | संग्रहेण भूतशुद्धिः । | ११ |
| ८ | तस्यैव समन्त्रं विवरणञ्च । | १३ |
| ९ | मातृकान्यासप्रकारः करयोः, व्यापकन्यासः, तत्रैव पृथङ्न्यासे प्रकारद्वयं, देहे व्यापकन्यासः, तत्रैव पृथङ्न्यासप्रकारः | १८ |
| १० | मूलमन्त्रस्य करयोः शरीरे च न्यासः । | २९ |
| ११ | तस्यैव अङ्गन्यासः । | ३३ |
| १२ | मूलमन्त्रस्य शरीरे न्यासाः, अङ्गानां च । | ३४ |
| १३ | करयोः अस्त्र भूषणन्यासः । | ३८ |
| १४ | अंसयोः शक्तिन्यासः । | ३९ |
| १५ | अहङ्ग्रहोपासनमात्मनो रक्षणम् । | ४० |
| १६ | मानसयागविधिः | ४२ |
| १७ | प्रत्याहारासनयोर्विधिः । | " |
| १८ | आसनकल्पनस्य पूर्वोक्तत्वं, तस्य सुदर्शननृसिंहयोस्तुल्यत्वादि । | ४४ |
| १९ | शब्दशक्तिस्वरूपानुवर्णनम् । | ५० |
| २० | पश्यन्तीस्वरूपम् । | ५१ |
| २१ | वर्णावसाने द्योतमान प्रपञ्चातीतस्यानुवर्णनं, तस्य भावना भाव्यत्वञ्च । | ५४ |
| २२ | पूजितस्य सर्वफलप्रदत्वम् । | ५५ |
| २३ | तस्यैव भक्तानुग्रहाय सुदर्शनरूपेणावतीर्णत्वम् । | " |
| २४ | सुदर्शन शब्दनिर्वचनम् | ५९ |
| २५ | नृसिंहशब्दनिर्वचनम् । | ६१ |
| २६ | अनयोरुपासनस्य फलम् । | ६२ |
| २७ | आराधनस्य एतद्ज्ञानपूर्वकं कर्तव्यत्वम् । | " |
| २८ | परस्मात् स्वहृदये आवाहनम् । | ६३ |
| २९ | सुदर्शनस्य वाच्यवाचकरूपेण द्वैविध्यम् । | ६४ |
| ३० | पुनस्तस्य परसूक्ष्मस्थूलरूपेण त्रैविध्यं तद्विवरणञ्च । | ६५ |
| ३१ | पुनस्तस्य मन्त्ररूपस्य परसूक्ष्मादि भेदेन त्रैविध्यम् । | ६७ |
| ३२ | पुनस्तस्य स्वपरापरभेदः, अपरस्य त्रैविध्यं, तद्विवरणञ्च । | ६८ |
| ३३ | एतादृशज्ञानपूर्वकं मानसार्चनक्रमः । | ६९ |
| ३४ | मानसहोमः सप्रकारः । | ७२ |
| ३५ | अपराह्ण नृसिंहमानसाराधनम् । | ८० |
| ३६ | यन्त्रद्वयगतानां मन्त्राणां मानसार्चा । | ८१ |
| ३७ | बाह्ययागविधिः । | ८२ |
| ३८ | पात्रकल्पनं, देहचिन्यस्तमन्त्र द्वारस्थार्चनं, गर्भद्वार बाह्यमण्टप द्वारदेवाः, गवाक्षयोः देवते, तत्पूजा अन्तः प्रवेशः, आधारशक्त्याद्यर्चनं गणनाथाद्यर्चनं, प्रतिष्ठितस्य आवाहनं, भावनाक्रमः, मन्त्राङ्गायुध- | |

श्लो. संख्या

भूषणानां न्यासः, तेषामालयार्चा, ततः यन्त्रस्थानां भोगाः, आराधनं, मन्त्रजपः, तन्निवेदनञ्च। ८३

३९ अपराह्णस्थ नृसिंहस्य सपरिवारस्य आराधनं, निगमनञ्च। ९६

४० अन्याराधनोपक्षेपः। ९७

॥ पञ्चविंशाध्यायविषयाः पूर्णाः ॥


॥ श्रीः ॥

॥ षड्विंशाध्यायविषयाः ॥


१ सनकस्य प्रश्नः, अग्निपूजाविषयः। १

२ शाण्डिल्यस्य उत्तरदानप्रतिज्ञा। २

३ यागशालालक्षणम्। ३

४ तत्र कल्प्य वेदिकालक्षणम्। ४

५ तत्र चक्राब्जकुण्डविधिः। ५

६ तस्य लक्षणं, तदर्थं सूत्रपातसंख्याक्रमश्च; मध्ये वृत्तकल्पनप्रकारः, ओष्ठ, कर्णिका, केसर, पत्र, तदग्र, नाभि, अर, नेमि, मेखलानां प्रमाणादि, नेमिपर्यन्तानां वृत्तत्वं, मेखलायाश्चतुरश्रत्वञ्च। ६

७ कुण्डनिर्माणक्रमः। १२

८ कुण्डस्य मानेन बहुविधत्वं, तेषु अन्यतमस्य इच्छया ग्राह्यत्वम्। २८

९ होमद्रव्यविन्यासक्रमः। ३०

१० कुण्डसंस्कारादि पूर्णाहुतिपर्यन्तानां विधिः ,,

११ यन्त्रस्थस्य विसर्जनम्। ३४

१२ होमसमर्पणं, पितृसन्तर्पणं, बलिदानं, यज्ञशिष्टदानं, अनुयागादि च। ,,

१३ शान्तिकादिषु पूजितस्यास्य सर्वसमीहित पूरकत्वम्। ३७

१४ शान्तिकादिषु मन्त्रविशेषाः। ३९

१५ अत्रानुक्तानां अहिर्बुध्न्यसंहितानुसारेण कर्तव्यत्वम्। ४२

१६ आयतनाङ्गत्वेन स्थापितानां कर्तव्यकार्यादि विभागः। ४४

१७ निगमनञ्च। ४८

१८ उक्तार्थस्य अतिरहस्यत्वादयोग्यजनेभ्यः गोपनीयत्वम्। ४९

२० एतत्प्रकाशन योग्याः ५०

॥ षड्विंशाध्यायविषयाः पूर्णाः ॥


॥ श्रीरस्तु ॥

॥ श्रीः ॥
॥ श्रीमते रामानुजाय नमः ॥
श्रीरङ्गनाथपरब्रह्मणे नमः ।

# ॥ श्रीपारमेश्वर संहिता ॥

## प्रथमोऽध्यायः ।

ओं ॥ नमः सकलकल्याणदायिने चक्रपाणये ।
विषयार्णवमग्नानां समुद्धरणहेतवे ॥ १ ॥

तोताद्रिशिखरक्षेत्रे देवगन्धर्वसेविते ।
पुण्यतीर्थसमायुक्ते सर्वर्तुकुसुमान्विते ॥ २ ॥

प्रशस्ताश्रमसंयुक्ते पुण्यक्षेत्रोपशोभिते ।
वेदवेदान्तनिष्ठैस्तु तपोनिष्ठैर्महर्षिभिः ॥ ३ ॥

सांख्यसिद्धान्तसंयुक्तैर्योगसिद्धान्तवेदिभिः ।
इतिहासपुराणज्ञैर्धर्मशास्त्रार्थकोविदैः ॥ ४ ॥

वेदाङ्गज्ञानकुशलैर्युक्ते देवर्षिभिस्तथा ।
राजर्षिभिः समायुक्ते मन्त्रसिद्धैर्महात्मभिः ॥ ५ ॥

सनको नाम योगर्षिर्ब्रह्मपुत्रो महातपाः ।
भगवज्ज्ञानसिद्ध्यर्थं तपस्तेपे सुदुश्चरम् ॥ ६ ॥

शतवर्षं ध्यायमाने परमात्मानमात्मनि ।
न लेभेऽभि(सं)मतं सोऽपि तप्त्वा घोरतरं तपः ॥ ७ ॥

शोकेन महताऽऽविष्टो बभूव स मुनिस्तदा ।
ततः शोकार्णवे मग्नं जितक्रोधं जितेन्द्रियम् ॥ ८ ॥

दान्तं योगाङ्गनिरतं तं भक्तं भक्तवत्सलः ।
वाक्यमेतज्जगद्धाता जगाद जगतो हितम् ॥ ९ ॥

वासुदेवः परंज्योतिरव्ययः पुरुषोत्तमः ।
श्रीभगवानुवाच –
त्वया योगीश्वरेणेह सुतप्तं तप उत्तमम् ॥ १० ॥

प्राप्स्यसे न चिराद्ब्रह्मन् महतस्तपसः फलम् ।
समाश्वसिहि भद्रं ते मा विषीद महामते ! ॥ ११ ॥

कृतकृत्यो जगत्यस्मिन् शाण्डिल्यः श्रूयते महान् ।
तमाश्रयस्व भद्रं ते भगवद्धर्मसिद्धये ॥ १२ ॥

एतस्मिन् पर्वतश्रेष्ठे(वरे) पुराऽनेन महात्मना ।
साक्षाद्भगवतो व्यक्तादच्युतादच्युताभिधात् ॥ १३ ॥

अधीताखिलसुपर्णाख्याः साक्षात्सद्ब्रह्मवाचकाः ।
शाखाश्च निषदः सर्वाः संहिता ब्राह्मणाभिधाः ॥ १४ ॥

निरुक्तानि ततो ज्ञाताः पदार्थाः सप्त च क्रमात् ।
ज्ञानं च द्विविधं ज्ञातं शास्त्राणि विविधानि च ॥ १५ ॥

त्रयोदशविधं कर्म द्वादशाध्यात्मसंयुतम् ।
श्रुत्यैवं प्रथमं शास्त्रं रहस्याम्नायसंज्ञितम् ॥ १६ ॥

दिव्यमन्त्रक्रमोपेतं मोक्षैकफललक्षणम् ।
भूयः संचोदितात्तस्मात्तेन लोकहितैषिणा ॥ १७ ॥

श्रुतं विस्तरतः शास्त्रं भोगमोक्षप्रदं हि यत् ।
अनुष्टुप्छन्दोव(न्धे)द्धेन प्रोक्तं भगवता स्वयम् ॥ १८ ॥

सात्वतं पौष्करं चैव जयाख्येत्येवमादिकम् ।
तत्सर्वं विदितं सम्यक् शाण्डिल्यस्य महात्मनः ॥ १९ ॥

एवं सकलशास्त्रज्ञः शाण्डिल्यः परमो गुरुः ।
आस्ते शिष्यैः परिवृतः स्वाश्रमे श्रमनाशने ॥ २० ॥

पाञ्चकाल्यं परं यत्नं कुर्वाणः सर्वदा वशी ।
स ते वक्ष्यति धर्मज्ञो धर्मं भागवतं मुने ॥ २१ ॥

तमाश्रयस्व भद्रं ते भगवज्ज्ञानसिद्धये ।
इत्युक्त्वाऽस्तमिता वाणी वासुदेवसमीरिता ॥ २२ ॥

इत्यद्भुततमं वाक्यं श्रुत्वा हृष्टतनूरुहः।
तदा कृतार्थमात्मानं मन्यमानो महामुनिः ॥ २३ ॥
शाण्डिल्यदर्शनाकाङ्क्षी संचचाराचलाधिपम्।
अपश्यदाश्रमश्रेष्ठं शाण्डिल्यस्य महात्मनः ॥ २४ ॥
नानापुष्पसमाकीर्णं नानाफलसमन्वितम्।
नानापक्षिगणैर्जुष्टं नानामृगनिषेवितम् ॥ २५ ॥
कमलोत्पलसंकी(पू)र्णैः शोभितं कमलाकरैः।
भगवद्धर्मजिज्ञासापरैः शान्तैरमत्सरैः ॥ २६ ॥
मुनिमुख्यैः समाकीर्णं सर्वत्र च मुमुक्षुभिः।
संप्रविश्य तमद्राक्षीन्मुनिमुख्यैरुपासितम् ॥ २७ ॥
शिष्यैः परिवृतं शान्तैरात्मनिष्ठं दयापरम्।
दिव्यज्ञानोपपन्नं तं दृष्ट्वा दिव्यक्रियापरम् ॥ २८ ॥
उद्वहन्तं परां भक्तिं वासुदेवे परात्परे।
अभ्यवन्दिष्ट सनको विनयात्तस्य पादयोः ॥ २९ ॥
तिष्ठन्तं भगवद्धर्मं दृष्ट्वा दिव्येन चक्षुषा।
शाण्डिल्यो मुनिशार्दूलः सनकं ब्रह्मसंभवम् ॥ ३० ॥
अब्रवीन्मधुरं वाक्यं कृतार्थोऽसि महामुने।
भगवान् सुप्रसन्नस्ते सुतप्तं तप उत्तमम् ॥ ३१ ॥
आदिष्टोऽहं भगवता भवदर्थं तपोनिधे।
इत्युक्त्वाऽध्यापयामास वेदमेकायनाभिधम् ॥ ३२ ॥
मूलभूतस्तु महतो वेदवृक्षस्य यो महान्।
सब्रह्मवासुदेवाख्य(ख्यं)परतत्त्वैकसंश्रयम् ॥ ३३ ॥
दिव्यैर्बलादिकैर्मन्त्रैः साक्षात्तत्प्रतिपादकैः।
अलङ्कृतमसन्दिग्धमविद्यातिमिरापहम् ॥ ३४ ॥
अध्याप्य संजगादास्य स्वरूपं च समागति(त)म्।
शाण्डिल्यः—
एष कार्तयुगो धर्मो निराशीःकर्मसंज्ञितः ॥ ३५ ॥
योगाख्यो योगधर्माख्यः शास्त्राद्यश्च समागमः।
प्रवर्त्यते भगवता प्रथमे प्रथमे युगे ॥ ३६ ॥
युगेषु मन्दसञ्चार इतरेष्वितरेष्वपि।
अनन्तचेष्टादध्यक्षादनिरुद्धात् सनातनात् ॥ ३७ ॥
ब्रह्मणो मानसं जन्म प्रथमं चाक्षुषं स्मृतम्।
द्वितीयं वाचिकं चान्यच्चतुर्थं श्रोत्रसंभवम् ॥ ३८ ॥
नासिक्यमपरं चान्यदण्डजं पद्मजं तथा।
एतेष्वपि च सर्वेषु साक्षाद्भगवतो विभोः ॥ ३९ ॥
ब्रह्मणा मुनिमुख्यैश्च सुपर्णाद्यैर्महर्षिभिः।
वालखिल्यमुखैश्चान्यैः क्रमाद्राजर्षिभिस्तथा ॥ ४० ॥
एष प्रकृतिधर्माख्यः प्राधीतः प्रथमो द्विज।
सप्तमे पद्मजे सर्गे प्राप्तो भगवतस्तथा ॥ ४१ ॥
विवस्वता ततः प्राप्तो मनुनेक्ष्वाकुणा ततः।
इक्ष्वाकुणा च कथितो व्याप्य लोकानवस्थितः ॥ ४२ ॥
एष एव महान् धर्म आद्यो विप्र! सनातनः।
दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ॥ ४३ ॥
चातुरात्म्यपरैर्नित्यं पञ्चकालपरायणैः।
बलादिमन्त्रनिरतैर्देवतान्तरवर्जितैः ॥ ४४ ॥
एष धर्मो यथा प्राप्तो मया तद्व(निग)दतः शृणु।
साङ्गोपनिषदा वेदाः समधीता मया पुरा ॥ ४५ ॥
ऋग्यजुःसामसंज्ञास्तु संकीर्णा देवतान्तरैः।
व्यामिश्रयागसंयुक्ताः प्रवृत्तिफलदायिनः ॥ ४६ ॥
तदर्थाश्च परिज्ञाता यथान्यायं यथाविधि।
क्वचित् क्वचित् प्रदेशेषु भगवन्तं जगत्पतिम् ॥ ४७ ॥
तदीयं कर्म च ज्ञानमप्रणाड्या वदन्ति हि।
तथा तदतिसंक्षिप्तमनभिव्यक्तलक्षणम् ॥ ४८ ॥
अग्नीन्द्रादिप्रणाड्यैव प्रदेशेषु बहुष्वपि।
प्रवदन्ति जगन्नाथं तथा च सकलाः क्रियाः ॥ ४९ ॥
नित्यादिका मुनिश्रेष्ठ! प्रवृत्तिफलसंयुताः।
देवतान्तरनाड्यैव प्रब्रुवन्ति सुविस्तरात् ॥ ५० ॥
तथा क्वचित् क्वचिद्विप्र प्रवदन्ति च केवलम्।

इन्द्रादिदेवतावर्जं तत्कर्माऽपि सुविस्तरम् ॥ ५१ ॥
मन्त्राः प्राचुर्यतस्तत्र फलसङ्गसमन्विताः।
एवं व्यामिश्ररूपत्वात्तेषु निष्ठां न लब्धवान् ॥ ५२ ॥
यस्तु सर्वपरो धर्मो यस्मान्नास्ति महत्तरः।
वासुदेवैकनिष्ठस्तु देवतान्तरवर्जितः ॥ ५३ ॥
तज्जिज्ञासा बलवती तदा ह्यासिरभून्मम।
ततोऽत्र पर्वतश्रेष्ठे तपस्तप्तं मयोत्तमम् ॥ ५४ ॥
अनेकानि सहस्राणि वर्षाणां तपसोऽन्ततः।
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ॥ ५५ ॥
साक्षात्सङ्कर्षणाद्व्यक्तात् प्राप्त एव महत्तरः।
एष एकायनो वेदः प्रख्यातः सात्वतो विधिः ॥ ५६ ॥
दुर्विज्ञेयो दुष्करश्च प्रतिबुद्धैर्निषेव्यते।
मोक्षायनाय वै पन्था एतदन्यो न विद्यते ॥ ५७ ॥
तस्मादेकायनं नाम प्रवदन्ति मनीषिणः।
श्वेतद्वीपे पुराऽधीतो नारदेन सुरर्षिणा ॥ ५८ ॥
सनः सनत्सुजातश्च भवानपि सनन्द(क)नः।
सनत्कुमारः कपिलः सप्तमश्च सनातनः ॥ ५९ ॥
एते एकान्तिधर्मस्य आचार्याश्च प्रवर्तकाः।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ ६० ॥
वसिष्ठश्च महातेजा एते चित्रशिखण्डिनः।
मनुः स्वायम्भुवश्चापि समाराध्य जगत्पतिम् ॥ ६१ ॥
महता तपसा चैव देवं नारायणं प्रभुम्।
दिव्यं वर्षसहस्रं तु तदन्ते समधीत्य च ॥ ६२ ॥
मूलश्रुतिं यथावच्च ऋषयोऽध्यापितास्तु तैः।
ततस्ते ऋषयस्त्वष्टौ लोकानां हितकाम्यया ॥ ६३ ॥
श्लोकानां शतसाहस्रैर्मूलवेदं निरीक्ष्य च।
तथा दिव्यानि तन्त्राणि सात्वतादीनि चक्रिरे ॥ ६४ ॥
अन्यच्छास्त्रं तु तन्त्राख्यमस्मान्मन्वादयोऽपि च।
धर्मशास्त्राण्यनेकानि करिष्यन्ति यथातथम् ॥ ६५ ॥
अन्येषामपि शास्त्राणां योनिरेतद्भविष्यति।

अस्मिन् धर्मश्च कामश्च अर्थश्चोक्तः सुविस्तरम् ॥ ६६ ॥
मोक्षश्च सूचितः पश्चाल्लोकश्च यथातथम्।
अश्वमेधादयो यज्ञा अधिकृत्याच्युतं हरिम् ॥ ६७ ॥
यथा क्रियन्ते च तथा द्विपदक्षार्णपुरस्सरैः।
निवृत्तिफलदैर्मन्त्रैस्तस्यासाधारणैर्हरेः ॥ ६८ ॥
पूजिता विनियुज्यन्ते तस्मिंस्तस्मिंश्च कर्मणि।
ऋगादिमन्त्राः सर्वेऽपि तथा चास्मिन् प्रकीर्तिताः ॥
वसूराजोपरिचरो मूलवेदेन संस्कृतः।
स्वर्गलोकाधिकारार्थमेतदुक्तप्रकारतः ॥ ७० ॥
अश्वमेधादिकान् यज्ञानन्यशिष्टयथाविधि।
अन्यांश्च भगवद्यागान् स्विप्रवृत्त्यधिकारतः ॥ ७१ ॥
इति श्रुतं मया पूर्वं स चार्थः प्रतिभाति मे।
सुमन्तुर्जैमिनिर्ब्रह्मन् भृगुश्चैवौपगायनः ॥ ७२ ॥
मौञ्ज्यायनश्च तत्सर्वं सम्यगध्यापिता मया।
नरनारायणाभ्यां तु जगतो हितकाम्यया ॥ ७३ ॥
तथाऽनुष्ठीयते मूलधर्मो बदरिकाश्रमे।
एष प्रकृतिधर्माख्यो वासुदेवैकगोचरः ॥ ७४ ॥
प्रवर्तते कृतयुगे ततस्त्रेतायुगादिषु।
विकारवेदाः सर्वत्र देवतान्तरगोचराः ॥ ७५ ॥
महतो वेदवृक्षस्य मूलभूतो महानयम्।
स्कन्धभूता ऋगाद्यास्ते शाखाभूतास्तथा मुने ॥ ७६ ॥
जगन्मूलस्य देवस्य वासुदेवस्य मुख्यतः।
प्रतिपादकतासिद्धा मूलवेदाख्यता द्विज! ॥ ७७ ॥
आद्यं भागवतं धर्ममादिभूते कृते युगे।
मानवा योग्यभूतास्तु अनुतिष्ठन्ति नित्यशः ॥ ७८ ॥
ततस्त्रेतायुगे सर्वं नानाकामसमन्विताः।
व्यामिश्रयाजिनो भूत्वा त्यजन्त्याद्यं सनातनम् ॥ ७९ ॥
अन्तर्दधाति (धर्मो) सर्वोऽयं वासुदेवसमाहृतः।
ततो योग्याय भगवान् प्रादुर्भावयति स्वयम् ॥ ८० ॥
यथा पुरा मया प्राप्तो देवाद् ज्ञानबलात्मनः।

इत्यद्भुततमं वाक्यं श्रुत्वा हृष्टतनूरुहः।
तदा कृतार्थमात्मानं मन्यमानो महामुनिः ॥ २३ ॥
शाण्डिल्यदर्शनाकाङ्क्षी संचचाराचलाधिपम्।
अपश्यदाश्रमश्रेष्ठं शाण्डिल्यस्य महात्मनः ॥ २४ ॥
नानापुष्पसमाकीर्णं नानाफलसमन्वितम्।
नानापक्षिगणैर्जुष्टं नानामृगनिषेवितम् ॥ २५ ॥
कमलोत्पलसंकी(पू)र्णैः शोभितं कमलाकरैः।
भगवद्धर्मजिज्ञासापरैः शान्तैरमत्सरैः ॥ २६ ॥
मुनिमुख्यैः समाकीर्णं सर्वत्र च मुमुक्षुभिः।
संप्रविश्य तमद्राक्षीन्मुनिमुख्यैरुपासितम् ॥ २७ ॥
शिष्यैः परिवृतं शान्तैरात्मनिष्ठं दयापरम्।
दिव्यज्ञानोपपन्नं तं दृष्ट्वा दिव्यक्रियापरम् ॥ २८ ॥
उद्वहन्तं परां भक्तिं वासुदेवे परात्परे।
अभ्यवन्दिष्ट सनको विनयात्तस्य पादयोः ॥ २९ ॥
तिष्ठन्तं भगवद्धर्मे दृष्ट्वा दिव्येन चक्षुषा।
शाण्डिल्यो मुनिशार्दूलः सनकं ब्रह्मसंभवम् ॥ ३० ॥
अब्रवीन्मधुरं वाक्यं कृतार्थोऽसि महामुने।
भगवान् सुप्रसन्नस्ते सुतप्तं तप उत्तमम् ॥ ३१ ॥
आदिष्टोऽहं भगवता भवदर्थं तपोनिधे।
इत्युक्त्वाऽध्यापयामास वेदमेकायनाभिधम् ॥ ३२ ॥
मूलभूतस्तु महतो वेदवृक्षस्य यो महान्।
सब्रह्मवासुदेवाख्य(ख्यं)परतत्वैकसश्रयम् ॥ ३३ ॥
दिव्यैर्बलादिकैर्मन्त्रैः साक्षात्तत्प्रतिपादकैः।
अलङ्कृतमसन्दिग्धमविद्यातिमिरापहम् ॥ ३४ ॥
अध्याप्य संजगादास्य स्वरूपं च समागति(त)म्।
शाण्डिल्यः—
एष कार्तयुगो धर्मो निराशीःकर्मसंज्ञितः ॥ ३५ ॥
योगाद्यो योगधर्माख्यः शाखास्यश्च समागमः।
प्रवर्त्यते भगवता प्रथमे प्रथमे युगे ॥ ३६ ॥

युगेषु मन्दसञ्चार इतरेष्वितरेष्वपि।
अनन्तचेष्टादध्यक्षादनिरुद्धात् संनातनात् ॥ ३७ ॥
ब्रह्मणो मानसं जन्म प्रथमं चाक्षुषं स्मृतम्।
द्वितीयं वाचिकं चान्यच्चतुर्थं श्रोत्रसंभवम् ॥ ३८ ॥
नासिक्यमपरं चान्यदण्डजं पद्मजं तथा।
एतेष्वपि च सर्वेषु साक्षाद्भगवतो विभोः ॥ ३९ ॥
ब्रह्मणा मुनिमुख्यैश्च सुपर्णाद्यैर्महर्षिभिः।
वालखिल्यमुखैश्चान्यैः क्रमाद्राजर्षिभिस्तथा ॥ ४० ॥
एष प्रकृतिधर्माख्यः प्राधीतः प्रथमो द्विज।
सप्तमे पद्मजे सर्गे प्राप्तो भगवतस्तथा ॥ ४१ ॥
विवस्वता ततः प्राप्तो मनुनेक्ष्वाकुणा ततः।
इक्ष्वाकुणा च कथितो व्याप्य लोकानवस्थितः ॥ ४२॥
एष एव महान् धर्म आद्यो विप्र! सनातनः।
दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ॥ ४३ ॥
चातुरात्म्यपरैर्नित्यं पञ्चकालपरायणैः।
बलादिमन्त्रनिरतैर्देवतान्तरवर्जितैः ॥ ४४ ॥
एष धर्मो यथा प्राप्तो मया तद्व(निग)दतः शृणु।
साङ्गोपनिषदा वेदाः समधीता मया पुरा ॥ ४५ ॥
ऋग्यजुःसामसंज्ञास्तु संकीर्णा देवतान्तरैः।
व्यामिश्रयागसंयुक्ताः प्रवृत्तिफलदायिनः ॥ ४६ ॥
तदर्थाश्च परिज्ञाता यथान्यायं यथाविधि।
क्वचित् क्वचित् प्रदेशेषु भगवन्तं जगत्पतिम् ॥४७॥
तदीयं कर्म च ज्ञानमप्रणाड्या वदन्ति हि।
तथा तदतिसंक्षिप्तमनभिव्यक्तलक्षणम् ॥ ४८ ॥
अग्नीन्द्रादिप्रणाड्यैव प्रदेशेषु बहुष्वपि।
प्रवदन्ति जगन्नाथं तथा च सकलाः क्रियाः ॥ ४९ ॥
नित्यादिका मुनिश्रेष्ठ! प्रवृत्तिफलसंयुताः।
देवतान्तरनाड्यैव प्रब्रुवन्ति सुविस्तरात् ॥ ५० ॥
तथा क्वचित् क्वचिद्विप्र प्रवदन्ति च केवलम्।

इन्द्रादिदेवतावर्जं तत्कर्माऽपि सुविस्तरम् ॥ ५१ ॥
मन्त्राः प्राचुर्यतस्तत्र फलसङ्गसमन्विताः ।
एवं व्यामिश्ररूपत्वात्तेषु निष्ठां न लब्धवान् ॥ ५२ ॥
यस्तु सर्वपरो धर्मो यस्मान्नास्ति महत्तरः ।
वासुदेवैकनिष्ठस्तु देवतान्तरवर्जितः ॥ ५३ ॥
तज्जिज्ञासा बलवती तदा त्वाविरभून्मम ।
ततोऽत्र पर्वतश्रेष्ठे तपस्तप्तं मयोत्तमम् ॥ ५४ ॥
अनेकानि सहस्राणि वर्षाणां तपसोऽन्ततः ।
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ॥ ५५ ॥
साक्षात्सङ्कर्षणाद्व्यक्तात् प्राप्त एष महत्तरः ।
एष एकायनो वेदः प्रख्यातः सात्वतो विधिः ॥ ५६ ॥
दुर्विज्ञेयो दुष्करश्च प्रतिबुद्धैर्निषेव्यते ।
मोक्षायनाय वै पन्था एतदन्यो न विद्यते ॥ ५७ ॥
तस्मादेकायनं नाम प्रवदन्ति मनीषिणः ।
श्वेतद्वीपे पुराऽधीतो नारदेन सुरर्षिणा ॥ ५८ ॥
सनः सनत्सुजातश्च भवानपि सनन्द(क)नः ।
सनत्कुमारः कपिलः सप्तमश्च सनातनः ॥ ५९ ॥
एते एकान्तिधर्मस्य आचार्याश्च प्रवर्तकाः ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ ६० ॥
वसिष्ठश्च महातेजा एते चित्रशिखण्डिनः ।
मनुः स्वायम्भुवश्चापि समाराध्य जगत्पतिम् ॥ ६१ ॥
महता तपसा चैव देवं नारायणं प्रभुम् ।
दिव्यं वर्षसहस्रं तु तदन्ते समधीत्य च ॥ ६२ ॥
मूलश्रुतिं यथावच्च ऋषयोऽध्यापितास्तु तैः ।
ततस्ते ऋषयस्त्वष्टौ लोकानां हितकाम्यया ॥ ६३ ॥
श्लोकानां शतसाहस्रैर्मूलवेदं निरीक्ष्य च ।
तथा दिव्यानि तन्त्राणि सात्वतादीनि चक्रिरे ॥६४॥
अन्यच्छास्त्रं तु तन्त्राख्यमस्मान्मन्वादयोऽपि च ।
धर्मशास्त्राण्यनेकानि करिष्यन्ति यथातथम् ॥ ६५ ॥
अन्येषामपि शास्त्राणां योनिरेतद्भविष्यति ।
अस्मिन् धर्मश्च कामश्च अर्थश्चोक्तः सुविस्तरम् ॥ ६६ ॥
मोक्षश्च सूचितः पश्चादन्तोक्तश्च यथातथम् ।
अश्वमेधादयो यज्ञा अधिकृत्याच्युतं हरिम् ॥ ६७ ॥
यथा क्रियन्ते च तथा द्विपदक्षार्णपुरस्सरैः ।
निवृत्तिफलदैर्मन्त्रैस्तस्यासाधारणैर्हरेः ॥ ६८ ॥
पूजिता विनियुज्यन्ते तस्मिंस्तस्मिंश्च कर्मणि ।
ऋगादिमन्त्राः सर्वेऽपि तथा चास्मिन् प्रकीर्तिताः ॥
वसूराजोपरिचरो मूलवेदेन संस्कृतः ।
स्वर्गलोकाधिकारार्थमेतदुक्तप्रकारतः ॥ ७० ॥
अश्वमेधादिकान् यज्ञानन्वशिष्टयथाविधि ।
अन्यांश्च भगवद्यागान् विनिवृत्त्यधिकारतः ॥ ७१ ॥
इति श्रुतं मया पूर्वं स चार्थः प्रतिभाति मे ।
सुमन्तुर्जैमिनिर्ब्रह्मन् भृगुश्चैवोपगायनः ॥ ७२ ॥
मौञ्ज्यायनश्च तत्सर्वं सम्यगध्यापिता मया ।
नरनारायणाभ्यां तु जगतो हितकाम्यया ॥ ७३ ॥
तथाऽनुष्ठीयते मूलधर्मो बदरिकाश्रमे ।
एष प्रकृतिधर्माख्यो वासुदेवैकगोचरः ॥ ७४ ॥
प्रवर्तते कृतयुगे ततस्त्रेतायुगादिषु ।
विकारवेदाः सर्वत्र देवतान्तरगोचराः ॥ ७५ ॥
महतो वेदवृक्षस्य मूलभूतो महानयम् ।
स्कन्धभूता ऋगाद्यास्ते शाखाभूतास्तथा मुने ॥ ७६ ॥
जगन्मूलस्य देवस्य वासुदेवस्य मुख्यतः ।
प्रतिपादकतासिद्धा मूलवेदाख्यता द्विज ! ॥ ७७ ॥
आद्यं भागवतं धर्ममादिभूते कृते युगे ।
मानवा योग्यभूतास्तु अनुतिष्ठन्ति नित्यशः ॥ ७८ ॥
ततस्त्रेतायुगे सर्वे नानाकामसमन्विताः ।
व्यामिश्रयाजिनो भूत्वा त्यजन्त्याद्यं सनातनम् ॥७९॥
अन्तर्दधाति (धर्मो)सर्वोऽयं वासुदेवसमाहृतः ।
ततो योग्याय भगवान् प्रादुर्भावयति स्वयम् ॥ ८० ॥
यथा पुरा मया प्राप्तो देवाद् ज्ञानबलात्मनः ।

तथा प्रकाशितो वेदः सरहस्यो महामुने ॥ ८१ ॥

एवं निगदिते सम्यक् शाण्डिल्येन महात्मना ।
ततः कृतार्थमात्मानं मन्यमानः कृताञ्जलिः ॥ ८२ ॥

सनकः प्रश्रितं वाक्यं शाण्डिल्यं मुनिमब्रवीत् ।

सनकः –

भगवन्! सर्वधर्मज्ञ! सर्वशास्त्रार्थपारग! ॥ ८३ ॥

त्वत्प्रसादेन संप्राप्तो मया धर्मवरो महान् ।
निवृत्तिलक्षणाख्योऽयं प्रतिबुद्धैर्निषेवितः ॥ ८४ ॥

कथमप्रतिबुद्धैस्तैर्मग्नैर्भवमहाम्बुधौ ।
प्राप्यते भगवद्धर्म एकान्तिभिरनुष्ठितः ॥ ८५ ॥

शाण्डिल्यः –

श्रूयतामभिधास्यामि यदहं चोदितस्त्वया ।
एतदर्थं मया पृष्टः पुरा सङ्कर्षणः प्रभुः ॥ ८६ ॥

परित्यज्य परं धर्मं मिथ्यधर्ममुपेयुषाम् ।
भूयस्तत्पदकाङ्क्षाणां श्रद्धाभक्ती उपेयुषाम् ॥ ८७ ॥

अनुग्रहार्थं वर्णाणां योग्यतापाद(का)नाय च ।
तथा जनानां सर्वेषामभीष्टफलसिद्धये ॥ ८८ ॥

सात्वतादीनि शास्त्राणि भोगमोक्षप्रदानि च ।
उपदिश्य तु दिव्यानि शास्त्राणि तदनन्तरम् ॥ ८९ ॥

पारमेश्वरशास्त्राणां सर्वेषां मुनिपुङ्गव! ।
सारभूतं विशेषेण पौष्करार्थोपपादकम् ॥ ९० ॥

मूलवेदानुसारेण छन्दसाऽऽनुष्टुभेन च ।
लक्षग्रन्थेन सर्वार्थक्रियाज्ञानोपलब्धये ॥ ९१ ॥

स मेऽब्रवीन्म(हच्छा)हाशास्त्रं पारमेश्वरसंज्ञया ।
तस्माच्च सारमुद्धृत्य सर्वशास्त्रोपयोगिनम् ॥ ९२ ॥

श्लोकैः षोडशसाहस्रैः पारमेश्वरसंज्ञया ।
संप्रवक्ष्यामि ते शास्त्रमिदानीमवधारय ॥ ९३ ॥

नारदोऽपि पुरा चैतदपि संक्षेपतो विभोः ।
क्षीरोदशायिनो देवात् साक्षात् संश्रुतवान् द्विज! ॥

ज्ञानकाण्डक्रियाकाण्डभेदेन(तद्)च द्विधाकृतम् ।
यत्र संकीर्त्यते सम्यग्वासुदेवस्य वै विभोः ॥ ९५ ॥

दिव्यमात्मस्वरूपं च नित्या ज्ञानादयो गुणाः ।
प्रधानाः षट् समस्ताश्च व्यस्ता गुरुमन्त्रयेण हि ॥ ९६ ॥

कीर्त्यादयो गुणाश्चान्ये आकृतिश्च परात्परा ।
नित्यैका वासुदेवाख्या ततः सृष्ट्यादिहेतुना ॥ ९७ ॥

संकर्षणादिव्यूहश्च जगज्जन्मादयोऽपि च ।
उपासनार्थं भक्तानामास्तिकानां महात्मनाम् ॥ ९८ ॥

जगतामुपकारार्थं वासुदेवस्य वै विभोः ।
परात्परस्वरूपस्य चतुर्व्यूहस्तुरीयकः ॥ ९९ ॥

व्यूहः सुषुप्तिसंज्ञश्च स्वप्नव्यूहस्तथैव च ।
जाग्रद्व्यूहस्तथाऽन्ये च व्यूहा मूर्त्यन्तरा अपि ॥१००॥

मूर्तयो विभवाख्याश्च प्रादुर्भावान्तराण्यपि ।
लक्ष्मीपुष्ट्योः स्वरूपे च नित्ये भगवता सह ॥ १०१ ॥

कान्त्यादयोऽवताराश्च भूषणानां तु विग्रहाः ।
नित्याः किरीटपूर्वाणामनित्याश्च पृथग्विधाः ॥१०२॥

चक्रादीनां स्वरूपं च नित्यानित्योभयात्मकम् ।
गरुडप्रमुखानां तु अन्येषामात्मनामपि ॥ १०३ ॥

विभोः साधनभूतानां स्वं स्वं नित्यं स्वरूपिणाम् ।
एतेषां मूर्तयो नित्या अनित्याश्च पृथग्विधाः ॥ १०४॥

विभोर्वै वासुदेवस्य स्थानं नित्यं(स्यात्)-परात्परम् ।
अन्येषां व्यूहरूपाणां विभवानां तथैव च ॥ १०५ ॥

नानाविधानि स्थानानि विरजांसि बहूनि च ।
तेषां विस्तारमानं च तथा स्वं स्वं व्यवस्थितम् ॥

तत्सालानां प्रतोलीनां संख्यामानं च लक्षणम् ।
जीवात्मनां स्वरूपं च मुक्तामुक्तोभयात्मकम् ॥ १०७ ॥

तेषां गतिविशेषाश्च प्रोच्यन्ते यत्र विस्तरात् ।
भगवन्मन्त्रमूर्तीनां तथाऽन्येषां क्रमेण तु ॥ १०८ ॥

म(न्त्रा)न्त्रध्यानं तथा मुद्रा योगरूपं च कीर्तितम् ।
ज्ञानकाण्डाभिधानेन तदेतत् परिकीर्तितम् ॥ १०९ ॥

यत्र नित्यानि कर्माणि स्नानादीन्यखिलानि च ।

नैमित्तिकानि काम्यानि प्रायश्चित्तानि विस्तरात् ॥
तुलाभारादिकादीनि कर्माणि विविधान्यपि ।
तथा च कर्षणादीनि स्थापनान्तान्यशेषतः ॥ १११ ॥

प्रासादप्रतिमाभद्रपीठादीनां च लक्षणम् ।
पद्मादीनि चान्यानि देवेशयजनार्थतः ॥ ११२ ॥
कीर्त्यन्ते विस्तराद्यत्र क्रियाकाण्डं तु विद्धि तत् ।
एवं द्विविधरूपं तु शास्त्रं वक्ष्येऽवधारय ॥ ११३ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां ज्ञानकाण्डे शास्त्रावतारो नाम प्रथमोऽध्यायः ॥

# क्रियाकाण्डे द्वितीयोऽध्यायः ॥

शाण्डिल्यः –
अथाधिकारसिद्ध्यर्थं स्नानं वक्ष्यामि पूर्वतः ।
येन भक्तोऽभिषिक्तस्तु स्यादर्हो यागहोमयोः ॥ १ ॥
स्नानं तु द्विविधं कुर्यान्मलसंकरशुद्धये ।
सामान्यविधिना स्नात्वा विशेषविधिना ततः ॥ २ ॥
सामान्यं लौकिकं स्नानं विशिष्टं मन्त्रसंस्कृतम् ।
तच्चापि शौचपूर्वं स्यात्तदादौ कथयामि ते ॥ ३ ॥
ब्राह्मं मुहूर्तमासाद्य उदयात्पूर्वमेव च ।
मन्त्रज्ञः प्रयतः कुर्याद्विधिदृष्टेन कर्मणा ॥ ४ ॥
संप्रबुद्धः प्रभाते तु उत्थाय शयने स्थितः ।
नाम्नां संकीर्तनं कुर्यात् षोडशानां प्रयत्नतः ॥ ५ ॥
ओं नमो वासुदेवाय, नमः संकर्षणाय ते (च) ।
प्रद्युम्नाय नमस्तेऽस्तु, अनिरुद्धाय ते नमः ॥ ६ ॥
क्रमशः केशवादीनां यावद्दामोदरं द्विज ।
नमो नमः केशवाय, नमो नारायणाय च ॥ ७ ॥
माधवाय नमश्चैव गोविन्दाय नमस्ततः ।
विष्णवेऽथ नमस्कुर्यान्नमस्ते मधुसूदन ॥ ८ ॥
नमस्त्रिविक्रमायाथ, वामनाय नमस्ततः ।
श्रीधराय नमश्चाथ(श्चैव) हृषीकेशाय ओं नमः ॥ ९ ॥
नमस्ते पद्मनाभाय, नमो दामोदराय च ।
दिव्यानामवताराणां दशानामथ कीर्तनम् ॥ १० ॥
एकशृङ्गादिकानां तु विहितं क्रमशः प्रभोः ।
नमस्ते मीनरूपाय, कमठाय नमो नमः ॥ ११ ॥
नमोऽस्त्वादिवराहाय, नारसिंहाय ते नमः ।
नमो वामनरूपाय, नमो रामत्रयाय च ॥ १२ ॥
कुठारज्याहलास्त्राय, नमः कृष्णाय वेधसे ।
कल्कि(न्)विष्णो नमस्तेऽस्तु पूर्वं सप्रणवं द्विज ! ॥१३॥
यथास्थितक्रमेणैव भेदांस्त्वेतान् हरेर्विभोः ।
नमस्कुर्यात् प्रभाते तु यागान्ते तु दिनक्षये ॥ १४ ॥
शब्देनोच्चतरेणैव संह(तु)र्ष्टिजननेन तु ।
स्तोत्राणि चाथ मन्त्राणि उदीर्यान्यानि वै ततः ॥१५॥
इत्येवमादिभिः स्तोत्रैरभिष्टूय श्रियः पतिम् ।
इदं विज्ञापयामास हरये वरदायिने ॥ १६ ॥
हरिर्हरि ब्रुवंस्तल्पादुत्थाय भुवि विन्यसेत् ।
नमः क्षितिधरायोक्त्वा वामपादं महामते ॥ १७ ॥
बहिर्निर्गमनार्थं तु सञ्चाल्यादौ तमेव हि ।
जलसंपूर्णपात्रं च अस्त्रमन्त्रोद्धृतं मुने ! ॥ १८ ॥
देवाग्निगिरिगोष्ठेषु नद्यां वा न श्मशानके ।
वल्मीके मूषिकास्थाने वृक्षमूले सुरालये ॥ १९ ॥
जलान्तरे च मार्गे च न गृह्णीयात् कदाचन ।

देशे मनोरमे ग्राह्या विहाय चतुरङ्गुलम् ॥ २० ॥
प्राण्यङ्गतुषभस्मास्थिकाष्ठलोष्टविवर्जितम् ।
परशौचावशिष्टं यच्छ्रेयःकामैः सदा नरैः ॥ २१ ॥
अनङ्गारामनूषारां तथा कृष्णामवालुकाम् ।
शस्त्रादिनाऽस्त्रजप्तेन निखनेच्छुभदेशगाम् ॥ २२ ॥
मृदं दोषविनिर्मुक्तां ततस्तेनैव चाहरेत् ।
स्नानोपकरणं चान्यच्छमीशाखाः सपल्लवाः ॥ २३ ॥
अर्कन्यग्रोधखदिरकरञ्जककुभादिकम् ।
शरजोदुम्बराश्वत्थप्लक्षदर्भांश्च वैणवान् ॥ २४ ॥
आम्राङ्कुरमपामार्गमर्जुनं धातकीं शमीम् ।
अन्यानि च पवित्राणि तेषु संपन्नमाहरेत् ॥ २५ ॥
यथावसरमेतद्धि नृपवत् संप्रयोज्य च ।
कूपस्नानं न कुर्वीत तटाकादिषु सत्सु च ॥ २६ ॥
तेषु नाल्पोदके स्नायात्तीर्थेषु बहुवारिषु ।
एतेष्वपि तु न स्नायात् सत्यां सरिति साधकः ॥२७॥
सरित्स्वपि च सर्वासु विशिष्टाः स्युः समुद्रगाः ।
तासामपि विशिष्टाः स्युः सर्वाः प्राक्स्रोतसः सदा ॥
नदीनामपि सर्वासां दक्षिणं नीरमुत्तमम् ।
प्राक्स्रोतसः स्रवन्त्यस्तु यत्र चोदङ्मुखस्थिताः ॥
प्राक्तीरे तत्र तीर्थं स्यात् सर्वपापप्रणाशनम् ।
कूपाद्दशगुणा वापी वाप्या दशगुणा नदी ॥ ३० ॥
नद्यां स्नानफलं स्नातुस्तथा तस्याः समुद्रगाः ।
तथा दशगुणं तस्याः प्राक्स्रोताः कुरुते फलम् ॥३१॥
प्राक्स्रोतसोदङ्मुखायाः प्राक्तीरेऽनन्तकं फलम् ।
पूर्वं तु क्षालिते तीरे संप्रोक्ष्य स्थापयेत् पृथक् ॥३२॥
जलसंपूर्णपात्रं च अस्त्रमन्त्रोद्धृतं मुने ! ।
शौचार्थं मृदमाहृत्य जलकूले निधाय वै ॥ ३३ ॥
मनोरमे शुचौ देशे तृणान्निक्षिप्य भूतले ।
दिवासन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ॥ ३४ ॥
कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ।
न कुर्याद्भुवि विण्मूत्रे संभवद्दीर्घजन्तुषु ॥ ३५ ॥
न चाप्सु न गिरौ चापि चत्वरेषु चतुष्पथे ।
न राजमार्गे नो वीथ्यां न देवायतने क्वचित् ॥ ३६ ॥
न श्मशाने न चैत्ये च न भस्मनि न गोव्रजे ।
न ग्राममध्ये विप्रेन्द्र ! कुर्वीताप्यन्यथाविधि ॥ ३७ ॥
आत्मच्छायां तरुच्छायां न मेहेत कदाचन ।
अवकुण्ठ्योत्तमाङ्गं तु न पश्येद्दिग्गणं मलम् ॥ ३८ ॥
तथा ज्योतींष्यपश्यंश्च देवतायतनानि च ।
पुरीषं गुदसंयुक्तं काष्ठपर्णतृणादिभिः ॥ ३९ ॥
वामहस्तेन सम्मार्ज्य तेन हस्ततलेन तु ।
गृहीतशिश्नश्चोत्थाय जलकूलं समाश्रयेत् ॥ ४० ॥
ऊरुद्वयान्तरस्थेन गुदं मृद्दायिनाऽपि च ।
दाक्षिण्यजानोर्बाह्ये च दीयमानजलेन च ॥ ४१ ॥
वामेन दक्षिणेनैव पाणिना कुक्कुटासनी ।
अस्पृष्टतीर्थः शौचार्थं मृद्भिरभ्युद्धतैर्जलैः ॥ ४२ ॥
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ।
तिस्रो लिङ्गे मृदो देया एकैकान्तरमृत्तिकाः ॥ ४३ ॥
पञ्च वामकरे देयास्तिस्रः पाण्योर्विशुद्धये ।
मूत्रोत्सर्गे शुद्धिरेषा पुरीषस्याप्यनन्तरम् ॥ ४४ ॥
अर्धप्रसृतिमात्रं तु प्रथमा मृत्तिका स्मृता ।
द्वितीया च तृतीया च तदर्धा परिकीर्तिता ॥ ४५ ॥
बिडालपदमात्रं तु तदूर्ध्वा परिकीर्तिता ।
पञ्चापाने मृत्तिकाः स्युस्तथैवान्तरमृत्तिकाः ॥ ४६ ॥
दश वामकरे देयाः सप्त तूभयहस्तयोः ।
पादाभ्यां तिसृभिः शुद्धिर्जङ्घाशुद्धिश्च पञ्चभिः ॥४७॥
नियोजयेत्ततो विप्र ! कट्यां वै सप्त मृत्तिकाः ।
स्वदेहस्वेददोषघ्ना बाह्यकर्दमशान्तये ॥ ४८ ॥
भक्तानां श्रोत्रियाणां च वर्षास्वेवं निरूपितम् ।
प्राग्व(द्व्स )ड्कात्तु वै तस्मादेकमृद्व्यपनोदनम् ॥ ४९ ॥
शरद्ग्रीष्मवसन्तेषु नित्यं कार्यं क्रियापरैः ।

एतस्मादपि चैकैका परिलोप्या तु मृत्तिका ॥ ५० ॥
हेमन्ते शिशिरे विप्र ! श्रोत्रियैः संयमस्थितैः ।
पथि शौचं प्रकर्तव्यं देशकालानुरूपतः ॥ ५१ ॥
गन्धलेपमपास्यैवं मनःशुद्ध्या विशुध्यति ।
विहिताः पादशौचे तु विडालपदसंमिताः ॥ ५२ ॥
मृदश्चतुर्द्विजेन्द्राणां त्रिर्द्विरेका क्रमात्ततः ।
वर्णानां शूद्रनिष्ठानां कटिशौचे तथैव हि ॥ ५३ ॥
सप्त सप्त च ऊरुभ्यां कराभ्यां त्रितयं पुनः ।
सर्वेषामेव सामान्यं पाणिशौचमुदाहृतम् ॥ ५४ ॥
अन्तर्जानुगतं कृत्वा भुजयुग्मं द्विजोत्तम ! ।
चतुर्धा मणिबन्धस्थं तोयं कृत्वा सुनिर्मलम् ॥ ५५ ॥
बुद्बुदाद्यैर्विनिर्मुक्तं पिबेद्विप्रो हृदा ततः ।
एकैकां ह्रासयेन्मात्रां वर्णत्रयमनुक्रमात् ॥ ५६ ॥
पाणिना क्षालितेनैव पुनराचामयेद्बुधः ।
एवं प्रक्षाल्य विधिवदाचम्य प्रयतः शुचिः ॥ ५७ ॥
प्राङ्मुखोदङ्मुखो वाऽपि उपविश्यासनं(ने) ततः ।
अर्कादिभिरपामार्गैः कारयेद्दन्तधावनम् ॥ ५८ ॥
प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ।
भक्षयेद्दन्तधवनं दन्तमांसान्यबाधयन् ॥ ५९ ॥
द्वादशाङ्गुलमात्रं तु वक्रग्रन्थिविवर्जितम् ।
पयोभिः सह तर्जन्या ब्रह्म(न्)द्वादशसंख्यया ॥ ६० ॥
काष्ठालाभे तु रोगे वा कर्तव्यं दन्तधावनम् ।
षोडशाङ्गुलदीर्घैस्तु वक्रग्रन्थिविवर्जितैः ॥ ६१ ॥
हेमादिनिर्मितैर्वाऽपि कुशदर्भादिभिस्तथा ।
जिह्वानिर्लेहनं चैव गण्डूषं मुखधावनम् ॥ ६२ ॥
कुर्यादाचमनं विप्र ! शुद्धेन सलिलेन च ।
विना विविधसंपर्कैः पञ्चाङ्गस्नानमाचरेत् ॥ ६३ ॥
मुखं करद्वयोपेतं पादौ कटितलावधि ।
स्त्रीसङ्गाद्युपघातेषु स्नानं कुर्याद्यथाविधि ॥ ६४ ॥
अथोत्तमाङ्गात् पादान्तं शिरसाऽभ्यञ्जयेद्द्विज ।

अङ्गान्युद्वर्त्य चास्त्रेण चरणान्तान्यनुक्रमात् ॥ ६५ ॥
गोमयेन मृदा विप्र ! निर्मलीकृत्य विग्रहम् ।
नरामरप्रयुक्तां प्राक् स्नानार्थं चाहरेत् खलीम् ॥ ६६ ॥
माषचूर्णादिना देहं निर्हृत्य कवचं स्मरन् ।
शुद्ध्यर्थं प्रथमं स्नात्वा मन्त्रस्नानं समाचरेत् ॥ ६७ ॥
स्नायाद्राजोपचारेण दिव्यैर्गन्धैः पुराऽऽहृतैः ।
हृन्मन्त्रेण च विप्रेन्द्र ! वामहस्ततले ततः ॥ ६८ ॥
मृदाऽऽमलकमानेन क्रमशोऽभिनिधाय च ।
प्रान्तपर्वावधौ मध्ये मणिबन्धसमीपतः ॥ ६९ ॥
अस्त्रमन्त्रेण मूलेन क्रमात् पञ्चाङ्गमन्त्रितम् ।
कृत्वा नियोज्य दिक्ष्वप्सु सर्वाङ्गालेपनं क्रमात् ॥ ७० ॥
अथ ऊर्ध्वं च तन्मन्त्रं मुद्राबन्धेन संयुतम् ।
तेन स्नानहरा विघ्ना दिग्विदिक्परिसंस्थिताः ॥ ७१ ॥
प्रयान्ति विलयीभूता यावत्तत्रोपसंहृतम् ।
मृद्भागो मूलमन्त्रेण मन्त्रितो यः पुरा स्थितः ॥ ७२ ॥
तमुच्चरन् समादाय तोयमध्ये विनिक्षिपेत् ।
तेन तद्द्विजशार्दूल ! तत्क्षणादेव जायते ॥ ७३ ॥
गङ्गातोयेन संपूर्णं यामुनेन शुभेन च ।
प्रयागं चक्रतीर्थं च प्रभासं पुष्कराणि च ॥ ७४ ॥
भवन्ति सन्निधीभूता मन्त्रस्यास्य प्रभावतः ।
ततो वै विष्णुतीर्थाय मन्त्रान्ते पदमुच्चरेत् (रन्) ॥
सनमस्कं भवेत्तेन विष्णुतीर्थस्य सन्निधौ ।
अन्यतीर्थे यदा स्नानं कुर्यात्तत्र च योजयेत् ॥ ७६ ॥
केवलं मूलमन्त्रं तु विष्णुतीर्थपदं विना ।
तीर्थान्तरेष्विदं नाम न संकीर्तयते सुधीः ॥ ७७ ॥
नित्यसन्निधितीर्थस्य यद्यन्यस्याभिधां स्मरेत् ।
स्नातस्य तत्र तीर्थं तदभिशापं क्षणं(णात्) सृजेत् ॥
निर्झराम्बुतटाकादौ सामान्यस्नानकर्मणि ।
गङ्गादीनां नदीनां च तीर्थानां च प्रकीर्तनम् ॥ ७९ ॥
मन्त्रस्नानं(न) क्रमैः सम्यग्विष्णुतीर्थाय कीर्तयेत् ।

ततोऽङ्गमन्त्रजप्तं च भागं पाणितले स्थितम् ॥ ८० ॥
तोयेनालोड्य मसृणं तापयेदर्करश्मिभिः ।
मेघच्छन्ने स्वकं मन्त्रं सूर्यवत् खस्थितं स्मरेत् ॥ ८१ ॥
दर्शयित्वा करौ तस्य ताभ्यां सर्वाऽङ्गकं स्पृशेत् ।
अपास्य प्रोच्चरन् वर्म मृल्लेपं वारिणाऽङ्गगम् ॥ ८२ ॥
दर्भपुञ्जीलमादाय दक्षिणेन करेण तु ।
जले त्वावर्त्य तन्मन्त्रं सकृद्वा बहुशो द्विधा ॥ ८३ ॥
ततः कुम्भाभिषेकं वा पाणिकुम्भोदराम्बुना ।
स(सं)हिता(हृदा)वर्तितेनैव अभिषेकं तु मूर्धनि ॥
श्रोत्रद्वयवदनं नासां स्वकराङ्गुलिभिः क्रमात् ।
स्थगयित्वा निमज्याथ साङ्गं मन्त्रमथोच्चरन् ॥ ८५ ॥
सकृद्वा बहुशः शक्त्या ध्यायेज्ज्योतिर्मयं हरिम् ।
देवं हृत्पुष्करान्तस्थं नेत्रयोरथ चान्तरे ॥ ८६ ॥
सर्वपापनिरासार्थं कृत्वैवमघमर्षणम् ।
प्राणायामैस्त्रिभिर्द्वाभ्यामेकेन नियतेन वा ॥ ८७ ॥
समुत्थायाचरेत् पश्चात् सन्निरीक्ष्यार्कमण्डलम् ।
मन्त्रमूर्तिर्महातेजाः समुत्तीर्य जलान्तरात् ॥ ८८ ॥
स्नानवस्त्रं परित्यज्य परिधायाम्बरान्तरम् ।
शिखयाऽथ शिखाबन्धं कृत्वाऽऽचम्य यथाविधि ॥
अङ्गुष्ठमूलं ब्राह्मं तु अङ्गुल्यग्रं तु दैविकम् ।
पैतृकं हस्तमध्यं तु तीर्थं दक्षिणहस्तजम् ॥ ९० ॥
ब्राह्मेण तु पिबेत्तोयं पैतृकेन तु मार्जयेत् ।
दैविकेन स्पृशेदङ्गान् येषां तृप्तिं यदीच्छति ॥ ९१ ॥
त्रिधा चतुर्धा वा विप्र! द्विरामृज्य मुखं पुनः ।
वामहस्ततलं प्रोक्ष्य पादयोश्च तले शुभे ॥ ९२ ॥
तलेन हृदयं स्पृष्ट्वा मुखमङ्गुलिभिस्तथा ।
अङ्गुष्ठानामिकां कृत्वा नेत्रे स्पृष्ट्वा च वारिणा ॥
तेनैव तर्जनीं कृत्वा तथा द्वे नासिकापुटे ।
कनिष्ठिकां तथा कृत्वा तेनैव श्रवणं स्पृशेत् ॥ ९४ ॥
तथैव मध्यमां कृत्वा बाहुदेशावुभौ स्पृशेत् ।
तेनैव नाभिदेशं च सर्वैर्युक्तैः शिरः स्पृशेत् ॥ ९५ ॥
एतदाचमनं प्रोक्तं सर्वकर्मसु सर्वदा ।
सजलं दक्षिणं हस्तं कृत्वा घ्राणाग्रगं मुने ! ॥ ९६ ॥
स्मरन् हृन्मन्त्रमाघ्राय सन्धार्य कवचं लपन् ।
विरेच्य समुदीर्यास्त्रं तोयक्षेपेण वै सह ॥ ९७ ॥
ततस्तु हस्तयोर्देहे न्यासं कुर्याद्यथाग(क्र)मम् ।
हृदा वामकरे तोयमादाय गलितं च तत् ॥ ९८ ॥
विबुधानूर्ध्वदेहस्थान् ह्लादयेच्छिखया क्षिपन् ।
स्मरन्नस्त्रं क्षिपेद्भूमौ दुष्टदोषप्रशान्तये ॥ ९९ ॥
अन्तरान्तरयोगेन ह्यूर्ध्वान्तं प्रागधस्ततः ।
जलाञ्जलिमथादाय स(स्व)मन्त्रेण हरिं स्मरन् ॥१००॥
सूर्यमण्डलमध्यस्थं तर्पयेत्तेन वारिणा ।
सकुशोर्ध्वकरश्चाथ विनिमीलितदृग्जपन् ॥
सूर्यं निरीक्षयेन्मन्त्रं यदर्घ्येणार्चितं पुरा ।
ततोपविश्य सन्तर्प्य आ(सा)धारासनपूर्वकम् ॥
साङ्गं सपरिवारं च मन्त्रं तदनु वै क्रमात् ।
इन्द्रादीन् विष्णुपूर्वांश्च वासुदेवादिकानपि ॥ १०३ ॥
मूर्तीर्द्वादशशक्तीश्च परमात्मनमेव ।
पृथिव्यादीनि भूतानि ऋषींश्च पितृभिः सह ॥१०४॥
आदौ नाम द्वितीयान्तं तर्पयामीति चोच्चरन् ।
एष मन्त्रस्तु निर्दिष्टस्तर्पणेषु यथाक्रमम् ॥ १०५ ॥
तिलोदकैस्तर्पयित्वा स्वपितॄंश्च पितामहान् ।
प्रपितामहसंज्ञांश्च सदाराननुतर्पयेत् ॥ १०६ ॥
तर्पयेत् सर्वपितॄणां दक्षिणाभिमुखेन तु ।
देवानां च तदन्येषां प्राङ्मुखो वाऽप्युदङ्मुखः ॥
पवित्रकं त्यजेत् पश्चात् पुनराचम्य मन्त्रवित् ।
सायं प्रातर्द्विशो वन्द्याद्ध्यात्वा नारायणं प्रभुम् ॥
करशुद्धिसमोपेतं दिग्बन्धं चावकुण्ठनम् ।
प्राणायामादिकं कुर्याद्भूतशुद्धिसमन्वितम् ॥ १०९ ॥
मन्त्रन्यासं ततः कृत्वा मुद्रां बध्वा स्मरेद्धरिम् ।

जलमध्येऽपि यागस्य भोगैश्चैवासनादिकैः ॥ ११० ॥
ततो मन्त्री समभ्यर्च्य पत्रपुष्पफलैर्विभुम् ।
संभवे सति पुष्पाणां विहितं तत्र चार्चनम् ॥ १११ ॥
औदकेनोपचारेण भावनाभावितेन च ।
तर्पयेदम्भसा प्राग्वद्धोमभावनयाऽखिलम् ॥ ११२ ॥
एवं कृत्वा जगन्नाथं समिद्दानं समाचरेत् ।
जुहुयाच्च यथाशक्ति ततस्तिलघृतादि यत् ॥ ११३ ॥
न्यूनातिरिक्तशान्त्यर्थं सर्वकर्मसमाप्तये ।
पूर्णाहुत्यवसानान्तं कुर्याद्वै जलतर्पणे ॥ ११४ ॥
स्तुत्वा च प्रणमेद्विप्र! अष्टाङ्गेनाथ दण्डवत् ।
दूर्वां सिद्धार्थकोपेतां शिखामन्त्राभिमन्त्रिताम् ॥
चूड्योत्तमाङ्गे शिरसा उपसंहृत्य सासनम् ।
वाच्यं जलात् स्वहृद्व्योम्नि मनसा निष्कलात्मना ॥
कृत्वाऽभिगमनं कृत्यं सन्यसेद्ध विचक्षणः ।
कुर्याद्भोगार्जनं पश्चान्न्यायोपायसमार्जितम् ॥ ११७ ॥
मूलेन चाऽस्त्रमन्त्रेण पुष्पमूलफलादिकम् ।
अवपन्नं त्वभिमतमनार्तं भावदूषितम् ॥ ११८ ॥
व्यामिश्रहीनसंस्पृष्टं शुक्तं लीढं च वर्जयेत् ।
सम्यक् पूरकयुक्त्या तु धिया वाचकमुच्चरन् ॥११९॥
अपामार्गशमीशाखायुग्मं संभ्राम्य मूर्धनि ।
सव्यापसव्ययोगेन पृष्ठतोऽस्त्रं पठन् क्षिपेत् ॥ १२० ॥
स्नानवस्त्रं च निष्पीड्य ततश्चाचम्य वाग्यतः ।
इत्युक्तमौदकं स्नानमथ मान्त्रं निबोध मे ॥ १२१ ॥
तोयाभावे च यत्कुर्याद्दुर्गे(र्ते) काले तु शीतले ।
गमने क्षिप्रसिद्धौ वा गुरुकार्येऽस्वतन्त्रताम् ॥ १२२ ॥
प्राप्तां वा वीक्ष्य विप्रेन्द्र! निशाभागे दिनस्य वा ।
प्रक्षाल्य पादावाचम्य प्रोद्धृतेन च वारिणा ॥ १२३ ॥
स्थानं दश दिशः प्राग्वत् संशोध्योपविशेत्ततः ।
प्राणायामगणं कुर्याद्भूतशुद्धिं ततस्तनौ ॥ १२४ ॥
मूलमन्त्रादितः कुर्यात् सर्वमन्त्रगणेन तु ।
केवलादुदकस्नानात् संस्कारपरिवर्जितात् ॥ १२५ ॥
प्रयागादिषु तीर्थेषु यत्फलं कुरुते द्विज! ।
स्नानाच्छतगुणं तस्मान्मन्त्रस्नानस्य सत्तम! ॥ १२६ ॥
ध्यानस्नानमथो वक्ष्ये द्वाभ्यामपि परं तु यत् ।
स्वस्थितं पुण्डरीकाक्षं मन्त्रमूर्तिं प्रभुं स्मरेत् ॥ १२७ ॥
तत्पादोदकजां धारां पतमानां हि मूर्धनि ।
चिन्तयेद्ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम् ॥ १२८ ॥
तया संक्षालयेन् सर्वमन्तर्देहगतं मलम् ।
तत्क्षणाद्विरजा मन्त्री जायते स्फटिकोपमः ॥ १२९ ॥
ध्यानस्नानं परं मन्त्रस्नानाच्छतगुणं स्मृतम् ।
सध्यानस्नानमित्युक्तं दिव्यस्नानादिकं शृणु ॥ १३० ॥
सहातपेन वर्षेण स्नानं दिव्यमनन्तरम् ।
समिधां दीपितानां च गोमयस्य हुत(शुभ) स्य च ॥
सितेन भस्मनाऽङ्गेषु ललाटादिषु च क्रमात् ।
यदूर्ध्वपुण्ड्रकरणं मन्त्रोच्चारणपूर्वकम् ॥ १३२ ॥
दाहनं तु भवेत् स्नानं शोधनं परमं स्मृतम् ।
गच्छत्सु गोषु वातोत्थै रजोभिर्भूमिसंभवैः ॥ १३३ ॥
स्पर्शनं वपुषः स्नानं वायव्यं तदुदाहृतम् ।
प्रशस्ते पर्वताग्रादौ जातया श्वेतमृत्स्नया ॥ १३४ ॥
उच्चार्य केशवादीनि नामान्यङ्गे यथाक्रमम् ।
ललाटादौ यद्विधानमूर्ध्वपुण्ड्रस्य तत्स(त्क्र)मम् ॥
पार्थिवस्नानमित्येवं सर्वपापहरं शुभम् ।
तस्मादेकतमं कार्यं स्नानं श्रद्धापरेण तु ॥ १३६ ॥
स्नानाचमनशौचेन प्राणायामेन देशिकः ।
अन्तर्बहिः शरीरस्य साधकस्तु विशुध्यति ॥ १३७ ॥
स्नानपूर्वाः क्रियाः सर्वाः फलसंसिद्धिहेतवः ।
तस्मात् स्नानं प्रकुर्वीत देवर्षिपितृतर्पणम् ॥ १३८ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे
साधकस्नानविधिर्नाम द्वितीयोऽध्यायः ॥

॥ श्रीः ॥

# तृतीयोऽध्यायः ॥

---

सास्त्रं दूर्वाङ्कुरं दत्वा पत्रं पुष्पं तिलांस्तु वा ।
सोदकानात्मनो मूर्ध्नि शिखास्थाने च सत्तम ! ॥ १ ॥

ततः कलशपूर्वं तु अम्बुपूर्णं तु भाजनम् ।
समादायाम्बरच्छन्नं पाणिना भगवद्गृहम् ॥ २ ॥

एकान्तं निर्जनं यायान्मनोज्ञं दोषवर्जितम् ।
अनुकूलं शुचिं दक्षं संयतं समये स्थितम् ॥ ३ ॥

एकायनं वैदिकं वा ब्राह्मणं चार्घ्यवाहकम् ।
हृन्मध्यस्थं स्मरन्मन्त्रं प्रबुद्धानन्दविग्रहम् ॥ ४ ॥

दिगन्तरमवीक्षन् वै मौनी संरोधितानिलः ।
प्राप्य स्थानं स्वमन्त्रं तं नासाग्रेण विरेचयेत् ॥ ५ ॥

उच्चरन् द्वादशार्णं तु प्रविश्यान्तः प्रदक्षिणम् ।
प्रासादोद्देशमखिलं मार्जयेत् प्रोक्षयेत्ततः ॥ ६ ॥

परिचारैस्तु कर्तव्यं बलिपीठान्तमेव हि ।
द्वाराद्वाह्ये यथाशास्त्रं शुद्धेन सलिलेन च ॥ ७ ॥

आजानुपादौ प्रक्षाल्य हस्तौ चामणिबन्धनात् ।
पूर्वोक्तेन विधानेन समाचम्योर्ध्वपुण्ड्रकैः ॥ ८ ॥

चन्दनाद्यैः सुगन्धैर्वा धर्मक्षेत्रे विशेषतः ।
पर्वताग्रे नदीतीरे सिन्धुतीरे तथैव च ॥ ९ ॥

वल्मीके तुलसीमूले प्रशस्ता मृत्तिका द्विज ! ।
वश्यार्थी रक्तया श्रीच्छन् पीतया शान्तिकामिकः ॥

श्यामया मोक्षकामी च श्वेतया चोर्ध्वपुण्ड्रकम् ।
वर्तिदीपाकृतिं चैव वेणुपत्राकृतिं तथा ॥ ११ ॥

पद्मस्य मुकुलाकारमुत्पलं मुकुलाकृति ।
मत्स्यकूर्माकृतिं चैव शङ्खाकारमतः परम् ॥ १२ ॥

पुष्टिप्रदेनाङ्गुष्ठेन तर्जन्या मुक्तिसिद्धये ।
वाञ्छितार्थप्रदायिन्या मुनेऽनामिकयाऽथ वा ॥ १३ ॥

आयुष्कामी मध्यमया अङ्गुल्या च—अथ देवता ।
एताभिरङ्गुलीभिस्तु कारयेन्न नखैः स्पृशेत् ॥ १४ ॥

ललाटे वासुदेवं च हृदि संकर्षणं न्यसेत् ।
प्रद्युम्नं दक्षिणे चांसे अनिरुद्धोत्तरांसके ॥ १५ ॥

जलनिर्मथितेनैव ह्यूर्ध्वपुण्ड्रचतुष्टयम् ।
ललाटे केशवं विद्यान्नारायणमथोदरे ॥ १६ ॥

माधवं हृदये कुर्याद्गोविन्दं कण्ठकूपके ।
उदरे दक्षिणे पार्श्वे विष्णुरित्यभिधीयते ॥ १७ ॥

तत्पार्श्वे बाहुमध्ये तु मधुसूदन इष्यते ।
त्रिविक्रमं कण्ठकूपे वामे कुक्षौ तु वामनम् ॥ १८ ॥

श्रीधरं वामबाहौ च हृषीकेशं तु कण्ठके ।
अपरे पद्मनाभं तु ककुद्दामोदरं स्मरेत् ॥ १९ ॥

एवं द्वादशनामं(ानि) तु वासुदेवं तु मूर्धनि ।
यज्ञो दानं तपो होमो भोजनं पितृकर्म च ॥ २० ॥

तत सर्वं निष्फलं प्रोक्तमूर्ध्वपुण्ड्रविनाकृतम् ।
तस्मात् सर्वप्रयत्नेन धारयेत् सर्वसिद्धिदम् ॥ २१ ॥

चतुरङ्गुलमग्रं तु सदाविष्ण्वधिदैवतम् ।
महाविष्ण्वधिदैवस्तु ग्रन्थिरेकाङ्गुलो भवेत् ॥ २२ ॥

विष्ण्व(ा)धिदैवं वलयं द्वयमङ्गुलमुच्यते ।
पवित्रं हस्तयुग्मे चानामिकायां नियोजयेत् ॥ २३ ॥

दर्भैर्विना तु यत् स्नानं विना नैवेद्यमर्चनम् ।
विनोदकं तु यद्दानं तत् सर्वं निष्फलं भवेत् ॥ २४ ॥

अर्चनं जपहोमौ च दानं च पितृतर्पणम्।
अपवित्रानुपाणिश्चेत् तत् सर्वं च विनश्यति ॥

तस्मात् सर्वप्रयत्नेन सदा धार्यं पवित्रकम्।
गन्धैः स्रग्भिरलङ्कारैः सोत्तरीयैश्च भूषितः ॥ २६ ॥

कर्णभूषणहाराद्यैः कटकैरङ्गुलीयकैः।
अलाभे त्वङ्गुलीयेन अलङ्कृत्य तु साधकः ॥ २७ ॥

वदनं नासिकारन्ध्रे स्थगयित्वाऽम्बरेण तु।
स्वश्वासोपहतं चैव न भवेच्च यथा द्विज! ॥ २८ ॥

शुक्लवासाः सुवेषश्च शुक्लदन्तः शुचिव्रतः।
ताम्बूलशुद्धवदनो ललाटे साक्षातैर्युतः ॥ २९ ॥

एवमुक्तगुणैर्युक्तो बोधयेत् पुरुषोत्तमम्।
शङ्खध्वनिसमोपेतं दुन्दुभीपटहस्वनैः ॥ ३० ॥

वन्दिवृन्दोत्थितोच्चाभिर्नानावाग्भिर्महामते!।
महाजयजयाराबैः पुनःपुनरुदीरितैः ॥ ३१ ॥

प्रबोधलक्षणैः स्तोत्रैरुत्थाप्य शयनात्ततः।
द्वारमासाद्य तत्रस्थो दद्यादिगन्धपूर्वकम् ॥ ३२ ॥

अवकुण्ठ्याथ तर्जन्या मन्त्रं कवचमुच्चरन्।
स्थिते वा कल्पिते तत्र पूजयेद्बलिमण्डले ॥ ३३ ॥

सर्वं खगेशपूर्वं तु परिवारं हि साच्युतम्।
नमसा प्रणवाद्येन पुष्पमादाय कीर्तयेत् ॥ ३४ ॥

समस्तपरिवाराय अच्युताय नमो नमः।
वास्तुपुरुषमन्यांश्च समभ्यर्च्य यथाक्रमम् ॥ ३५ ॥

मूलमन्त्रेण साङ्गेन निरङ्गेनाथवा ततः।
न्यासं कृत्वा त्रिराचार्यो हस्ततालं ह्रदा ततः ॥ ३६ ॥

मूलमन्त्रेण चोद्घाट्य कवाटं नेत्रमन्त्रतः।
नित्यदीपांस्ततोज्ज्वाल्य हस्तौ प्रक्षाल्य वारिणा ॥

प्रासादादि यदा न स्यात्तदा देशं मनोहरम्।
आसाद्य कल्पयेन्मान्त्रं गृहं तदधुनोच्यते ॥ ३८ ॥

मूलमन्त्रं पुरा ध्यायेद्ब्रह्मवत् सर्वगं ततः।
विदिक्षु दिक्षु मध्ये च ज्वलन्तं भानुकोटिवत् ॥३९॥

हृन्मन्त्रं च तदन्तस्थमाक्रम्याखिलमात्मना।
शिरोमन्त्रं च तन्मध्ये ब्रह्मनाडीस्वरूपिणम् ॥ ४० ॥

स्तम्भभूतं तु विश्वस्य संचाराध्ववदुज्ज्वलम्।
शिखामन्त्रं च सर्वस्माद्बहिः प्रकारवत् स्थितम् ॥

वर्ममन्त्रं तु कर्मात्मा(त्म)परमात्मानुवेधयेत्।
गवाक्षद्वारभूतं च नेत्रमन्त्रं च भावयेत् ॥ ४२ ॥

स्फुरद्वह्निस्फुलिङ्गोर्मिसहस्रपरिराजितम्।
सर्वविघ्नप्रशमनं बहिरस्त्रं च भावयेत् ॥ ४३ ॥

एवं (म)मान्त्रगृहं ध्यात्वा ततो द्वारं तु चेतसा।
त्रिभागीकृत्य तन्मध्ये भागमेकं द्विधा पुनः ॥ ४४ ॥

विभज्य वामदेशेन दक्षिणेनाङ्घ्रिणा ततः।
शनैः शनैः प्रविश्यान्तः सास्त्रमन्त्रेण तेन वै ॥ ४५ ॥

धरणीहननं कृत्वा भगवन्तं प्रणम्य च।
मनसा गुरुवंशं च तदाज्ञां मानसीमथ ॥ ४६ ॥

शिरसा धारयेत् स्वेष्टं फलं संकल्प्य चेतसा।
देवाय च निवेद्यै(तान्) तत् यागागारस्य मध्यतः ॥

प्रासादं विग्रहं क्लृप्त्वा वर्ममन्त्रं सविग्रहम्।
तज्जीवं भगवन्तं च ध्यात्वा यागगृहं ततः ॥ ४८ ॥

सशलाकैस्ततो दर्भैः सहदेवीविमिश्रितैः।
संमार्ज्य वस्तुतोयेन प्रक्षाल्याऽऽलिप्य गोमयैः ॥ ४९ ॥

गोमयं च नवं ग्राह्यं भूमिष्ठं धेनुसंभवम्।
सजलं शिथिलं शुष्कं कीटवच्च विवर्जयेत् ॥ ५० ॥

उपलिप्तमथास्त्रेण संविध्य शकलं त्यजेत्।
पञ्चगव्येन सास्त्रेण वारा(रिणा)वा प्रोक्ष्य चन्दनैः ॥

कुङ्कुमागरुकर्पूरैः समालिप्य समन्ततः।
कुशदूर्वाक्षतांश्चैव विकिरेत् स्थानशुद्धये ॥ ५२ ॥

प्रासादं शोधयित्वा तु ततो मौनपरो द्विज!।
देवेशस्याग्रतो वाऽपि दक्षिणं भागमाश्रयेत् ॥ ५३ ॥

दर्भे चर्मणि वस्त्रे वा फलके यज्ञकाष्ठजे।
स्यासन्यस्यनं वाभि(वाद्भि)श्च मूलमन्त्राभिमन्त्रितैः ॥

प्रोक्ष्य छोटिकयाऽस्त्रेण दद्यात्तच्छुद्धये पुनः ।
तुर्यादीनां तु तत्रैकं भावयेदासनं त्वथ ॥ ५५ ॥

तुर्यं नामाऽऽसनं पूर्वं कारणप्रणवा(न्वयः)न्वितम् ।
सुषुप्तिर्नाम तद्व्याप्ताव्यक्तपङ्कजसंस्थितिः ॥ ५६ ॥

स्वप्नः शेषाहिपूर्वं तु वह्निपर्यन्तमासनम् ।
क्षीरार्णवादितो भावासनान्तं जाग्रदासनम् ॥ ५७ ॥

तत्र सुप्तं(प्तिं) तुरीयं वा करशुद्धेः पुरा स्मरेत् ।
स्वप्नं मानसयागात्तु पूर्वं तुर्योक्तकालतः ॥ ५८ ॥

जाग्रदासनकल्पे तु विशेषो गृह्यतामयम् ।
स्वदेहमन्त्रविन्यासात् पूर्वमर्घ्यादिकं त्रयम् ॥ ५९ ॥

न्यसेदस्त्राम्बुना प्रोक्ष्य ताडयित्वाऽस्त्रपुष्पतः ।
तत्रैव भगवद्योगपीठार्चायाः पुरोत्तरम् ॥ ६० ॥

न्यसेदाधारशक्त्यादि भावपीठान्तमासनम् ।
प्रणवेनाथ तद्व्याप्ति स्मृत्वा स्वार्णेन तेन वै ॥ ६१ ॥

अभ्यर्च्य तदुपर्यास्यपद्माद्येकतमान्वितम् ।
यागोपस्करसंभूतौ भगवन्तमनुस्मरन् ॥ ६२ ॥

विनीतान् शिष्यपुत्रादीन् स्नातानाज्ञापयेत्तदा ।
पात्रशुद्धिं ततः कुर्याद्यथा तच्छृणु सत्तम ! ॥ ६३ ॥

अम्लकल्केन तोयेन हैमं ताम्रं च शोधयेत् ।
राजतं गृहधूमेन शान्ताङ्गारेण वा पुनः ॥ ६४ ॥

भस्ममिश्रेण तोयेन लोहयुक्तं विशोधयेत् ।
शङ्खशुक्तिमयानां च लवणेन विशोधयेत् ॥ ६५ ॥

फलपत्रमयानां च मृद्भिरद्भिश्च शोधयेत् ।
लेपगन्धापनोदेन शुद्धिर्भवति कारयेत् ॥ ६६ ॥

द्रव्यशुद्धिर्भवत्येवं यथावद्विधि चोदिता ।
अथार्कोदयकालस्य पूर्वं कर्म समारभेत् ॥ ६७ ॥

प्रच्छदपटसंयुक्तं पूजाकाले प्रपूजयेत् ।
पापिष्ठानाश्रमभ्रष्टान्नास्तिकान् वै न दर्शयेत् ॥ ६८ ॥

आगमार्थं च देवानां गमनार्थं च रक्षसाम् ।
कुर्याद् घण्टारवं तत्र देवतास्थानलाञ्छनम् ॥ ६९ ॥

शङ्खादिघोषसंयुक्तं गेयवाद्यसमन्वितम् ।
आवाहने तथाऽभ्यङ्गे स्नानारम्भावसानयोः ॥ ७० ॥

तथा तिलकदाने च दीपे माल्यनिवेदने ।
नीराजने त्वाहरणे नैवेद्यस्य महानसात् ॥ ७१ ॥

तन्निवेदनकाले तु पूर्णाहुत्यवसानके ।
जलाहरणकाले च यानारोहावरोहयोः ॥ ७२ ॥

कवाटयोर्विघटने तथा बन्धे द्विजोत्तम ! ।
एतेषु नित्यकालेषु शङ्खमापूरयेत् त्रिधा ॥ ७३ ॥

प्रवृत्तस्यार्चने विष्णोः कृतमौनस्य तत्वतः ।
तस्याविक्षिप्तबुद्धेर्वै वरदानं सुचिरोधकृत् ॥ ७४ ॥

अतः सव्यभिचारं तु मौनं वर्ज्यं क्रियापरैः ।
शुभमव्यभिचारं यत्तत्कार्यं सर्ववस्तुषु ॥ ७५ ॥

यदङ्गसंकेतमयैरव्यक्तैर्नासिकाक्षरैः ।
कृतमोष्ठपुटैर्बद्धैर्मौनं तत्सिद्धिहानिकृत् ॥ ७६ ॥

स्वयमेव स्वबुद्ध्या यत् सर्ववस्तुषु वर्तते ।
शब्दैरनुपदिष्टैस्तु तन्मौनं सर्वसिद्धिदम् ॥ ७७ ॥

करशुद्धिं ततः कुर्याद्यथाव(त)दवधारय ।
द्वे तले हस्तपृष्ठे द्वे सर्वाश्चाङ्गुलयस्तथा ॥ ७८ ॥

अस्त्रमन्त्रेण संशोध्य ध्यानमुद्रान्वितेन तु ।
कृत्वैवं करशुद्धिं च स्थानशुद्धिं समाचरेत् ॥ ७९ ॥

ध्यात्वा देवं ज्वलद्रूपं सहस्रार्कसमप्रभम् ।
ज्वालाकोटिसमाकीर्णं वमन्तं ज्वलनं मुखात् ॥ ८० ॥

तेन संपूरयेत् सर्वमाब्रह्मभवनान्तिमम् ।
दिगोघं प्रज्वलन्तं च भावयेन्मन्त्रतेजसा ॥ ८१ ॥

क्ष्मामण्डलमिदं सर्वं स्मरेत् पक्वं च वह्निना ।
मन्त्रजेन द्विजश्रेष्ठ ! मृण्मयं भाजनं यथा ॥ ८२ ॥

स्थानशुद्धिर्भवत्येवं सुधाकल्लोलसेचनात् ।
भावयेदथ दिग्बन्धं कुर्यादास्ये तु पावकम् ॥ ८३ ॥

किरन्तमस्त्रमन्त्रं च बाहुभ्यां दक्षिणेन वा ।
दिग्विदिक्षु च सर्वत्र विरेच्य स्वासनाद्बहिः ॥ ८४ ॥

शरजालचिताकारं प्राकारं चन्धयेद्बुधः।
यद्वा तु पूर्ववत् कुर्याद्दिग्बन्धं हृदयादिकैः ॥ ८५ ॥

अस्त्रेण वै विदिग्बन्धं नेत्रेण तु अधोर्ध्वतः।
आदित्यायुतदीप्तेन ज्वलत्कञ्चुकरूपिणा ॥ ८६ ॥

कवचेन तु तर्जन्या रक्षार्थमवकुण्ठयेत्।
एवं कृत्वा तु दिग्बन्धं प्राणायाममथारभेत् ॥ ८७ ॥

प्रमाथिनो दृढस्याथ चञ्चलस्य तु चेतसः।
समाधियोग्यतासिद्ध्यै प्राणादिविजयाय च ॥ ८८ ॥

तमोनि(बर्हणार्थं च)र्हरणार्थश्च कुर्यात् प्राणायतीरथ।
शरीरे नाडिसंस्थानं तथा प्राणादिसंस्थितम् ॥ ८९ ॥

प्राणायामस्वरूपं च ज्ञात्वा यामान् समाचरेत्।
नाडीचक्रं प्रवक्ष्यामि यथावन्मुनिपुङ्गव ! ॥ ९० ॥

नाडीनां कन्दनाभिः स्यादुत्पत्तिस्थानमुत्तमम्।
द्विसप्ततिसहस्राणि नाड्योऽन्तर्व्यवस्थिताः ॥ ९१ ॥

तिर्यगूर्ध्वमधश्चैव देहं व्याप्य व्यवस्थिताः।
आग्नेयाः सौम्यरूपाश्च सौम्याग्नेयास्तथैव च ॥ ९२ ॥

आग्नेया ऊर्ध्ववदनाः सौम्यसंज्ञा अधोमुखाः।
तिर्यग्गता नाड्यस्तु सौम्याग्नेया उदाहृताः ॥ ९३ ॥

नाडीनामपि सर्वासां प्रधाना दश नाड्यः।
इडा च पिङ्गला चैव सुषुम्ना चोर्ध्वगामिनी ॥ ९४ ॥

गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी।
अलम्बुसा कुहूश्चैव को(कौ)शिनी दशमी स्मृता ॥९५॥

सुषुम्नाख्या मध्यनाडी कन्दादूर्ध्वप्रवाहिनी।
मध्यनाड्याः सुषुम्नाया वामदक्षिणतः स्थिते ॥ ९६ ॥

इडापिङ्गलसंज्ञे द्वे ते तु नासापुटावधी।
पुरतः पृष्ठतस्तस्या गान्धारी हस्तिजिह्वके ॥ ९७ ॥

वामेतराक्ष्यवधिके कन्ददेशात् समुत्थिते।
पूषायशस्विन्याख्ये द्वे सव्यान्यश्रोत्रनिष्ठिते ॥ ९८ ॥

कन्दाद्वै पादमूलान्ता संस्थिता स्यादलम्बुसा।
कुहूर्मेढ्रान्तपर्यन्ता पादाङ्गुष्ठे तु कोशिनी ॥ ९९ ॥

शुक्लेडा पिङ्गला रक्ता गान्धारी पीतवर्णका।
हस्तिजिह्वा कृष्णरूपा पूषा स्यात् कृष्णपीतका ॥

यशस्विनी श्यामवर्णा बभ्रुवर्णा ह्यलम्बुसा।
कुहूररुणसंकाशा कोशिनी ह्यञ्जनप्रभा ॥ १०१ ॥

एवं दशप्रधानास्तु नाड्यः परिकीर्तिताः।
वायवो दश संप्रोक्ताः शरीरे नाडिषु स्थिताः ॥१०२॥

प्राणोऽपानः समानश्च उदानो व्यान एव च।
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ॥ १०३ ॥

इडाख्या वहति प्राणं गान्धार्याख्या अपानकम्।
अलम्बुसा समानं तु कुहूर्व्यानं द्विजोत्तम ! ॥ १०४ ॥

उदानं तु सुषुम्नाख्या पिङ्गला नागसंज्ञितम्।
पूषा वायुं तु कूर्माख्यं कृकरं तु यशस्विनी ॥ १०५ ॥

हस्तिजिह्वा देवदत्तं कोशिनी तु धनञ्जयम्।
विद्रुमाभौ प्राणनागाविन्द्रकोपोपमावुभौ ॥ १०६ ॥

कूर्मापानौ खसंकाशौ समानकृकरावुभौ।
किंजल्कसदृशौ देवदत्तोदानौ धनंजयः ॥ १०७ ॥

व्यानश्च फेनवर्णाभः सर्वशास्त्रेषु निश्चयः।
अथ प्राणायतिः—सा च निश्वासोच्छ्वासयोर्गतेः ॥

स्तम्भनं तत्र निश्वासो बाह्यवातोपयोगिना।
घ्राणेनानयनं वायोरन्तः कोष्ठानिलस्य च ॥ १०९ ॥

बहिर्निष्कासनं नास्या उच्छ्वासो बुद्धिपूर्वकम्।
अभ्यन्तरा स्तम्भवृत्तिर्वायोरन्तः प्रपूरणम् ॥ ११० ॥

बाह्यं तु तद्वत् प्रथमं प्राणसंरोधनं विदुः।
अभ्यन्तराद्द्वितीयस्तु स्तम्भवृत्तिस्तृतीयकम् ॥

बाह्या तत्राधमा प्राणधारणा मध्यमा मता।
अभ्यन्तरा स्तम्भवृत्तिरुत्तमा धारणा मता ॥ ११२ ॥

सदा निश्वासरूपा तु बाह्या रेचकमुच्यते।
अभ्यन्तरा समुच्छ्वासरूपा संपूरकस्तथा ॥ ११३ ॥

श्वासोच्छ्वासनिरोधात्मा स्तम्भवृत्तिस्तु कुम्भकः।
एकद्वित्रिभिरुद्घातैर्मृदुमध्यमतीक्ष्णकाः ॥

क्रमेणैते भवन्त्यत्र प्राणादेर्नाभिदेशतः ।
उद्धतस्याहतिः पूर्वमुद्घातः स्याद्द्वितीयकम् ॥ ११५ ॥
निवृत्तिरुदरादूर्ध्वं तस्य चाथ तृतीयकम् ।
अन्यत्र निग्रहोऽस्येह(स्यैव) मृदुः पूर्वोऽथ मध्यमः ॥
द्वितीयस्तु तृतीयोऽथ तीक्ष्णस्स्वेदादिकारणम् ।
प्राणायामगणं कुर्यात् पूर्वमस्त्रेण रेचकम् ॥ ११७ ॥
तत्र द्वादशमात्रस्तु रेचकः पूरकः स्मृतः ।
चतुर्विंशतिमात्रस्तु षट्त्रिंशन्मात्रकं विदुः ॥ ११८ ॥
कुम्भकं चाथ भूयोऽपि केवलानिलनिःसृतिः ।
या सा प्राणायतिः साऽपि रेचकाख्या विधीयते ॥
मात्राव्यतिक्रमान्न्यूना विपर्यासे तु साऽस (ध)मा ।
तस्मान्मात्राविशेषेण ज्ञातव्या प्राणजिष्णुना ॥ १२० ॥
जानुं प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ।
कुर्यादङ्गुलिविस्फोटं सा मात्रा परिकीर्तिता ॥
प्राणायमगणं कुर्यात् पूर्वमस्त्रेण रेचकम् ।
पूरकं हृदयेनाथ नेत्रमन्त्रेण कुम्भकम् ॥ १२२ ॥
प्रागुक्तेनाचरेद्भूयो रेचकं द्विजसत्तम ! ।
वामेतराङ्गुलीभ्यां तु पिदधद्वामनासिकाम् ॥
नाभिदेशस्थितं ध्यायेन्मूलमन्त्रेण वै हरिम् ।
वासनादोषसंमिश्रान् दशप्राणान् सगर्भकान् ॥ १२४ ॥
अगर्भश्च सगर्भश्च प्राणायामो द्विधा मतः ।
जपध्यानं विनाऽगर्भः सगर्भस्तद्युत(न्सम)श्च यः ॥
अगर्भाद्गर्भसंयुक्तः प्राणायामः शताधिकः ।
आकृष्याखं समुच्चार्य दक्षिणघ्राणतो बहिः ॥ १२६ ॥
रेचयेद्वातचक्रं तु दशनाडीष्ववस्थितम् ।
मात्रयैकैकयाऽन्योन्यं मोचयित्वाऽत्र पूषि(षि)काम् ॥
द्वाभ्यां तु पिङ्गलां द्वाभ्यां वहिर्नाभ्यास्तु रेचयेत् ।
विरेच्यैवं हरिं तावत् संस्थाप्यादाय पावकम् ॥
वातचक्रस्थितं ध्यायेत्तमेवान्तः प्रवेशयेत् ।
दक्षिणाङ्गुष्ठतो द्वारं पिदधद्वामनासया(सिकाम्) ॥
हरिं सवातचक्रं तं मात्राभ्यामिडयोच्चरन् ।
हृन्मन्त्रमन्तः संवेश्य तं ध्यात्वा हृदये स्थितम् ॥
मात्राचतुष्टयेनाथ तेन वातेन पिङ्गलाम् ।
द्वाभ्यां सुषुम्नां गान्धारीं द्विद्विकाभिस्तु पूषिकाम् ॥
द्वाभ्यां द्वाभ्यां हस्तिजिह्वालम्बुसे च यशस्विनीम् ।
कोशिनीं च कुहूं चैव क्रमात् संपूरयेत् (यन्) गतीः ॥
नासापुटादिकादूर्ध्वं नेत्रेणासीत कुम्भवत् ।
षट्त्रिंशद्भिस्तु मात्राभिरथ नाभ्यग्निमिश्रितैः ॥ १३३ ॥
परिभ्रमद्भिः सर्वत्र तैर्वातैर्दोषसंहतीः ।
ध्यात्वा निरस्ता, नाडीश्च शोधितास्तु शनैः शनैः ॥
केवलं वातचक्रं तु वहिः प्राग्वद्विरेचयेत् ।
यद्वा षोडशमात्रा स्याद्रेचके द्विगुणः स्मृतः ॥ १३५ ॥
पूरकः कुम्भकोऽपि स्यात् सचतुःषष्टिमात्रिकः ।
नाडीस्ता मोचयेत् प्राग्वत् षण्मात्राभिस्तु पिङ्गलाम् ॥
नाडीस्तु दश तन्वीभिः पञ्चमात्राभिरर्जयेत् ।
प्राणायाममिदं प्रोक्तमुत्तमादिविभेदतः ॥ १३७ ॥
त्रिप्रकारे विधानेऽत्र यथासंभवमाचरेत् ।
प्राणायामत्रयं कृत्वा पञ्च वा सप्त वाऽथवा ॥ १३८ ॥
भवेत् प्राणजयः पुंसः प्राणायामः स उच्यते ।
ततस्तु कायशुद्ध्यर्थं वर्णं भौमादि विन्यसेत् ॥ १३९ ॥
भूतशुद्धिं शृणु मुने ! यथावदनुपूर्वशः ।
पृथ्व्यप्तेजोनिलाकाशं शरीरं भूतपञ्चकम् ॥ १४० ॥
इन्द्रजालोपमं विद्धि ज्ञानाद्यैरुज्झितं गुणैः ।
मलिनं चास्वतन्त्रं च रेतोरक्तोद्भवं क्षयि ॥ १४१ ॥
यावच्च शोधितं सम्यग्धारणाभिर्निरन्तरम् ।
तावदेतद्द्वयोरयं स्यान्मन्त्रन्यासाद्विवस्तुषु ॥
पञ्चभिर्धारणाभिर्वा द्वाभ्यां वा शोधयेत्तनुम् ।
सुषुम्नाद्दक्षिणद्वारान्निर्गमय्य हरिं वहिः ॥ १४३ ॥
सहस्ररविसङ्काशं वृत्तमण्डलमध्यगम् ।
तप्तकाञ्चनवर्णाभमासीनं परमे पदे ॥ १४४ ॥

मन्त्रात्मानं तु तं ध्यात्वा ह्युपरि द्वादशाङ्गुले।
प्रभाचक्रं तु तदधस्तत्त्वाधिष्ठातृसंयुतम्॥ १४५॥
निष्कलं मन्त्रदेहं तु ध्यात्वा तु तदधःक्रमात्।
तुर्यश्रां पीतलां भूमिं चिन्तयेद्वज्रलाञ्छिताम्॥
शब्दाद्यैः पञ्चभिर्युक्तां नगद्रुमसमाकुलाम्।
पुरप्राकारसुसरिद्द्वीपार्णवपरिष्कृताम्॥
संविशन्तीं स्मरेद्घ्राणात् पूरकेण स्वविग्रहे।
प्रोच्चरंश्चैव तन्मन्त्रं विश्रान्तामथ चिन्तयेत्॥
जान्वोः पादतलं यावत्तया व्याप्तं क्रमेण तु।
कुम्भकेन द्विजश्रेष्ठ! मन्त्रमूर्तौ स्वके ततः॥ १४९॥
शनैः शनैर्लयं यातां गन्धशक्तौ च मन्त्रराट्।
गन्धशक्तिं च तां पश्चाद्रेचकेन बहिः क्षिपेत्॥
तोयाख्ये च महाधारे, ततस्तोयं च वैभवम्।
ससमुद्रसरित्स्रोतोरसपटकं च सौषधिम्॥
यान्यन्यान्यम्बुभूतानि भूतानि भुवनान्तरे।
अर्धचन्द्रसमाकारं कमलध्वजशोभितम्॥
वारुणं विभवं बाह्ये ध्यात्वा तेनाथ विग्रहम्।
संपूर्य पूरकाख्येन करणेन शनैः शनैः॥ १५३॥
ऊरुमूलाच्च जान्वन्तं शारीरं मण्डलं स्वकम्।
तेनाखिलं तु संव्याप्तं कुम्भकेन स्मरेद्द्विज!॥
तन्मध्ये वारुणं मन्त्रं धारणाख्यं विचिन्त्य च।
अम्मयं विभवं सर्वं तन्मन्त्रे विलयं गतम्॥
ततस्तं रसशक्तौ च सा शक्तिर्वह्निमण्डले।
रेचकेन विनिक्षिप्य ततो वाह्नं च वैभवम्॥
त्रिकोणभुवनाकारं दीप्तिमद्भिर्विभूषितम्।
विद्युच्चन्द्रार्कनक्षत्रमणिरत्नैश्च धातुभिः॥ १५७॥
स्वप्रकाशशरीरैस्तु अशरीरैश्च खेचरैः।
चिह्नितं स्वस्तिकैर्दीप्तैर्ध्यात्वैवं विभवं महत्॥
तैजसं मुनिशार्दूल! तन्मन्त्रं चाथ संस्मरन्।
तन्मण्डलान्तरस्थं तु प्रोच्चरन् वै तमेव हि॥

प्रविष्टं पूर्ववद्ध्यायेत्तेनैव करणेन तु।
आनाभेः पायुपर्यन्तं व्याप्तं कृत्वाऽध्यायि च॥
तं विप्र! विभवं सर्वं तैजसं परिभावयेत्।
तन्मन्त्रविग्रहे शान्तं तन्मत्रं चानलात्मकम्॥
रूपशक्तौ लयं यातं शक्तिः संविन्मयी च सा।
तया मन्त्रशरीरं स्वं स्वशक्त्या विलयीकृतम्॥
रेचकेन तु तां शक्तिं वाय्वधारे बहिः क्षिपेत्।
ततस्तु वायवीयं वै विभवं बाह्यतः स्मरेत्॥
वृत्तं राजोपलाभं तु बिम्बैर्युक्तं तु(स्व)तैजसैः।
पूर्णं नानाविधैर्गन्धैरनेकैस्तद्गुणैस्तथा॥ १६४॥
स्वमन्त्रेण समाक्रान्तं धारणाख्येन संस्मरेत्।
तथा स्वरूपं तन्मन्त्रं ध्यात्वोच्चार्य समाहरेत्॥
पूर्वोक्तकरणेनैवं घ्राणाग्रेण शनैः शनैः।
आकण्ठं नाभिदेशान्तं तेन व्याप्तं तु भावयेत्॥
प्रागुक्तकरणेनैव वायव्यं तु विभवं तु तम्।
अधिष्ठातृलयं यातं स्मृत्वा तं च महामते!॥
स्पर्शाख्यायां महाशक्तौ तां शक्तिमविनश्वरीम्।
व्याप्तिं नित्यामनित्यां च स्वशक्तिविभायान्विताम्॥
शब्दाख्ये तु महाधारे निक्षिपेद्व्योममण्डले।
ध्यात्वाऽथ विभवं सर्वं व्योमाख्यं विग्रहादृते॥
नानाशब्दसमाकीर्णं नीरूपं चाञ्जनप्रभम्।
अविग्रहैः शब्दमयैः पूर्णं सिद्धैरसंख्यकैः॥
तन्मध्ये धारणामन्त्रं व्योमाख्यं संस्मरेद्द्विज!।
धारयन्तं स्वमात्मानं स्वसामार्थ्येन सर्वदा॥
शब्दमात्रमरूपं तु व्यापकं विभवेष्वपि।
धिया च संपरिच्छिन्नं कृत्वा विन्यस्य विग्रहे॥
प्रागुक्तकरणेनैव तेन व्याप्तं च भावयेत्।
आकण्ठाद्ब्रह्मरन्ध्रान्तं व्योमाख्यविभवेन च॥
सन्धार्य कुम्भकेनैव यावत्कालं तु योगिना।
ध्यायेत् परिणतं पश्चात् स्वमन्त्रे तु महामुने!॥

व्योमाख्यं धारणामन्त्रं शक्तौ परिणतं स्मरेत्।
(घ्राणोपस्थौ धरण्यां च रसनापायुतोयके ॥ १७०॥
दृष्टिपादौ हुतवहे त्वक्करौ वायुमण्डले।
वाक्छ्रुती व्योमतत्त्वे तु लयस्यादौ सह स्मरेत्) ॥

तां शक्तिं ब्रह्मरन्ध्रेण प्रयान्तीमनुभावयेत्।
युक्तां शक्तिचतुष्केण गन्धाख्येनाविनश्वरीम् ॥

आश्रयेन्निष्कलं मन्त्रं तत्त्वाधिष्ठातृसंयुतम्।
समन्त्रं विभवं भौतमेवमस्तं नयेत् क्रमात् ॥ १७८ ॥

चैतन्यं जीवभूतं यत् प्रस्फुरत्तारकोपमम्।
भावनीयं तु विश्रान्तं निःसृतं भूतपञ्जरात् ॥

निष्प्रपञ्चे परे मन्त्रे पञ्चशक्त्याख्यविग्रहे।
अनेन क्रमयोगेन जीव आत्मानमात्मना(म) ॥

ईक्षेत तद्धृदाकाशे अचलं सूर्यवर्चसम्।
स्फुरद्द्युतिभिराकीर्णमीश्वरं व्यापकं परम् ॥

ततो मन्त्रशरीरस्थः समाधिं चाभ्यसेत् परम्।
गन्धतन्मात्र पूर्वाभिर्युक्तत्वात् पञ्चशक्तिभिः ॥

हेयं चेत्थमिदं बुद्ध्वा यदा तत्स्थानबृंहितः।
अतृप्तोऽकृतकृत्यश्च मन्त्रहृत्पद्मसेवनात् ॥ १८३ ॥

षट्पदो ह्यात्मतत्त्वश्च ज्ञानरज्ज्ववलम्ब्य च।
हृत्कोटरोर्ध्वाविर्यान्तं स्वात्मानं स्वात्मना स्मरेत् ॥

भारूपनाडिमार्गेण मन्त्रयन्त्रैः शिखा हि सा।
पद्मसूत्रप्रतिकाशा सुषुम्ना चोर्ध्वगामिनी ॥

तद्ब्रह्मरन्ध्रगां स्मृत्वा सुपथा तेन सत्तम!।
शनैःशनैःस्वमात्मानं रेचयेज्ज्ञानवायुना ॥ १८६ ॥

मान्त्रं करणषट्कं च पद्मव्यापकं त्यजेत्।
प्राप्नुयाच्च तदूर्ध्वात्तु यः परात् प्रभुविग्रहात् ॥

उदितो द्विजशार्दूल! तेजःपुञ्जो ह्यनूपमः।
तत्प्रभाचक्रनाभिस्थस्यानन्दानन्दनन्दितः ॥

एवं पदात्पदस्थस्य ह्यात्मतत्त्वस्य वै ततः।
तत्त्वनिर्मुक्तदेहस्य केवलस्य चिदात्मनः ॥ १८९ ॥

उदेति महदानन्दः सा शक्तिर्वैष्णवी परा।
अलुप्तकर्मकर्तारं जीवं कृत्वा तमात्मसात् ॥ १९० ॥

यत्रोदिता च तत्रैव पुनरेवावतिष्ठते।
तच्च संकल्पनिर्मुक्तमवाच्यं विद्धि सत्तम! ॥

एवं स्वस्थानमासाद्य त्यक्त्वा भौतं च विग्रहम्।
तत्र स्थितो दहेत् पिण्डं शक्तितन्मात्रवर्जितम् ॥

षाट्कौशिकमसारं च निर्दग्ध(रध)तृणरूपिणम्।
इच्छानिर्मथनोत्थेन मन्त्रजेन तु वह्निना ॥ १९३ ॥

तेनाङ्घ्रिदेशादारभ्य तं पिण्डं ज्वलितं स्मरेत्।
दक्षिणाङ्घ्रेरथाङ्गुष्ठप्रान्तदेशे शिखाक्षरम् ॥

ध्यात्वा युगान्तहुतभुग्रूपज्वालशतावृतं।
तेन स्वविग्रहं ध्यायेत् प्रज्वलन्तं समन्ततः ॥

नाभिकन्दान्तरोद्देशे नेत्रमन्त्रेण पावकम्।
ध्यायेज्ज्वालागणोपेतं निनयेत्तेन भस्मसात् ॥

दहनेन स्वकं देहं हृन्मन्त्रं भावयंस्ततः।
देहजां भावयेज्ज्वालां मन्त्रनाथे लयं गताम् ॥

भस्मराशिसमप्रख्यं शान्ताग्निं तमनुस्मरेत्।
(साह्लादेन सुसूक्ष्मेण व्यापिनोंकारपूर्विणा ॥

नमोऽन्तेन तु तद्ब्रह्मपातं ध्यानान्वितस्ततः।)
तद्वाच्यकेन तद्ब्रह्म यातं ध्यात्वा इतस्ततः ॥ १९९ ॥

ततः समन्त्रं तद्बिम्बं पूर्णचन्द्रायुतोपमम्।
ध्यात्वा तन्निःसृतेनैव त्वमृतौघेन चाम्बरात् ॥

प्लावयेद्देहजां भूतिं सर्वं ध्यायेत् सुधात्मकम्।
तत्राधारमयीं शक्तिं मध्ये विन्यस्य वैष्णवीम् ॥

बीजभूतां च सर्वस्य तदुत्थं चाम्बुजं स्मरेत्।
षडध्वं तत्त्वभूतं च सितं तेजोमयं शुभम् ॥ २०२ ॥

मण्डलत्रितयाकीर्णं स्फुरत्किरणभास्वरम्।
मन्त्रात्मानं च तन्मध्ये ध्यायेन्नारायणं प्रभुम् ॥

निष्कलं केवलं शुद्धं पञ्चसन्मन्त्रविग्रहम्।
तन्मन्त्रशक्तिभिर्भूयो भावयेन्मूर्छितं द्विज! ॥ २०४ ॥

व्योमादिपञ्चभूतीयं मान्त्रमीश्वरपञ्चकम्।
तेभ्योऽथ प्रसरन्तं च व्योमाद्यं विभवं स्मरेत्॥
संयोगजनितं पिण्डं ध्यायेद्विभवपञ्चकात्।
सहस्रसूर्यसंकाशं शतचन्द्रगभस्तिमत्॥ २०६॥
निर्मलस्फटिकप्रख्यं जरामरणवर्जितम्।
जनित्वैव स्वपिण्डं तु परमं भोगमोक्षयोः॥ २०७॥
साधनं मुनिशार्दूल! सहजं सर्वदेहिनाम्।
तमासाद्य क्रमेणैव विसृक्षालक्षणेन च॥ २०८॥
स्वपदाद्विस्तरङ्गाच्च कृत्वा शक्त्या सहोदयम्।
स्वानन्दं च महानन्दात् स्वानन्दास्याप्यपाश्रयात्॥
मारीचं नाभसं चक्रं तस्माद्रूपं स्वकं च यत्।
सूर्यकोटिकराभासं प्रस्फुरन्तं स्वभाससा॥ २१०॥
कदम्बगोलकाकारं निशाम्बुकणनिर्मलम्।
एवमात्मानमानीय स्वस्थानात् स्वात्मना द्विज!॥
विशेन्मन्त्रशरीरं स्वं ब्रह्मरन्ध्रेण पूर्ववत्।
ज्योत्स्नानाडीपथेनैव पुर्यष्टककजान्तरम्॥ २१२॥
स्ववाचकं भावयन् वै ध्वनिना निष्कलेन तु।
ततस्तु निष्कलान्मन्त्राद्वाचकोत्तं च विग्रहम्॥
पञ्चकं चाभिमानं तु आसाद्यालोकविग्रहम्।
स्वमन्त्रादमृतौघेन सेचयेद्विग्रहं स्वकम्॥ २१४॥
ततः स्वतन्त्रं तद्बिम्बमाकृष्य हृदि विन्यसेत्।
निस्तरङ्गा परा शक्तिर्महानन्दमयी च सा॥ २१५॥
स्वानन्दाच्च प्रभाचक्रं रूपमात्मीयभास्वरम्।
सौषुम्नस्तादृशो मार्गः पिण्डमन्त्रश्च निष्कलः॥२१६॥
सत्याद्यो मन्त्रशक्त्योघो धारणेश्वरपञ्चकम्।
तेषां विभवसङ्घो यः पिण्डस्तत्सामुदायिकः॥

स्मरेद्गोलीकृतं सर्वमपृथक् च पृथक् स्थितम्।
स्थूलसूक्ष्मपराख्येन त्रिविधेन तु सत्तम!॥ २१८॥
करणेनोदिता सम्यक् शुद्धिरेषा च भौतिकी।
शोधितैः पञ्चभिर्भूतैः पृथिव्याद्यैः खपश्चिमैः॥ २१९॥
घ्राणजिह्वाक्षित्वक्छ्रोत्ररूपज्ञानेन्द्रियाणि च।
उपस्थपायुपादाख्यपाणिवागात्मकानि च॥ २२०॥
कर्मेन्द्रियाणि पञ्चैव शोधितानि भवन्ति हि।
तत्रापि पूरकादीनां काल आयामवत्स्मृतः॥ २२१॥
धारणापञ्चकेनैवं मुख्यकल्पं प्रकीर्तिता।
अनुकल्पं तु तां वक्ष्ये यथावद्विनिबोध मे॥ २२२॥
क्ष्माजलानलवाय्वाख्यनाभसीयं महामते!।
धारणापंचकं चैव संक्षिप्तं विहितं द्वयम्॥ २२३॥
दहनाप्यायनाच्चैव यदा देहात् स्वशुद्धये।
नाभिक्षेत्रगतं ध्यायेन्मारुतं कवचेन तु॥ २२४॥
नयेद्देहगतं तेन शोषभावं रसं द्विज!।
नाभिकन्दान्तरोद्देशे नेत्रमन्त्रेण पावकम्॥ २२५॥
ध्यायेज्ज्वालागणोपेतं निनयेत्तेन भस्मसात्।
दहनेन स्वकं देहं हृन्मन्त्रं भावयंस्ततः॥ २२६॥
तिष्ठेद्गगनमाश्रित्य शिरोमन्त्रेण भावयेत्।
जलं मुक्ताफलस्वच्छं तदुद्भूतमथ स्मरेत्॥ २२७॥
शिखामन्त्रेण कमलं वसुधागुणलक्षणम्।
तदधिष्ठातृभावेन नयेदात्मनि सत्तम!॥ २२८॥
ध्यायेत्तदुत्थितं कोशं भूततत्त्वमयं वपुः।
हृदयादीन् स्मरन् पञ्चतत्त्वानां कारणात्मनाम्॥
ततः समाचरेन्न्यासं तस्मिन् ध्यानोत्थिते पुरे।
मुख्यानुकल्पभेदेन भूतशुद्धिः प्रकीर्तिता॥ २३०॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे समाधिन्यासाख्यानं नाम तृतीयोऽध्यायः॥

---

॥ श्रीः ॥

# चतुर्थोऽध्यायः ॥

संशुद्धविग्रहो मन्त्री मन्त्रन्यासं समाचरेत् ।
येन विन्यस्तमात्रेण देवदेवसमो भवेत् ॥ १ ॥

पूजादिसर्वकार्याणामधिकारी(रः) च जायते ।
भवेद् सर्वसिद्धीनामाविर्भावस्तु येन च ॥ २ ॥

यं कृत्वा निर्भयस्तिष्ठेद्देशे दुष्टसमाकुले ।
विजयश्चापमृत्यूनां स्वाधीन विहितेन च ॥ ३ ॥

व्यापारो मानसो ह्येष न्यासाख्यो यद्यपि स्मृतः ।
न बध्नाति स्थितिं सम्यक् तथाऽपि क्रियया विना ॥

करार्धीना पुनस्सा तु प्राङ्न्यासस्तु तयोः स्थितः ।
अथ हस्तद्वये न्यस्य दीप्तिमद्द्वादशाक्षरम् ॥ ५ ॥

मणिबन्धान्नखाग्रान्तं त्वादित्यातपवत्ततः ।
सृष्टिसंस्थितिसंहारन्यासं कुर्याद्यथाविधि ॥ ६ ॥

दक्षहस्ततलारम्भो वामान्तः सृष्टिसंज्ञितः ।
दक्षाङ्गुष्ठादिको वामतलान्तः स्थितिसंज्ञितः ॥ ७ ॥

वामहस्ततलारम्भो दक्षान्त इतरः स्मृतः ।
सृष्टौ दक्षतले तारं तदङ्गुष्ठादिके क्रमात् ॥ ८ ॥

अङ्गुलीनां तु दशके यावद्वामकनिष्ठिका ।
विन्यस्य दशवर्णांस्तु न्यसेद्वामतलेऽन्तिमम् ॥ ९ ॥

स्थित्याख्ये दक्षिणाङ्गुष्ठादारभ्याङ्गुलिपञ्चके ।
तत्तलान्तं तु ताराद्यं वर्णषट्कं तु विन्यसेत् ॥ १० ॥

वामाङ्गुष्ठात्तत्तलान्तं विन्यसेत् षट्कमुत्तरम् ।
संहाराख्येऽक्षरं न्यस्य वामहस्ततलेऽन्तिमम् ॥ ११ ॥

अप्ययाख्यक्रमेणैव दक्षहस्ततलावधि ।
ततो वर्णगणं शेषं न्यसेत् प्रणवपश्चिमम् ॥ १२ ॥

तर्जन्या तत्तदङ्गुष्ठे तत्तदङ्गुष्ठकेन च ।
तर्जन्यादिषु शाखासु तत्तन्मध्यमया तले ॥ १३ ॥

न्यासं कुर्याद्यथायोगं ततोऽङ्गन्यासमाचरेत् ।
आरभ्य दक्षिणाङ्गुष्ठाच्छाखासु दशसु द्विज ! ॥

क्रमाद्वामकनिष्ठान्तं दक्षिणादि तलद्वये ।
हृदादि द्वादशाङ्गानि भास्वद्रूपाणि विन्यसेत् ॥ १५ ॥

दक्षिणे मध्यतः पद्मं प्रस्फुरत्किरणोज्ज्वलम् ।
गदां वामतले न्यस्येज्ज्वलन्तीं स्वेन तेजसा ॥ १६ ॥

दक्षे महाप्रभं चक्रं शङ्खं वामतले न्यसेत् ।
किरीटं दक्षिणे हस्ते श्रीवत्सं वाममध्यतः ॥ १७ ॥

कौस्तुभं दक्षिणतले वनमालां तथाऽपरे ।
श्रियं दक्षिणहस्ते तु पुष्टिं वामतले न्यसेत् ॥ १८ ॥

अङ्गुष्ठाद्दक्षिणादादौ वामान्तं मूलदेशतः ।
गारुडं विन्यसेन्मन्त्रं दशस्वङ्गुलिषु क्रमात् ॥ १९ ॥

अनेन विधिना पूर्वं हस्तन्यासं समाचरेत् ।
या विभोः परमा शक्तिर्हृत्पद्मकुहरान्तगा ॥ २० ॥

वायव्यं रूपमास्थाय दशधा संव्यवस्थिता ।
इच्छया स्वप्रवाहेण पाणिमार्गेण निर्गता ॥ २१ ॥

नाडीदशकमाश्रित्य ता एवाङ्गुलयो मताः ।
अत एव द्विजश्रेष्ठ ! शक्त्याख्ये प्रभुविग्रहे ॥ २२ ॥

पूर्वं मन्त्रगणं न्यस्य ततो भूतमये न्यसेत् ।
विग्रहे मन्त्रसंघातं यथा तदवधारय ॥ २३ ॥

आमूर्ध्नश्चरणान्तं च द्वादशार्णं न्यसेत्तनौ।
व्यापकत्वेन विन्यस्य पादादूभूयः शिरोऽन्तिमम् ॥

सृष्टिसंस्थितिसंहारन्यासं कुर्यात्ततः परम्।
मूर्धादिपादपर्यन्तः सृष्टिन्यासः प्रकीर्तितः ॥ २५ ॥

पादादिश्च शिरोऽन्तस्तु संहृतिन्यास उच्यते।
यथाऽभिलषितं कुर्यात् सर्वथा कर्तुरिच्छया ॥ २६ ॥

मूर्ध्नि वक्त्रेंऽसयुग्मे च क्रमात् सव्येतरे हृदि।
पृष्ठे नाभौ तथा कट्यां जानुनोरथ पादयोः ॥ २७ ॥

क्रमेण प्रणवाद्यं तु यान्तं द्वादशवर्णकम्।
विन्यसेदेष सृष्ट्याख्यो न्यासः प्रोक्तो यथार्थतः ॥

प्रणवाद्यान्न्यसेद्वर्णान् स्थानेषु हृदयादिषु।
अङ्गोपाङ्गोक्तमार्गेण स्थितिन्यासः प्रकीर्तितः ॥ २९ ॥

पादयोर्जानुनोः कट्यां नाभौ पृष्ठे हृदन्तरे।
सव्येतरेंसयुग्मे च वक्त्रे मूर्धनि च न्यसेत् ॥ ३० ॥

यादिवर्णांस्तु तारान्तानेष संहारसंज्ञकः।
ततो हृदादिस्थानेषु अङ्गोपाङ्गानि विन्यसेत् ॥ ३१ ॥

न्यसेत्तु हृदये ज्ञानं यतो व्यज्येत तत्र तत्।
ऐश्वर्यं शिरसोद्देशे यस्मादुपरि तिष्ठति ॥ ३२ ॥

प्राकृतं तात्त्विकं वाऽपि सर्वत्र मुनिसत्तम!।
हृद्ग्रेरूर्ध्वगायां तु शिखायां शक्तिमन्त्रराट् ॥ ३३ ॥

यलं चाखिलगात्राणां त्वग्गतं वायुना सह।
मूर्छितं सर्वगात्रैर्यत्तद्वीर्यं हस्तयोर्न्यसेत् ॥ ३४ ॥

अन्तर्बोधस्वरूपं यत् प्राकृतध्वान्तशान्तिकृत्।
तेजस्तत्तेजसे स्थाने न्यासकाले समस्यते ॥ ३५ ॥

यथोक्तविधिना सोऽयं विधिरूर्ध्वं प्रवक्ष्यते।
ततः पद्मगदाचक्रशङ्खान् प्राग्वत्तु विन्यसेत् ॥ ३६ ॥

किरीटं मूर्ध्नि विन्यस्य(स्येत्) वह्न्यर्कायुतदीधितिम्।
श्रीवत्सं वक्षसोऽग्रामे पूर्णेन्दुसदृशद्युतिम् ॥ ३७ ॥

कौस्तुभं हृदये न्यस्य चण्डदीधितिलक्षणम्।
नानाब्जवनपुष्पोत्थां वनमालां च कण्ठतः ॥ ३८ ॥

आद्यांसाद्दक्षिणे भागे न्यसेत् श्रीरुत्तरे तथा।
पुष्टिं गुल्फावसाने च गरुडं चोरुमूलतः ॥ ३९ ॥

भास्वद्रूपाणि चाङ्गानि विदेकविभवानि च।
किरीटादीनि चान्यानि सर्वाण्याभरणानि च ॥ ४० ॥

यथा प्रसिद्धरूपाणि स्वस्वकान्तिधराणि च।
मन्त्रन्यासं तु कृत्वैवं यथोद्दिष्टक्रमेण तु ॥ ४१ ॥

आमूलमन्त्रात् सर्वासां मुद्राणां बन्धमाचरेत्।
स्वं स्वं(चो) उदीरयन्मन्त्रं परमेश्वरवत्ततः ॥ ४२ ॥

संचिन्त्य रूपमात्मीयं साभिमानं महामते!।
मूलमन्त्राभिजप्तं च कुसुमं च शिखावधौ।
स्वविग्रहे तु शिरसा दद्याद्गन्धाम्बुभावितम् ॥ ४३ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे मन्त्रन्यासविधिर्नाम चतुर्थोऽध्यायः ॥

---

॥ श्रीः ॥

# पञ्चमोऽध्यायः ॥

कृत्वैवं तु ततः पश्चान्मानसं यागमारभेत्।
पद्मासनादिकं बध्वा नाभौ ब्रह्माञ्जलिं दृढम् ॥ १ ॥

मनस्युपरतं कुर्यादक्षग्रामं बहिः स्थितम्।
चित्तं बुद्धौ विनिक्षिप्य तां बुद्धिं ज्ञानगोचरे ॥ २ ॥

ज्ञानभावनया कर्म कुर्याद्वै पारमार्थिकम्।
चतुष्के नवद्वारे देहे देवगृहे पुरे ॥ ३ ॥

कण्ठकूपधरारूढं हृत्पद्मं यदधोमुखम्।
तत्कर्णिकावनेर्मध्यदे(ह)शमाश्रित्य भावयेत् ॥ ४ ॥

नाभिमेढ्रान्तरे ध्यायेच्छक्तिं चाधाररूपिणीम् ।
कालाग्निं च तदूर्ध्वं तु अनन्तं तस्य चोपरि ॥ ५ ॥

तदूर्ध्वं वसुधां देवीं चतुर्भिः पूरितं(तां) स्मरेत् ।
कन्द(त्)नाभ्यवसानं च चतुर्धा भाजितैः पदैः ॥ ६ ॥

नाभौ क्षीरार्णवं ध्यात्वा ततः पद्मं समुत्थितम् ।
सहस्रदलसंयुक्तं सहस्रकिरणावृतम् ॥ ७ ॥

सहस्ररश्मिसंकाशं तत्पृष्ठे चासनं न्यसेत् ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च चतुर्थकम् ॥ ८ ॥

अवतार्य स्वमन्त्रेण आग्नेयाद्ये चतुष्टये ।
चतुष्कमेतद्विन्यस्य यावदीशानगोचरम् ॥ ९ ॥

तत्पूर्वदिग्विभागादि यावदुत्तरगोचरम् ।
न्यस्याधर्मं तथाऽज्ञानमवैराग्यमनैश्वरम् ॥ १० ॥

पुरुषाकृतयस्त्वेते बन्धूककुसुमोज्ज्वलाः ।
प्रागीशानदिगन्ते तु प्रागाग्नेयदिगन्तरे ॥ ११ ॥

यातुवारुणमध्ये तु वायव्यवरुणान्तरे ।
ऋग्वेदाद्यं चतुष्कं तु कृताद्यं युगसञ्ज्ञकम् ॥ १२ ॥

ईशानसोमदिङ्मध्ये अन्तकाग्निदिगन्तरे ।
याम्यराक्षसमध्ये तु सोमसामीरणान्तरे ॥ १३ ॥

तन्मूर्ध्नि कालचक्रं तु, तन्मध्येऽव्यक्तपङ्कजम् ।
वायव्योद्भूतनालं तु विकाराधारसंस्थितम् ॥ १४ ॥

भूतान्याधारशक्तौ तु तन्मात्राः कालपावके ।
वागादिकं तथैवाक्षमनन्तं व्याप्य संस्थितम् ॥ १५ ॥

श्रोत्रादिकं धरण्यां च मनः क्षीरार्णवे द्विज !
अनन्तदलपद्मे तु अहङ्कारः समाश्रितः ॥ १६ ॥

हिरण्यकं च धर्माद्यमधिष्ठाय च धी(ः)स्थिता ।
तदूर्ध्वपद्मे प्रकृतिर्गुणसाम्यविभागिनी ॥ १७ ॥

धामत्रयाश्रितः कालो भावाख्ये पुरुषस्थितिः ।
आधेयमब्जसंभूत ! स्वे विकारे स्वरूपिणि ॥ १८ ॥

स्वयमाद्यन्तयो रुद्धं सूत्रे (त्रं) मणिगणो (णे) यथा ।
प्रागाधारात्मना चैव विश्वाकारतया ततः ॥ १९ ॥

नानामन्त्रात्मना ह्यूर्ध्वे निस्तरङ्गो हि तत्वतः ।
अभ्यस्तवासनानां च कर्मिणां कर्मशान्तये ॥ २० ॥

तदिच्छाविष्कृतानां च भोगकैवल्यसिद्धये ।
अनाद्यविद्याविद्धानामियत्तेषा(त्तेषां) ह्यवस्तुनि ॥

नातोर्ध्वं तत्वदृष्टीनां तत्वतो वाऽस्ति पौष्कर ! ।
न तिर्यक्पृष्ठपूर्वे च न हेयादिविकल्पना ॥ २२ ॥

या विशेषविकल्पैस्तु प्रत्यस्तमितलक्षणा ।
शक्तिर्भगवतो विष्णोः साधाराख्याऽभिधीयते ॥

प्राग्वदासनसामर्थ्यं बीजमादाय चेच्छया ।
अव्यक्तव्यक्तरूपा च यथादित्यकदम्बकम् ॥ २४ ॥

भाविप्रसरधर्मित्वाद्विश्वबीजचयस्य च ।
सांप्रतं संहृताङ्गस्य कूर्मसंज्ञा विधीयते ॥ २५ ॥

यो विश्वं निर्दहत्यन्ते कालवैश्वानरात्मना ।
दैवतं यस्य भगवान् कूर्मात्मा लोकपूजितः ॥ २६ ॥

अजहद्भगवच्छक्ति(ः)सामर्थ्यं पुनरेव तत् ।
अनन्तं सविकल्पानां यद्विश्वाङ्कुरमव्ययम् ॥ २७ ॥

नयत्यूर्ध्वं यथा कूर्मो ग्रीवां स्वात्मनि संवृ(हृ)ताम् ।
शेषाख्यफणिदैवत्यं तदनन्तं हि गीयते ॥ २८ ॥

आश्रयं बीजभूतानां चतुर्णां यन्महामते ! ।
तद्वन्धविटपस्तस्माद्व्यक्तिमभ्येति पूर्ववत् ॥ २९ ॥

भूरात्मा भगवान् यस्मिन्नभिमानाख्यदेवता ।
फलं रसात्मकं तस्माद्व्यज्यत्यमृतलक्षणम् ॥ ३० ॥

यस्याभिमानिकं रूपं क्षीरार्णवमनश्वरम् ।
तस्मादनन्तरत्नोत्थकान्तिं कमलमब्जज ! ॥ ३१ ॥

व्यक्तं यस्य च वै शक्तिर्नित्या दहनलक्षणा ।
तदनन्तदलं विद्धि दिव्यं विकसितं सितम् ॥ ३२ ॥

परपूर्वेण भेदेन एकद्वित्रिगुणात्मना ।
स्थिता बुद्धिविकारैस्तु सह चाष्टाभिरब्जज ! ॥ ३३ ॥

यत्राधिदैवतात्वेन वाग्विकारा ऋगादयः ।
तथा कालविकारा ये चत्वारः कृतपूर्वकाः ॥ ३४ ॥

तत्र रूपं हि सर्वेषां सत्तामात्रं परं स्मृतम् ।
व्यक्तिकारणधानाभिः साङ्गाभिरपरं तु तत् ॥ ३५ ॥

तृतीयमभिमानाख्यदेवतादेहलक्षणम् ।
तस्माद्धि वायुदैवत्यं स्पर्शतन्मात्रमेव च ॥ ३६ ॥

जाता यस्य स्फुटा व्यक्तिर्नानाचक्राङ्गलक्षणा ।
तस्मादाकाशदैवत्यं शब्दमुत्पन्नमब्जज ! ॥ ३७ ॥

सर्वाङ्गसंहृता चक्रव्यक्तिर्यस्यामलं वपुः ।
गीयते व्योमवृत्तं तत् प्रधानकमलालयम् ॥ ॥ ३८ ॥

यस्यान्तस्थानि भूतानि यस्मिन् सर्वं प्रतिष्ठितम् ।
यस्मादुन्मेषपूर्वं हि महत्प्रलयपश्चिमम् ॥ ३९ ॥

प्रवर्तते कालतानं भेदकृत् सर्ववस्तुषु ।
वाङ्मात्रेणैव भिन्नस्य अभिन्नस्यैव तत्त्वतः ॥ ४० ॥

ज्ञानादिगुणवृन्दस्य ब्रह्मणश्चतुरात्मनः ।
नित्योदितत्वान्नित्यत्वाद्व्यापकत्वात् परं पदम् ॥

पूर्णत्वात् षड्गुणत्वाच्च न कालो लब्धगोचरः ।
शब्दादादित्यदैवत्यमहङ्कारं महामते ! ॥ ४२ ॥

मनश्च चन्द्रदैवत्यमहङ्कारादभूत्ततः ।
बुद्धिः प्रकाशदैवत्या व्यक्तानन्दात्मनो विभोः ॥ ४३ ॥

दलादिकर्णिकान्तायाः सूर्यपूर्वादिकल्पना ।
प्रधानकमलस्यैषा मूर्तिर्गुणमयी स्मृता ॥ ४४ ॥

बुद्ध्यादीनां च तत्त्वानां कारणं यदनश्वरम् ।
अव्यक्ताख्यं महाबुद्धे ! ह्यभिन्नगुणमूर्तिभृत् ॥ ४५ ॥

स्वगुणानधरीकृत्य स्वप्रतिष्ठं प्रवर्तते ।
अध्यात्मलक्षणावृत्तिः सर्वाः संहृत्य वै हृदि ॥ ४६ ॥

उत्पद्यन्ते हि चैतस्माद्भावाः सर्वे द्विजोत्तम ! ।
विपद्यन्तेऽत्र वै भूयस्तस्मात्पद्मं परं त्विदम् ॥ ४७ ॥

चिदादित्यकलाजालं ग्राह्यग्राहकलक्षणम् ।
संक्रान्तं यत्र स्वं धाम स्वसामर्थ्यं च वेत्त्यपि ॥ ४८ ॥

विमलाख्या विमलता ज्ञानशक्ति(र्ज्ञ)ताब्जज ! ।
प्रभुश्चाख्या प्रभुता चैव सत्यसंज्ञा च सत्यता ॥

नित्याख्या नित्यता चैव प्रकाशाख्या प्रकाशता ।
अनन्तता ह्यनन्ताख्या कला कमलसंभव ! ॥ ५० ॥

सहानुग्रहशक्त्या वै ज्ञेयाऽनुग्रहता परा ।
द्विचतुष्कं कलानां यत् स्वप्रतिष्ठं हि वर्तते ॥ ५१ ॥

संवर्तते परं चैव पुनरेव निवर्तते ।
परापरविभागेन कलास्त्वेताश्चिदात्मनः ॥ ५२ ॥

प्रोक्ताः कमलसंभूत ! यासामानन्त्यमुत्तमम् ।
यथाक्रमेण सर्वेषां ध्यानमाकर्णयामलम् ॥ ५३ ॥

शान्तमुज्झितचेष्टं च सितमन्तर्मुखं स्थितम् ।
आधेयोल्लिङ्गिताकारमाधाराख्यं स्मरेत् प्रभुम् ॥ ५४ ॥

कूर्ममुद्रान्वितं कूर्मवक्त्रं निष्कलुषप्रभम् ।
शङ्खपद्मधरं कूर्मं स्वस्तिकेन स्थितं स्मरेत् ॥ ५५ ॥

मुञ्चन्तमनिशं तेजो देहाद्दीपनमुत्कटम् ।
तिर्यगूर्ध्वं च धातारं ज्वालाजालमिवोज्ज्वलम् ॥

अनन्तशशिसंकाशमनन्तमथ संस्मरेत् ।
सहस्रफणमालाढ्यं सहस्रभुजभूषितम् ॥ ५७ ॥

स्वपाणिसंपुटेनैव शोभयन् स्वान्तभूस्थलम् ।
सितारविन्दशङ्खाक्षसूत्रचक्रकरान्वितम् ॥ ५८ ॥

पतनाशङ्कितुर्ध्वं वित्रस्तमनसस्तु च ।
मा भैरित्यभयं यच्छन्नाब्रह्मभवनस्य च ॥ ५९ ॥

निःशेषरत्नहेमाङ्गां प्रावृड्लक्ष्मीमिवोज्ज्वलाम् ।
पद्मासनेनोपविष्टां ध्यायेत् पद्माञ्जलिं धराम् ॥ ६० ॥

फुल्लकुन्दावदातं च सितस्निग्धजटाधरम् ।
ध्मायमानं सितं शङ्खं मुक्तादामैरलङ्कृतम् ॥ ६१ ॥

विस्तीर्णसर्वावयवं विक्षिप्तोरुद्वयं स्थितम् ।
विक्षिप्तजानुपादं च संस्मर्तव्यं पयोनिधिम् ॥ ६२ ॥

सुपक्वाम्रफलश्यामपाणिपादतलोज्ज्वलम् ।
रक्ताक्षं च तथा विप्रकीर्णकेशं सितान्ननम् ॥ ६३ ॥

पद्मासनेनोपविष्टमलिमालाशताकुलम् ।
पद्ममुद्रान्वितं पद्मं सुदीर्घचरणं स्मरेत् ॥ ६४ ॥

तुहिनाच्छोपलस्वच्छमुक्ताफलशशिप्रभाः ।
मृगेन्द्रस्कन्धवदना धर्मज्ञानादयश्चतुः ॥ ६५ ॥

पद्मरागप्रवालाग्निसद्दाडिमफलोज्ज्वलाः ।
अन्तर्दयोपरक्ताश्च राजराजेश्वरोपमाः ॥ ६६ ॥

हिरण्यवर्णवद्विद्धि चत्वारो ऽधर्मपूर्वकाः ।
हेमचम्पकखद्योतहरितालदलोज्ज्वलाः ॥ ६७ ॥

वाजिवक्त्राः स्मृता वेदाः संपूर्णनरलक्षणाः ।
एवं नृपेन्द्रवदना युगा ब्रह्मन्! कृतादयः ॥ ६८ ॥

सुपक्वाम्रातसीपुष्पनीलाञ्जशुकसन्निभाः ।
सर्वे सद्वस्त्रसत्पुष्पसदलङ्करणान्विताः ॥ ६९ ॥

शङ्खपद्मधराः सर्वे वराभयकरास्तु वै ।
आधेयचक्रविन्यस्तमस्तका स्वात्मसिद्धये ॥ ७० ॥

समर्पितान्तःकरणाः परस्मिन् मन्त्रकारणे ।
युगान्तार्काग्निमङ्काशस्वगोमण्डलमध्यगम् ॥ ७१ ॥

स्वमुद्रान्वितपाणिं च वल्गन्तं हेतिराट् स्मरेत् ।
चिन्त्यमव्यक्तपद्मं च हिमहेमाग्निभास्वरम् ॥ ७२ ॥

शान्तमष्टभुजं सौम्यं संस्थितं स्वस्तिकेन तु ।
स्फटिकोपलकान्तिं च चिद्धनं ध्रुवमव्ययम् ॥ ७३ ॥

सर्वशक्तिनिधिं ध्यायेदमूर्तं चित्प्रभाकरम् ।
सर्वं स्वविभवान्तस्थास्तस्याधारात्मनो विभोः ॥ ७४ ॥

स्वसत्ताभासितं सत्वं गुणसत्वाद्विलक्षणम् ।
विभवं विद्धि विप्रेन्द्र! ज्वालौघं कच्छपात्मनः ॥७५॥

स्वभोगं नागनाथस्य भूः क्षितेः काञ्चनी तथा ।
आसारमामृतं दिव्यं वीच्योघैस्तु समन्वितम् ॥ ७६ ॥

क्षीरोदकीयविभवं परिज्ञेयमनश्वरम् ।
बीजकोशं सकिञ्जल्कं कमलस्य दलान्वितम् ॥ ७७ ॥

धर्मादेश्च चतुष्कस्य सद्विवेकं सुनिर्मलम् ।
द्वि(क)द्विकस्या(स्य)धर्मादेरविद्याविभवं महत् ॥

वाक्प्रपञ्चमहेयं यत् तदगादिगणस्य च ।
विभवं च कृतादीनां महत्कल्पान्तमारुतैः ॥ ७९ ॥

चक्रस्य विभवं विद्धि मं मायाश्रयं हि यत् ।
गौणीवृत्तिरमेया या विभवं प्राकृतं हि तम् ॥ ८० ॥

विमलादिकलाजालं पौरुषं विभवं स्मृतम् ।
विभोर्मन्त्रात्मनश्चेदमशेषममरार्चितम् ॥ ८१ ॥

आमहन्मन्त्रनाथेभ्यो नानामन्त्रगणं हि यत् ।
स्वशक्तिनिचयोपेतं तद्विष्णोः परमात्मनः ॥ ८२ ॥

विभवं कमलोद्भूत! ज्ञात्वैवं संयजेत् सदा ।
शब्दव्यक्तिस्तदूर्ध्वे तु स्थितार्केन्द्वग्निलक्षणा ॥ ८३ ॥

त्रिदीप्तिभास्वरा नाडी त्वव्यक्तध्वनिविग्रहा ।
व्यक्तचक्रत्रयस्योर्ध्वे वर्तते या महामते! ॥ ८४ ॥

निःसृता ब्रह्मरन्ध्रेण गता सूर्यपथात् परम् ।
वायुद्वारेण पातालं भित्वा याता स्वगोचरम् ॥

सङ्कल्पविषयः सर्वस्तद्वद्धः प्रतितिष्ठति ।
सूत्रे मणिगणो यद्वन्मध्यनाडी ह्यतः स्मृता ॥ ८६ ॥

लक्ष्यस्थाने तु पूर्वोक्ते तस्यामभ्यन्तरे तु वै ।
संपुटे शशिसूर्याख्ये निमेषोन्मेषलक्षणे ॥ ८७ ॥

तत्राब्जं चार्कमालस्य परा वाग्भ्रमरी स्थिता ।
या सर्वमन्त्रजननी शक्तिः शान्तात्मनो विभोः ॥

नदन्ती वर्णजं नादं शब्दब्रह्मेति यः स्मृतः ।
अकारपूर्वो हान्तश्च धारा सन्तानरूपधृक् ॥ ८९ ॥

नादावसानगगने देवोऽनन्तः सनातनः ।
वरदाभयदेनैव शङ्खचक्राङ्कितेन तु ॥ ९० ॥

त्रैलोक्यधृतिदक्षेण युक्तः पाणिद्वयेन तु ।
शान्तः संवित्स्वरूपस्तु भक्तानुग्रहकाम्यया ॥ ९१ ॥

अनौपम्येन वपुषा ह्यमूर्तो मूर्ततां गतः ।
तस्मादावाहनं कुर्याद्यथा तद्वद्धारय ॥ ९२ ॥

स्वशक्त्याधिष्ठितं कृत्वा स्वस्वभावस्वभावया ।
ग्राह्यग्राहकरूपाया एवमव्यक्तपुष्करम् ॥ ९३ ॥

समास्ते केवलं शुद्धमीषत्काललवं द्विज! ।
सामान्यचिन्मयो भूत्वा सांप्रतं शक्तयः कलाः ॥

अस्मिता लक्षणं धर्मं स्वकं सम्यङ्निरस्य च।
प्रवर्तते तन्निरासात् आनन्दमतुलं द्विज! ॥ ९५ ॥

स्वप्रकाशमनौपम्यं तमिच्छेन्मन्त्रमव्ययम्।
परिच्छेद्यां दिगाद्यैस्तु प्रकाशाकाशवर्तिनीम् ॥ ९६ ॥

कृत्वाश्रित्य कलामूर्तिं समनन्तरमब्जज!।
विहायोमध्यदेशं च प्रकाशगहनात्ततः ॥ ९७ ॥

धृतिशक्त्यासने स्वेऽथ उपविश्य यथासुखम्।
विद्यादेहेन सूक्ष्मेण भूतदेहानुकारिणा ॥ ९८ ॥

अथानन्दकदम्बं (स्य स्वस्वरूपात्) तत्स्वरूपपृथक्
रञ्जयेच्छास्त्रदृष्टेन व्यवहारगतेन च ॥ [स्थितम्।

स्वकेनालम्बनेनैव देवतालक्षणेन च।
मणिर्यथा विभागेन नीलपीतादिभिर्युतः ॥ १०० ॥

रूपभेदमवाप्नोति ध्यानभेदात्तथा विभुः।
एवं प्रवर्तते सम्यक्ञानन्दरूपं परात्मकम् ॥ १०१ ॥

हृत्पुण्डरीकमध्यस्थं चैतन्यज्योतिरव्ययम्।
कदम्बगोलकाकारं विश्वरूपं मणिप्रभम् ॥ १०२ ॥

रत्नदीपसमाकारमच्छिन्नप्रसरं महत्।
श्रोत्रपूर्वैः खरन्ध्रैस्तु रश्मयस्तस्य निर्गताः ॥ १०३ ॥

छिद्रपूर्णाद्यथा कुम्भान्महादीपयुताद्द्विज!।
याति भासां गणो बाह्ये शरीरादेवमेव हि ॥ १०४ ॥

मान्त्रो रश्मिसमूहस्तु नाडीभिः प्रसरेद्बहिः।
अप्रत्यक्षः सदाक्षाणां मन्त्रात्मा यद्यपि द्विज! ॥

तथाऽप्यनेन न्यायेन प्रत्यक्षमुपलभ्यते।
बहिः स्थितं यद्भूतानां क्ष्मादीनां गुणपञ्चकम् ॥

तेन तद्वोपलब्धव्यं प्रत्यक्षेण परोक्षकम्।
तस्य भौमो गुणस्थैर्यं तद्गुणेन हि सा स्थिरा ॥

परस्परानुभावेन संवित्तौ तदुपारुहेत्।
आह्लादो यस्तदीयो हि स तोये चोपलभ्यते ॥१०८॥

तौयो गुणस्तु तस्यास्ति कथं स्यादन्यथा मुने!।
स्मृतमात्रेण मन्त्रेण आह्लादो मनसो महान् ॥ १०९ ॥

रूपात्मना परिणतः स चाग्नौ पारमेश्वरः।
यो रूपाख्यो गुणश्चाग्नेः स मन्त्रात्मनि तिष्ठति ॥

तेजो विना यतो ध्यानं कुत्रचिन्नोपपद्यते।
स्पर्शधर्मो हि यो वायोः स तदीयो महामुने! ॥

यो वायव्यो गुणः सूक्ष्मः स च मन्त्रतनौ स्थितः।
स चान्तःकरणेनैव संयमे स्यात्तदुत्थितः ॥ ११२ ॥

यच्चाकाशस्य शून्यत्वमस्ति तत् स्यात्तदुद्भवम्।
स मन्त्रात्मनि संश्लिष्टो गुणो ह्यस्ति महामते! ॥११३॥

अग्राह्यत्वाच्च करणैः प्राकृतैर्भावनां विना।
इत्येवं मन्त्रसामर्थ्यं पुरा ज्ञात्वा यथार्थतः ॥ ११४ ॥

सन्निधानं भवेद्येन पूजाकाले ह्युपस्थिते।
तस्मिन्नङ्गानि विन्यस्य प्राक् संपूर्णगुणानि च ॥

स्वमन्त्रैरर्चयेद्देव स्थानभेदं विना ततः।
तस्मिन् कदम्बकुसुमसदृशे मन्त्रगोलके ॥ ११६ ॥

द्वादशाक्षरमन्त्रेण अभिन्नेन तु सांप्रतम्।
व्यक्तिमापद्यते तस्माज्ज्ञेया हृत्पद्ममध्यगा ॥ ११७ ॥

या परा प्रकृतिर्वाणी चिद्रूपा निर्मलात्मिका(परा)।
पूरिताध्यक्षभावेन निष्कलेन महात्मना ॥ ११८ ॥

शरीरमिव जीवेन स्थूलं सूक्ष्मं विलक्षणम्।
मूलमन्त्रादितः प्राग्वत् सर्वमन्त्रगणस्य च ॥

करन्यासं विना देहे न्यासं तस्य च संसरेत्।
सृष्टिसंस्थितिसंहारन्यासं चापि तथाऽऽचरेत् ॥

ततः स्वाब्जसमध्यास्वप्यूर्ध्वस्थात् मसरच्च्युताम्।
गङ्गां भगवतो मूर्ध्नि तेनामृतजलेन तु ॥

अर्घ्याद्यखिलभोगानां कार्या वै शुभकल्पना।
यं यं संकल्पयेद्भोगं तं तं भाव्यसुधामयम् ॥

पतन्तमम्बराद्वेगादमृतांशुपरिप्लुतम्।
साक्षादमृतरूपैस्तु तैस्तैरमृतसंभवैः ॥

बृंहितं मुदितं मग्नं स (म्लुप्तं)मन्त्रराट् स्मरेत्।
ततस्तु देवदेवस्य अर्घ्यं दत्त्वा यथाविधि ॥

सन्निधिं सन्निरोधं च सांमुख्यं च समाचरेत् ।
हृदयादीनि चाङ्गानि लाञ्छनं कमलादिकम् ॥
भूषणं च किरीटाद्यं लक्ष्म्याद्याः शक्तयस्तथा ।
गरुडो मूर्तयो यान्या देहे देवस्य याः स्थिताः ॥
व्यापकस्य तथात्वेन स्वे स्वे स्थाने प्रभात्मकाः ।
तद्देहसंस्थिताः सर्वे पूजनीयाः क्रमेण तु ॥
परिवारं विना मन्त्रैः स्वैः स्वैरर्घ्यादिभिर्द्विज ! ।
लययागो ह्ययं विप्र ! हृदादिष्वनुकीर्तितः ॥
तस्माद्धृत्कर्णिकाधारं मूर्तौ वा यत्र कुत्रचित् ।
मूलमन्त्रशरीरस्थं परिवारं यजेत् सदा ॥
याग एष लयाख्यस्तु संक्षिप्तः सर्वसिद्धिदः ।
मन्त्रराट् कर्णिकामध्ये लक्ष्म्याद्याः केसरादिषु ॥
साकाराः केवलाः सर्वे यत्र भोगाभिधः स तु ।
केवलेन च यागेन पृथग्भूतेन नारद ! ॥
पूजनं कमलादीनामधिकाराभिधः स तु ।
एवं कृत्वा लयाख्यं तु यागं भोगाभिधं तथा ॥
ततः क्रमाद्यजेद्देवं भोगैरमृतसंभवैः ।
सुसमस्तादिभिः सम्यक्काम्मूलान्तैर्यथोदितैः ॥
सर्वं कृत्वा यथायोगं यावदात्मनिवेदनम् ।
मानसान् जयशब्दांश्च कृत्वा विज्ञापयेदिदम् ॥
स्वागतं तव देवेश ! सन्निधिं भज मेऽच्युत ! ।
गृहाण मानसीं पूजां यथार्थपरिभाविताम् ॥
ज्ञात्वा तु सुप्रसन्नं तं प्रसादाभिमुखं प्रभुम् ।
विस्तरेण द्विजश्रेष्ठ ! मानसं यागमारभेत् ॥
संकल्पजनितैर्भोगैः पवित्रैरक्षयैः शुभैः ।
सांस्पर्शैरोपचाराद्यैस्तथा चाभ्यवहारिकैः ॥
महद्रूपैः प्रभूतैस्तु सप्तलोकसमुद्भवैः ।
यथोदितैस्तु विविधवदुत्कृष्टतरलक्षणैः ॥
एवंविधांस्तु तान् भोगान् सद्भक्त्या विनिवेद्य च ।
समुद्धरन् धिया मन्त्रं प्रसन्नेनान्तरात्मना ॥

गजाश्वधेनुयानानि सुवस्त्रालङ्कृतानि च ।
निवेद्यचान्त(तं)र्मानानि ग्राह्यन्तं स्मरेत्ततः ॥
आत्मानं ससुतान् दारान् सर्वस्वेन समायुतान् ।
निवेद्य प्रणतो मूर्ध्ना आनन्दाश्रुसमन्वितः ॥
कामधेनुमयीं मुद्रां मनसा मन्त्रसंयुताम् ।
बध्वा संचिन्तयेद्विष्णोः सर्वकामप्रपूरणीम् ॥
ततो विशेषयजनं कल्पयेदच्युतस्य तु ।
सौवर्णपुष्पसंपूर्णमञ्जलिं संप्रसार्य च ॥
मूलमन्त्रं समुच्चार्य प्रयत्नैः पूरकादिकैः ।
दीर्घघण्टारवप्रख्यं यावत्तत्संभवावधि ॥ १४४ ॥
स्फुरद्रश्मिचयाकीर्णं वह्न्यर्केन्दुशतप्रभम् ।
ध्यात्वा नारायणं देवमञ्जलौ सन्निरोधयेत् ॥ १४५ ॥
तमञ्जलिं क्षिपेन्मूर्ध्नि तस्मिन् वै मन्त्रविग्रहे ।
अर्घ्यं निवेदयेद्भूयः पुनः पुष्पाञ्जलिं शुभम् ॥ १४६ ॥
मुद्रां सन्दर्श्य मूलाख्यां मानसीं जपमारभेत् ।
संख्याहीनं यथाशक्ति घण्टाख्यकरणेन च ॥ १४७ ॥
भोगस्थानगतानां च लक्ष्म्यादीनां क्रमेण तु ।
मनसा दर्शयेन्मुद्रां जपं कुर्यात् सकृत् सकृत् ॥ १४८ ॥
स्तोत्रमन्त्रैः पवित्रैश्च स्तुत्वा सम्यक् प्रसादयेत् ।
एवं क्रमेण विप्रेन्द्र ! कृत्वा यागं तु मानसम् ॥ १४९ ॥
होमं तथाविधं कुर्यान्मोक्षलक्ष्मीप्रदं शुभम् ।
नाभिचक्रान्तरस्थं तु ध्यायेद्वह्निगृहं मुने ! ॥ १५० ॥
त्रिकोणं त्रिगुणेनैव अव्यक्तेनावृतं परि ।
ध्यानारणिं तु निर्मथ्य चिदग्निमवतार्य च ॥ १५१ ॥
सुशुद्धं संस्कृतं दीप्तं सदैवोर्ध्वशिखं द्विज ! ।
वासुदेवात्मकं यस्मात् स वसत्यन्तरात्मसु ॥
प्रोच्चरेन्मूलमन्त्रं तु यावच्छब्दस्य गोचरः ।
तत्रस्थमाहरेद्दिव्यमाह्लादाज्यामृतं परम् ॥ १५२ ॥
ब्रह्मसर्पिस्समुद्राद्यविस्तरक्षात् परिच्युतम् ।
गृहीत्वाऽमृतमार्गेण ब्रह्मरन्ध्रेण संविशेत् ॥

हृदयान्मध्य(न्त्र)मार्गेण चिन्मयेन सदीप्तिना।
प्रोल्लसन्तं स्मरेन्मन्त्रं ब्रह्मशक्त्युपबृंहितम् ॥ १५५ ॥
स्वकारणाग्नौ नाभिस्थे य ऊर्ध्वेन्धनवत् स्थितः।
स्वभावदीप्तब्रह्माग्नौ परितश्चोदरोज्ज्वलम् ॥ १५६ ॥
स्मृत्वा यन्त्रं तु तन्मूर्ध्नि पतमानं द्विजाम्बरात्।
चिन्तयेद्वा(द)मृतं त्वाज्यं पुरावच्चाहृतं द्विज ! ॥
चिदग्निमेवं सन्तर्प्य नाभौ मन्त्रस्वरूपिणम्।
ज्वालाग्रावस्थितं चैव भूयो हृत्पङ्कजे स्मरेत् ॥ १५८ ॥
प्रोच्चारयंश्च मन्त्रेशं प्लुतं ध्यानसमन्वितम्।
कृत्वैवमेकसन्धानं स्थानद्वयगतस्य च ॥ १५९ ॥
विष्णोर्मन्त्रस्वरूपस्य नानामन्त्रात्मकस्य च।
सर्वं तु विन्यसेत् पश्चात्तस्मिन् कर्मकृतं च यत् ॥
तोयपुष्पाक्षतैः पूर्णं भावयेद्दक्षिणं करम्।
तन्मध्ये निष्कलं मन्त्रं संस्मरेत् किरणाकुलम् ॥ १६१ ॥
यागोत्थां फलसंपत्तिं लक्ष्मीरूपां विचिन्त्य च।
मूलमन्त्रं समुच्चार्य पाणिमध्ये तथा स्मरेत् ॥ १६२ ॥
भूयश्च निष्कलं मन्त्रं तस्यामुपरि भावयेत्।
सशीर्षे जानुनी भूमौ कृत्वा विष्णोर्निवेदयेत् ॥ १६३ ॥
प्रसादाभिमुखेनाथ तेन तच्चात्मसात्कृतम्।
भावनीयं द्विजश्रेष्ठ ! परितुष्टेन चादरात् ॥ १६४ ॥
निर्वृत्ते पुरुषार्थे तु हृदये बाह्यतोऽपि वा।
क्रमान्मन्त्रगणं स्मृत्वा यातं मन्त्रेश्वरे लयम् ॥ १६५ ॥
मन्त्रव्यक्तिं स्वसंकल्पशक्त्याथ शमं नयेत्।
सह संकल्पशक्त्या वै विद्यामूर्तिं स्वकां ततः ॥ १६६ ॥
स्वकलासु लयीकुर्यात् कलाजातं तथाऽऽत्मनि।
प्राग्वदानन्दसन्दोहपरिपूर्णं तु जायते ॥ १६७ ॥
बहिर्यजामीति यदा संकल्पं मनसा कृतम्।
तदा संहृत्य तां व्यक्तिमास्ते मध्याह्नसूर्यवत् ॥ १६८ ॥
विसर्जयेन्नतं यावन्न कृता बाह्यतः क्रियाः।
न्यसनीयो ह्यसौ यस्मान्मण्डलादिषु वस्तु(वृत्ति)षु ॥
सृष्टिक्रमेण संहृत्य आधारं यत् पुरोदितम्।
ज्ञानिनां विगलत्येव स्वभावात्तत्त्ववेदिनाम् ॥ १७० ॥
निष्क्रियाणां महाबुद्धे ! निष्पन्नानां स्वकर्मणा।
विकासमेति चान्येषां नित्याकाररतात्मनाम् ॥ १७१ ॥
मन्त्रक्रियारतानां च नानात्वेना(न)समात्मनाम्।
धृतमच्युतशक्त्या वै ह्यपरिच्युतसत्तया ॥ १७२ ॥
सद्वि(चि)कल्पस्वरूपं च विश्वासनमिदं द्विज !।
विभृतं विभुना व्याप्तं स्वसामर्थ्येन यद्यपि ॥ १७३ ॥
तथापि तच्छरीराणां जीवानां तन्निवासिनाम्।
स्वशक्त्यानुगृहीतानां तमाक्रम्य महामते ! ॥ १७४ ॥
नानामन्त्रात्मना त्वास्ते तस्मिन्नानाविधात्मनि।
इत्येवमुक्तमाधारस्वरूपं हि यथा स्थितम् ॥ १७५ ॥
जायते यत्परिज्ञानात् कर्मिणां कर्मसंक्षयः।
अयं यो मानसो यागो ज्वरव्याधिलयापहः ॥ १७६ ॥
पापोपसर्गशमनो भयाभावकरो द्विज !।
सतताभ्यासयोगेन देहपातात् प्रमोचयेत् ॥ १७७ ॥
यस्त्वेवं परया भक्त्या सकृदाचरते नरः।
क्रमोदितेन विधिना तस्य तुष्याम्यहं मुने ! ॥ १७८ ॥
याजकानां च सर्वेषां प्रधानत्वेन वर्तते।
तारयेत् स्वपितॄन् सर्वान् यातानेष्यांश्च साम्प्रतम् ॥
किं पुनर्नित्ययुक्तो यस्तद्भावगतमानसः।
मन्त्राराधनमार्गस्थः श्रद्धाभक्तिसमन्वितः ॥ १८० ॥
न तस्य पुनरावृत्तिः स याति परमं पदम्।
ज्ञात्वैवं यत्नतो नित्यं कुर्याद्यागं तु मानसम् ॥ १८१ ॥
इदं रहस्यं परमं मयोक्तं तेऽद्य नारद !।
नाशिष्याणां च वक्तव्यं नाभक्तानां कथंचन ॥ १८२ ॥
अत्यन्तभयभीतानां भक्तानां भावितात्मनाम्।
इदं रहस्यं वक्तव्यं सम्यग्भावं परीक्ष्य च ॥ १८३ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे मानसयागो नाम पञ्चमोऽध्यायः ॥

॥ श्रीः ॥

# षष्ठोऽध्यायः ॥

पुराऽनेन विधानेन कृत्वा यागं तु मानसम् ।
कर्मणा भक्तियुक्तेन बहिर्वृत्तौ यजेत्ततः ॥ १ ॥

सनकः —

भगवंस्त्वत्प्रसादेन ज्ञातो ह्यज्ञाननाशनः ।
ज्ञानविज्ञानसहितो ह्ययागः सर्वसिद्धिदः ॥ २ ॥

किमर्थं बाह्यतः पूजा कार्या वै प्रतिमादिषु ।
एतदाचक्ष्व भगवन्नत्र मे संशयो महान् ॥ ३ ॥

शाण्डिल्यः —

बाह्योत्था वासना विप्र ! बहुजन्मार्जिता दृढा ।
लोलीकृतोऽनया ह्यात्मा शुद्धोऽशुद्धस्वरूपया ॥ ४ ॥

या मन्त्रविषया शुद्धा क्रियाशान्तस्वरूपदा ।
समुत्थानविनाशार्थं तस्याः संपरिकीर्तिता ॥ ५ ॥

स बाह्याभ्यन्तराभ्यां च क्रियाभ्यां तन्मयो भवेत् ।
दृढोत्थवासनानां च तानवं स्याच्छनैः शनैः ॥ ६ ॥

यन्मयः साधको विप्र ! देहस्थः सांप्रतं भवेत् ।
तन्मयो देहपातात् स्यादित्येतत् कथितं मया ॥ ७ ॥

अथ बाह्योत्थयागस्य विधानमवधारय ।
देवं हृत्कमलाकाशे तेजोरूपतया स्थितम् ॥ ८ ॥

तस्मात् स्थानात् समानीय तं कुर्यान्नेत्रमध्यगम् ।
वासुदेवाभिधानं तु प्रागुक्तं च समाश्रयेत् ॥ ९ ॥

ततो लोचनयुग्मेन लब्धेन द्विजसत्तम ! ।
जपन् लोचनमन्त्रं तु अवलोक्याखिलं तु तम् ॥ १० ॥

स्थापितो य उपार्जित्य संभारो ह्युदकादिकः ।
ध्यायेद्दक्षिणपाणौ तु अस्त्रमादित्यसन्निभम् ॥ ११ ॥

द्रव्यदोषगणं तेन दग्ध्वा तन्मन्त्रमुच्चरन् ।
संचिन्त्य भस्मभूतं तु तं सर्वं द्विजसत्तम ! ॥ १२ ॥

दग्धदोषमथाप्याय्य वामहस्त (तलेन) गतेन तु ।
हृदा पूर्णेन्दुतुल्येन अमृतासारवर्षिणा ॥ १३ ॥

तन्मन्त्रमुच्चरन् पश्चात् कान्तिमन्तं विचिन्तयेत् ।
दग्धमाप्यायितं सर्वमथ चैवं समाचरेत् ॥ १४ ॥

प्रचण्डकिरणव्रातैर्भास्करीयैर्दहेत् पुरा ।
संचिन्त्य भस्मभूतं तं ततः पूर्णेन्दुरश्मिभिः ॥ १५ ॥

आप्याय्यामृतकल्लोलधारापातेन सत्तम ! ।
कान्तिमच्चिन्तयेद्भूयो यद्दग्धं भानुना ततः ॥ १६ ॥

बध्वा कामदुघां मुद्रां स्रवन्तीं मन्त्रसंयुताम् ।
गोरूपां हिमशैलभां निराधारपदे स्थिताम् ॥ १७ ॥

तया तदमृतीकुर्याद्भोगजालं यथास्थितम् ।
निर्मलो द्रव्यसङ्घश्च यागयोग्यो भवेत्तदा ॥ १८ ॥

गालितेनाम्बुना पूर्णं स्वाहृतेनाम्बुना सह ।
सोत्तरे चर्मणा स्थाप्य कुम्भं, सर्वोपयोगि यत् ॥१९॥

उपार्जितं पुरा यद्वै यागोपकरणं महत् ।
तत् सर्वं दक्षिणे कृत्वा मध्ये भद्रासनं न्यसेत् ॥ २० ॥

प्रतिमालक्षणाध्याये वक्ष्यते तस्य लक्षणम् ।
यत्किञ्चित् पत्रपुष्पाद्यं परिहृत्येत पीठगम् ॥ २१ ॥

पाणिना तत् समाहृत्य शुचिस्थाने निधाय वै ।
गव्यैर्वा चामरैर्वालैः शिखिपक्षैः कुशैरथ (पि) ॥ २२ ॥

संमार्ज्य भद्रपीठं तु वाससा सुसितेन वा ।
बहुना वस्त्रपूतेन वारिणा तदनन्तरम् ॥ २३ ॥

प्रक्षाल्य द्वादशार्णेन प्रणवाद्यन्तगेन तु ।
एवमाराधनाधारं क्षालयित्वा च वारिणा ॥ २४ ॥

तत्तावदब्जपुष्पेण कुर्याद्विघ्नगणोज्झितम् ।
आराध्योऽयमथारोप्य तत्र मन्त्रमयीं शुभाम् ॥ २५ ॥

सर्वोपकरणोपेतां सर्वलक्षणसंयुताम् ।
प्रतिमां धातुपाषाणनिर्मितामात्मसिद्धये ॥ २६ ॥

अष्टाङ्गेन नमस्कृत्य दद्यादर्घ्यं तु मूर्धनि ।
अनुलेपनसंयुक्तं ततः पुष्पाञ्जलिं शुभम् ॥ २७ ॥

साङ्गं सावरणं भक्त्या पूजयेत् पुरुषोत्तमम् ।
यद्वार्घ्यपाद्याचमनैर्देवमभ्यर्च्य वै ततः ॥ २८ ॥

भुक्तमर्घ्यादिकं तस्मादपनीयाभिवाद्य च ।
समर्प्य विष्वक्सेनस्य, संशोध्य मृदुना द्विज ! ॥ २९ ॥

उशीरवंशकूर्चेन क्षालयेद्गन्धवारिणा ।
उच्चरन् मूलमन्त्रं वा कुर्यान्मार्गत्रयं विभो ! ॥ ३० ॥

सुधौते देवदेवस्य वाससी परिधापयेत् ।
विष्वक्स्याङ्गवद्बिम्बाद् भुक्तपुष्पादिकं हि यत् ॥ ३१ ॥

अपनीय तु तत् कुर्याद्वाससा रेणुमार्जनम् ।
यद्वा प्राग्यागभवनप्रवेशानन्तरं द्विज ! ॥ ३२ ॥

न्यस्य भद्रासनाद्यं तदन्यदन्यत् समाचरेत् ।
यद्वा तदातने काले न्यस्य भद्रासनादिकम् ॥ ३३ ॥

आद्यं मार्गत्रयं कृत्वा यथोक्तविधिना ततः ।
योगपीठार्चनारम्भे विम्बोक्तं सर्वमाचरे (रभे)त् ॥३४॥

अथार्घ्यादीनि पात्राणि प्रक्षाल्यास्त्रेण वारिणा ।
समापूर्य सुगन्धेन जलेन हृदयेन तु ॥ ३५ ॥

द्रव्याणि निक्षिपेत्तेषु यथोक्तक्रमयोगतः ।
भद्रासनस्य कोणेषु पुरतो वाससास्तृते ॥ ३६ ॥

भूतले वाऽथ पात्राणि आधारोपरि विन्यसेत् ।
सपूर्वनियमेनैव उदक्पश्चिमकोणगम् ॥ ३७ ॥

अर्घ्याम्बुकलशं न्यस्य ततः प्रागुत्तरान्तरे ।
न्यसेदाचमनीयाख्यमाग्नेये स्नानसंज्ञितम् ॥ ३८ ॥

विन्यस्य पाद्यसंज्ञं तु पदे दक्षिणपश्चिमे ।
अग्रतो वापि तन्मध्ये न्यसेदर्घ्यं द्वितीयकम् ॥ ३९ ॥

अग्निकोणे त्वर्घ्यपात्रं पाद्यमैशानकोणके ।
आचाम्यं नैर्ऋते भागे स्नानार्थं वायवे तथा ॥ ४० ॥

ईश्वरप्राग्वशादर्घ्यमाग्नेयादिषु कोणके ।
मुख्यामुख्यार्घ्यपाद्यादिक्रमाद्द्रव्याणि निक्षिपेम् ॥

चन्दनं शशिबाह्लीकदूर्वासिद्धार्थकानि च ।
साक्षतानि कुशाग्राणि तण्डुलानि तिलानि च ॥४२॥

काञ्चनं रजतं ताम्रं रत्नानि च फलानि च ।
कदलीफलपूर्वाणि प्रधानेऽर्घ्यं विनिक्षिपेत् ॥ ४३ ॥

द्वितीये दधिमध्वाज्यक्षीरबिन्दुचतुष्टयम् ।
कुशाग्रेण सबाह्लीकं सपुष्पं तिल(सित)तण्डुलम् ॥

दूर्वां च विष्णुक्रान्तां च श्यामाकं शङ्खपुष्पकम् ।
पद्मकं कुन्दरेणुं च पाद्यपात्रे विनिक्षिपेत् ॥ ४५ ॥

एलालवङ्गतक्कोलैः सहजातिफलानि च ।
चन्दनं च सकर्पूरं क्षिपेदाचमनीयके ॥ ४६ ॥

कुष्ठं मांसीं हरिद्रे द्वे मुराशैलेयचम्पकान् ।
वचाकचोरमुस्ताश्च स्नानीये तु विनिक्षिपेत् ॥ ४७ ॥

पात्रन्यासक्रमेणैव तानि पात्राणि कल्पयेत् ।
तत्तत्कल्पनमन्त्रैस्तु यद्वा प्रागेव तानि तु ॥ ४८ ॥

तोयैः संपूर्य निक्षिप्य द्रव्याण्यपि यथाक्रमम् ।
तत्तत्कल्पनमन्त्रैस्तु स्वाधारेषु निवेशयेत् ॥ ४९ ॥

यथास्थानं ततः कुर्याद्दहनाप्यायनादिकम् ।
पात्राणां तु तदानीं वा भोगानामपि तत् त्रयम् ॥५०॥

दक्षिणेन तु हस्तेन पुष्पमादाय तत्र वै ।
ध्यात्वा निष्कलरूपं तु मूलमन्त्रमनन्यधीः ॥ ५१ ॥

तत्प्रोक्षणार्घ्यं निक्षिप्य चतुरावर्त्य तं तथा ।
जपन् पुनस्तदुद्धृत्य तस्मात् स्थानाद्बहिः क्षिपेत्

ततस्तदम्भसास्त्रेण वेदिं भोगानुपार्जितान् ।
आत्मानं चापि संप्रोक्ष्य ह्यर्घ्यादीनभिमन्त्रयेत् ॥५३॥

सास्त्रेण मूलमन्त्रेण तानभ्यर्च्य प्रसूनकैः ।
साङ्गेन मूलमन्त्रेण ततोऽभ्यर्च्य यथाविधि ॥ ५४ ॥

धूपपात्रं च घण्टां च तानि धूपेन पूजयेत् ।
धूपपात्रस्य घण्टायाः पूजनं चावधारय ॥ ५५ ॥

धूपपात्रस्य मूले तु क्ष्मातत्वं कमले जलम् ।
चक्रेऽग्निं किङ्किणीजाले वायुं खं कर्णिकोपरि ॥५६॥

एवं ध्यात्वार्च्य तन्मन्त्रैस्तन्मन्त्रेणार्चयेत्तु या ।
यच्चक्रं तच्च हृदयं पद्मं हृत्कोटरं विदुः ॥ ५७ ॥

चक्रे याश्च अराख्यास्ता नाड्यो वै द्वादश स्मृताः ।
किङ्किण्यो याः स्थिता विप्र! ज्ञेयास्ताः सूक्ष्मनाडयः ॥

यासां वै मध्यमा शक्तिर्भुजङ्गकुटिलोपमा ।
धूमधूसरवर्णाभा अण्डं भित्वा विनिर्गता ॥ ५९ ॥

कालाग्निहृदयोत्था सा सत्यान्ते तु लयं गता ।
तया संयोधितो ह्यात्मा मन्त्रमूर्तिधरः प्रभुः ॥ ६० ॥

सन्निधौ भवति क्षिप्रमव्युच्छिन्नं दृहेत्तथा ।
अथ स्वरूपं घण्टाया यथावदवधारय ॥ ६१ ॥

व्यक्तं तत्राश्रिता नित्यं मातृकावर्णविग्रहा ।
तत्र चाक्रमरावृन्दं स्वरद्वादशकं स्मृतम् ॥ ६२ ॥

तदेव षोडशारे च वर्णैः सह नपुंसकैः ।
वर्णानां त्रिविधं रूपं सर्वेषां द्विजसत्तम! ॥ ६३ ॥

संस्थितं वैखरीनिष्ठं पश्यन्ती पूर्वकं क्रमात् ।
अराश्रितं द्विषट्कारे वाक्स्वरूपं परं हि यत् ॥ ६४ ॥

तदेव षोडशारे च तत्र वैकर्तने(री)षु च ।
मध्यमाख्यस्वरूपेण नित्यमेव हि वर्तते ॥ ६५ ॥

अत ऊर्ध्वं चतुर्विंशत्संख्यं वर्णगणं हि यत् ।
दलजालं हि तत् पद्मं परिज्ञेयं महामते! ॥ ६६ ॥

मकारसंज्ञं यद्वर्णं विद्धि तत् पद्मकर्णिकाम् ।
शङ्खं यकारवर्णं च समुद्गीके सदा गृहे ॥ ६७ ॥

रादयः सप्त ये वर्णा ह्यन्ताः पर्वगदात्मकाः ।
क्षार्णं पतत्रिराजाख्यमेवं ध्यात्वा ततो द्विज! ॥ ६८ ॥

शब्दब्रह्मस्वरूपा च घण्टाविग्रहलक्षणा ।
विज्ञेया भगवच्छक्तिः षाड्गुण्यान्तर्गता हि सा ॥

तेजोगुणसमोपेता तैजसद्रव्यरूपधृक् ।
घण्टाख्यमेतद्वै विद्धि आध्यक्षीयं गुणद्वयम् ॥ ७० ॥

अस्यामाश्रित्य ये वर्णा ज्ञातव्यास्ते सदैव हि ।
नित्यमर्चनकाले तु साधकैः सिद्धिलालसैः ॥ ७१ ॥

कालवैश्वानरोपेतमनन्तं शब्दचोदके ।
मुक्ताहाराश्रितं शङ्खं घण्टाया वदने स्थितम् ॥ ७२ ॥

संस्थितं च महाबुद्धे! तदूर्ध्वं गगनाश्रितम् ।
चक्रं यस्मिन्प्रदेशे द्वादशात्मा स्थितो रविः ॥ ७३ ॥

मासात्मना पुनः सो वैकर्तनेष्ववतिष्ठते ।
षोडशारेऽमृतात्मा वै कलादेहस्तु चन्द्रमाः ॥ ७४ ॥

सर्वेषु वृत्तक्षेत्रेषु नभस्वान् स्वयमेव हि ।
तत्वसङ्घं हि चाव्यक्तं पद्मपत्राश्रितं तु वै ॥ ७५ ॥

जीवः कमलकिञ्जल्के कर्णिकाश्रित ईश्वरः ।
शङ्खाश्रितश्च प्रणवो विद्यां विद्धि गदाश्रिताम् ॥७६॥

प्राणाधिदैवं गरुडमित्येवं देवतागणम् ।
ध्यात्वार्चयेत् पुरार्घ्याद्यैर्धूपान्तैरथवा द्विज! ॥ ७७ ॥

अधोमुखं तु ब्रह्माण्डं ध्यायेज्ज्वरवाकुलम् ।
सनालं च तदूर्ध्वं तु पद्ममष्टदलं स्मरेत् ॥ ७८ ॥

प्रकीर्णपत्रं सुसितं केसरालिसुकर्णिकम् ।
तन्मध्ये चिन्तयेद्देवीं वर्गाष्टकभुजान्विताम् ॥ ७९ ॥

मुख्ये हस्तचतुष्के तु लाञ्छनं कमलादिकम् ।
स्फाटिकं चाक्षसूत्रं च तथा विज्ञानपुस्तकम् ॥ ८० ॥

अभयं वरदं चैव हस्तद्वितये परे ।
पद्मासने चोपविष्टां पद्मपत्रायतेक्षणाम् ॥ ८१ ॥

पद्मगर्भप्रतीकाशां पद्ममालाविभूषिताम् ।
सिताभरणसञ्छन्नां पीतवस्त्रविवेष्टिताम् ॥ ८२ ॥

मन्त्रौघमुद्गिरन्तीं च मन्त्रज्वालाप्रभान्विताम् ।
देवैः संस्तूयमानां च ब्रह्माद्यैर्ब्रह्मवादिभिः ॥ ८३ ॥

ऋषिभिर्मुनिभिः सिद्धैर्लोकानुग्रहकारिभिः ।
नम्यमानां स्मरेत् सम्यक् पूजाकाले सदैव हि ॥ ८४ ॥

योऽनया पूजयेन्मन्त्रं तस्य सिद्धिर्न दूरतः ।
एवं ध्यात्वार्चयेत् सम्यगर्घ्याद्यैस्तु ततः स्मरेत् ॥

शब्दब्रह्ममहो यच्चहृदब्जाकाशमध्यगम्।
नित्योदितमनौपम्यमनभ्यासादगोचरम् ॥ ८६ ॥

उपदेष्टुमतोऽन्येषामभक्तानां न युज्यते।
परस्वरूपमन्त्राणामेतल्लक्षणमब्जज ! ॥ ८७ ॥

दशप्रकारे यच्छब्दे विसर्गान्तेऽक्षरादिकें।
नानामन्त्रस्वरूपेण वर्तते वर्णविग्रहे ॥ ८८ ॥

भोगमोक्षप्रदो मन्त्रो य आप्तः सद्गुरोर्मुखात्।
पञ्चस्थानगतो ज्ञेयो भक्तैर्दिव्यक्रियापरैः ॥ ८९ ॥

बहिःस्थप्रतिमादौ तु जिह्वाग्रे हृत्कुशेशये।
धूपधूमशिखायां च घण्टाशब्दे सुलक्षणे ॥ ९० ॥

स्वरूपज्योतिरेवान्तर्भावयेत् संस्थितं हृदि।
मध्यमेन स्वरूपेण अव्युच्छिन्नं महामते ॥ ९१ ॥

धूपधूमाश्रितं विद्धि वैखरीविग्रहं पुनः।
घण्टायां चाल्यमानायामच्छिन्नमनुभूयते ॥ ९२ ॥

एवं स्मृत्वा ततस्तां तु सुमन्त्रन्यस्तविग्रहाम्।
अर्चितां ध्यानसंयुक्तामर्घ्याद्यैर्धूपसंयुतैः ॥ ९३ ॥

सञ्चालयेत्ततः सम्यक् सुशब्दां मन्त्रबोधिनीम्।
त्रैलोक्यद्राविणीं घण्टां सर्वदुष्टनिबर्हिणीम् ॥ ९४ ॥

एषा ध्रुतिर्हि मन्त्राणां सुप्तानां च प्रबोधिनी।
वारणी सर्वविघ्नानां सर्वमन्त्रप्रसादिनी ॥ ९५ ॥

प्रणवान्ते ध्वनिर्ह्येषा शब्दशक्तौ लयं गता।
वर्णदेहाः स्मृता मन्त्रा मन्त्रदेहाश्च देवताः ॥ ९६ ॥

घण्टास्तनितमूलास्ते प्रबुद्धाः कर्मसिद्धिदाः।
परशब्दोत्थिता शक्तिर्घण्टास्तनितरूपिणी ॥ ९७ ॥

वर्णत्वं समनुप्राप्ता तैर्वर्णैर्मुनिसत्तम !।
मन्त्राणां कल्पिता देहा नानाकाराः सहस्रशः ॥ ९८ ॥

स्वेच्छया त्वनया शक्त्या सामर्थ्यात् स्वात्मनः स्वयम्।
अनुग्रहार्थं भविनां भक्तानां भावितात्मनाम् ॥ ९९ ॥

मननान्मुनिशार्दूल ! त्राणं कुर्वन्ति वै यतः।
ददते पदमात्मीयं तस्मान्मन्त्राः प्रकीर्तिताः ॥ १०० ॥

अनभिव्यक्तशब्दास्ते निराकारास्तथैव च।
घण्टायां चाल्यमानायां निर्यान्ति च सहस्रशः ॥

अत एव मुनिश्रेष्ठ ! मन्त्रमाता प्रकीर्तिता।
एषा घण्टाभिधा शक्तिर्वागीशा च सरस्वती ॥ १०२ ॥

वाचि मन्त्राः स्थिताः सर्वे वाच्यं मन्त्रे प्रतिष्ठितम्।
मन्त्ररूपात्मकं विश्वं सबाह्याभ्यन्तरं ततः ॥ १०३ ॥

घण्टाशब्दगतं सर्वं तस्मात्तां चालयेत् पुरा।
स्वेषु चोक्तेषु कालेषु—तांस्तु मे गदतः शृणु ॥ १०४ ॥

गणेशपीठद्वारस्थदेवानामर्चने ततः।
आहुतिकाले मन्त्राणां धूपदाने विशेषतः ॥ १०५ ॥

दीपदानेऽर्घ्यदाने च तथा नैवेद्यजोपणे।
जपस्तुत्यवसनाभ्यां प्रवृत्ते चाग्नितर्पणे ॥ १०६ ॥

पूर्णाहुतिप्रदाने च मन्त्राणां तु विसर्जने।
विष्वक्सेनार्चने चैव तत्पूजाप्रतिपादने ॥ १०७ ॥

बलिप्रदानकाले तु देवतानां विशेषतः।
नातोऽन्यदा स्याद्विहितं चालनं सिद्धिमिच्छताम् ॥

धूपं दत्वाऽथ पात्राणां घण्टाशब्दसमन्वितम्।
धूपं दद्याद्यथाकालं यद्वार्घ्यादौ सकृत् सकृत् ॥ १०९ ॥

अनुकल्पे तु हृन्मन्त्रं कुर्यादावर्तनं बुधः।
आवाहने सन्निधाने सन्निरोधे तथाऽर्चने ॥ ११० ॥

विसर्जनेऽर्घ्यदानं तु प्राक्पात्रान्निलयमाचरेत्।
तदम्भसा चार्हणं तु तथैव परिषेचनम् ॥ १११ ॥

कुर्यात् प्रणयनादानं प्रीणनं प्रीतिकर्मणि।
प्रोक्षणं सर्ववस्तूनामन्यस्मादुदकेन तु ॥ ११२ ॥

आरम्भे सर्वकार्याणां तत्समाप्तौ तथैव हि।
न्यूनाधिकानां शान्त्यै तु ज्ञानव्यत्ययशान्तये ॥ ११३ ॥

कार्यं तदर्घ्यदानं च नित्यं मन्त्रात्मनो विभोः।
कुम्भोपकुम्भकुण्डानां मन्त्रास्त्रकलशार्चने ॥ ११४ ॥

संपूजने च भोगानां गुर्वादीनां महामते !।
दक्षशिष्यात्मपूजार्थं द्वास्थानामर्चनं प्रति ॥ ११५ ॥

प्रासादासनदेवानां गुरूणां सन्ततेस्तथा ।
लाञ्छनाङ्गपरीवारशक्तिभूषणरूपिणाम् ॥ ११६ ॥

मण्डलावरणस्थानां देवानां चार्चनं तथा ।
मुद्राबन्धे कराभ्युक्षां तदर्चाक्षालनं तथा ॥ ११७ ॥

जपकालेऽक्षसूत्रस्य कुर्यात्तत्पूजनं तथा ।
पाद्यदानं तृतीयात्तु नित्यं पात्रात् समाचरेत् ॥ ११८ ॥

चतुर्थात्तु यथाकालं दद्यादाचमनं पुनः ।
हस्तप्रक्षालनं चैव गण्डूषं मुखधावनम् ॥ ११९ ॥

स्नानीयाद्याचरेत् स्नानं प्रयोजकविधिस्त्वयम् ।
अर्घ्यपात्रात् द्वितीयात्तु किञ्चिदुद्धृत्य वै जलम् ॥

तेन स्वदेहविन्यस्तान् मन्त्रानिष्ट्वा यथाक्रमम् ।
अनुलेपनपुष्पेण धूपेन च ततो मुने ! ॥ १२१ ॥

मत्पूजार्थं प्रक्लृप्तानि गन्धपुष्पाणि यानि च ।
तानि सर्वाण्यथाचार्यो धारयेन्न कदाचन ॥ १२२ ॥

धारयेद्यदि संमोहाल्लोभाद्वा तानि देशिकः ।
गन्धादीन्यर्चनार्थानि सा पूजा निष्फला भवेत् ॥

तस्मात् सर्वप्रयत्नेन पृथक्कुर्याद्यथाविधि ।
अर्घ्यादिकं समादाय द्वारस्थदेवान् समर्चयेत् ॥ १२४ ॥

निर्गत्य द्वारयागे तु स्थितो वासीन एव वा ।
वास्तुक्षेत्रेशगरुडद्वार्श्रीचण्डप्रचण्डकान् ॥ १२५ ॥

अभ्यर्च्यार्घ्यादिभिर्देवान् प्रासादस्थांश्च पूजयेत् ।
प्रासादेऽथ चतुर्द्वारे मण्डपे चेतरेषु च ॥ १२६ ॥

द्वारत्रयेऽथ धातारं विधातारं जयं तथा ।
विजयं चापि भद्रं च सुभद्रं च गणेश्वरम् ॥ १२७ ॥

यदङ्गभावमभ्येति द्वारस्थार्चं देवतागणम् ।
विष्वक्सेनायसानं च नराणामल्पमेधसाम् ॥ १२८ ॥

जन्तोरेकान्तिनस्तद्वै चित्तखेदकृदर्चनम् ।
विप्रकृत् प्रकृतस्यापि शिष्याणां तदनर्चनम् ॥ १२९ ॥

अतस्तदनुकम्पार्थं देवभृत्यधियाऽर्चनम् ।
भक्तिश्रद्धोज्झितं चैव विहितं त्वेवमेव हि ॥ १३० ॥

ते तत्प्राणिच्युतं प्रह्वा दत्तमप्यवहेलया ।
गृह्णन्ति मनसा श्रेयः परं ध्यात्वा धिया हृदि ॥१३१॥

यतः सर्वेऽच्युतमयास्तच्चित्तार्पितमानसाः ।
एतावदर्चनात्तेषां गुरोरेकान्तिनस्तु वै ॥ १३२ ॥

स्याद्विरोधनिरासस्तु यतो भृत्यास्तु ते हरेः ।
कृत्वैवं द्वारयागं तु ततः पुष्पं च संमुखम् ॥ १३३ ॥

गृहीत्वाङ्गुष्ठपूर्वेण स्वाङ्गुलित्रितयेन तु ।
अभिमन्त्र्य तदस्त्रेण चक्रं तदुपरि स्मरेत् ॥ १३४ ॥

निशितारं ज्वलद्रूपं वर्षन्तमनलाशनिम् ।
क्षयकृद्विघ्नजालानां क्षिपेद्यागगृहान्तरे ॥ १३५ ॥

ततस्तत्तेजसा विघ्नजालं निष्कासयेन्महत् ।
बहिर्भवनमध्यात्तु ततस्तदनुकम्पया ॥ १३६ ॥

स्वदेहादामृतं(द्वामगं) भागममृतांशुसमं स्मरेत् ।
प्राङ्मन्त्रमात्रविन्यासात् स तेषामनल्पप्रभः ॥ १३७ ॥

प्रतिभाति यतस्तेन मन्त्रपुष्पसमाश्रयात् ।
निर्गच्छन्ति तमाश्रित्य वामभागमतस्तु ते ॥ १३८ ॥

दक्षिणां तर्जनीं विप्र ! कुर्यादूर्ध्वमुखीं ततः ।
शिखामन्त्रेण संयुक्तां विद्युद्विलसितप्रभाम् ॥ १३९ ॥

स्मृत्वा स्वां विघ्नशान्त्यर्थं भ्रामयन्नन्तराविशेत् ।
स्वासनं च ततः प्रोक्ष्य अर्घ्यपात्रोदकेन च ॥ १४० ॥

सास्त्रेण ताड्य पुष्पेण तत्पृष्ठे क्रमशो द्विज ! ।
आधारशक्तिपूर्वं तु मन्त्रसङ्घं प्रपूजयेत् ॥ १४१ ॥

उपविश्यासने यागमारभेत समाहितः ।
समये यात्र कुर्वीत सर्वभोगनिरीक्षणम् ॥ १४२ ॥

न्यस्य भद्रासनं मूलात् प्रोक्षणार्घ्यप्लुतेन तु ।
पाणिनाऽप्यथ कूर्चेन तज्जलेन तु मार्जयेत् ॥ १४३ ॥

तत्तावदस्त्रपुष्पेण कुर्याद्विघ्नगणोज्झितम् ।
सर्वलोकमयं तत्र सर्वदेवसमाश्रयम् ॥ १४४ ॥

सर्वाधारमयं ध्यायेदन्तर्लीनं तु चक्रराट् ।
प्रणवेन स्वनाम्नाऽथ नमोऽन्तेनार्चयेच्च तम् ॥ १४५ ॥

ततस्तु सर्वमन्त्राणां विन्यासं तत्र चेतसा ।
समाचरेद्यथायोगं पुष्पदानपुरस्सरम् ॥ १४६ ॥

अर्घ्यालभनधूपैस्तु माल्यैर्नानाविधैः शुभैः ।
योगपीठार्चनं कुर्याद्यथावदवधारय ॥ १४७ ॥

बिम्बेन सहितं पीठं योगपीठमुदाहृतम् ।
अनुसन्धानयागे तु योगपीठं प्रकल्पयेत् ॥ १४८ ॥

तन्मन्त्रासनमित्युक्तं, मन्त्रन्यासं तु सर्वतः ।
कुर्यात्तत्स्थस्य देवस्य पीठस्याधो निवेशयेत् ॥ १४९ ॥

आधारशक्तिं तस्योर्ध्वं कूर्मं कालाग्निसंज्ञिकम् ।
तन्मूर्ध्नि शेषसंज्ञं तु, योगपीठपदोपरि ॥ १५० ॥

भुवं न्यस्य तदूर्ध्वं तु जङ्घायां क्षीरसागरम् ।
आधारपद्मं कुमुदे, तदूर्ध्वं कण्ठमूलतः ॥ १५१ ॥

आग्नेय्यादौ तु धर्माद्यमैशान्तं तच्चतुष्टयम् ।
प्रागाशादौ त्वधर्माद्यमुत्तरान्तं न्यसेत् परम् ॥ १५२ ॥

ऋग्वेदं कल्पयेदेवं प्रागीशानदिगन्तरे ।
यजुश्चाग्नवह्निदिङ्मध्ये सामान्तर्यातुवारुणे ॥ १५३ ॥

वारुणानिलदिङ्मध्येऽथर्ववेदं ततःपरम् ।
ईशानसोमदिङ्मध्ये कृतं याम्यानलान्तरे ॥ १५४ ॥

त्रेतायुगं यातुयाम्यदिङ्मध्ये द्वापारं युगम् ।
सोमवाय्वन्तरोद्देशे कलिसंज्ञं युगं क्रमात् ॥ १५५ ॥

आधारशक्तेरारभ्य अनुसन्धानपूर्वकम् ।
युगावसानं प्रागुक्त्वा स्थूलं मन्त्रासनासनम् ॥ १५६ ॥

तच्च षोडशकं न्यस्य भूयो भूयो दिगष्टके ।
सूक्ष्मरूपधरं विप्र ! प्राक्पदादीशगोचरम् ॥ १५७ ॥

तत्रोर्ध्वं मध्यदेशे वै प्रागुक्तविधिना न्यसेत् ।
द्विरष्टकं तु धर्माद्यं कान्तिमत् पररूपभृत् ॥ १५८ ॥

तन्मूर्ध्नि कालचक्रं तु व्योमवत्पङ्क्तिकागतम् ।
तन्मध्येऽव्यक्तपद्मं तु गुणत्रयसमन्वितम् ॥ १५९ ॥

तद्दले सूर्यपरिधिं केसरे सोममण्डले ।
कर्णिकायामग्निचक्रं तद्बीजे चित्प्रभाकरम् ॥ १६० ॥

स्मरेच्च विमलां शक्तिं तत्समीपे दिगष्टके ।
ज्ञानशक्तिं विभोः शक्तिं सत्यशक्तिमनश्वरीम् ॥१६१॥

प्रकाशशक्तिं चानन्तामीशानुग्रहशक्तिके ।
यथोक्तरूपान् ध्यात्वैतान् विभवं च यथाक्रमम् ॥

स्वस्वतत्त्वनि विन्यस्य कुर्यादर्घ्यादिनार्चनम् ।
प्रदर्शयेच्च तन्मुद्रां नीठे वै सुस्थिरे सदा ॥ १६३ ॥

आधारशक्तेरारभ्य मन्त्रग्रामस्य पौष्कर ! ।
सुस्थिरे सन्निरोधश्च सर्वेषां विहितः सदा ॥ १६४ ॥

यत्र यत्रानुरूपं यत्तत्र तन्न्यासमाचरेत् ।
ईशानुग्रहशक्त्यन्तमाश्रितैः कमलोद्भव ! ॥ १६५ ॥

मन्त्राणां सन्निधिः कार्या चलपीठे तु केवले ।
तात्कालिकस्तु विहितो निरोधस्तत्र सार्चनः ॥१६६॥

आहूतोपविशेद्यत्र मन्त्रनाथोऽभिसंमुखः ।
तत्प्रागपेक्षया कुर्याद्धर्मादीनां निवेशनम् ॥ १६७ ॥

सांमुख्यं भजते यस्मात् साधकं परमेश्वरः ।
तदासनं हि चिद्रूपं लिङ्गमेतस्य वाहनात् ॥ १६८ ॥

चलबिम्बेन सह वै एकीभावगतस्य च ।
पीठस्य मन्त्रविन्यासो विहितश्चलपीठवत् ॥ १६९ ॥

सुस्थिरस्यैकयोनैवं वियोनौ सुस्थिरस्य च ।
मन्त्राणां विहितो न्यासः स्थिरपीठोदितस्तु वै ॥

पीठोपपीठयुक्तानां साङ्गानां केवलात्मनाम् ।
एकादिगात्रपादानां सबिम्बानां यथाक्रमम् ॥ १७१ ॥

मण्डलोक्तविधानेन समभ्यूह्य समाचरेत् ।
एवं चास्याचले पीठे शयानस्य विभोस्त्वथ ॥ १७२ ॥

सशक्तिकाश्रितो भानोरूर्ध्वेऽनन्तं समर्चयेत् ।
यानारूढे त्वनन्तस्य स्थाने तार्क्ष्यं समर्चयेत् ॥ १७३ ॥

लक्ष्म्यादीनां तु देवीनां पीठस्याधः फणीश्वरम् ।
तत्कोणेषु च धर्मादींस्तदूर्ध्वेऽव्यक्तपङ्कजम् ॥ १७४ ॥

धामत्रयं ततस्तस्मिन् विन्यसेत् पूर्ववर्त्मना ।
व्योमवाद्यं त्वपीठानामग्निकोणादितो न्यसेत् ॥ १७५ ॥

ज्ञान(युग)स्वभावमूर्तं च धर्माद्यं यच्चतुष्टयम् ।
तन्निविष्टं तथाभूतं तद्व्यत्ययगणं हि यत् ॥ १७६ ॥

सह ऋक्पूर्वसामान्तकालभेदेन चान्वितम् ।
तत्पीठवसुधोद्देशे मन्डलादिषु वृत्तिषु ॥ १७७ ॥

आत्मनः प्राग्वशाद्वायुकोणादारभ्य पूजनम् ।
कार्यं विशेषपूर्वाणां तत्पदाद्वाग्रभूःपदम् ॥ १७८ ॥

स्वोत्तरात् पश्चिमद्वारदेशाद्वायुपदावधि ।
वीथौ सवीथिकानां तु यागानामेतदाचरेत् ॥ १७९ ॥

बहिर्वारणरेखाणां तन्मुक्तानां महामते ! ।
युक्तानां न बहिर्दोषस्तिर्यक्त्वेनार्चने सति ॥ १८० ॥

विन्यस्य विष्टरान् दार्भान् कुसुमस्तवकानि च ।
बिन्दून् वा सर्वरोगोत्थान् क्रमात्तदुपरि न्यसेत् ॥

गणनाथं च वागीशां गुरुं च तदनन्तरम् ।
पूजयेच्च ततो भक्त्या गुरुं परमसंज्ञितम् ॥ १८२ ॥

आदिसिद्धसमूहं तु भगवद्ध्यानतत्परम् ।
नित्याधिकारिणश्चाप्तान् भगवत्तत्त्ववेदिनः ॥ १८३ ॥

चत्वारो मनवश्चान्ये ऋषयः सप्तपूर्वकाः ।
एतेषां क्रमशो ध्यानं समाकर्णय सांप्रतम् ॥ १८४ ॥

ध्यायेच्चम्पकवर्णाभं बद्धपद्मासनं द्विज ! ।
स्थूलाङ्गमेकदंष्ट्रं च लम्बक्रोडं गजाननम् ॥ १८५ ॥

वरदाभयहस्तं च दक्षिणेऽस्याक्षसूत्रकम् ।
विश्रान्तं चिन्तयेद्वामं चतुर्थं परशूपरि ॥ १८६ ॥

वरदाभयहस्ताभ्यामस्य मुद्राद्वयं स्मरेत् ।
तर्जन्यङ्गुष्ठसंघट्टाज्जायते यद्यत्नतः ॥ १८७ ॥

सितकुन्देन्दुधवलां शङ्खपद्मकरोद्यताम् ।
वरदाभयहस्तां वा विलिखन्तीं च पुस्तकम् ॥ १८८ ॥

द्विनेत्रामेकवक्त्रां च हेमकुण्डलभूषिताम् ।
ध्यात्वा भगवती ह्येषा शक्तिः शब्दात्मनो विभोः ॥

समभ्यस्ता ददात्याशु साधकानामभीप्सितम् ।
गणनाथं विना चान्ये सुस्थिताः शान्तविग्रहाः ॥

गणिवराभयहस्ताश्च सर्वानुग्रहकारकाः ।
सर्वे पद्मासना वाथ जटामण्डलभूषिताः ॥ १९१ ॥

एवं ध्यात्वा समभ्यर्च्य मुद्राः संदर्श्य तत्क्रमात् ।
अनुज्ञां प्रार्थयेत्तेभ्यो यथानुक्रममेव च ॥ १९२ ॥

गृहीत्वा शिरसा तां च तत आवाहयेत् प्रभुम् ।
अभ्यन्तरे विमानस्य गर्भभूमौ तु मध्यतः ॥ १९३ ॥

(आत्मप्रमाणरचिते मृदुस्पर्शे मनोरमे ।
शुद्धस्फटिकसंकाशे दीप्यमानेऽतिभासुरे ॥ १९४ ॥

फणामण्डलमध्यस्थैर्मणिभिर्दीपिते तथा ।
अनन्तभोगशयने शयानं पीतवाससम् ॥ १९५ ॥)

सन्ध्याजलदसन्दोहसन्देहकरणक्षमम् ।
सरसीरुहमास्थाय सहस्रदलसंकुलम् ॥ १९६ ॥

शयानं स्थितमासीनं यानारूढमथापि वा ।
निष्कैवलेन सत्त्वेन संपन्नं रुचिरप्रभम् ॥ १९७ ॥

वपुषा सुन्दरेणैव दिव्येनाविकृतेन च ।
मुञ्चन्तमनिशं देहादालोकं ज्ञानलक्षणम् ॥ १९८ ॥

प्रयत्नेन विनाऽज्ञाननाशकृद्ध्यायिनां महत् ।
स्रग्वस्त्राभरणैर्दिव्यैः स्वानुरूपैरनूपमैः ॥ १९९ ॥

चिन्मयैः स्वप्रकाशैश्च अन्योन्यरुचिरञ्जितैः ।
दन्तज्योत्स्नावितानैस्तु प्रकटीकृतदिङ्मुखम् ॥ २०० ॥

रेखोत्थितैस्तु कल्हारैः पादपद्मतलेऽङ्कितम् ।
निमग्नजनसन्तापशमनव्यापृताननम् ॥ २०१ ॥

करुणापूर्णहृदयं जगदुद्धरणोद्यतम् ।
स्वदेहतेजःसंभूतज्वालामण्डलमध्यगम् ॥ २०२ ॥

घनकुञ्चितनीलालिगलिताञ्जनसन्निभैः ।
कर्पूरधूसरैर्दिव्यैः पुष्पसंचलितान्तरैः ॥ २०३ ॥

किरीटमकुटाक्रान्तैः शोभितं सुशिरोरुहैः ।
ईषदारक्तगोक्षीरशुद्धनीलाब्जलोचनम् ॥ २०४ ॥

शीतलैर्दृष्टिपातैस्तु जगदाप्यायकारिणम् ।
सुभ्रूललाटं सुनसं सुस्मिताधरविद्रुमम् ॥ २०५ ॥

सौन्दर्यचन्द्रसंकाशविलसद्गण्डमण्डलम्।
पूर्वकर्मानलार्तानां ध्यायिनां खेदशान्तये ॥ २०६ ॥
स्वदन्तेन्दुचयोत्थेन ह्लादयन् गोगणेन तु।
मुखसौन्दर्यनिष्यन्दचिबुकस्थलशोभितम् ॥ २०७ ॥
सविलासस्मिताधारं बिभ्राणं मुखपङ्कजम्।
कम्बुग्रीवं महाबाहुं श्रीवत्साङ्कितवक्षसम् ॥ २०८ ॥
सिंहस्कन्धं विशालाक्षं दीर्घबाहुं महोरसम्।
शङ्खचक्राङ्कितारक्तकरद्वयविभूषितम् ॥ २०९ ॥
दक्षिणं भोगिभोगाभमुपधाय महाभुजम्।
प्रसारितोत्तरकरं कटिदेशस्य पार्श्वतः ॥ ॥ २१० ॥
कौस्तुभेनाङ्कितोरस्कं लक्ष्मीश्रीवत्सभूषितम्।
आब्रह्मस्तम्बपर्यन्तजगद्धारकतनूदरम् ॥ २११ ॥
ईषत्कुञ्चितवामाङ्घ्रिपङ्कजं पङ्कजेक्षणम्।
प्रसार्य दक्षिणं पादमीषदुत्तानशायिनम् ॥ २१२ ॥
अनेकरत्नरचितकिरीटमकुटोज्ज्वलम्।
उद्यादादित्यसंकाशैर्विचित्रैर्मणिसंचयैः ॥ २१३ ॥
विराजमानया सम्यक्स्फुरच्चूलिकयोज्ज्वलम्।
रत्नावतंसप्रभया दीप्तश्रवणशेखरम् ॥ २१४ ॥
ललाटान्तसमालम्बियालालङ्कारभूषितम्।
ललाटतिलकेनैव सुन्दरेण विराजितम् ॥ २१५ ॥
अनेकरविसंकाशलसन्मकरकुण्डलम्।
प्रभूतमणिमुक्ताढ्यग्रैवेयकविराजितम् ॥ २१६ ॥
वज्रवैडूर्यमाणिक्यपद्मरागादिशोभितैः।
हारैरनेकैर्विविधैरुपशोभितवक्षसम् ॥ २१७ ॥
उदयादित्यसंकाशकौस्तुभेन विराजितम्।
भ्राजयन्त्या जगत् सर्वं स्वतेजोभिर्निरन्तरम् ॥ २१८ ॥
मालया वैजयन्त्या च भ्राजमानमहोरसम्।
नानादामविचित्रेण मुक्तादामविलम्बिना ॥ २१९ ॥
स्फुरता ब्रह्मसूत्रेण काञ्चनेन सुशोभितम्।
द्युतिमद्भिर्महारत्नै राजितेन सुवर्चसा ॥ २२० ॥
काञ्चनेनाथ सूत्रेण उदरे कृतबन्धनम्।
नाभिदेशं तथा पद्मं जगच्छृङ्खलया स्रया ॥ २२१ ॥
नानामाणिक्यविलसत्कटिसूत्रेण भूषितम्।
अनेकरत्नसन्दर्भरशनादाममण्डितम् ॥ २२२ ॥
अनेककोटिमार्ताण्डविलसत्पीतवाससम्।
अनेकरत्नसंभिन्ननूपुरादिविभूषितम् ॥ २२३ ॥
एवमन्यैश्च विविधैः केयूरकटकादिकैः।
यथार्हभूषणै रम्यैर्ज्वलद्भिः परिभूषितम् ॥ २२४ ॥
प्रावृड्जलदसंकाशं भिन्नाञ्जनगिरिप्रभम्।
अभिन्नपूर्णषाड्गुण्यविभवेनोपबृंहितम् ॥ २२५ ॥
योगिध्येयमजं नित्यं जगज्जन्मादिकारणम्।
अनादिनिधनं देवं साक्षाल्लक्ष्मीपतिं विभुम् ॥ २२६ ॥
अप्राकृततनुं शान्तं वासुदेवं परात्परम्।
चतुर्भुजमनुध्यायेच्छुद्धस्फटिकनिर्मलम् ॥ २२७ ॥
शङ्खचक्रगदापद्मैश्चतुर्भिः कृतलक्षणम्।
तस्मिन्नावाहनं कुर्यात् कृत्वा हस्तौ सुगन्धिनौ ॥२२८॥
गन्धार्घ्यपुष्पैः संपूर्य मूलमन्त्रं समुच्चरन्।
पीठोपरि हरेरग्रे मूर्ध्नि पुष्पाञ्जलिं क्षिपेत् ॥ २२९ ॥
स्वं प्रत्यभिमुखं शान्तं सुप्रबुद्धं स्मरेच्च तम्।
करन्यासं विना तत्र सृष्टिन्यासादिकं त्रयम् ॥ २३० ॥
मूलमन्त्रादिताक्ष्यन्तिमन्त्राणां न्यासमेव च।
दीपयेद्बिम्बतोऽन्यत्र तस्मिन् पुष्पाञ्जलौ हरिम् ॥२३१॥
आगच्छपदयुक्तेन मूलमन्त्रेण हृत्कजात्।
एवं तेजोमयं देवं नाडीदक्षिणमार्गतः ॥ २३२ ॥
तन्नासाग्रेण चावाह्य पीठकुम्भादिषु क्षिपेत्।
तत्कदम्बप्रसूनाभे तस्मिन् मन्त्रात्मगोलके ॥ २३३ ॥
स्थानभेदं विनाङ्गानि न्यस्याभ्यर्च्येह देहतः।
सकलीकृत्य देवेशं तं ध्यायेद्व्यक्ततां गतम् ॥ २३४ ॥
प्राग्वदङ्गादिकांस्तत्र तत्तन्मन्त्रैस्तु निक्षिपेत्।
एवमाहूय देवेशं दत्वार्घ्यं सन्निधित्सया ॥ २३५ ॥

भूयोऽप्यर्घ्यं प्रदायास्मै हृदा मुद्रापुरस्सरम् ।
सन्निधाप्यार्घ्यदानेन मुद्रापूर्वं च वर्मणा ॥ २३६ ॥

सन्निरोध्य तु मूलेन तन्मुद्रासहितेन तु ।
संमुखीकृत्य मूलादीन् मन्त्रांस्तत्र समुच्चरन् ॥ २३७ ॥

प्रदर्शयंस्तथा मुद्रास्त्वघण्टाङ्केनाभिवादयेत् ।
अनेकमूर्तियागे तु प्रधानाचाह्वनादिकान्(म्) ॥ २३८ ॥

आहूतदेवशान्त्यर्थं गन्धादीनेवमेव च ।
व्यूहानां विभवानां प्राङ्मूलादङ्गणार्चनम् ॥ २३९ ॥

पश्चादन्येषु कुर्वीत क्रमेणावाहनादिकान् ।
स्थितमायतने वाथ साकारं परमेश्वरम् ॥ २४० ॥

शङ्खचक्रधरं विष्णुं सुरसिद्धावतारितम् ।
ऋषिभिर्मनुजैर्वाथ भक्तियुक्तैः प्रतिष्ठितम् ॥ २४१ ॥

तन्मूर्तौ च स्वमन्त्रेण यजेदावाहनं विना ।
प्रत्यहं कर्मबिम्बानां मूलबिम्बहृदब्जकात् ॥ २४२ ॥

कुर्यादावाहनं किञ्चित्तीर्थक्षेत्रादिगामिभिः ।
नरैरा(स्वा)राध्यबिम्बेषु प्रत्यहं स्वहृदब्जतः ॥ २४३ ॥

प्राग्वदावाहनं कुर्यादथ तद्विग्रहस्थितान् ।
मन्त्रन्यासादिनाभ्यर्च्य नांस्तद्देहस्फुलिङ्गवत् ॥२४४॥

ध्यात्वावतार्य स्थानेषु स्वेषु भोगावनौ क्रमात् ।
सकलीकृत्य चार्घ्याद्यैरर्चयेदत्र तु क्रमः ॥ २४५ ॥

द्विपट्कस्वाब्जदलेष्वत्र मन्त्रेशस्य पुरो दलात् ।
तदाद्यदलपर्यन्तं हृदाद्यङ्गानि निक्षिपेत् ॥ २४६ ॥

पीठोपरि दलाद्बाह्ये देवस्याग्नेयकोणके ।
पद्ममैशे गदां कोणे नैर्ऋते चक्रमुज्ज्वलम् ॥ २४७ ॥

वायव्ये पाञ्चजन्यं च गदायाश्च समीपतः ।
किरीटं दक्षिणे पार्श्वे वामे श्रीवत्समेव च ॥ २४८ ॥

कौस्तुभं पद्मसामीप्ये वनमालां च दक्षिणे ।
देवस्य कर्णिकायां तु श्रियं पुष्टिं ततोऽपरे ॥ २४९ ॥

अग्रतः पीठतो बाह्ये न्यसेद्वारान् पतत्त्रिपम् ।
अङ्गोपाङ्गादिकानां तु सर्वेषां ध्यानमुच्यते ॥ २५० ॥

आहूतो मन्त्रनाथस्तु यथा ध्यातः सविग्रहः ।
तद्वदेव हि हृन्मन्त्रं ध्यायेत् कुमुदपाण्डरम् ॥ २५१ ॥

पद्मरागाचलाकारमारक्तं च शिरः स्मरेत् ।
अञ्जनाद्रिप्रतीकाशं शिखामन्त्रं तथाकृतिम् ॥ २५२ ॥

परितः सूर्यसन्तप्तं यथा कनकपर्वतम् ।
तथा कवचमन्त्रं च ध्यानकाले विचिन्तयेत् ॥ २५३ ॥

वृतं ज्वालासहस्रैस्तु अयस्कान्तसमद्युति ।
सर्वाखशक्तिसंपूर्णमस्त्रमन्त्रं प्रकीर्तितम् ॥ २५४ ॥

निर्धूमाङ्गारसदृशं भावयेन्नेत्रमन्त्रराट् ।
ध्येयाः स्वरुचिसंयुक्ताः द्विभुजाः पुरुषोपमाः ॥ २५५ ॥

एवमेव ह्युपाङ्गानां स्मरेद्ध्यानं सुलक्षणम् ।
वीक्षमाणान् विभोर्वक्त्रं ध्यायेन्मुनिवरोत्तम! ॥ २५६ ॥

स्थितानामादिमूर्तीनां स्थितान् ध्यायेत् सदैव हि ।
आसीनानामथासीनान् वाहनस्थे सवाहनान् ॥२५७॥

शयितानामथासीनानुत्थितान् वा स्मरेद्धिया ।
लाञ्छनाभरणादीनां शृणु ध्यानं यथाक्रमम् ॥ २५८ ॥

कुन्दावदातं कमलं सौम्यमीषत्स्मिताननम् ।
रयं रवन्तं मधुरं श्रोत्रेन्द्रियसुखावहम् ॥ २५९ ॥

गदां हेमाद्रिसंकाशां तन्वीं कुवलयेक्षणाम् ।
द्विरष्टवर्षवत्कान्तां कुमारीं नवयौवनाम् ॥ २६० ॥

स्वोत्थेन रश्मिजालेन भासयन्तीं नभःस्थलम् ।
स्वरश्मिमण्डलान्तःस्थं वल्गन्तं हेतिराट् स्मरेत् ॥

विभोराशां प्रतीक्षन्तं ह्रस्वाङ्गं रक्तलोचनम् ।
तुहिनाचलसंकाशं शङ्खं कमललोचनम् ॥ २६२ ॥

सदागमादिसामान्तमुद्गिरन्तं स्वकैर्मुखैः ।
किरीटः सौम्यवदनः काञ्चनाभो महातनुः ॥ २६३ ॥

भाभिराकृतियुक्ताभिर्नानारूपाभिरावृतः ।
स्थितो वैद्याधरीयेण स्थानकेनान्तरिक्षगः ॥ २६४ ॥

स्फाटिकाद्रिप्रतीकाशं श्रीवत्समथ भावयेत् ।
बद्धपद्मासनासीनं न्यस्तहस्तं स्वपार्श्वयोः ॥ २६५ ॥

वहन्तं कूर्ममुद्रां च मुख्यहस्तद्वयेन च।
पद्मरागाचलाकारं कौस्तुभं रत्ननायकम् ॥ २६६ ॥
दिशो दश द्योतयन्तं संलग्नाङ्घ्रिस्थितं स्मरेत्।
वहन्तं चोरसो मध्ये स्वहस्तकृतसंपुटम् ॥ २६७ ॥
सन्धारयन्तमपरं तथा वै शिरसि स्फुटम्।
ध्येया भगवती माला चित्रवर्णा मनोरमा ॥ २६८ ॥
सर्वगन्धान्विता सौम्या ईषद्विह(क)सितानना।
ध्येयाः स्वरुचिसंयुक्ता द्विभुजाः पुरुषोपमाः ॥ २६९ ॥
साम्राः किरीटपूर्वा ये गदामालाङ्गनाकृती।
एतेऽस्त्रनायकाः सर्वे विभोराज्ञाप्रतीक्षकाः ॥ २७० ॥
प्रोत्थिता विचलन्तश्च सुसमैः स्थानकैः स्थिताः।
श्रोणीतटार्पितकराश्चामरव्यजनोद्यताः ॥ २७१ ॥
सपद्मं तु किरीटाद्यं वर्जयित्वा चतुष्टयम्।
तर्जयन्तं च दुष्टौघमन्येषां दक्षिणं करम् ॥ २७२ ॥
स्मरेद्वै ध्यानकाले च सर्वेषामथ मस्तके।
ध्येयं स्वकं स्वकं चिह्नं सुप्रसिद्धं निराकृति ॥ २७३ ॥
रक्तपङ्कजवर्णाभा लक्ष्मीर्नीलाम्बुजेक्षणा।
दुग्धौघधवला पुष्टिरानन्दाकुलितानना(तेक्षणा)
भोक्तृशक्तिः स्मृता लक्ष्मीः पुष्टिर्वै कर्तृसंज्ञिता।
भोगार्थमवतीर्णस्य तस्य लोकानुकम्पया ॥ २७५ ॥
उदितं सह तेनैव शक्तिद्वितयमव्ययम्।
रक्ततुण्डं महाप्राणं भीमभ्रुकुटिलोचनम् ॥ २७६ ॥
द्रवच्चामीकराकारं पक्षमण्डलमण्डितम्।
संस्मरेद्गरुडं विप्र! गृध्रवक्त्रं पृथूदरम् ॥ २७७ ॥
यथोक्तमूर्तियुक्तांश्च ततो ध्यायेद्यथाक्रमम्।
अपांपतिर्वै कमलं गदादेवी सरस्वती ॥ २७८ ॥
चक्रं लोकप्रतिष्ठा वै शब्दब्रह्म तु शङ्खराट्।
किरीटो हुतभुग्वेद्यः कौस्तुभस्तु प्रभाकरः ॥ २७९ ॥
स्वयं शशाङ्कः श्रीवत्सो मालापद्माधवादयः।
प्राणं पतत्रिपं विद्याद्देवं तत्त्वेषु संस्थितान् ॥ २८० ॥

अधिष्ठात्(तॄन्)क्रमाच्चैतानर्चयेदर्घ्यपुष्पकैः।
अष्टपत्राम्बुजे पूर्वदले हृन्मन्त्रपं शिरः ॥ २८१ ॥
शिखामाग्नेयपत्रे तु कवचं चास्त्रमन्त्रपम्।
दक्षिणे पत्रमध्ये तु नैर्ऋते पत्रमध्यतः ॥ २८२ ॥
नेत्रं पश्चिमपत्रे तु उदरं पृष्ठमन्त्रपम्।
वायव्ये बाहुमन्त्रं तु ऊरू जानू तथोत्तरे ॥ २८३ ॥
ईशानपत्रमध्ये तु पादमन्त्रं तु विन्यसेत्।
दलोपदलसंयुक्तेऽप्येवमेवाम्बुजे क्रमः ॥ २८४ ॥
अथवा दिग्दलेष्वत्र हृदाद्यं यच्चतुष्टयम्।
अस्त्रं दिग्दलेषु स्यान्नेत्रं केसरगं पुनः ॥ २८५ ॥
उपाङ्गं स्यादुपदले तद्विधानमतः शृणु।
पूर्वपत्रसमीपस्थदलयोरुदरं न्यसेत् ॥ ॥ २८६ ॥
पृष्ठयन्त्रं न्यसेत्तद्वद्दलयोः पश्चिमस्थयोः।
बाहूरू मन्त्रपौ न्यस्यौ दलयोर्दक्षिणस्थयोः ॥ २८७ ॥
जानू पादौ तथा न्यस्यौ दलयोरुत्तरस्थयोः।
मन्त्ररूपे षडङ्गे तु पद्मस्याष्टदलस्य तु ॥ २८८ ॥
पूर्वस्मिन् हृदयं वामे कवचं दक्षिणे शिरः।
पश्चिमे तु शिखां न्यस्येत् परे दलचतुष्टये ॥ २८९ ॥
अग्रतोऽस्त्रं कर्णिकायां केसरे च पुरोदले।
नेत्रं न्यस्यार्चयेत् प्राग्वत् पद्मादिन्यासमाचरेत् ॥
त्रिदलादिषु पद्मेषु दलमूले यथोदितम्।
बुद्ध्या स्थानं विभज्यात्र पञ्च षड्द्वादशाश्रया ॥
न्यसेदङ्गान् यथादृष्टपृष्ठभागस्य वै विभोः।
परिवारसमेतस्य त्वङ्गं न्यस्येत्तु दक्षिणे ॥ २९२ ॥
भागं कृत्वा प्रकृत्यात्रात् क्रमात् प्रागादि कल्पयेत्।
आश्रित्य वामभागं तु प्रोक्तमारभ्य चेश्वरीम् ॥ २९३ ॥
चान्द्रं याम्यं वारुणं च द्विस्त्रिभागं प्रकल्पयेत्।
तयोः षट्कक्रमान् कुर्याद्द्वादशस्थानकल्पनम् ॥
धर्मादिदेवता न्यस्य होवं द्विस्त्रिदिगाश्रयाः।
श्रीपुष्ट्योस्तु श(स)दा वामे पृथक् पद्मोपरि स्थितम्।

तदाधिकारयागेऽपि पृथगेवासनादिकम् ।
वाहानां लाञ्छनादीनां विहीने वाथ पार्श्वतः ॥२९६॥
कल्पयेदथ तं भोगैर्यजेत सुसमस्तकैः ।
विनिवेद्यासनवरं समाहूतस्य वै विभोः ॥ २९७ ॥
पादपीठं तु सामान्यं मृद्वास्तरणभूषितम् ।
घण्टाशब्दसमोपेतं दत्वार्घ्यं मन्त्रमूर्धनि ॥ २९८ ॥
पाद्यप्रतिग्रहं हैमं विभोर्दद्यात् सरत्नकम् ।
पाद्यं पादोदकाकर्षशाटकेनानुलेपनम् ॥ २९९ ॥
सप्रतिग्रहमाचामं सानुलेपं च मालिकाम् ।
घृतादिकैर्महादीपैरच्छिन्नैरर्चयेद्धरिम् ॥ ३०० ॥
सुगन्धैर्मधुरैर्धूपैः प्रभूतैरर्चयेद्विभुम् ।
अर्हणं मधुपर्कं च दर्पणं तदनन्तरम् ॥ ३०१ ॥
(निष्पुंसनं सपात्रं च आचामं गन्धमेव च ।
अथ चूर्णितकर्पूरघृष्टश्रीखण्डभावितम् ॥
सपूगफलमुत्कृष्टं ताम्बूलं विनिवेद्य च ।
सपुत्रदारमात्मानं अष्टाङ्गपतनेन च ॥
चेतसा भक्तियुक्तेन निवेद्य तदनन्तरम् ।)
ततः स्नानासनादीनां भोगानां सन्निधापनम् ।
कृत्वाभ्यर्च्यापि देवस्य पाणिना दक्षिणं पदम् ॥३०२॥
दक्षिणेनाथ वामेन वामं संगृह्य मन्त्रतः ।
विज्ञाप्य मज्जनार्थं तु कृत्वा मार्गत्रयं ततः ॥ ३०३ ॥
स्नानासनं निवेद्याथ देवस्य द्वितयं तु वै ।
स्नानार्थमवतीर्णस्य पादपीठमनन्तरम् ॥ ३०४ ॥
भक्तिनम्रेण शिरसा दद्यादर्घ्यं तु मूर्धनि ।
विनिवेद्य ततो हैमं सरत्नं च प्रतिग्रहम् ॥ ३०५ ॥
दद्याद्वै पाद्यकलशात् पाद्यं पादाम्बुजद्वये ।
शुभे च पादुके चाथ तदन्ते स्नानशाटकम् ॥ ३०६ ॥
सुगन्धशालिसंपूर्णं मात्रार्थं पात्रमुत्तमम् ।
दर्पणं पूर्णचन्द्राभं गन्धतोयमनन्तरम् ॥ ३०७ ॥
पाणि(भ्यां)(पाद)प्रक्षालनार्थं तु पादपीठं ततः शुभम् ।
(शिरस्पृष्टेन तैलेन किंचिदङ्गमुपस्पृशेत् ॥)

दन्तकाष्ठं च तदनु कर्मण्यक्षीरवृक्षजम् ॥ ३०८ ॥
मुखधावनपात्रं च जिह्वानिर्लेहनं तथा ।
गण्डूषाचामसलिले ताम्बूलं गन्धभावितम् ॥ ३०९ ॥
स्नानारम्भानुवृत्तांश्च(म्भं तु विज्ञाप्य)तैलादीन् संनिधाप्य
तत्पात्राभ्यर्चनं कृत्वा ततस्तैलं समर्चयेत् ॥३१०॥ [च ।
स्कन्धौ संछाद्य वस्त्रेण सुकेशान् विकिरेत् प्रभोः ।
मध्ये शिरसि देवस्य सेचयेत्तैलमुत्तमम् ॥ ३११ ॥
आवृत्यावृत्य निष्पीड्य तथा कण्डूयनं नखैः ।
बहूपचारसंयुक्तं संमार्ज्य तैलजं लवम् ॥ ३१२ ॥
केतकोत्पलमालाश्च दत्वा केशांश्च बन्धयेत् ।
हस्तौ प्रक्षाल्य तोयेन स्कन्धवस्त्रं विमुच्य च ॥ ३१३ ॥
स्पृष्ट्वा तैलं तथाङ्गानि उपाङ्गानि च मर्दयेत् ।
ततो बहुसुगन्धं तु चूर्णं गोधूमशालिजम् ॥ ३१४ ॥
रजनीचूर्णसंमिश्रमीषत्पत्रकभावितम् ।
देयमुद्वर्तनार्थं तु मार्पीं च(चमर्पीं)तदनन्तरम् ॥३१५॥
स्नानार्थं खलिसंयुक्तं तोयमुष्णमनन्तरम् ।
चन्दनं मुखलेपार्थं घृष्टं कर्पूरभावितम् ॥ ३१६ ॥
तत आमलकस्नानं लोध्रं कालेयकं तथा ।
वर्णकं केयूरकं च तगरूणि प्रियङ्गवः ॥ ३१७ ॥
सुगन्धं चैव सिद्धार्थं सर्वौषधिसरत्नकम् ।
सहस्रधारया विष्णोर्दद्याच्छुद्धोदकं तथा ॥ ३१८ ॥
कालेयकं च तदनु लोध्रस्नानं तु वर्णकम् ।
शरीरार्थानि चान्यानि शिरोर्थानि तु सत्तम ! ॥ ३१९॥
यद्वा क्षीरादिसंपूर्णकुम्भैः संस्नापयेद्विभुम् ।
गव्यं प्रभूतं स्नानार्थं क्षीरं दधि घृतं मधु ॥ ३२० ॥
ऐक्षव्यं तु रसं ह्यभावाच्छर्करोदकम् ।
धात्रीफलोदकं चैव लोध्रतोयमनन्तरम् ॥ ३२१ ॥
रक्तचन्दनतोयं च रजनीनीरमुत्तमम् ।
ग्रन्थिपल्लवयोश्च ततस्तु तगरोदकम् ॥ ३२२ ॥
प्रियङ्गुवारि तदनु मांसीजलमतः परम् ।

सिद्धार्थकोदकं चाथ सर्वौषधिजलं ततः ॥ ३२३ ॥
पत्रपुष्पोदके चैव फलबीजोदके त्वथ ।
गन्धोदकं च तदनु हेमरत्नजले ततः ॥ ३२४ ॥
पुण्यतीर्थसरित्तोये केवलं तदनन्तरम् ।
स्नानार्थं कल्पितेनैव तूदकेन विमिश्रितम् ॥ ३२५ ॥
योक्तव्यं क्रमशो ह्येतदर्घ्यपुष्पसमन्वितम् ।
अन्तरान्तरयोगेन स्नानानां च महामते! ॥ ३२६ ॥
क्षालनं चार्घ्यकलशादर्घ्यदानसमन्वितम् ।
ततः स्नानीयशेषेण हेमादिद्रव्यनिर्मितम् ॥ ३२७ ॥
संपूर्णमम्भसा कुम्भं हरिद्राशालितण्डुलैः ।
सुपिष्टैरुपरिष्टाच्च लिप्तं युक्तं स्रगादिना ॥ ३२८ ॥
पाणौ कृत्वा तमेकस्मिन्नपरस्मिंस्तु मल्लकम् ।
धूमायमानं सिद्धार्थैर्भ्राम्य मूर्ध्नि बहिः क्षिपेत् ॥
सुधौतमहतं चाथ शाटकं विनिवेद्य च ।
कचोदकापकर्षार्थमपरं देहवारिहृत् ॥ ३३० ॥
अधरोत्तरवस्त्रे द्वे गन्धधूपाधिवासिते ।
स्कन्धस्रोतं निवेद्याथ सुसूक्ष्ममहतं सितम् ॥ ३३१ ॥
शिरःस्नानं ततः कुर्याच्छशिधूपसमन्वितम् ।
कर्पूरचूर्णसंमिश्रं कुर्याद्देवस्य मूर्धजम् ॥ ३३२ ॥
विभाव्यालङ्कृतं भक्त्या भोगैः स्रक्चन्दनादिभिः ।
एवं हि चित्रपूर्वाणामन्येषां कमलासन! ॥ ३३३ ॥
सद्रत्नग्रहपाषाणवर्जितानां समाचरेत् ।
स्नानाद्यं कर्मबिम्बे तु तत्समीपेऽथ दर्पणे ॥ ३३४ ॥
स्नानविज्ञापनं कृत्वा कर्मार्चां तस्य सन्निधौ ।
स्नानासने समारोप्य तस्यां सर्वं समाचरेत् ॥ ३३५ ॥
तदभावे दर्पणे तु स्नानभोगानि चार्पयेत् ।
चित्रस्थ एव दद्याच्च भोगानन्यान् यथाक्रमम् ॥३३६॥
तदभावे च तान् सर्वान् पाणिनादाय चेतसा ।
निवेदयेन्मण्डलादिष्वेवं भोगनिवेदनम् ॥ ३३७ ॥
प्रोक्षणं यदि वा कुर्यादर्घ्याद्यैरयशिष्टकैः ।
प्रणालभागादपरं स्थानं भद्रासनात्तु(नं तु) वै ॥३३८॥
भूरिनीरघटैः शुद्धं कृत्वा तत्रावतार्य च ।
सपीठं भगवद्बिम्बं तद्विना वार्चितं यदि ॥ ३३९ ॥
स्वप्लुतं भावयेद्देवं निश्शेषं क्षालयेत्ततः ।
भूयो गन्धोदकेनैव पूर्यं कुम्भचतुष्टयम् ॥ ३४० ॥
स्नानकुम्भं विनान्येषां प्राग्वत् कार्या च कल्पना ।
हृन्मन्त्रेण चतुर्णां तु कुर्याद्वि द्रव्ययोजनम् ॥ ३४१ ॥
सास्त्रेण मूलमन्त्रेण सर्वं तच्चाभिमन्त्र्य तु ।
मार्गत्रयं क्रमात् कृत्वा विनिवेद्यासनं ततः ॥ ३४२ ॥
तृतीयं रत्नखचितं तत्रस्थं परमेश्वरम् ।
समभ्यर्च्यार्घ्यपाद्येन पादुकाभ्यामनन्तरम् ॥ ३४३ ॥
देयमाचमनं भूयः पादपीठं तथैव च ।
समालभ्य सुगन्धेन भक्तितश्चन्दनादिना ॥ ३४४ ॥
संवीज्य व्यजनैव मायूरेण ततेन च ।
ततोऽप्यचटनं हैमं राजतं दारुजं तु वा ॥ ३४५ ॥
केशप्रसादकृत्कूर्चं पुष्पताम्बूलकर्तरीम् ।
निवेद्य देवदेवाय दुकूलवसने सिते ॥ ३४६ ॥
घृष्टकुङ्कुमकस्तूरीमृगस्नेहानुलेपनम् ।
उपवीतं सोत्तरीयं मकुटाद्यमनन्तरम् ॥ ३४७ ॥
पादनूपुरपर्यन्तमलङ्करणमुत्तमम् ।
विचित्रं हि शिरोमाल्यं वेष्टनेन समन्वितम् ॥ ३४८ ॥
स्रग्दामसूत्रसंबद्धमाकर्णा(ण्ठा)चरणावधि ।
मुक्तपुष्पं ततो दद्यद्यथाकालसमुद्भवम् ॥ ३४९ ॥
रुचिरं कङ्कणं चाद्य दद्यात् प्रतिसरं ततः ।
धातुभिः कुङ्कमाद्यैर्वा विचित्रं सितसूत्रजम् ॥ ३५० ॥
पूरितं मृदुतूलेन ग्रथितं चान्तरान्तरा ।
अञ्जनं सशलाकं च ताम्बूलं गन्धभावितम् ॥ ३५१ ॥
ललाटतिलकं हैमं मुखवासं सरोचनम् ।
कर्णावतंसके पुष्पे मण्डनं दर्पणं महत् ॥ ३५२ ॥
प्रकिरन् चित्रकुसुमैर्दी(मर्दी)तरलनप्रभोज्ज्वलैः ।

प्रदीपैस्तु महाज्वालै(र्दीपै)स्तिलतैलाज्यपूरितैः ॥
अभुक्ताहतसुश्वेतरञ्जि(चि)तैर्वस्त्र(र्ति)वेष्टितैः ।
गर्भीकृतत्वगेलाद्यैः पूजयेत्तदनन्तरम् ॥ ३५४ ॥
कर्पूरचूर्णसंमिश्रं सुगन्धिमधुरं बहु ।
मृद्धूपसमायुक्तं गुग्गुलुं धूपयेच्छुभम् ॥ ३५५ ॥
सहघण्टारवै रम्यैश्चाल्यमानेन बाहुना ।
उपानहौ सितच्छत्रं शिबिकां च रथादि यत् ॥ ३५६ ॥
वाहनं गजपर्यन्तं सपताकं खगध्वजम् ।
सितासितौ तु चमरौ मात्रावित्तमनन्तरम् ॥ ३५७ ॥
जानुनी भूगते कृत्वा शिरसावनतेन तु ।
आदायोत्तानपाणिभ्यां विनिवेद्य जगत्प्रभोः ॥ ३५८ ॥
संपूरणार्थं भोगानां सर्वेषां द्विजसत्तम ! ।
भेरीमृदङ्गशब्दाद्यैर्जयशब्दसमन्वितैः ॥ ३५९ ॥
गीतकैर्विविधैर्नृत्तैस्तन्त्रीवाद्यसमन्वितैः ।
वंशैः शङ्खैस्तथा वाद्यैरन्यैः श्राव्यैश्च पूजयेत् ॥ ३६० ॥
स्तोत्रमन्त्रजपं कुर्याज्जितन्ताद्यं महामते! ।
व्यस्तं चैव समस्तं च वाक्ययुक्तं विशेषतः ॥ ३६१ ॥
ततः प्रदक्षिणं कुर्याच्चत्वारि द्विजसत्तम ! ।
कुसुमक्षेपसंयुक्तं चतुर्दिक्षु समं तु वै ॥ ३६२ ॥
सहान्तःकरणेनैव भक्तियुक्तेन चेतसा ।
नतपृष्ठशिरोजानुललाटतटहृत्करः ॥ ३६३ ॥
गृहस्थ आचरेन्नित्यं प्रणामं सप्रदक्षिणम् ।
संन्यासी दण्डवत् कुर्यात् प्रणिपातं च सर्वदिक्षु ॥
विहितं स्नातकादीनामन्येषामेवमेव हि ।
स्मरन् सर्वेश्वरं बुद्ध्या सकृत् प्रवितते क्षितौ ॥३६५॥
संकटे सति भूभागे भगवत्यग्रतः स्थितः ।
धिया तु भक्तितः कुर्याद्बध्वा तु करसंपुटम् ॥ ३६६ ॥
हृद्देशे मूर्ध्नि कम्पैस्तु स्मरन् सर्वेश्वरं हरिम् ।
अन्तर्गर्भगृहे विष्णोर्गर्भद्वारार्धमण्टपे ॥३६७॥
प्रणिपातगणं कुर्यात् प्रदक्षिणगणं विना ।
चक्रवज्रामयेनाङ्गं पृष्ठभागं न दर्शयेत् ॥ ३६८ ॥
पश्चाद्भागेन निर्गच्छेद्देवाग्निगुरुसन्निधौ ।
वह्निस्थस्य विभोर्यस्मात् पाणिपृष्ठस्य दर्शनम् ॥ ३६९ ॥
वस्तुष्वपि च भोगेषु प्रधानं प्रापणं तथा ।
पश्चादुत्सवबिम्बं तत्क्रमेणैव तु पूजयेत् ॥ ३७० ॥
जानुभ्यां सह पाणिभ्यां पाणिभ्यां वा समाचरेत् ।
जानुप्रदक्षिणं मुक्त्वा अन्तः सन्निकटे विभोः ॥३७१॥
विरुद्धमपरं चैव भक्तानां चरणभ्रमम् ।
एवं प्रदक्षिणीकृत्वा क्षिप्त्वा पुष्पाञ्जलिं ततः ॥३७२॥
सुस्नाना(ता)दिलयं पृच्छेद्भगवन्तं तदापि च ।
सार्घ्याचामे(न) तु वा चार्घ्यगन्धपुष्पप्रधूपकैः ॥३७३॥
इष्ट्वा नीराजयेद्देवं विभोरर्घ्यं समर्पयेत् ।
भोज्यासनं निवेद्याथ मार्गत्रयपुरस्सरम् ॥ ३७४ ॥
छत्रं दुकूलतूलोत्थमसूरकवरेण तु ।
अर्घ्यं पाद्याचमे दद्यात् प्रतिग्रहसमन्विते ॥ ३७५ ॥
तर्पणं संप्रतिष्ठाप्य वासितं चार्घ्यवारिणा ।
अथार्हणजलं स्वच्छं सुगन्धं पात्रतः कृतम् ॥ ३७६ ॥
मधुपर्कं दधिघृतं मधुयुक्तमनन्तरम् ।
समस्तमेवमेकाङ्गं दधि वापि निवेदयेम् ॥ ३७७ ॥
शीतलं तर्पणजलं अथ चूर्णं पुरोदितम् ।
देयं निष्पुंसनार्थं च पुनराचमनं विभोः ॥ ३७८ ॥
स्वलङ्कृतां सुरूपां च स्रग्युक्तां विनिवेद्य गाम् ।
ओषधीः शालिपूर्णाश्च स्रक्फलाढ्यं वनस्पतिम् ॥
मूर्ति(र्तं)निवेदयेत् पूर्वं ततः संस्थाप्य तर्पणम् ।
प्रच्छादनाम्बरं चैव प्रदद्यादर्हणोदकम् ॥ ३८० ॥
षड्रसप्रभवैर्दिव्यैर्नैवेद्यैः पावनैः फलैः ।
गुडखण्डचितैर्भक्ष्यैरिक्षुभिर्घृतपाचितैः ॥ ३८१ ॥
गुडमुद्गपयोमिश्रैर्निशाज्यतिलमिश्रितैः ।
दधिमिश्रैस्सर्वमिश्रैर्मधुस्वादुयुतैः फलैः ॥ ३८२ ॥
क्रमादन्नैरष्टविधैरपूपान् विनिवेदयेत् ।

सरसाभी रसालाभिः पयसा सुशृतेन च ॥ ३८३ ॥
पवित्रैः शीतलैः स्वादुरसगन्धैश्च पानकैः ।
भक्ष्यैर्भोज्यैस्तथा लेह्यैः पेयैरन्यैरनेकशः ॥ ३८४ ॥
श्रद्धापूतेन मनसा यदन्य(जेत्त)मजमव्ययम् ।
एकैकस्मिंस्तु वै भोगे प्रोक्षयेदर्घ्यवारिणा ॥ ३८५ ॥
छोटिकां मन्त्रसंयुक्तां कृत्वा पाणिद्वयेन तु ।
धारणाह्वितयेनैव अर्कसोममयेन तु ॥ ३८६ ॥
सम्यक् सर्वं तु संस्कुर्याद्यथा तदवधारय ।
प्रचण्डकिरणव्रातैर्भास्करीयैर्दहेत् पुरा ॥ ३८७ ॥
संचिन्त्य भस्मभूतार्हं(तं तु) ततः पूर्णेन्दुरश्मिभिः ।
आप्याय्यामृतकल्लोलधारापातेन नारद ! ॥ ३८८ ॥
कान्तिमच्चिन्तयेद्भूयो यद्दग्धं भानुना तु वै ।
बध्वा कामदुघां मुद्रां स्रवन्तीं मन्त्रसंयुताम् ॥ ३८९ ॥
गोरूपां हिमशैलाभां निराधारपथे स्थिताम् ।
दत्वा पुष्पार्घ्यमुपरि संस्पृशेद्विष्णुपाणिना ॥ ३९० ॥
सव्येन पाणिना स्पृश्य प्रकोष्ठं दक्षिणस्य तु ।
तेन दक्षिणहस्तेन अग्रसंकुचितेन तु ॥ ३९१ ॥
निवेदयेत्ततो विप्र ! शिरसाऽवनतेन तत् ।
पावनैः पानकैः स्वच्छैः शीतलैर्मधुरादिकैः ॥ ३९२ ॥
त्वगेलाद्यन्वितैर्मृष्टधूपकर्पूरवासितैः ।
नालिकेरोदकोपेतैस्तर्पणीयमनन्तरम् ॥ ३९३ ॥
मसूरमाषचूर्णेन रजनीशालिजेन च ।
समुद्धर्त्य च संक्षाल्य शीतलैर्बहुवारिभिः ॥ ३९४ ॥
नैवेद्याचमनार्थं तु गन्धोदकमनुत्तमम् ।
वाससा निर्मलं कृत्वा चन्दनेन सितेन च ॥ ३९५ ॥
समालभ्य सुधूपेन कर्पूरसहितेन च ।
तिलान्यथ स रत्नानि सौवर्णं वाथ राजते ॥ ३९६ ॥
पात्रे कृत्वाथ मात्रार्थं देवाय विनिवेदयेत् ।
लवङ्गतक्कोलैलात्वककर्पूरपरिभावितम् ॥ ३९७ ॥
जातिपूगफलोपेतं ससुगन्धच्छदं बहु ।
कर्पूरचूर्णसंमिश्रं मुक्ताचूर्णसमन्वितम् ॥ ३९८ ॥
मातुलुङ्गफलोपेतं नालिकेरफलान्वितम् ।
प्रदद्यात् प्रणतश्चान्ते ताम्बूलं जगतः पतेः ॥३९९॥
प्रक्षाल्य गन्धतोयेन अर्घ्यपात्रोद्धृतेन वै ।
पाणियुग्मं यथा वै स्यात् स्वच्छमत्यन्तनिर्मलम् ॥
नैवेद्यधूपमाल्याद्यैः पात्रैश्चानिर्मलीकृतम् ।
कृत्वा तु गन्धदिग्धौ तौ अर्घ्येणार्च्य परस्परम् ॥
मुद्रामूलादिमन्त्राणां दर्शयित्वा यथाक्रमम् ।
भूयोऽर्घ्यगन्धपुष्पेण धूपान्तेन समर्च्य च ॥ ४०२ ॥
जपयज्ञविधानेन देवं सन्तर्पयेत्ततः ।
स्फाटिकेनाक्षसूत्रेण स्वकैर्वा करपर्वभिः ॥ ४०३ ॥
पात्रं संस्थापयेत् पश्चादर्घ्यपात्राच्च वारिणा ।
विलिप्य चन्दनाद्यैस्तु स्थापयेद्भाजने शुभे ॥ ४०४ ॥
संपूज्य पुष्पधूपाद्यैर्मन्त्रं तत्र च विन्यसेत् ।
साधारमासनं चैव शक्तिपूर्वैः समावृतम् ॥ ४०५ ॥
चतुर्भुजं तु विरजो नारायणमिवापरम् ।
वरदाभयहस्तं च बद्धाञ्जलिधरं स्मरेत् ॥ ४०६ ॥
ब्रह्मस्थानस्थितं तं च सूत्रं ध्यायेच्छिखोपमम् ।
सन्निधौ भव देवेश ! संनिरुद्धो भवाच्युत ! ॥ ४०७ ॥
सूत्राख्यमणिआलेऽस्मिन् यावच्चन्द्रार्कतारकम् ।
एवं मुने ! प्रतिष्ठाप्य मन्त्रं सूत्रेऽक्षसंज्ञिके ॥ ४०८ ॥
प्रतिष्ठितस्य वै पश्चान्मुद्रां स्वां च प्रदर्शयेत् ।
यथाशक्ति जपं कुर्याच्छतमष्टाधिकं तु वा ॥ ४०९ ॥
तन्निवेद्य विभोः पश्चाद्वाक्कर्ममनसान्वितम् ।
"पुण्डरीकाक्ष ! विश्वात्मन् ! मन्त्रमूर्त ! जनार्दन ! ॥
गृहाणेदं जपं नाथ ! मम दीनस्य शाश्वत !" ।
इत्युक्त्वार्घ्योदकं पश्चात् पुष्पं दक्षिणपाणिगम् ॥
अग्रतो निक्षिपेद्विष्णोर्मूलमन्त्रेण नारद ! ।
भावयेच्च ततस्सम्यक्स्फुरन्तीं तारकावलिम् ॥४१२॥
प्रविष्टां भगवद्वक्त्रे वक्त्रात्तां हृद्गतां पुनः ।

हृदयाद्द्विजशार्दूल ! संहाराख्यक्रमेण तु ॥ ४१३ ॥
पूर्ववद्ब्रह्मरन्ध्रेण परेण सह योजयेत् ।
एकैकं हृदयादीनां सर्वेषां विहितं त्वथ ॥ ४१४ ॥
क्रियाङ्गत्वान्न दोषोऽस्ति अन्यथा तज्जपं विना ।
धूपं दत्वा प्रणम्याथ स्तु(श्रु)त्वा मन्त्रेश्वरं ततः ॥
द्विधा प्रदक्षिणं कुर्यात् प्रणामं च तथाविधम् ।
नैकत्रिपञ्चसप्ताख्यगणनाविषमं च यत् ॥ ४१६ ॥
यतः समो हि भगवान् देवः सर्वस्य वै हरिः ।
संपूज्य गन्धधूपैश्च ततस्तु भगवन्मयान् ॥ ४१७ ॥
यथाक्रमं समभ्यर्च्य नैवेद्यं प्रतिपाद्य च ।
तेषां मात्रावसानं च आसनाद्यं निवेदयेत् ॥ ४१८ ॥
यद्वेभ्यो देव(भोग)यज्ञान्ते तन्मात्रान्तं प्रदाय तु ।
अस्मिन् कालेऽर्हणाद्यं तु ताम्बूलान्तं समर्पयेत् ।
शय्यासनं ततो दद्यादग्नौ सन्तर्पयेत्ततः ॥ ४१९ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे मानसयागो नाम षष्ठोऽध्यायः ॥

॥ श्रीः ॥

# सप्तमोऽध्यायः ॥

न्यस्त्वाऽऽत्मासने यायादनलालयमर्घ्यभृत् ।
पूर्ववद्द्वारयागं तु कृत्वा संप्रविशेत्ततः ॥ १ ॥
तत्र पूर्वोक्तविधिना उपविश्य समाहितः ।
नाकुण्डहवनं यस्मात् सिद्धिकृन्मन्त्रयाजिनाम् ॥ २ ॥
तस्मात् कुण्डं सदा कार्यं सौत्रं वा जङ्गमं स्थिरम् ।
भगवद्व्द्धिशक्त्यैव ज्वालाद्या प्रकृतिः परा ॥ ३ ॥
अपरा प्रकृतिर्धिष्ण्या नानाकारा यथानलाः ।
अत एतान्निरूपा वै कुण्डा हवनकर्मणि ॥ ४ ॥
चतुरस्रादिभेदोत्थाः काम्यानां कर्मणां द्विज ! ।
सद्रत्नमालाश्रीवत्समकुटाङ्गदलक्षणाः ॥ ५ ॥
शङ्खचक्रगदापद्मशार्ङ्गनानाशरोपमाः ।
परश्वथं तथा सीरसदृशाः सर्वसिद्धिदाः ॥ ६ ॥
वज्राद्यक्षवयाकारा भृङ्गारकरकोपमाः ।
सर्वे सपीठा विहिताश्चतुस्त्रिद्व्येकमेखलाः ॥ ७ ॥
चक्रपद्मगदाशङ्खसमस्तव्यस्तलाञ्छिताः ।
ततोष्ठयोनिनिर्याद्भिः स्वरैः रुचिरैर्युताः ॥ ८ ॥
आद्वादशाङ्गुलात् कुण्डाः करान्ता ये त्रयोदश ।
सर्वाकृतिधराश्चैव जङ्गमा मेखलोज्झिताः ॥ ९ ॥
अनुकल्पे तु विहिता भक्तानां मन्त्रतर्पणे ।
एक(स्व)द्विहस्तपर्यन्ता यथालक्षणलक्षिताः ॥ १० ॥
भूमावुल्लिख्य संपूर्य धान्यैर्वीजैर्मृदा तु वा ।
सामग्रीविरहाच्चापि शश्वत्कर्मसमाप्तये ॥ ११ ॥
अनुकल्पानुकल्पे तु नित्यमेवाविरोधकृत् ।
प्राजापत्ये दैविकीये शैव्येऽर्धकरसम्मिते ॥ १२ ॥
क्षेत्रे क्रमात्रयेद्वृद्धिं तावदेकैकमङ्गुलम् ।
यावदष्टकरं क्षेत्रं धिष्ण्यार्थमुपजायते ॥ १३ ॥
एवं स्यान्मानभेदेन एकाशीत्यधिकं शतम् ।
एवं कृते शुभे कुण्डे अग्निकार्यं समाचरेत् ॥ १४ ॥
चुल्ल्यां वा मल्लके वापि होमं कुर्याद्यथाविधि ।
शतार्धसंख्या होमे च कुण्डं स्याद्द्वादशाङ्गुलम्
होमे साष्टशते चैव मुष्टयरत्निसमं भवेत् ।
होमे सार्धशते चैव सारत्निः सकनिष्ठिका ॥ १६ ॥

हस्तं सहस्रहोमे तु अयुताख्ये द्विहस्तकम् ।
लक्षहोमे चतुर्हस्तं कोटिहोमेऽष्टहस्तकम् ॥ १७ ॥

एवं सुलक्षणं कुण्डं विभवानुगुणं शुभम् ।
सुधाद्यैर्वर्णकैः शुद्धैर्भूषयित्वोपलिप्य च ॥ १८ ॥

सुगन्धैश्चन्दनाद्यैश्च पञ्चगव्यपुरस्सरैः ।
कुण्डस्यारम्भकाले तु संस्कारा न कृता यदि ॥ १९ ॥

निष्पन्नस्य च ते सर्वे विधेयाश्च क्रमेण तु ।
ताडयेदस्त्रमन्त्रेण पुष्पैर्दक्षिणपाणिना ॥ २० ॥

खननं तीक्ष्णशस्त्रेण देशिकश्चास्त्रविद्यया ।
गृहीत्वा चैकदेशात्तु कुण्डमध्यात्तु मृत्कणम् ॥ २१ ॥

अङ्गुष्ठानामिकाभ्यां तु हृदयेन समुद्धरेत् ।
अस्त्रेणैव समीकृत्य न स्यान्निम्नोन्नतं यथा ॥ २२ ॥

सेचयेत् कवचेनैव कुट्टयेत्तदनन्तरम् ।
लेपयेद्गन्धतोयेन अस्त्रेण परिशोधयेत् ॥ २३ ॥

[1] अस्त्रजप्तैः कुशाकाण्डैस्तीक्ष्णलाङ्गलवर्जितैः ।
[2] अस्त्राभिमन्त्रितैनैव दर्भकाण्डद्वयेन तु ॥२४ ॥

[3] तन्मध्ये च कुशाग्रेण प्राग्भागमवलम्ब्य च ।
[4] आरभ्य दक्षिणाशाया लिखेद्रेखामुदग्गताम् ॥२५॥

[5] विलिख्यार्गलरेखां प्राक् काष्ठा वेपुवती च सा ।
[6] उत्तराशावधिर्यावद्व्याद्रेखात्रयं तु या ॥ २६ ॥

[7] प्रत्यग्भागात् समारभ्य नयेत् पूर्वमुखं तु तत् ।
[8] तस्यामुपरि संलिख्य रेखाणां त्रितयं स्फुटम् ॥

[9] प्रागग्रं दक्षिणाशादि ह्युदीच्यन्तं च सान्तरम् ।
[10] तन्मध्ये त्रितयं चाऽन्यद्रेखाणामुत्तरामुखम् ॥२८॥

[11] प्रत्यग्भागात् समारभ्य मध्यका पिङ्गलाभिधा ।
दक्षिणोत्तरयोर्ह्ये तु सुषुम्नेडाभिदैवते ॥ २९ ॥

नीत्वा शुद्धिमथास्त्रेण क्षालयेच्छिरसाम्बुना ।
संशोष्य कवचेनैव नेत्रेणाथावलोक्य च ॥ ३० ॥

विलिख्योद्धृत्य चास्त्रेण प्रपूज्य हृदयेन तु ।
दर्भकाण्डद्वयेनाथ मध्ये मध्येऽन्तरीकृते ॥ ३१ ॥

वर्मणा क्षालनाद्येन चतुष्पथधिया पुनः ।
नीत्वा व्यक्तिं यथावच्च हृन्मन्त्रेण महामते ! ॥ ३२ ॥

मृदुदर्भसमूहं च नीरसं चाश्मकुट्टितम् ।
शुष्कगोमयचूर्णेन युक्तं गन्धाश्मना सह ॥ ३३ ॥

कुण्डे द्रोणांशमात्रं तु समारोप्य प्रसार्य च ।
अच्छिन्नाग्रैस्ततो दर्भैरस्त्रमन्त्राभिमन्त्रितैः ॥ ३४ ॥

कुण्डभित्तिगणं सर्वं प्रोक्षितैः परिभूषयेत् ।
वर्मणा चाक्षवाटं तु संकल्प्य तदनन्तरम् ॥ ३५ ॥

समभ्यर्च्यार्घ्यपुष्पाद्यैः मध्यतः प्रणवेन तु ।
तेनैव विधिना नाभिं पूजयेच्चन्द्रसन्निभाम् ॥ ३६ ॥

ततः पवित्रकं दार्भं शिरोमन्त्राभिमन्त्रितम् ।
प्राक् समालम्भनोपेतं चतुष्पथवदं न्यसेत् ॥ ३७॥

हृन्मन्त्रेण च विन्यस्य तत्रोपर्यथ पूजयेत् ।
आधारशक्तिपूर्वं तु आसनं वैष्णवं च यत् ॥ ३८ ॥

अथवा पूजयेच्छक्तिं केवलाधारसंज्ञिताम् ।
तत्र नारायणाख्यां वै शक्तिं विद्योतल्लक्षणाम् ॥ ३९ ॥

लक्ष्म्याकृतिधरां प्राप्तामनुनाम्नतरूपिणीम् ।
सर्वातिशायिरूपां च सर्वशक्तिसमन्विताम् ॥ ४० ॥

सौकुमार्येण रूपेण सर्वदस्त्वन्तरस्थिताम् ।
शाश्वतीं सृष्टिमार्गेण शयनाद्यं हृदम्बुजे ॥ ४१ ॥

पुनर्ध्यानक्रमेणैव हृन्मन्त्रेण हृदम्बुजात् ।
स्वनामपदयुक्तेन सनमःप्रणवादिना ॥ ४२ ॥

रेचकेन विनिक्षिप्य कुण्डे हृत्पद्ममध्यतः ।
संपूज्य गन्धपुष्पाद्यैः पद्ममुद्रां प्रदर्श्य च ॥ ४३ ॥

ताम्रपात्रेऽथवाऽन्यस्मिन् समादाय हुताशनम् ।
आरण्यं लौकिकं वाऽथ मणिजं दर्पणोद्भवम् ॥ ४४ ॥

निधाय कुण्डस्यैशान्यां संस्कारार्थं च सान्धनम् ।
सन्ताड्य चास्त्रमन्त्रेण प्रोक्षयेच्छिरसा च तम् ॥४५॥

हृदाभ्यर्च्यामृतध्यानं दत्त्वाच्छाद्याथ वर्मणा ।
मूलं स्मृत्वा समानीय पूरकेण हृदन्तरे ॥ ४६ ॥

मन्त्रानिलकराकृष्टं कृत्वा तस्माद्विनिर्गतम् ।
व्यस्तो गुणगणात् षष्ठस्तेजोनाम गुणो हि यः ॥ ४७ ॥

परस्य ब्रह्मणः सोऽयं सामान्यं सर्वतेजसाम् ।
विरेच्य विन्यसेत्तस्मिन् वन्हिपात्रे पुरार्चिते ॥४८॥

ततोऽग्निपात्रमादाय निर्धूममतिदीप्तिमत् ।
दक्षिणेन करेणैव पाणिभ्यामथवा द्विज ! ॥ ४९ ॥

भ्रामयित्वा चतुर्धा वै ततः कुण्डान्तरे क्षिपेत् ।
ध्यायेदेकत्वमापन्नं ततो मन्त्रार्चिषा सह ॥ ५० ॥

याज्ञीयैरिन्धनैः शुष्कैः प्रज्वाल्यास्त्राभिमन्त्रितैः ।
हृदा दक्षिणहस्तेन कुर्यात् परिसमूहनम् ॥ ५१ ॥

प्रदक्षिणक्रमेणैव त्वार्द्रपाणितलेन तु ।
तिर्यक् चाधोमुखस्थेन नखपृष्ठमदर्शयन् ॥ ५२ ॥

अस्त्राभिमन्त्रितेनैव प्रोक्षयेदर्घ्यवारिणा ।
ततस्त्वभग्नमूलाग्रैः समैर्दद्यात् कुशांस्तरम् ॥ ५३ ॥

दिशि दिश्युत्तराशान्तं, याम्याशादौ तु सान्तरम् ।
चतुर्गुणैश्चतुर्धा वाप्यप्रच्छन्नैः परस्परम् ॥ ५४ ॥

प्राक्प्रान्तैः पूर्वभागाच्च यावदुत्तरगोचरम् ।
चतुर्भिरन्यजस्रैर्वा चतुर्दिक्षु त्रिधा त्रिधा ॥ ५५ ॥

चतुर्भिश्च चतुर्भिर्वा प्राक्प्रतीच्योरुदङ्मुखैः ।
दक्षिणोत्तरयोश्चैव तत्संख्यैः प्राङ्मुखैर्द्विज ! ॥ ५६ ॥

अवतार्य तदूर्ध्वं तु दक्षिणस्यां तथात्मनः ।
द्वन्द्वद्वयप्रयोगेण द्रव्यस्थापनमाचरेत् ॥ ५७ ॥

परिधींश्चेध्मनिचयं मुक्तदर्भस्तरण्डिकाम् ।
स्रुक्स्रुवौ च चतुष्कं यदेकत्र विनिवेदय च ॥ ५८ ॥

स्रक्धूपमधुपर्कं च बीजान्येकत्र वै ततः ।
कौशेयं धूतवेशं च विष्टरं च घृतं चरुम् ॥ ५९ ॥

आज्यस्थालीचतुष्कं च निधाय तदनन्तरम् ।
प्रणीतं पात्रयुगलं करकं चार्घ्यभाजनम् ॥ ६० ॥

चतुष्कमेतदपरं अग्रतो विनिवेदय च ।
प्रादेशमात्राः समिधः प्रभूतं शुष्कमिन्धनम् ॥ ६१ ॥

पक्ष्मकं स्वेदहृद्वस्त्रं वामभागे निधाय च ।
अर्घ्योदकेन सास्त्रेण कृत्स्नं पावनतां नयेत् ॥ ६२ ॥

सुसमं कुण्डबाह्ये तु प्राग्भागे मेखलाश्रितम् ।
पवित्रकाष्टकं कृत्वा तेषु चाष्टविधान् न्यसेत् ॥ ६३ ॥

क्ष्मादिकां प्रकृतिं देवीमहङ्कारावसानिकाम् ।
प्रभवाप्ययभेदेन विभुना चतुरात्मना ॥ ६४ ॥

अधिष्ठितां महाबुद्धे ! तामभ्यर्च्य महात्मना ।
स्वनामपदयुक्तेन नतिना प्रणवेन च ॥ ६५ ॥

ऊर्ध्वाधोमेखलानां तु चतुर्णां दिक्चतुष्टये ।
कौशेयविष्टरस्थांश्च वासुदेवादिकान् यजेत् ॥ ६६ ॥

विदिक्ष्वव्यययोगेन ऊर्ध्वान्तमधरात्तु वै ।
तद्वदेवार्घ्यपुष्पाद्यैः पूजनीयाः क्रमेण तु ॥ ६७ ॥

ततस्तन्मूलदेशस्था ब्रह्मवृक्षादिकोत्थिताः ।
सपर्णाः सत्वचः स्पष्टा अथोनेरोस्तु चाधिकाः ॥ ६८ ॥

प्राक्प्रत्यगुत्तराग्रौ च प्रागग्रौ दक्षिणोत्तरौ ।
चतस्रो वै परिधयः शिखामन्त्रेण पूजयेत् ॥ ६९ ॥

विष्टराणि ततो दद्यात्तेषु पृष्ठे हृदा मुने ! ।
तत्पृष्ठे पूजयेन्नित्यं लोकपालान् स्वदिक्स्थितान् ॥

दर्भान् प्रसव्यमावेष्ट्य मूलात् प्रादेशसंमितान् ।
परतो द्व्यङ्गुलं पाशं कृत्वावेष्ट्य त्रिरग्रतः ॥ ७१ ॥

पाशे निवेश्य द्वि त्रि(?) गुणं गुणेष्वायम्य मूलतः ।
समीकृत्यातिरिक्ताग्राण्यनखं विनिकृन्तयेत् ॥ ७२ ॥

कृत्वा वेदोपयामं तं वामाङ्गुष्ठान्तरार्पयेत् ।
स्रुक्स्रुवाभ्यां च संस्कारमुपयामाग्रगैः कुशैः ॥ ७३ ॥

स्रुचं द्वादशधा शोध्य सास्त्रेणोष्णेन वारिणा ।
तथैव द्विजशार्दूल ! स्रुवं शोध्य द्विधैव तु ॥ ७४ ॥

तथैव स्रुक्स्रुवौ हेव शिखामन्त्रेण वै ततः ।
प्रताप्यास्त्रेण सन्ताड्य सार्घ्यपुष्पासनान्वितैः ॥७५॥

तदा प्रमेयं तु स्रुचो ज्ञातव्यं कर्मसिद्धये ।
शतपत्रात्मनानन्तो मुष्टिस्थोऽनन्तवक्त्रभृत् ॥ ७६ ॥

अन्तर्बीजात्मभावेन स्थित्वा चोर्ध्वमुखं पुनः।
सप्तस्कन्धं यदध्यात्मभूतप्राणमरुन्महत् ॥ ७७ ॥

प्रेरितं ब्रह्मरन्ध्रेण तत्तदिच्छावशात् पुनः।
सप्तपातालनागं च अगमत् क्ष्माम्बुजात्मना ॥ ७८ ॥

यदाथिल्य स्ववाहे तु अमृतात्मा जलस्थितः।
सचक्ररचनाजाले स्थितस्तेजस्त्रिमूर्तिभृक् ॥ ७९ ॥

शङ्खविग्रहधृग्वायुराज्यकोशं च खं ततः।
निर्बीजमजमक्षोभ्यमाद्यं स्यादधिदैवतम् ॥ ८० ॥

अपरस्मिन् स्रुवे ज्ञेयं यथा ज्ञायेत तच्छृणु।
साक्षादमृतमूर्तिर्यं वरुणः कलशात्मना ॥ ८१ ॥

नालात्मना तदस्त्रं च संस्थितं विघ्नभीतिकृत्।
जगदाप्यायकृच्चन्द्रः पद्मत्वेनाग्रदेशतः ॥ ८२ ॥

आनन्दाख्यं हि सामर्थ्यं ज्ञेयं तत् पारमेश्वरम्।
सत्यभूतममेयं च प्रमेयमिदमाच्युतम् ॥ ८३ ॥

संस्कारकाले त्वारोप्य नित्यं सन्मन्त्रतर्पणे।
स्वसंज्ञा प्रणवोपेता नमस्कारपदान्विता ॥ ८४ ॥

सर्वेषामर्चने विप्र! आराध्य हृदयेन वा।
पूजयित्वार्घ्यगन्धाद्यैर्न्यस्तमन्त्रगणं ततः ॥ ८५ ॥

अम्बुपूतेऽथ पात्रे द्वे हेमादिद्रव्यनिर्मिते।
पूरयित्वाम्भसा ताभ्यां विप्रद्वितयं न्यसेत् ॥ ८६ ॥

एकस्मिन् मूलमन्त्रं तु सासनं संप्रपूज्य च।
तदस्त्रमपरस्मिन् वै तेन प्रागादितस्त्वरम् ॥ ८७ ॥

प्रदक्षिणक्रमेणैव स्रुचा सिच्य निधाय च।
पूरयित्वाऽम्भसा भूयो द्वितीयेन सहोत्तरे ॥ ८८॥

विनिधाय च द्विभागे अर्चयित्वा प्रणम्य च।
आज्यौघं च तदस्त्रेण प्रोक्षयेत्ताडयेद्द्विज! ॥ ८९ ॥

भाण्डस्थस्य यदाज्यस्य दर्भैः प्रज्वलितैः पुरा।
स्पर्शनं विद्धि संस्कारमधिश्रयणसंज्ञकम् ॥ ९० ॥

उपाधिश्रयणं नाम यत्तद्द्रावणमुच्यते।
परिवर्तनमन्यस्मिन् भाण्डे दोषापनुत्तये ॥ ९१ ॥

प्रलादीकरणं ह्येतदुच्चस्थेन करेण तु।
पुनरादाय कृत्वाग्रे आधारोपरि यत्नतः ॥ ९२ ॥

परावर्त्य स्रुवेणादौ चतुस्त्रिद्व्येकसंख्यया।
दर्भकाण्डचतुष्कं तु द्वादशाङ्गुलसंमितम् ॥ ९३ ॥

तिर्यगुत्तानपाणिभ्यामवष्टभ्य च सान्तरम्।
अनामाङ्गुष्ठयुग्मेन यथा मध्यं नतं भवेत् ॥ ९४ ॥

तैराज्यं चतुरो वारानानयेच्चतुरो नयेत्।
अन्तरान्तरयोगेन ह्यात्मनोऽग्नेस्तु संमुखम् ॥ ९५ ॥

प्रणवेनोक्तसंख्येन कुण्डमध्ये विनिक्षिपेत्।
यद्वा हृदा द्विदर्भेण निनयेदानयेत् त्रिधा ॥ ९६ ॥

संप्लवोत्प्लवने कृत्वा ततो दार्भं पवित्रकम्।
विनिक्षिपेच्च तन्मध्ये पवित्रीकरणं च तत् ॥ ९७ ॥

नीराजीकृत्य नेत्रेण कुशाग्रैरर्चिषान्वितैः।
हृदा संयोजनं कुर्यादुपयामस्य तत्र च ॥ ९८ ॥

तेजसा हृदयस्थेन दृग्गतेनावलोकनम्।
निरीक्षणमिदं विप्र! नेत्रेण हृदयेन वा ॥ ९९ ॥

निरीक्ष्यैवं तु तत्पश्चात् कवचोदरगं स्मरेत्।
अवगुण्ठनमेतद्धि स्थितं तत्रोपरि स्मरेत् ॥ १०० ॥

चन्द्रमण्डलमध्यस्थं धेनुमुद्रासमन्वितम्।
मन्त्रं वै सौरभीयं च स्फुरदिन्दुशतप्रभम् ॥ १०१ ॥

तदन्तरस्थं मन्त्रेशं हिमाचलनिभं स्मरेत्।
तत्स्रुतैरमृतौघैश्च शशिजैर्धेनुजैरपि ॥ १०२ ॥

कवचेनामृतीकृत्य निदध्यादुत्तरे घृतम्।
अमृतीकरणं नाम इदं ते संप्रकाशितम् ॥ १०३ ॥

सामान्याज्यस्य संस्कारान् कृत्वा पञ्चदश द्विज!।
अथाज्यप्रोक्षणं कुर्याद्घोरयं तदखिलं तु वै ॥ १०४ ॥

समित्कुसुमपूर्वं तु विष्टरेण स्रुवेण वा।
हृदाज्यसिक्तैः कुसुमैः सर्पिषा वा धिया द्विज! ॥

गर्भाधानादिसंस्कारान् कुर्याद्द्वारावसानकान्।
स्त्रीकुक्षिकुहरे यद्वै वह्निरूपस्य प्रवेशनम् ॥ १०६ ॥

गर्भाधानं तु तद्विद्धि संस्कारं प्रथमं मुने!।
प्राणयोगाच्च यां शक्तिर्वाह्नी श्रीजठरे स्थिता ॥
जठरूपाक्षया सूक्ष्मा तस्याश्चित्प्रसरां हि यः।
भगवच्छक्तिचैतन्यसामर्थ्याच्च शनैः शनैः ॥ १०८ ॥
स्मृत्वैवं जुहुयादाज्यं हृन्मन्त्रेणोदितेन च।
भवेत् पुंसवनं चाग्नेश्चिच्छक्तिनयनात्तु वै ॥ १०९ ॥
सीमन्ताख्यं तु संस्कारमग्नेः कुर्यादनन्तरम्।
अव्यक्ताश्च तदन्तस्थाः शिरः पाण्यादयोऽखिलाः ॥
स्वां स्वां वै कर्मसीमानं प्रबुद्धाः संश्रयन्ति ये।
विभागकल्पनं तेषां सीमन्तं तदुदाहृतम् ॥ १११ ॥
अग्नेर्वै जातकर्मार्थं पूर्ववद्धोमयेत् सकृत्।
निस्सृतस्य च वै गर्भात् जातस्य प्राशनं द्विज!॥
हिरण्यमधुसर्पिर्भ्यां जातकर्म भवेत्तु तत्।
होमयेन्नामकर्मार्थं घृतपूर्णस्रुवेण च ॥ ११३ ॥
जातस्याग्नेः प्रयत्नेन वासुदेवादिना द्विज!।
अङ्कयेत् सुप्रसिद्धेन नामकर्म भवेदिदम् ॥ ११४ ॥
अन्नप्राशनकर्मार्थं पूर्ववद्धोममाचरेत्।
एवं संस्कारशुद्धस्य वैष्णवाग्नेः प्रयत्नतः ॥ ११५ ॥
मन्त्रा सन्धानपूर्वं यत्तदन्नप्राशन भवेत्।
शिखाबन्धं यदग्नेस्तु तच्चौलमिति चोच्यते ॥ ११६ ॥
यदग्नेर्होमयोग्यत्वं तद्योपनयनं स्मृतम्।
वेदव्रत च गोदानं समावर्तविवाहकौ ॥ ११७ ॥
कृत्वानलस्य जिह्वानां भावयेत् सप्तकं पुनः।
नवखण्डे समिद्धाग्नौ कुण्डेऽग्नावर्चिषोद्धृते ॥ ११८ ॥
ईशप्रागनलाख्यानां पदानां भावयेत् त्रयम्।
यातुधाने तु वारुण्ये वायव्ये तु पदत्रये ॥ ११९ ॥
जिह्वात्रयं तु योक्तव्यं मध्यतो दक्षिणोत्तरे।
एका चैव परिज्ञेया ताः क्रमेण निबोध तु ॥ १२० ॥
हव्या कव्या च धूम्रा वै तिस्रः प्राच्यां दिशि स्थिताः।
स्फार्ली मनोजवा चेति कराली चेति पश्चिमे ॥ १२१ ॥
एकां वै लेलिहाख्यां च विद्धि शेषपदत्रये।
रक्तं श्वेतं तथा नीलं कृष्णं पीतं तथारुणम्॥१२२॥
सौदामिनीनिभं ध्यायेज्जिह्वानां सप्तकं क्रमात्।
स्वस्वबीजैः स्वसंज्ञैर्वा, सर्वबीजैर्वा स्वनामभिः ॥ १२३ ॥
एतैर्मन्त्रैर्द्विजश्रेष्ठ! भावयेच्च यथाक्रमम्।
प्रभादीप्तिः प्रकाशा च मरीचिस्तापनी तथा ॥ १२४ ॥
कराला लेलिहा चैव कुण्डं व्याप्य व्यवस्थिताः।
ईशपूर्वाग्निदिग्भागे प्रभाद्यं त्रितयं स्मृतम् ॥ १२५ ॥
रक्षोवारुणवायव्यो मरीच्याद्यं त्रयं तु तत्।
उदग्दिङ्मध्यतो याम्ये स्थितैका, लेलिहाभिधा ॥
विभागमेवं ज्ञात्वा वै जिह्वानामग्निकर्मणि।
आवेयोल्लिखिताकारं ध्यात्वा कुण्डगतानलम् ॥१२७॥
तज्जनित्रीं ततः कुण्डाज्ज्वालामार्गेण चोद्गताम्।
परानन्दप्रकाशाभां नासिकया द्वादशावधि ॥ १२८ ॥
ततोऽवतारयोगेन प्रविष्टां भावयेद्धृदि।
हृन्मन्त्रेणार्चयित्वाग्निं साध्यपुष्पैश्च निर्मलैः ॥ १२९ ॥
धूपैर्दीपैन दध्ना च तिलैरक्षतमिश्रितैः।
अन्नैर्भक्ष्यफलोपेतैराज्येन क्रमशो द्विज! ॥ १३० ॥
संपूज्यैवं विधानेन स्वमन्त्रेणाथवा ततः।
तर्पयेत यथाशक्ति तिलाज्याद्यैरनुक्रमात् ॥ १३१ ॥
आज्येन वा केवलेन सहस्रशतसंख्यया।
दद्यात् पूर्णाहुतिं पश्चात् पूजितां कुसुमादिकैः ॥१३२॥
स्रुक्स्रुवेणोपयामेन ह्यूर्ध्वाधः संस्थितेन च।
स्रुचा संपुटयोगेन वह्निवदनमध्यगम् ॥ १३३ ॥
प्रादक्षिण्येन चामध्याद्धारापातं समाचरेत्।
नयेन्मध्यपदे नित्यामाज्यधारां तथा पुनः ॥१३४॥
प्रदर्श्य हार्दीं मुद्रामग्निमुद्रां तु वा द्विज!।
नारायणात्मकं वह्निं प्राग्वदभ्यर्चयेत्ततः ॥ १३५ ॥
पूर्ववच्च स्मरेद्वह्निं साकारं निष्कलप्रभम्।
स्वयोगबलवीर्येण व्यापकं सर्वदिग्गतम् ॥ १३६ ॥

कदम्बकुसुमाकारं स्वप्रभाभिर्विराजितम् ।
कुण्डमापूरयन् सर्वं सर्वाकृत्या तु सर्वतः ॥ १३७ ॥

एवं हि विततो व्यापी निराकारः सुदीप्तिमान् ।
अथ ज्वालाजटाधारे वह्नौ वै कुण्डमध्यतः ॥ १३८ ॥

अनुसन्धीयते बुद्ध्या विग्रहं तु यथोदितम् ।
तदर्चनमथो कुर्यात् पुष्पैर्धूपैः सचन्दनैः ॥ १३९ ॥

मुद्राबन्धं ततः कुर्यात् पीठामरगणस्य च ।
ततोऽवतार्य तन्मध्ये हृदयात् परमेश्वरम् ॥ १४० ॥

नीरोदकात् स्वमन्त्रेण दद्यात् पुष्पाञ्जलिं विभोः ।
साङ्गं सलाञ्छनं ध्यायेत् सकलं परमेश्वरम् १४१ ॥

सांमुख्यं सन्निधानं च सन्निरोधनमाचरेत् ।
अर्घ्यप्रदानपूर्वं तु सर्वं कुर्यात्तु पूर्ववत् ॥ १४२ ॥

मूलबिम्बे यथा ध्यानमग्निमध्ये तथा भवेत् ।
यानगे यानगं ध्यायेदग्नौ स्थाने यथास्थितम् ॥

आसीने त्वथ चासीनं शयाने च तथाविधम् ।
पद्मरागारुणरुचिं सर्वत्र्यमनलास्पदे ॥ १४४ ॥

मूलादिसर्वमन्त्राणां तत्तन्मुद्रां प्रदर्श्य च ।
अर्घ्यगन्धादिना पश्चात् पूजयेत् सकलं प्रभुम् ॥१४५॥

लयभोगात्मना सम्यक् पूर्वोक्तविधिनाऽथवा ।
समिद्गणं तु पात्रस्थं कृत्वाभ्यर्च्य हृदा मुने ! ॥१४६॥

शिरसावनतेनैव विनिवेद्य ततः प्रभोः ।
इध्मानामष्टकं चापि चतुष्कं द्वयमेव वा ॥ १४७ ॥

आज्येन सर्वतः सिक्तं ब्रह्मक्षीरद्रुमोद्भवम् ।
समादाय द्विधा कृत्वा मूलेन द्विजसत्तम ! ॥ १४८ ॥

निधाय दक्षिणस्यां च मध्ये आग्नेयदिग्गतम् ।
विश्रान्तं नैर्ऋतपदे उत्तरस्यां तथापरम् ॥ १४९ ॥

वाय्वीशपदसंरुद्धमाघाराज्यं ततः क्षिपेत् ।
इध्ममूलाद्यथाग्रान्तमिध्मेध्मोपरि संस्थितम् ॥ १५० ॥

स्रुवमाज्येन संपूर्य सूर्यबीजेन चिन्तयेत् ।
सहस्रांशुं च तन्मध्ये दद्यात् कुण्डस्य दक्षिणे ॥१५१॥

अपरस्मिन् स्रुचि ध्यात्वा सोमाख्येनाक्षरेण तु ।
पूर्णं शशाङ्कबिम्बं च प्रदद्यात्तु तदुत्तरे ॥ १५२ ॥

संख्यानुगुणमिध्मानां घृतं च जुहुयात्तु वै ।
सूर्यसोमात्मकं चाग्नेर्विद्धि तल्लोचनद्वयम् ॥ १५३ ॥

एतयोरन्तरं वह्नेः तद्वक्त्रवदनं स्मृतम् ।
तत्रैव जुहुयात् पूर्वं समिधां सप्तकं क्रमात् ॥ १५४ ॥

घृतसिक्तां चतुःसंख्यामेकैकां हि सुपुष्कलाम् ।
प्राक्कुङ्कुमादिना लिप्तां काष्ठसंज्ञां तु होमयेत् ॥१५५॥

चरुधूपमधुपर्कं च बीजा नाज्यं यथाक्रमम् ।
तत्राग्नसमिदाधाने विशेषोऽयं विधीयते ॥१५६ ॥

साधितं संस्कृतेऽग्नौ प्राक् तन्निधायाग्रतश्चरुम् ।
समुद्धास्याचलो स्याद्धि संप्रोक्ष्यार्घ्याम्बुना ततः ॥

दर्भकाण्डचतुष्केन साग्निना तदनु स्पृशेत् ।
तन्मध्ये स्रुक्चतुष्कं तु मन्त्रेणाज्यस्य निक्षिपेत् ॥

अथादाय स्रुचं तत्र तद्वद्द्व्याचतुष्टयम् ।
चतुरङ्गुलमानेन अन्नग्रासमथाहरेत् ॥ १५९ ॥

तन्निधाय स्रुचा गर्भे तदूर्ध्वं पूर्ववद्घृतम् ।
दद्यादग्नौ चतुष्कं तु क्षिपेद्वाहुतिं ततः ॥ १६० ॥

भूयोऽग्नौ स्रुक्चतुष्कं तु ह्याज्यस्यापाद्य यत्नतः ।
ततोऽन्यमाज्यसंसिक्तं प्राग्वत् कृत्वाहुतं पुनः ॥१६१॥

दद्यात् पूर्वप्रयोगेण त्वेवमेव चतुष्टयम् ।
हुत्वाप्यन्नाहुतीनां तु ह्याज्याभ्यां जुहुयात्ततः ॥ १६२ ॥

यावद्भूनिवेद्यते बिम्बे होतव्यश्चापि तादृशः ।
स्रुवमध्येन स्रुग्गर्भे एकैकं वा घृतस्य तु ॥ १६३ ॥

प्रत्येकमन्नसमिधः क्षिपेदाद्यन्तयोस्तथा ।
तिलैर्घृतसमायुक्तैरष्टोत्तरसहस्रकम् ॥ १६४ ॥

शतं शतार्धं पादं वा यथाशक्ति समाचरेत् ।
आज्याक्तैरक्षतैस्तद्वत्तिलैश्च जुहुयात्ततः ॥ १६५ ॥

अर्धमर्धांशसंयुक्तमधिकं चाप्रवर्तिनाम् ।
जपकाले तथा होमं कर्तव्यं सिद्धिमिच्छता ॥ १६६ ॥

स्विष्टकृद्धवनं कुर्याद्दशग्रासेन वै सकृत् ।
काम्यैरव्ययफलैर्देशकालसमुद्भवैः ॥ १६७ ॥

तिलैर्घृतेन पयसा दध्ना वा पायसेन तु ।
सिद्धार्थैः साधितैर्भक्ष्यैर्व्रीजैर्लाजैश्च तण्डुलैः ॥१६८॥

मूलैः फलैः पल्लवैश्च सुप्रशस्तैश्च कोमलैः ।
सुगन्धैः स्थलपद्माद्यैः पुष्पैर्द्विज ! सितादिकैः ॥ १६९॥

गुग्गुलेनाज्यमिश्रेण सज्जश्रीवेष्टकेन वा ।
धात्रीफलैश्च सरसैरुत्पलैश्च शुभैस्तथा ॥ १७० ॥

सुसितैः सितरक्तैश्च पद्मैर्बिल्वैः सुशोभनैः ।
दूर्वाकाण्डैरभग्नाग्रैर्दन्तिसदन्तनिर्मलैः ॥ १७१ ॥

पयोभिर्ब्रह्मवृक्षोत्थैः क्षीरद्रुममयैस्तथा ।
अमृताक्षीरसंयुक्ता औदुम्बर्यो मधुप्लुताः ॥ १७२ ॥

अच्छिन्नाग्रा ह्यभग्नाश्च कण्टकैः परिवर्जिताः ।
सर्वास्त्रिमधुयुक्ताश्च घृतयुक्तास्तु वा पुनः ॥ १७३ ॥

योक्तव्यान्यग्निमध्ये तु समिद्भिः सह सर्वदा ।
सर्वाण्यविशेषाणि चन्दनादीनि यान्यपि ॥ १७४ ॥

सदन्तकाष्ठताम्बूलमुत्कटक्षारवर्जितम् ।
दाप्यानि लक्षहोमे तु आसनादीनि यानि च ॥१७५॥

मधुलवणपानाम्बुकटुतैलोज्झितानि च ।
आज्ययुक्तैस्तिलैः शान्तिः सिद्धयः सकलास्तथा ॥

घृतेन पयसा दध्ना होमस्तृप्तिं प्रयच्छति ।
पायसेन तु सिद्धार्थैर्भक्ष्यैः पुष्टिः सदा भवेत् ॥१७७॥

वीजैर्धान्यैस्तण्डुलैश्च तर्पितो मन्त्रराड्द्विज ! ।
प्रयच्छति सदा श्रेयः प्रसन्नः परमेश्वरः ॥ १७८ ॥

पल्लवैः फलमूलैश्च होमस्तुष्टिं प्रयच्छति ।
जहाति चापमृत्युं च रोगांश्चोपशमं नयेत् ॥ १७९ ॥

तर्पितः स्थलपद्माद्यैः पुष्पैश्चान्यैः सितादिकैः ।
सौभाग्यमतुलं विप्र ! अचिरात् संप्रयच्छति ॥ १८० ॥

गुग्गुल्वाद्यैर्द्विजारोग्यं शुभैर्धात्रीफलैस्तथा ।
दार्कैर्बिल्वफलकैः पञ्चगव्यसमुक्षितैः ॥ १८१ ॥

आज्याक्तैः पद्मबीजैश्च लक्ष्मीं शीघ्रं प्रयच्छति ।
उत्पलैर्वश्यकामस्तु भोगकामश्च होमयेत् ॥ १८२ ॥

दूर्वाङ्कुरैश्च होमेन आयुषो वृद्धिमाप्नुयात् ।
पयोभिश्च शुभैर्होमो माषैः शान्तिप्रदः प्रभुः ॥१८३॥

तिलानां शस्यते होमो हरिणाननमुद्रया ।
घृतस्य कार्षिको होमः क्षीरस्य च विशेषतः ॥ १८४ ॥

शुक्तिमात्राहुतिर्दध्नः प्रसृतिः पायसस्य च ।
ग्रासार्धमानमन्नानां भक्ष्याणां स्वप्रमाणतः ॥ १८५ ॥

तृतीयं मूलकन्दानां पुष्पाणां स्वप्रमाणतः ।
सर्वेषामेव बीजानां मुष्टिना होममाचरेत् ॥ १८६ ॥

अग्राङ्गुलिस्तु लाजानां शालीनां पञ्चकं हुनेत् (!) ।
फलानां स्वप्रमाणं च पल्लवानां तथैव च ॥ १८७ ॥

कर्कन्धुमात्रा गुलिका होतव्या गुग्गुलोः सदा ।
धात्रीफलप्रमाणं वा संभवे सति होमयेत् ॥ १८८ ॥

दूर्वाकाण्डानि विप्रेन्द्र ! चतुरष्टाङ्गुलानि वा ।
समित्प्रादेशमानेन समच्छेदास्त्वगन्विताः ॥ १८९ ॥

अग्नेर्वर्णाश्च गन्धाश्च शब्दाश्चाकृतयस्तथा ।
विकारा विविधाश्चैव संवेद्याः कर्मसिद्धये ॥१९०॥

पद्मरागद्युतिश्रेष्ठो लाक्षलक्तकसन्निभः ।
बालार्कवर्णो हुतभुग्जयार्थं शस्यते द्विज ! ॥ १९१ ॥

इन्द्रगोपकसंकाशः शोणाभो वाथ पावकः ।
शक्रचापनिभः श्रेष्ठः कुङ्कुमाभस्तथैव च ॥ १९२ ॥

रक्तानां पुष्पजातीनां वर्णनाग्निरिहेष्यते ।
सुगन्धद्रव्यगन्धोऽग्निघृतगन्धश्च शोभनः ॥ १९३ ॥

आयुर्दः पद्मगन्धः स्याद्बिल्वगन्धश्च सुव्रत ! ।
उग्रगन्धोऽभिचारे तु विहितः सर्वदानलः ॥ १९४॥

जीमूतवल्कांशङ्खमृदङ्गध्वनितुल्यकः ।
शब्दोऽग्नेः सिद्धये हेतुरतोऽन्यः स्यादसिद्धिदः ॥

छत्राकारो भवेच्छ्रेष्ठो ध्वजचामररूपकः ।
विमानादिचितानानां प्रासादानां रूपस्य च ॥ १९६ ॥

आकारेणाथ हंसानां मयूराणां च सिद्धिदः।
रक्ताभस्तु यदा वह्निः क्षीणार्चिः परिदृश्यते ॥ १९७ ॥
भृङ्गराजोपलाभश्च स्फटिकाभस्तथा शुभः।
यद्रूपं कथितं पूर्वं यदि तस्य प्रदक्षिणम् ॥ १९८ ॥
अन्योन्यत्वं प्रपद्येत तथा सिद्धिकरोऽनलः।
गर्हितेन तु वर्णेन यदि कापोतकादिना ॥ १९९ ॥
परिवर्तं करोत्यग्निस्तदा विप्रविपर्ययः।
होमान्ते तन्निमित्तं वै होमं कुर्याच्छताधिकम् ॥
विषमाश्च शिखावन्हेरूर्ध्वादयश्च शुभावहाः।
ह्रस्वा ह्रस्वोन्नता दीर्घा ज्वाला सिद्धिप्रदा स्मृता ॥
स्निग्धः प्रदक्षिणावर्तः श्रुतिप्रच्छादितध्वनिः।
स नित्यमेव शुभकृद्यदन्यैर्वर्जितो गुणैः ॥ २०२ ॥
प्रदीप्तलेलिहानेऽग्नौ निर्धूमे सगुणे तथा।
हृद्ये तुष्टिप्रदे चैव होतव्यं श्रुतिमिच्छता ॥ २०३ ॥
अल्पतेजोऽल्परूपश्च विस्फुलिङ्गसमन्वितः।
ज्वालाभ्रमविहीनश्च कृशानुर्नैव सिद्धिदः ॥ २०४ ॥
अप्रबुद्धे सधूमे च जुहुयाद्यो हुताशने।
कर्महानिर्भवेत्तस्य व्याभिचारार्थमश्नुते ॥ २०५ ॥
दुर्गन्धः पीतवर्णश्च अवलीढश्च योऽशुभः।
प्रभामूर्तिगतो मन्त्रस्तर्पितो यदि सत्तम! ॥ २०६ ॥
विद्यां प्रयच्छत्यचिराद्दीप्तिस्थो भूप्रदः प्रभुः।
तापयत्याशु शत्रूणां प्रकाशोपर्यवस्थया ॥ २०७ ॥
शत्रुक्षयं ददात्याशु मरीच्यासूर्ध्वगो विभुः।
तापिन्यामूर्ध्वगो मन्त्रः सर्वतापोपशान्तिदः ॥ २०८ ॥
विपक्षोच्चाटनं कुर्यात् करालासंस्थितो हुतः।
लेलिहावस्थितो मन्त्रो यदि सन्तर्प्यते मुने! ॥२०९॥
ददात्यभीप्सितं चैव देहान्ते परमं पदम्।
स्वाहाकारं सदा होमे पूर्णायां वौषडेव च ॥ २१० ॥
तमेव शान्तिके कुर्याद्वषडाप्यायने तथा।
स्वधां पितृक्रियायां च फट्कारं क्षयकर्मणि ॥ २११ ॥

विद्वेषे हुं, वशे ह्रीं च नमो मोक्षप्रसिद्धये।
कर्महोमावसाने च घृतेनापूर्य च स्रुचम् ॥ २१२ ॥
अभावाच्च प्रभूतेन होमद्रव्येण पूरयेत्।
तन्नोपरि घृतं दद्यात्ततोऽर्घ्यकुसुमादिभिः ॥ २१३ ॥
मूलदेशात् समारभ्य स्रुक् संपूज्या स्रुवान्विता।
घृतयुक्तं तु तद्द्रव्यं स्रुचः पुष्करकुक्षिगम् ॥ २१४ ॥
द्रवचन्द्रोपमं ध्यायेत्ततः पूर्णां समुद्धरेत्।
स्रुग्दण्डे देहनाभौ तु मूले संरुध्य संस्मरेत् ॥ २१५ ॥
निष्कलं मन्त्रनाथं तु पूर्णशीतांशुविग्रहम्।
आमूलाच्च मरुच्छक्त्या प्रोद्धरेच्च स्वविग्रहात् ॥२१६॥
विधाय चेश्वराधारे तस्माद्धारामृतं महत्।
नासिकासन्धिमार्गेण स्रुक्पद्मे पतितं स्मरेत् ॥२१७॥
सामृतामाज्यधारां च वसुधारामिव क्षिपेत्।
मुखमध्ये तु मन्त्रस्य तत्प्रविवरेऽथवा ॥ २१८ ॥
हृत्पद्मान्तर्गतां सम्यक् प्रविष्टामनुभावयेत्।
तया वै तृप्तितं मन्त्रं भावयेद्ब्रह्मधारया ॥ २१९ ॥
तृप्तं हृष्टं च पुष्टं च तुष्टं वै साधकोपरि।
मन्त्रोच्चारसमेता वै शरीरकरणान्विता ॥ २२० ॥
ध्यानोपेता द्विजश्रेष्ठ! पूर्णेयं परिपातिता।
सर्वसिद्धिकरी शश्वन्मोक्षलक्ष्मीविवर्धनी ॥ २२१ ॥
यद्वा शुष्केन्धनेऽग्नौ च होतव्या कर्मसिद्धये।
एका, अनेकप्रयोगाणां, न तु कर्मणि कर्मणि ॥ २२२ ॥
ततोऽर्घ्यगन्धपुष्पाद्यैर्मन्त्रनाथं समर्चयेत्।
मुद्रां प्रदर्शयेत् सर्वां मूलमन्त्रादितः क्रमात् ॥ २२३ ॥
चतुर्थांशेन चाङ्गानां कुर्यान्मूलस्य तर्पणम्।
लाञ्छनाभरणानां च लक्ष्म्यादीनां तदर्धतः ॥ २२४ ॥
अथवा हृदयादीनामतोऽर्धेन शिखासु च।
परमेश्वरकान्तासु तदर्धेन द्विजोत्तम! ॥ २२५ ॥
लाञ्छनाभरणादीनि सर्वाणि जुहुयात् क्रमात्।
हृदादिसर्वमन्त्राणामेकैकं जुहुयात्तु वा ॥ २२६ ॥

विसर्जनं ततः कुर्याद्दत्त्वार्घ्यं धूपसंयुतम् ।
भोगस्थानगता मन्त्राः पूजिता ये यथाक्रमम् ॥२२७॥
मुख्यमन्त्रशरीरं च संप्रविष्टांश्च संस्मरेत् ।
ज्वालाज्वालान्तरे यद्वत् समुद्रस्येव निम्नगाः ॥२२८॥
तन्मन्त्रविग्रहं स्थूलं सर्वमन्त्रास्पदं द्विज ! ।
प्रविष्टं भावयेत् सूक्ष्मे अध्यक्षे हृदयात्मके ॥ २२९ ॥
परे प्रागुक्तरूपे तु तं सूक्ष्ममुभयात्मकम् ।
तं परं प्रस्फुरद्रूपं निराधारपदाश्रितम् ॥ २३० ॥
सन्धिमार्गेण हृत्पद्मे संप्रविष्टं तु भावयेत् ।
मन्त्रमुद्रासमेतेन पूरकेण तु सत्तम ! ॥ २३१ ॥
भासितं भावयेद्देहं तेनापादाच्छिरोवधि ।
प्रविष्टेन तु मन्त्रेण प्रयत्नेन विना द्विज ! ॥ २३२ ॥
विग्रहः कल्पते यस्य मन्त्रस्तस्य प्रसीदति ।
एवं विसृज्य मन्त्रेशं मुद्राबन्धेन वै सह ॥ २३३ ॥
साधारासनमन्त्राणां गणेशस्य गिरः सदा ।
गुर्वादीनां तु विहितमर्घं लाञ्छनतर्पणात् ॥ २३४ ॥
एतेषां च लयं विप्र ! कुर्यात् सृष्टिक्रमेण तु ।
द्वास्थत्रिलोकपालानां वप्रस्थहरिसेविनाम् ॥ २३५ ॥
गुरुपूर्वकमादिश्यमर्धमर्घं यथाक्रमम् ।
सकृत् सकृत् स्वशक्त्या वा पूर्णां सर्वेषां क्षिपेत् ॥
विष्वक्सेनस्ततो भक्त्या तर्पणीयस्तिलाक्षतैः ।
वौषडन्तेन मन्त्रेण दद्यात् पूर्णाहुतिं द्विज ! ॥ २३७ ॥
पूजयित्वा यथान्यायं कुर्यात्तस्य विसर्जनम् ।
अनलं पूजयित्वा तु शक्तितस्तर्पयेत्ततः ॥ २३८ ॥
अच्छिद्रकरणीं पूर्णां पूर्णमन्त्रेण पातयेत् ।
सन्दर्शयेत्ततो धेनुमुद्रां मन्त्रसमन्विताम् ॥ २३९ ॥
कुण्डे पुष्पाञ्जलिं क्षिप्त्वा वह्निमन्त्रमनुस्मरन् ।
जलनिर्मथितेनैव ह्यूर्ध्वपुण्ड्रचतुष्टयम् ॥ २४० ॥
शिरस्तनुत्रहृन्मन्त्रैर्ललाटे चांसयोर्हृदि ।
कुण्डस्थभस्मना चैव कुर्याद्दीपशिखाकृतिम् ॥ २४१ ॥
ज्वालया हृदयं स्पृश्य नेत्रे चास्त्रेण वै पुरा ।
क्षान्त्वा चैव नमस्कृत्य यथाविधि विसृज्य तत् ॥
समाघ्राय न्यसेत् कोष्ठे ह्यवतारक्रमेण तु ।
प्रतिष्ठिताग्नेः संस्कारं पर्यग्निकरणादितः ॥ २४३ ॥
विसर्जनं तु कुर्याद्धि धूमच्छेदे न तत्र च ।
संमार्ज्य स्रुक्स्रुवेऽग्नौ तु स्रुचं निक्षिप्य चाम्भसा ॥
अर्घ्यपात्रात्तु चापूर्य कुण्डबाह्ये प्रदक्षिणम् ।
कुर्यादीशानकोणाद्धि अच्छिद्रोदकधारया ॥ २४५ ॥
पवित्रकेणाथ ऊर्ध्वं विनिक्षिप्य करेण तु ।
दद्याच्छिरसि वै शेषं स्रुगधोवदनां न्यसेत् ॥ २४६ ॥
आत्मनो वामभागे तु विष्टरस्रुवसंयुताम् ।
अपवास्य जलं तस्मात् स्थितयस्मात्तदर्चितम् ॥ २४७ ॥
उपसंहृत्य वै यायादर्चनालयमर्घ्यभृत् ।
नमस्कुर्याज्जगन्नाथमष्टाङ्गपतनेन तु ॥ २४८ ॥
आपूर्य पाणियुगलं पुष्पैस्तत्रोपरि स्थितम् ।
संस्मरेन्निष्कलं मन्त्रममृतेनोपबृंहितम् ॥ २४९ ॥
प्रभूतदीप्तच्छुरितं निक्षिपेन्मन्त्रमूर्धनि ।
" तर्पितोऽसि विभो ! भक्त्या होमेनानलमध्यगः ॥
होमद्रव्येषु यद्वीर्यं तदिदं चात्मसात्कुरु " ।
विनिवेद्य विभोर्होमं पूजां कृत्वा यथाविधि ॥ २५१ ॥
गृहीतं भावयेत्तेन प्रसन्नेनान्तरात्मना ।
इदमुक्तं समासेन मन्त्रसन्तर्पणं द्विज ! ॥ २५२ ॥
वाच्यं नादीक्षितानां च नास्तिकानां कदाचन ।
नान्यदर्शनसंस्थानां नापहासरतात्मनाम् ॥ २५३ ॥
सद्भावज्ञे तु वक्तव्यं समयज्ञे सपुत्रके ।
साधके तु गुरौ वापि भक्ते त्वक्रोधे विमत्सरे ॥ २५४ ॥
सत्यधर्मव्रतपरे साचारे शासनस्थिते ।
एवं समाप्य होमं तमर्घ्यगन्धादिभिर्विभुम् ॥ २५५ ॥
समभ्यर्च्य पितॄणां च संविभागमथाचरेत् ।
पौष्कराख्ये विशेषेण देवदेवेन विस्तृतम् ॥ २५६ ॥

विधानमेतद् विप्रेन्द्र ! प्रोक्तं पुष्करजन्मने ।
सात्त्वतोक्तविधानेन तद्विधानं वदामि ते ॥ २५७ ॥

आराध्यस्याग्रतो विप्र ! प्रत्यहं क्रियते तु यत् ।
विज्ञेयं संविभागं तदुत्तमं सर्वकर्मणाम् ॥ २५८ ॥

संविभागात् पितृणां च भवत्यनृणवाध्वरः ।
प्रयान्ति तृप्तिमतुलां तेन कर्मवशादपि ॥ २५९ ॥

निमन्त्रितं वा संप्राप्तं नित्यमङ्गीकृतं तथा ।
द्विजेन्द्रं पञ्चकालज्ञं षट्कर्मनिरतं तु वा ॥ २६० ॥

स्नानादीनि पुरा कृत्वा प्रयतः संविशेत् पुनः ।
स्वयमर्घ्याम्बुना विप्र ! पवित्रीकृत्य पाणिना ॥ २६१ ॥

सन्ताड्य कुसुमास्त्रेण मन्त्रास्त्राधिष्ठितेन च ।
समुद्धरेत्तत्रमन्त्रमवलोक्याखिलं ततः ॥ २६२ ॥

निवेद्य भगवत्यग्रे प्रणवाधिष्ठितासने ।
पूजिते वितते पूते संमुखं वोत्तराननम् ॥ २६३ ॥

उदग्दिग्वीक्षमाणं च विनिवेश्य तथा च तम् ।
यथा मन्त्रेशदृग्रश्मिप्रसरेणाभिषिच्यते ॥ २६४ ॥

मन्त्रेणाराध्य तं ध्यात्वा ब्रूयात् "संयतवाग्भव" ।
तैश्चापि मौननिष्ठैश्च भवितव्यं सुयन्त्रितैः ॥ २६५ ॥

समाधाय जगन्नाथं हृत्पद्मगगनेऽर्कवत् ।
सत्पात्रस्याथ पात्राभ्यां पात्राणामब्जसंभव ! ॥ २६६ ॥

एवं कृत्वा प्रतिष्ठानं प्रारब्धेनात्र कर्मणि ।
समुद्दिश्य पितॄन् दद्याद्दानमन्तरवेदिकम् ॥ २६७ ॥

निवेशितद्विजेन्द्रं यद्व्यक्तिस्थमपि मन्त्रराट् ।
अन्तर्वेदी तु सा ज्ञेया त्वाभ्यामभ्यन्तरं तु यत् ॥

संप्रदानं पितृणां यत् कुर्यात् सत्पात्रपिण्डकम् ।
तद्दिव्यममलं यस्माच्चैतन्यमवलम्ब्य वै ॥ २६९ ॥

तत्कालसंविभज्याश्च तिष्ठन्ति कमलोद्भव ! ।
प्रदातृसंकल्पवशादतः पुष्करसंभव ! ॥ २७० ॥

एकस्य वा बहूनां वा प्रदद्यादासनोपरि ।
पुनरेवासनं दार्भमग्रन्थि बहुभिः कुशैः ॥ २७१ ॥

विभोर्यज्ञाङ्गदेहस्य लोमानि तु कुशाः स्मृताः ।
ता एव नाड्यः सर्वास्तस्य भूतशरीरगाः ॥ २७२ ॥

रश्मयो भूतदेहे तु चिन्मूर्तेः शक्तयोऽखिलाः ।
अत एव हि विप्रेन्द्र ! पितृणां तु कुशासनम् ॥ २७३ ॥

श्राद्धकाले तु विहितमाहूतानां तदूर्ध्वतः ।
यत्किञ्चिद्दीयते भक्त्या ब्रह्मभूतं तु तद्भवेत् ॥ २७४ ॥

पुरा वै हेतुनानेन नृणामविदितात्मनाम् ।
कर्मण्यत्र कुशाजालं विहितं कमलोद्भव ! ॥ २७५ ॥

येषां सर्वगतं ब्रह्म मन्त्ररूपीश्वरोऽच्युतः ।
भावस्थस्तत्त्वतस्ताभिस्तेषां नैव प्रयोजनम् ॥ २७६ ॥

न्यसेत्तस्मादभग्नाग्रानुदङ्मूलान् कुशान् द्विजः ! ।
यस्माद्दिव्यमुदग्भागं पित्र्यं दक्षिणसंज्ञकम् ॥ २७७ ॥

स्वकेनामृतवीर्येण नित्यं संवर्धयन्ति च ।
दर्भमार्गच्छलेनैव पितृणां तेऽमरा द्विज ! ॥ २७८ ॥

वसत्यतः पितृगणो भागमाश्रित्य दक्षिणम् ।
चित्कलांशस्वरूपेण नृणामेवं हि चोत्तरे ॥ २७९ ॥

कृतास्पदा अमला नित्या त्वमृताख्याक्षया कला ।
अत एव हि यत् किञ्चिदाब्रह्मविदितैर्द्विज ! ॥ २८० ॥

प्रदीयते पितृणां च तत् सव्येन तु पाणिना ।
येऽधिकृत्य जगद्योनिं मन्त्रात्मानमजं हरिम् ॥ २८१ ॥

प्रयच्छन्ति पितृणां च तोयतर्पणपूर्वकम् ।
तेषां तदाश्रयत्वाच्च यदुक्तं तत्र कारणम् ॥ २८२ ॥

कर्तव्यस्य च पारम्यं प्रकृतस्य महामते ! ।
स्फुरत्यन्तर्गतं येषां मन्त्राराधनपूर्वकम् ॥ २८३ ॥

तत् स्वोत्तरवशात्तेषां मन्त्रसांमुख्यदिग्वशात् ।
चेतसा निर्विकल्पेन कृतं भवति चाक्षयम् ॥ २८४ ॥

किंतु पुष्करसंभूत ! दुर्लभा भुवि ते नराः ।
इति चेतसि वै येषां निश्चयीकृत्य वर्तते ॥ २८५ ॥

कुण्डस्य योमिदिग्भागे भद्रपीठोर्ध्वतोऽथवा ।
समीपे पुरतस्तस्य भूभागे चार्घ्यवारिणा ॥ २८६ ॥

प्रोक्षिते चास्त्रमन्त्रेण दक्षिणाग्रान् कुशांस्तरेत् ।
तदूर्ध्वं पितृतीर्थेन सतिलानक्षतोदकान् ॥ २८७ ॥

विकिरेदक्षजस्तांश्च दर्भाग्रैः प्रणवेन तु ।
कौशास्तराग्रपर्यन्तं यस्मादेतद्द्वयं द्विज ! ॥ २८८ ॥

सर्वस्य भोगजालस्य जनकं भुवनत्रये ।
विशेषात् पितृदेयस्य श्रद्धापूतस्य वस्तुनः ॥२८९॥

अग्नीषोमस्वरूपेण क्रोडात्मा भगवान् स्वयम् ।
व्यक्तः कर्मात्मतत्त्वानां मूर्तत्वेनात्मसिद्धये ॥ २९० ॥

तत्तेजस्तिलभावेन ह्लादो वर्तत्यपात्मना ।
अत एवाप्रबुद्धानां प्रबुद्धानामपि द्विज! ॥ २९१ ॥

तिलोदकेऽङ्गभावं तु गच्छतः श्राद्धकर्मणि ।
श्राद्धस्य च परा रक्षा ते हि नित्यममन्त्रिणाम् ॥२९२॥

तत्स्वरूपविदां चैव विशेषान्मन्त्रवेदिनाम् ।
एवं तिलोदके बुद्ध्या प्रकाशाह्लादलक्षणे ॥ २९३ ॥

स्तरोर्ध्वे स्वस्वसंज्ञाभिरग्रान्तं तु यथाक्रमम् ।
भावयेत् पुरुषादीनां सारूप्यं समुपागतान् ॥ २९४ ॥

पितॄन् पितामहांश्चैव तथैव प्रपितामहान् ।
तांस्तूंश्चाथ शंसन्तः सन्तानं स्वविभागतः ॥ २९५ ॥

देवासोच्छेपसंयुक्तं पाकाग्रं पात्रसंभृतम् ।
मधुयुक्तेन हविषा दर्भकाण्डैस्तिलैः सह ॥ २९६ ॥

भावितं वह्निना कृत्वा हृदा दर्भाग्रगेण तु ।
निर्दोषं प्रस्वभावं च धामत्रयसमप्रभम् ॥ २९७ ॥

ध्यायेद्द्रव्यगतं दोषं निर्दहन्तं समन्ततः ।
देवतानां पितॄणां यत् तृप्तयेऽन्नं महामते ! ॥ २९८ ॥

तत् साधनं च विहितं संस्कृतेन पुराग्निना ।
तमालकदलीपूर्वदलेषु क्षालितेषु च ॥ २९९ ॥

संविभज्य चतुर्धांशं निधाय प्रणवेन तु ।
प्रोक्षितान्यन्नपात्राणि चत्वारि कमलानि वा ॥ ३०० ॥

तृप्तये त्वथ सर्वेषां देवाय विनिवेद्य च ।
पितॄणां तर्पयेत्तेन पिण्डाद्यन्नेन सादरम् ॥ ३०१ ॥

क्रमेण प्रागदृष्टानां हृदा संज्ञापदेन तु ।
एवं दृष्टस्वरूपाणां ज्ञात्वा तेषां स्थितिं पुरा ॥ ३०२ ॥

प्राग्वत् स्वधावसानाद्यैर्मन्त्रैरोङ्कारपूर्वकैः ।
हृन्मन्त्रालिङ्गितैर्विप्र ! तथा संज्ञापदान्वितैः ॥ ३०३ ॥

"पिण्डं प्रकल्पयामी"ति ततः पूर्ववदाचरेत् ।
प्रणवैर्दक्षिणाग्राणि सेचितानि तिलाम्बुना ॥ ३०४ ॥

नाडीरूपाणि दर्भाणि पिण्डानामूर्ध्वतो न्यसेत् ।
प्रविष्टान् भावयेत्तेषु नाडीमार्गैरनुक्रमात् ॥ ३०५ ॥

"पितॄनावाहयामी"ति स्तरोर्ध्वे प्राक्स्थितांस्ततः ।
क्रमेण चातुरात्मीयैर्मन्त्रैरव्ययवयोगतः ॥ ३०६ ॥

समर्चयेद्यथान्यायमर्घ्यगन्धादिभिश्च तान् ।
ततस्तु नाम्ना गोत्रेण मन्त्रपूर्वं तिलोदकम् ॥ ३०७ ॥

सर्वेषामर्घ्यकलशात् प्रदद्याच्च यथाक्रमम् ।
शिरसावनतेनाथ जानुयुग्मे क्षितौ कृते ॥ ३०८ ॥

पाणियुग्मे ललाटस्थे एकचित्तः पठेदिदम् ।
"ओं नमो वः पितरः ! नमो वः पुरुषोत्तमाः ! ॥३०९॥

नमो विष्णुपदस्थेभ्यः स्वधा वः पितरो ! नमः ।
हरये पितृनाथाय ह्यग्नीषोमात्मने नमः ॥ ३१० ॥

सत्सोमपात्मने विष्णो ! नमो बर्हिषदात्मने ।
आसंसारं हि जनका अग्निष्वात्ता अथाच्युत ! ॥३११॥

पितामहाः सोमपास्त्वं त्वमन्ये प्रपितामहाः ।
तुभ्यं नमो भगवते पितृमूर्ते ! ऽच्युताय च ॥ ३१२ ॥

नारायणाय हंसाय विष्णो ! त्रिपुरुषात्मने ।
मुक्त्वा त्वामेव भगवन् ! न नमाम्यर्चयामि च ॥३१३॥

न तर्पयामि सर्वेश ! नान्यमावाहयाम्यहम् । "
स्तुत्वैवं हि पितृव्यूहं भक्त्या परमया युतम् ॥ ३१४ ॥

संभवे सति संमानं पिण्डमूर्तेः समाचरेत् ।
तदग्रतोपविष्टस्य क्रमाद्द्विजगणस्य च ॥ ३१५ ॥

अनुसन्धाय वै द्वाभ्यामेकस्मिन् वा द्विजोत्तम ! ।
देवभावस्थितं ध्यात्वा पित्र्यं प्राणगणं क्रमात् ॥३१६॥

प्रणवेन स्वरूपं तु समुत्थाय ततः स्वयम्।
मध्ये तिर्यक्स्थितौ स्थित्वा ह्यदूरेऽन्योन्यदृक्स्थिते ॥
उत्तराभिमुखश्चैव दक्षिणास्योऽथवा द्विज!।
तदुत्तराननवशात्क्रमन्त्वं हृदयान्न्यसेत् ॥ ३१८ ॥
नमोऽन्तं प्रणवाद्यं तु मरुदम्बरविग्रहम्।
पिण्डाग्रे ह्युपविष्टस्य प्राणशक्तिं द्विजस्य वा ॥ ३१९ ॥
बहूनां वा प्रयत्नेन स्वातन्त्र्यान्निर्गतां बहिः।
ध्यात्वा तया सह क्षिप्रमेकीभूतत्वमागतम् ॥ ३२० ॥
आत्मशक्तौ लयं नीत्वा याति ह्यप्माख्यलक्षणम्।
कृत्वैवं प्राणसञ्चारं पितृणां विप्रविग्रहे ॥ ३२१ ॥
प्रागवदानन्दसंरुद्धे भोजयेत् पितृरूपिणः।
तादर्थ्येनाथ चतुरो विनिवेश्यासनेषु च ॥ ३२२ ॥
लब्धलक्ष्यान् परे तत्त्वे ब्राह्मणान् पाञ्चरात्रिकान्।
प्राङ्मुखं द्वितयं चैव द्वितयं चाप्युदङ्मुखम् ॥ ३२३ ॥
संपत्त्यभावे ह्येकं वा विनिवेश्योत्तराननम्।
पादयोरपि पाद्यार्थं कं क्षिपेद्दक्षिणादितः ॥ ३२४ ॥
अथ तेषां क्रमात् कुर्यादर्चनं चातुरात्म्यवत्।
अर्घ्यानुलेपनाद्यैस्तु भोगैर्मात्रावसानिकैः ॥ ३२५ ॥
तत्तत्कालोचितैः सर्वैरनुपादेयवर्जितैः।
तैश्चापि मौननिष्ठैस्तु भवितव्यं सुयन्त्रितैः ॥ ३२६ ॥
अथास्त्रपरिजप्तेन भूतिना वाथ शङ्कुना।
मसृणेनाश्मचूर्णेन परिधां स्वधयाथवा ॥ ३२७ ॥
बहिस्तदासने कुर्यात्त्वग्रे दैर्घ्याच्छमाधिकाम्।
वैपुल्याच्छममानं तु प्रागवत् पावनतां नयेत् ॥ ३२८ ॥
न्यसेत् तत्राप्यभग्नाग्रानुदङ्मूलान् कुशान् द्विज!।
तत्रापि च विशेषेण तिलतोये समुत्किरेत् ॥ ३२९ ॥
न्यस्ताख्राण्यख्रजप्तानि तत्र पात्राणि विन्यसेत्।
सर्वाणि चक्रवृत्तानि हेमाद्युत्थानि संभवे ॥ ३३० ॥
पात्राणि कदलीपद्मतमालच्छदनान्यथ।
दर्भाण्यस्त्राम्बुयुक्तानि शुभपर्णमयानि वा ॥ ३३१ ॥

निदध्यात्तेषु चाद्यानि भोज्यानि मधुराण्यपि।
भक्ष्याणि फलमूलानि दधिक्षीरादिकान्यपि ॥ ३३२ ॥
पानकानि रसालानि सपानीयानि सत्तम!।
कर्मण्यानि तथान्यानि तत्तत्कालोद्भवानि च ॥ ३३३ ॥
पुरोपस्तरणार्थं च पात्राणां दक्षपाणिषु।
निपातव्याऽमृती धारा वारिणाप्युद्धृतेन च ॥ ३३४ ॥
वाग्यता लब्धलक्षास्तु ह्यमृतौं जनार्दने।
येऽश्नन्ति पितरस्तेन तृप्तिमायान्ति शाश्वतीम् ॥
अतः सव्यभिचारं तु मौनं वर्ज्यं क्रियापरैः।
शुभमव्यभिचारं यत् तत् कार्यं सर्ववस्तुषु ॥ ३३६ ॥
यदङ्गसङ्केतमयैरव्यक्तैर्नासिकाक्षरैः।
कृतमोष्ठपुटैर्बद्धैर्मौनं तत् सिद्धिहानिकृत् ॥ ३३७ ॥
स्वयमेव स्वबुद्ध्या यत् सर्ववस्तुषु वर्तते।
शब्दैरनुपदिष्टैस्तु तन्मौनं सर्वसिद्धिदम् ॥ ३३८ ॥
तस्माद्वै श्राद्धभोक्तॄणां दिव्ये वा पितृकर्मणि।
दद्याच्चैवेप्सवत् सर्वं मर्यादाभ्यन्तरेऽग्रतः ॥ ३३९ ॥
येनाचमनपर्यन्तं कालं तिष्ठन्ति वाग्यताः।
सर्वं रामेकमासं तु तृप्तये यदि योजितम् ॥ ३४० ॥
ओमाद्यमसच्छन्दं तु पितृभ्यस्तदनन्तरम्।
इदमर्घ्यमिदं पाद्यं तदन्ते संस्मरेत् स्वधाम् ॥ ३४१ ॥
सर्वस्मिन्नुपचारान्ते ह्यंवं वा संस्मरेन्नमः।
नमः स्वधाऽथवा ब्रूयान्नमोन्ता त्वथवा स्वधा ॥ ३४२ ॥
एवमेव हि यः कुर्यात् कर्तव्यत्वेन सत्तम!।
तुल्यानां च सकुल्यानां नमस्तत्र च केवलम् ॥ ३४३ ॥
सत्युक्तं व्यत्ययं नित्यं विहितं च स्वधा द्विज!।
स्वयमेव हि सन्यासी ददाति च फलार्थिनाम् ॥
कार्यस्तेन नमस्कारः स्वधान्तो नित्यमेव हि।
ददाति फलकामस्तु यो नित्यमफलार्थिनाम् ॥ ३४५ ॥
स्वधाकारावसाने तु विहितं तत् सदा नमः।
एवमिच्छावशेनैव संविभज्य पितॄन् द्विज! ॥ ३४६ ॥

पृष्ट्वा पात्रमुखेनैव संतृप्तिं च पुनः पुनः।
ततोऽम्भश्चुलकं पाणौ हृन्मन्त्रेणामृतोपमम् ॥ ३४७ ॥

दद्यात् पूर्णेन्दुतुल्यं तद्ध्यातव्यं तत्कलाः पठन्।
सानुस्वारमकाराद्यैर्भिन्नं षोडशभिः स्वरैः ॥ ३४८ ॥

सकारं नतिनिष्ठं च तत्र प्राक्स्थं सतारकम्।
इत्युक्तं सकलस्येन्दोर्वाचकं मन्त्रमब्जज ! ॥ ३४९ ॥

पाणिप्रक्षालनात् पूर्वं पातव्यं तेन पूर्ववत्।
येनामृतपुटान्तस्थमन्नवीर्यमनश्वरम् ॥ ३५० ॥

भवत्याप्यायकृद्ब्रह्मन् ! पितृदेवगणस्य च।
माषचूर्णादिना पाणिं प्रक्षाल्यामणिबन्धनात् ॥ ३५१ ॥

समाचम्योपसंहृत्य ह्युच्छिष्टं च यथाविधि।
पवित्रीकृत्य वसुधां पाणौ कृत्वा तिलोदकम् ॥ ३५२ ॥

प्रीणनं भगवत्यग्रे समुत्थायाचरेत् ततः।
"ममास्तु भगवान् पूर्वं प्रीतः पितृगणस्तथा ॥ ३५३ ॥

शारीरो देवताव्यूह आपादाद्यो व्यवस्थितः।
नयन्त्वमृततामन्नमिदं विष्णुपुरस्सराः ॥ ३५४ ॥

देवा नद्यस्तथा गावः सूर्यः सोमो बृहस्पतिः।
(ओं) माधवो भगवान् मन्त्रमूर्तिर्मधुमयो महान् ॥

मधुभावेन चान्नेऽस्मिन् स्थित्वा तृप्तिं करोतु वै"।
अनुलिप्यासनं कुर्यात् पितॄणां प्रीणनं द्विज ! ॥ ३५६ ॥

तस्मिन्नेव हि भूभागे यस्यां तत्पिण्डचित्क्षितौ।
स्थितिः सर्वपितॄणां च साम्प्रतं कमलासन ! ॥ ३५७ ॥

यावत् प्राणावियुक्तानां पिण्डानां नोपसंहृतिः।
सोद्दिष्टानां कृता सम्यक् तदन्ते संव्रजन्ति ते ॥ ३५८ ॥

सस्थानमाशिषं दत्वा श्राद्धकर्तुर्धिया मुने !।
सामृतं सोदकं सार्घं सतिलं मन्त्रतेजसा ॥ ३५९ ॥

विविक्तं वः कृतं मार्गं पुनरागमनाय च।
नारायणाख्यसन्मन्त्रकर्मब्रह्मजयीकृते ॥ ३६० ॥

स्वे स्वेन्द्रियरथे कृत्वा तृप्ता यातान्युतास्पदम्।
एवं सुविततं कुर्यात् कर्म त्वाराधनालये ॥ ३६१ ॥

संकटे पुनरन्यत्र यायादभ्यर्थ्य मन्त्रराट्।
स्थानं संस्कारसंशुद्धं कृत्वा प्राक् ताडनादिना ॥ ३६२ ॥

व्याप्तिशक्त्याश्रितं भूयस्तोयाधारगतं स्मरेत्।
मन्त्रमर्चनपूर्वं तु तदग्रे सर्वमाचरेत् ॥ ३६३ ॥

देवान् पितॄन् समुद्दिश्य भोजनं भगवद्गृहे।
अविरुद्धं द्विजेन्द्राणामन्यथा तद्विरोधकृत् ॥ ३६४ ॥

विधिनानेन वै नित्यमथ यज्ञे तु वैष्णवे।
संविभागः पितॄणां च कार्यः सद्वैष्णवैर्नरैः ॥ ३६५ ॥

कृत्वा तिलोदकान्तं वा फलमूलैः स्वशक्तितः।
तदर्धं ग्रासमात्रं तु दद्याद्वाप्यथ भैक्षुके ॥ ३६६ ॥

यस्माद्दिव्यैर्महामन्त्रैर्दत्तं यत् पूजितेऽच्युते।
पित्रर्थमल्पं वा भूरि तत्तेषामक्षयं भवेत् ॥ ३६७ ॥

सम्यगर्च्यार्घ्यगन्धाद्यैर्मूलमूर्तिगतं विभुम्।
प्राङ्गणेषु च सर्वेषु प्रासादेष्वाश्रयेषु च ॥ ३६८ ॥

प्रतिष्ठितेषु शोभार्थं विभवव्यूहमूर्तिषु।
तथैव गोपुरद्वारदिङ्मूर्तिषु च मण्डपे ॥ ३६९ ॥

सान्निध्यं चैव यातासु शक्त्या नित्यं समर्चनम्।
षोडशैरुपचारैर्वा द्वात्रिंशद्भिस्ततोऽधिकैः ॥ ३७० ॥

कुर्यात्तन्मूर्तिमन्त्रैश्च तथा नैमित्तिकेष्वपि।
जपान्तं हवनान्तं वा स्नानाद्यं साधकस्ततः ॥ ३७१ ॥

तत्तन्मूर्त्यग्रदेशस्थे कुण्डे होमं समाचरेत्।
न कर्मार्चादिकं तत्र स्नपनं चोत्सवादिकम् ॥ ३७२ ॥

बलिदानं च सर्वत्र पवित्रारोहणादिकम्।
नाचर्तव्यं विशेषेण परतन्त्रासु मूर्तिषु ॥ ३७३ ॥

नित्याभिषेकमात्रं तु तासु तत्र समाचरेत्।
सितादिवर्णयुक्तासु प्रोक्षणं वा निवेदनम् ॥ ३७४ ॥

मूलालयार्चया सार्धं परतन्त्रासु देशिकैः।
पवित्रारोहणं कार्यमङ्गत्वेनाधिवासितैः ॥ ३७५ ॥

पूरकेषु च सर्वेषु तथैवाग्रयणादिके।
खगेशविष्वक्सेनादिपरिवारगणेष्वपि ॥ ३७६ ॥

प्रतिष्ठितेषु गेहेषु पूज्यमाश्रयमूर्तिवत्।
अमूर्तस्य खगेशस्य विष्वक्सेनादिकस्य च ॥ ३७७ ॥

कुमुदादिगणेशानां द्वारावरणवासिनाम्।
अन्येषां परिवाराणां महापीठनिवासिनाम् ॥ ३७८ ॥

अग्रे नित्योत्सवार्चाया दद्यात् कालत्रये बलिम्।
साकारो वा निराकारो विष्वक्सेनो गणैः सह ॥

यद्वा समर्चनीयश्च बल्यन्ते शिष्टवस्तुभिः।
नित्योत्सवं ततः कुर्यात् सर्वालंकारसंयुतम् ॥ ३८० ॥

प्राङ्कणद्वारदेवानां बलिदानपुरस्सरम्।

सनकः —

त्वया नित्योत्सवार्चायाः पुरस्ताद्भगवन्! मम ॥३८१॥

द्वारावरणदेवानां बलिदानमुदाहृतम्।
तद्विभागं विशेषेण वद मे सर्वसिद्धिदम् ॥ ३८२ ॥

शाण्डिल्यः —

विस्तृतं तव वक्ष्यामि शृणु नित्योत्सवादिकम्।
कृतेन येन भक्तानामभीष्टं जायते फलम् ॥ ३८३ ॥

नित्योत्सवार्थबिम्बं तु सौवर्णं राजतं तु वा।
ताम्रजं पैत्तलं वाथ नात्युच्चं तच्चतुर्भुजम् ॥ ३८४ ॥

मूलबेरानुरूपं च स्थापितं पूजितं पुरा।
वस्त्राभरणमाल्यैश्च यथाशोभमलङ्कृतम् ॥ ३८५ ॥

मूलबिम्बगतां शक्तिं तस्मिन्नारोप्य मन्त्रतः।
समभ्यर्च्यार्घ्यपुष्पाद्यैर्भोगैर्धूपान्तिमैस्तथा ॥ ३८६ ॥

आप्तैराराधिते देवे स्वयंव्यक्तालयादिषु।
साधकं वरयेदन्यं बलिदानादिकर्मणि ॥ ३८७ ॥

पुरा गर्भगृहद्वारि तथा चैवाग्रमण्डपे।
घण्टानादसमेतेन दीपेन ज्वलितेन तु ॥ ३८८ ॥

द्वारस्थानर्घ्यादिधूपान्तैः समभ्यर्च्यार्घ्यवारिणा।
दत्वार्हणं ततश्चाद्यं तर्पणाम्भस्ततः परम् ॥ ३८९ ॥

ताम्बूलं च क्रमाद्दत्वा तत्तन्मन्त्रैरनुक्रमात्।
स्वर्णादिनिर्मितं यान पुरस्तात् प्रथमाङ्कणे ॥ ३९० ॥

सुगन्धपुष्पप्रभया क्षौमैर्माल्यैः सितादिभिः।
यथाशोभमलंकृत्य तस्मिन् बल्यर्थकौतुकम् ॥ ३९१ ॥

प्राचीमुखं समारोप्य प्राङ्कणेषु प्रदक्षिणम्।
आतपत्रैःसिताद्यैश्च मायूरैः केतुयष्टिभिः ॥ ३९२ ॥

पताकाभिश्चामरैश्च तालवृन्तैश्च शोभनैः।
गणिकादेवदासीभिर्गायकैर्वाद्यसञ्चयैः ॥ ३९३ ॥

भेरीपटहघोषैश्च श्रुतिघोषसमन्वितैः।
एवमाद्यैरलङ्कारैर्गोमयेनोपलेपिते ॥ ३९४ ॥

मण्डले हस्तमात्रे तु बलिदानपुरस्सरम्।
द्वारावरणदेवानां ध्यातानां वा स्वदिक्षु च ॥ ३९५ ॥

वक्ष्यमाणविधानेन नियतोत्सवमाचरेत्।
पीठोर्ध्वे विष्णुभूतानां सगणानामथार्चनम् ॥ ३९६ ॥

कृत्वा समुत्किरेच्छेषं तृप्त्यर्थं सोदकं बलिम्।
पीठं प्रदक्षिणं नीत्वा चतुर्धा वा द्विधा तथा ॥ ३९७ ॥

सन्तोष्य नृत्तगीताद्यैर्देवमन्तः प्रवेशयेत्।
प्राङ्कणेषु विशालेषु बहिष्ठेषु च सादरम् ॥ ३९८ ॥

मण्डितं रथमारोप्य परिभ्रमणमाचरेत्।
यानादेरवरोप्याथ पादुके विनिवेश्य च ॥ ३९९ ॥

अग्रमण्डपभूमिष्ठे भद्रपीठे निवेश्य च।
पाद्यार्घ्याचमनाम्भोभिः चन्दनाद्यनुलेपनैः ॥ ४०० ॥

माल्यैर्नानाविधैश्चापि धूपैस्ताम्बूलपश्चिमैः।
अभ्यर्च्य श्रमशान्त्यर्थं स्वस्थाने सन्निवेशयेत् ॥ ४०१ ॥

आदौ निवेशितां शक्तिं तस्मिन् मूले नियोज्य च।
तमभ्यर्च्यार्घ्यगन्धाद्यैः प्रणमेत् स्तुतिपूर्वकम् ॥४०२॥

त्रिकालं यत्र विधिवत् क्रियते नियतोत्सवः।
तत्र सर्वसमृद्धिः स्याद्राज्ञो राष्ट्रस्य चानिशम् ॥४०३ ॥

अभावे बलिबिम्बस्य हेतुनाऽसन्निधीकृते।
कूर्चेन वाग्रमूर्त्या वा कुर्यान्नित्योत्सवं ततः ॥ ४०४ ॥

निरशेषस्योपसंहारं कृत्वा चार्घ्यादिकस्य च।
नत्वा स्तुत्वा च देवेशं ततः पाद्यप्रतिग्रहात् ॥ ४०५ ॥

पादोदकं समादाय विग्रहं सेचयेत् स्वकम् ।
भुक्तानि पत्रपुष्पाणि निदध्यान्मूर्धनि स्वके ॥ ४०६ ॥

पुष्पार्घ्यगन्धपूर्वाणां देवयज्ञे कृते सति ।
विनयाद्दाहृतानां च भक्तानां मन्त्रसेविनाम् ॥ ४०७ ॥

मूर्ध्नि सन्धारणाच्छश्वद्दौर्भाग्यं क्षयमेति च ।
कीर्तिं कान्तिं श्रियारोग्यं सिद्धिं समुपयाति च ॥

पश्चाच्छरीरयात्रार्थमभ्यर्थ्य परमेश्वरम् ।
लब्धानुज्ञस्तु वै कुर्यादनुयागं यथाविधि ॥ ४०९ ॥

प्रविश्य भोजनस्थानं विविक्तं दोषवर्जितम् ।
घृतपूरितपात्रस्थं दीपमारोप्य वै ततः ॥ ४१० ॥

गोमयेनोपलिप्याथ तुर्यश्रं तत्र मण्डलम् ।
प्रणवेन प्रतिष्ठाप्य तन्मध्ये फलकादिकम् ॥ ४११ ॥

प्रक्षालिताङ्घ्रिः स्वाचान्तस्तन्मध्ये चोपविश्य च ।
भोज्यं नैवेद्यपूर्वं तु सर्वमादाय पात्रगम् ॥ ४१२ ॥

विनिवेद्य च देवाय पवित्रीकृत्य चाम्भसा ।
सत्यरूपा ह्यलक्ष्या चाप्यन्नदोषक्षयङ्करी ॥ ४१३ ॥

चेतसा चातुरात्मीया भावनीया च भावना ।
रसात्माध्यक्षसंज्ञोऽन्ने स्वादुभावे व्यवस्थितः ॥४१४॥

"प्रद्युम्नो भगवान् रूपे त्वेतद्वीर्ये तु लाङ्गली ।
भोक्ताहमात्मा भगवान् वासुदेवः स्वयं त्वजः ॥४१५॥

इदं तदमृतं ब्रह्म इदमायुरनश्वरम् ।
इदं ज्ञानमिदं वीर्यमिदं तेजस्तु वैष्णवम् ॥ ४१६ ॥

इदमिन्दुरखण्डश्च स्थितं चान्नात्मना स्वयम् ।
पर्जन्यात्मा स भगवान् व्यञ्जनस्थितिसिद्धये ॥ ४१७ ॥

हार्दानलात्मना भुङ्क्ते ह्यध्यक्षः परमेश्वरः ।
तच्छक्त्यानुगृहीतत्वात् सोऽहं प्राकृतिकः पुमान्" ॥

एवमन्नमभ्राद्यं ज्ञेयमन्नं पुरः स्थितम् ।
वाह्यतश्चाज्यदानेन संबोधमुपयाति च ॥ ४१९ ॥

यथा तथाम्बुनाभ्येति देहस्थो हुतभुक् प्रभुः ।
कारणं रसमन्नस्य षड्गुणं षड्रसस्य च ॥ ४२० ॥

आत्मा ब्रह्माऽदनात्मा स्यादीपत्तत्करणात्मना ।
साम्मुख्यमात्मनो नीत्वा ततोऽन्नं जुहुयाच्छनैः ॥

चतुः प्रणवसंयुक्तं ततोम्भश्चुलकं पिबेत् ।
वक्त्रकुण्डेऽथ तेनैवाप्यन्नाहुतिचतुष्टयम् ॥ ४२२ ॥

प्रान्तपर्वैश्चतुर्धा प्राक् चातुरात्म्यव्यपेक्षया ।
त्रियपेक्षायशेनैव जुहुयादाहुतित्रयम् ॥ ४२३ ॥

सहृदा मूलमन्त्रेण भुञ्जीयात् कवलैस्ततः ।
प्रयतास्यकरश्चान्ते पिबेन्मन्त्राभिमन्त्रितम् ॥ ४२४ ॥

तोयं तद्ध्यानपादाब्जपरिस्रुतमथापि वा ।
प्रतिष्ठितस्य वा पूर्वं तदाकृतिधरस्य च ॥ ४२५ ॥

यतस्तत् सर्वपापघ्नं सर्वदोषक्षयङ्करम् ।
सर्वोपतापशमनं सर्वसौख्यप्रदं सदा ॥ ४२६ ॥

पावनं सर्वतीर्थेभ्यो मन्त्रेभ्यो मुनिसत्तम ! ।
अतस्तु भोजनान्ते वै हार्दाग्नेस्तर्पणं पुरा ॥ ४२७ ॥

भावभक्तिपरो नित्यं कं पिबेदाज्यदो भवेत् ।
ब्रह्मतीर्थेन च शनैर्द्विर्वा त्रिर्वा चतुः क्रमात् ॥ ४२८ ॥

समाचम्य पुनर्यायात् प्रयतो भगवद्गृहम् ।
मनोबुध्यभिमानेन सह न्यस्य धरातले ॥ ४२९ ॥

कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ।
प्रदक्षिणसमेतेन त्वेवं रूपेण सर्वदा ॥ ४३० ॥

अष्टाङ्गेन नमस्कुर्याद्द्वादशार्णं समुच्चरन् ।
यत्र द्वादशकालेज्या कर्तव्या भूतिविस्तरात् ॥ ४३१ ॥

तत्र प्राभातिकीं कुर्यात् पूजामष्टाङ्गसंयुताम् ।
अङ्गद्वयं तु पाश्चात्यं विना वा तां समाप्य च ॥४३२॥

पितॄणां संविभागं च अनुयागं यथोदितम् ।
देशिकः स्वेच्छया कुर्यान्नित्यं मध्यन्दिनार्चने ॥४३३॥

त्रिकालेष्वेकमष्टाङ्गं षडङ्गं चाचरेद्द्वयम् ।
योगार्थिनां च स्वाध्यायं योगमध्यात्मसंज्ञितम् ॥

तत्तत्कालेषु कुर्वीत स्वाध्यायमधुनोच्यते ।
अष्टाङ्गेन नमस्कृत्य ह्युपविश्याग्रतो विभोः ॥ ४३५ ॥

आगमाध्ययनं कुर्याद्वाक्यार्थविचारणम्।
प्राप्तेऽथ सन्ध्यासमये स्नात्वा वा जघनावधि ॥४३६॥

क्षालयित्वा ततः कुर्याद्वाससां परिवर्तनम्।
सायन्तनार्चनं कुर्यात् षडङ्गं वलिपश्चिमम् ॥ ४३७ ॥

जपं कृत्वा यथाशक्ति स्वासाद्य शयनं ततः।
समाधाय वहिर्देवं निरालम्बपदे स्थितम् ॥ ४३८ ॥

अप्रयत्नेन वै तावदनिरुद्धेन चेतसा।
सह तेनैव ते निद्रा यावदभ्येति साम्प्रतम् ॥ ४३९ ॥

समुत्थायार्धरात्रेऽथ जितनिद्रो जितश्रमः।
कमण्डलुस्थितेनैव समाचम्य तु वारिणा ॥ ४४० ॥

अथ योगविभूत्यर्थं योगं युञ्जीत वैष्णवम्।
सुगुप्ते विजने देशे निर्द्वन्द्वे शुभलक्षणे ॥ ४४१ ॥

जितदर्पां मतिं कृत्वा सर्वभूतहिते स्थितः।
देवाग्निगुरुभक्तश्च सच्छास्त्राभिरतः सदा ॥ ४४२ ॥

भूतद्रोहपरित्यागी अस्तेयः संयतेन्द्रियः।
आसने चोपविष्टस्तु सुशुभे लक्षणान्विते ॥ ४४३ ॥

शुभदारुसमुत्थे तु चतुर्विंशाङ्गुलायते।
द्वादशाङ्गुलकोत्सेधे सुधौतेनापि वाससा ॥ ४४४ ॥

कुशैश्च मृदुभिश्छन्ने पवित्रेणाथ चर्मणा।
तत्रोपविष्टः सततं योगाङ्गानि समभ्यसेत् ॥ ४४५ ॥

रेचकादिचतुर्भिस्तु मात्राभेदकृतैस्तु यः।
कनीयान् मध्यमो ज्येष्ठः प्राणायामः प्रकीर्तितः ॥

प्रत्याहारं प्रकुर्वीत चित्तसंयमनं तु यत्।
बुद्धिर्मनस्त्वहङ्कारस्त्रिभिश्चित्तं प्रकीर्तितम् ॥ ४४७ ॥

तथापि मनसः कुर्यात् प्रत्याहारं प्रयत्नतः।
मनश्चतुर्विधं प्रोक्तं प्रत्याहारेण निर्जितम् ॥ ४४८ ॥

तिष्ठते लक्ष्यमार्गे तु नान्यथा तु कदाचन।
[8] ध्यानं लक्ष्यस्य निष्पत्तिश्चिन्तनं तत् प्रकीर्तितम् ॥

[1] धारणापि ततो धार्या तदा पापापनुत्तये।
[2] पञ्चधा पूर्ववत् सा तु प्रतिमन्त्रव्यवस्थया ॥४५०॥

[3] जपं निमीलिताक्षेण कुर्यान्मन्त्रस्य वाचकम्।
[4] वाच्यस्य प्रतिपत्त्यर्थं वीजपिण्डपदात्मकम् ॥४५१॥

[5] त्रिविधं वै समुद्दिष्टं प्रागुक्तविधिभावितम्।
[6] योगोऽपि त्रिविधः प्रोक्तस्तं च कार्त्स्न्येन मे शृणु ॥

[7] प्राकृतं पौरुषं चैव ऐश्वरं च तृतीयकम्।
[9] ऊहस्तु कीर्त्यते तर्कः तं च विद्धि विचारकम् ॥

समाधिस्त्वात्मलाभस्तु आनन्दः परिकीर्तितः।
स तु लक्ष्यं परित्यज्य मन्त्रोच्चारणवर्जितः ॥४५४॥

यदा विभज्यते ब्रह्मकलांशो विधिवर्जितः।
समाधौ परिनिष्पन्ने परमाप्नोति पूरुषम् ॥ ४५५ ॥

प्राणायामादितो यावत् समाध्यन्तं प्रकीर्तितम्।
द्विगुणं त्रिगुणं चैव मात्राभेदेन संस्थितम् ॥ ४५६ ॥

योगासनस्थः कुर्वीत विधिमेवं यथोदितम्।
योगासनानि चत्वारि योगपट्टेन वन्धयेत् ॥ ४५७ ॥

पर्यङ्कं कमलं वापि भद्रं वा स्वस्तिकं दृढम्।
तेषामेकतमे स्थित्वा ऋजुकायोर्ध्वतः क्रमात् ॥ ४५८ ॥

स्रस्ताङ्गसन्धिः कुर्वीत विस्तीर्णोरुः सुकन्धरः।
वाहू उपरि समौ कृत्वा किञ्चिदाकुञ्चयेच्छिरः ॥ ४५९॥

नाभौ जघनमध्ये तु हस्तौ कच्छपवत् स्थितौ।
सव्यस्य चोपरिस्थं तु वामे सव्यं तथापि वा ॥४६०॥

उत्तानौ तु करौ कृत्वा कच्छपी तान्नियोजयेत्।
ग्रीवां तु हृदयाद्यन्तां नातिस्तब्धां न कुञ्चिताम् ॥

किञ्चिन्निमीलयेन्नेत्रे नासाग्रमवलोकयन्।
समुद्गवत् पिधायास्यं दन्तैर्दन्तानसंस्पृशन् ॥ ४६२ ॥

सगर्भं योगमातिष्ठन्निर्गर्भं वा सुयन्त्रितः।
ततः प्रमथयेद्वायुं प्राणाख्यं चित्तसंयुतम् ॥ ४६३ ॥

रेचकादिचतुर्भेदः प्राणायामः प्रकीर्तितः।
चित्तं जयेत् सदा यत्नात् दुर्जयं देवदानवैः ॥ ४६४ ॥

यद्यप्यभ्यासवैराग्यैः चित्तं संयम्यते वलात्।
तथापि यत्नमातिष्ठेदुपाधीनां तु वर्जने ॥ ४६५ ॥

द्विविधास्ते तु विज्ञेयाः सन्निकृष्टा मनोगताः ।
सन्निकृष्टाः स्थानकृताश्चित्तोत्था वासनाकृताः ॥४६६॥
न दंशमशकाकीर्णे निश्शब्दे गन्धवर्जिते ।
निमीलिताक्षः सन्तिष्ठेत् सर्वेन्द्रियविवर्जितः ॥
एवं परित्यजेत् सर्वानुपाधीन् सन्निकर्षजान् ।
वासनोत्थांश्च विविधान् सम्यक् लक्ष्यं समास्थितः ॥
प्रत्याहरेत् सदा चित्तं विक्षिप्तं सर्ववस्तुषु ।
तामसं तत्तु बोद्धव्यं चित्तं सर्वगतं तदा ॥ ४६९ ॥
गतं रागादितो ज्ञेयमभ्यासाद्राजसं तु तत् ।
तत् साधु कथयते चित्तं संश्लिष्टं लक्ष्यगोचरे ॥
सलीनं च ततो ज्ञेयं गुणातीतं तपोधन ! ।
ध्यानमेवंविधं कुर्यात् सगर्भं प्राणनिग्रहे ॥ ४७१ ॥
उच्यते च ततो भूयस्त्रिविधा योगिनां गतिः ।
सकलं निष्कलं विष्णुं तृतीयं पररूपि च ॥ ४७२ ॥
अन्यत्तत् त्रिविधं ज्ञेयं शब्दं व्योमसविग्रहम् ।
विग्रहं देवदेवस्य लक्ष्यरूपं विचिन्तयेत् ॥ ४७३ ॥
ध्यानमेवं समुद्दिष्टं यावद्व्योमान्तिकं भवेत् ।
तावच्च भावयेल्लक्ष्यं यावल्लक्ष्यं न भावयेत् ॥ ४७४ ॥
भावे ह्यभावमापन्ने स स्वभावः परः स्मृतः ।
स्थूलं पूर्वं समभ्यस्य ततः सूक्ष्मं ततः परम् ॥ ४७५ ॥
एवं विलीयते चित्तं लक्ष्यं चोपाधिभिः सह ।
विग्रहं देवदेवस्य ध्यायेद्धृत्पद्मगोचरे ॥ ४७६ ॥
ततोऽन्यं चिन्तयेल्लक्ष्यं स्थूलं सूक्ष्मं ततः परम् ।
एवमभ्यस्यमानस्य गुणोत्कर्षः प्रजायते ॥ ४७७ ॥
योगोऽयं मुनिशार्दूल ! सामान्यः समुदाहृतः ।
परात्पराद्वासुदेवात् प्रकाशानन्दलक्षणात् ॥ ४७८ ॥
अतीन्द्रियादनौपम्यात् सच्चिद्रूपात् सदोदितात् ।
द्विभुजादेकमूर्तेश्च वरदाभयपाणिकात् ॥ ४७९ ॥
स्वास्तेः षाड्गुण्यसंसिद्धाच्चातुरात्म्यस्वभाविनः ।
संशान्तपरमानन्दस्वरूपाद्ब्रह्मणः सतः ॥ ४८० ॥

अनुग्रहार्थं भक्तानामवतीर्णस्य चेच्छया ।
परव्यूहादिरूपस्य दीपाद्दीपवदुज्ज्वलात् ॥ ४८१ ॥
एकाद्यनेकरूपस्य विग्रहोऽयं प्रकाशितः ।
तत्र चित्तं समाधाय योगी विज्ञानभावनाम् ॥ ४८२ ॥
तत्तन्मन्त्रपदेनैव योगाभ्यासं समाचरेत् ।
एवं यः कुरुते याति स कालेन परात्परम् ॥ ४८३ ॥
प्राप्तुमिच्छति यः शीघ्रं तस्य योगः समुच्यते ।
नित्योदितं परं ब्रह्म यत् पुरा ते प्रकाशितम् ॥ ४८४ ॥
वाच्यं तद्द्वादशार्णस्य ध्यात्वा युञ्जीत बुद्धिमान् ।
नासाग्रे भुवि सद्ब्रह्म ध्यायन् कुर्याज्जपं द्विधा ॥४८५॥
जिह्वाग्रे तु चतुर्धाप्सु ताल्वन्यग्नौ तथा च षट् ।
जिह्वामध्ये तथा वायावष्टधावर्तयेन्मनुम् ॥ ४८६ ॥
जिह्वामूले तथा व्योम्नि दशधा द्वादशाक्षरम् ।
कण्ठकूपे तु मनसि ध्यात्वा षोडशधा जपेत् ॥ ४८७ ॥
उरोदेशे बुद्धितत्त्वे चतुर्विंशतिधा जपेत् ।
उरोन्तेऽहङ्कृतौ ध्यायञ्जपेद्द्वाशीतिधा पुनः ॥ ४८८ ॥
शतं कर्मणि कालेऽब्जज ! अर्धयुक्तं शतं जपेत् ।
ततः पुष्करनाड्यां वै शतद्वयमनाकुलः ॥ ४८९ ॥
अध्यक्षाद्वासुदेवान्तं हृदाकाशे चतुःशतम् ।
हृदि नादावसानोर्ध्वं गगने योजयेत्तु वा ॥ ४९० ॥
एवं वा प्रणवेनाद्यां प्रणवार्णेन वाचरेत् ।
एवं मन्त्रविशेषेण बहुधा योग ईरितः ॥ ४९१ ॥
इति यः कुरुते योगं नित्ययुक्तः समाहितः ।
प्राप्नोति परमं स्थानं नित्योदितमनामयम् ॥ ४९२ ॥
समाधायात्मना ऽऽत्मानमेवं जप्त्वा जपक्रियाम् ।
ज्ञातृज्ञेयाविभागेन यावत्तन्मयतां व्रजेत् ॥ ४९३ ॥
यथा संवेद्यनिर्मुक्ते समाधौ लभते स्थितिम् ।
अभ्यासाद्ध्यवयोगी ब्रह्म सम्पद्यते तदा ॥ ४९४ ॥
ततः श्रमजय कुर्यात् त्यक्त्वा ध्यानासनक्रमान् ।
शय्यासन निवेद्याथ मूलमूर्तेरनन्तरम् ॥ ४९५ ॥

लक्ष्म्यादिशक्तियुक्तस्य यागमूर्तिगतस्य च।
तस्मिन्नारोपयेद्देवं सर्वाङ्गपरिशोभिते ॥ ४९६ ॥

अर्घ्यं पाद्यं तथाचामं प्रतिग्रहसमन्वितम्।
कृत्वा समालभेत् पश्चाच्चन्दनाद्यनुलेपनैः ॥ ४९७ ॥

सुगन्धपुष्पमाल्यादि दीपधूपे निवेद्य च।
भक्ष्याण्यपूपपूर्वाणि सक्षीराणि फलानि च ॥ ४९८ ॥

तर्पणाम्भश्च ताम्बूलं साङ्गं सद्गन्धभावितम्।
निवेद्य देवदेवाय विभवानुगुणं ततः ॥ ४९९ ॥

सर्वं तु विन्यसेत् पश्चात्तस्मिन् कर्मकृत च यत्।
तुष्टं गृहीतं तत् पूर्णं भावयेद्दक्षिणं करम् ॥ ५०० ॥

तन्मध्ये निष्कलं मन्त्रं सर्वं यत् किरणाकुलम्।
योगोत्थां फलसम्पत्तिं लक्ष्मीरूपां विचिन्त्य च ॥

मूलमन्त्रं समुच्चार्य पाणिमध्ये तथा स्मरेत्।
भूयश्च निष्कलं मन्त्रं तस्मादुपरि भावयेत् ॥ ५०२ ॥

सशीर्षे जानुनी भूमौ कृत्वा विष्णोर्निवेदयेत्।
प्रसादाभिमुखेनाथ तेन तच्चात्मसात् कृतम् ॥ ५०३ ॥

भावनीयं द्विजश्रेष्ठ! परितुष्टेन चादरात्।
सन्यासं सञ्चयं वाथ कृत्वा सम्यक्कृतस्य च ॥ ५०४ ॥

मन्त्ररूपानुकारिण्या मुद्रणीयं च मुद्रया।
फलार्थं प्रसवं येन नैति सन्यासकारिणा ॥ ५०५ ॥

फलपर्यावसाने च कालमागमचोदितम्।
भर्तुर्नो युज्यते येन सिद्धार्थैस्तु फलार्थिनाम् ॥ ५०६ ॥

नित्यं प्रतिष्ठितं बिम्बं विना स्थलजलादिकान्।
विसर्जनं ततः कुर्याद्दत्वार्घ्यं धूपसंयुतम् ॥ ५०७ ॥

भोगस्थानगता मन्त्राः पूजिता ये यथाक्रमम्।
मुख्यमन्त्रशरीरं तु संप्रविष्टांश्च संस्मरेत् ॥ ५०८ ॥

ज्वालाज्वालान्तरे यद्वत् समुद्रेष्विव निम्नगाः।
तन्मन्त्रविग्रहं स्थूलं सर्वमन्त्रास्पदं द्विज! ॥ ५०९ ॥

प्रविष्टं भावयेत् सूक्ष्मे ह्यव्यक्ते ह्युभयात्मके।
परे प्रागुक्तरूपे तु तं सूक्ष्ममुभयात्मकम् ॥ ५१० ॥

तस्मात् परं स्फुरद्रूपं निराधारपदाश्रितम्।
दर्पणं दर्शयित्वा तु निर्मलं तस्य चाग्रतः ॥ ५११ ॥

सन्धिमार्गेण हृत्पद्मे संप्रविष्टं तु भावयेत्।
स्मृत्वा परात्मना तं च स्वसंविद्गगने हृदि ॥ ५१२ ॥

विश्रान्तं भावयेद्देवं स्वभावेन समन्वितम्।
कर्मार्चादिषु बिम्बेषु पट्टसु नित्यादिसिद्धये ॥ ५१३ ॥

प्रतिष्ठितेषु विधिवन्नित्यं प्राभातिकेऽर्चने।
तच्छक्त्या योजितां शक्तिं मूलबिम्बाद्यथापुरा ॥

समभ्यर्च्यार्घ्यपुष्पाद्यैस्ताम्बूलान्तैः पुरोदितैः।
पुनरारोपयेन्मूले तत्र तत्र नियोजिताम् ॥ ५१५ ॥

पूजार्थं कर्मबिम्बादौ नित्यनैमित्तिकादिषु।
प्राप्तेषु तत्तत्कर्मादौ मूलादावाह्य मन्त्रवित् ॥ ५१६ ॥

समाप्य तेषु तत्कर्माण्यारब्धानि यथार्थतः।
समर्प्य मूलबिम्बे तु तेभ्यस्तत्र विसर्जयेत् ॥ ५१७ ॥

मन्त्रानर्घ्यादिपात्रस्थान् विसृज्य प्राक् प्रयोगतः।
शेषमर्घ्यादिकं सर्वं भुक्तपूर्वेण वै सह ॥ ५१८ ॥

पाणिना तोयपूतेन विष्वक्सेनाय चार्प्य च।
न्यासद्वयं च संहृत्य मनसा च स्वविग्रहात् ॥ ५१९ ॥

निःशेषस्योपसंहारं कुर्यादर्घ्यादिकस्य च।
यागोद्देशात्तथा कुण्डांरस्तराद्यस्याखिलस्य च ॥ ५२० ॥

सहोपलेपनेनैव सर्वमम्भसि निक्षिपेत्।
धर्तव्यं न चिरं चाग्रे यत् पुरा विनिवेदितम् ॥ ५२१ ॥

नैवेद्यं मन्त्रमूर्तीनां किञ्चित् पुष्पफलादृते।
कवाटबन्धनं कुर्यान्मन्त्रं कवचमुच्चरन् ॥ ५२२ ॥

नियोज्य तत्र रक्षार्थं चक्रं च विहगेश्वरम्।
स्वपेच्छय्यागतो मन्त्री प्रातरुत्थाय पूर्ववत् ॥ ५२३ ॥

यथोक्तं सकलं कुर्यात् प्रबोधयजनादिकम् ।
सकृत् त्र्यहं च सप्ताहं पक्षं मासमथापि वा ॥ ५२४ ॥
योयजेद्विधिनानेन भक्तिश्रद्धासमन्वितः ।
सोऽपि यायात् परं स्थानं किंपुनर्योऽत्र संस्थितः ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे अग्निकार्य पितृसंभाग निग्रोसवादि विधानं नाम षष्ठोऽध्यायः ॥

॥ श्रीः ॥

# अष्टमोऽध्यायः ॥

सनकः —
भगवन्! मुनिशार्दूल! सर्वज्ञ! वदतां वर!
गरुडप्रमुखानां यदर्चनं प्रागुदीरितम् ॥ १ ॥

तदिदानीं विशेषेण विस्तरेण प्रकाशय ।
शाण्डिल्यः —
शृणु वक्ष्यामि ते सम्यग्गारुडस्यार्चनं पुरा ॥ २ ॥

येन विज्ञातमात्रेण वाञ्छितं साधकोऽश्नुते ।
विष्णोःसङ्कर्षणाख्यस्य विज्ञानबलशालिनः ॥ ३ ॥

मूर्तिर्ज्ञानबलाख्या या सर्वाधारस्वरूपिणी ।
महिमेति जगद्धातुर्विज्ञेयो विहगेश्वरः ॥ ४ ॥

सर्वरोगभयघ्नश्च क्षेपकः सर्वविद्विषाम् ।
ततस्तमर्चयेन्नित्यं प्रासादे स्थाप्य मन्त्रवित् ॥ ५ ॥

प्राङ्गणे प्रथमे चाऽथ द्वितीये मूलमन्दिरात् ।
अग्रदेशे प्रकुर्वीत प्रासादं मण्डपाकृतिम् ॥ ६ ॥

चतुर्द्वारसमोपेतं वर्गत्रयसमन्वितम् ।
वर्णपट्टकान्वितं वाथ सर्वालङ्कारशोभितम् ॥ ७ ॥

मूलगेहात्रिभागोच्चमर्धोच्चं वा सुविस्तरम् ।
तस्मिन् ब्राह्मेऽथ दिव्ये वा दिव्ययुक्तेऽथ मानुषे ॥८॥

संस्थाप्य लोहजां वाथ शैलीमर्चां यथोदिताम् ।
त्रिकालमर्चयेन्नित्यं मुख्यमूलार्चनान्तिमे ॥ ९ ॥

तद्विधानं विशेषेण मन्त्रपूर्वं शृणु क्रमात् ।
प्रणवं पूर्वमुद्धृत्य पक्षिशब्दमनन्तरम् ॥ १० ॥

पञ्चाक्षरो महामन्त्रः स्वाहान्तः संप्रकीर्तितः ।
मन्त्रार्णानि सबिन्दूनि प्रणवोङ्कारान्वितानि च ॥ ११ ॥

समुच्चार्याथ तुर्यान्तैर्ज्ञानाद्यैश्च हृदादिभिः ।
अनेनैवाक्षरपर्यन्तैरङ्गानीत्यवधारय ॥ १२ ॥

प्राङ्मूलमन्त्रमध्याद्यव्यत्ययाद्विपद्धा भवेत् ।
सोऽयं मन्त्रः समाख्यातस्त्रिदशैरपि दुर्लभः ॥ १३ ॥

पञ्चाक्षर इति ख्यातो गारुडो मुनिसत्तम! ।
पञ्चाङ्गानि यथापूर्वमक्षरैः स्युः सबिन्दुकैः ॥ १४ ॥

साङ्गेनानेन मन्त्रेण स्थापनीयो विधानतः ।
मूलालयगते बिम्बे सुस्थिते वाथ यानगे ॥ १५ ॥

स्थितैव गारुडी मूर्तिर्याने वाऽगमनोन्मुखी ।
शयने चासने चैव त्वासीना वाथ सुस्थिता ॥ १६ ॥

द्वारावरणदेवानां ध्यानाध्याये विशेषतः ।
ध्वजारोहेऽपि सुव्यक्तं लक्षणं चास्य वक्ष्यते ॥ १७ ॥

एवं ज्ञात्वा यथाकालं तन्मन्त्रनिरतो द्विज! ।
स्नात्वा तदीयमन्त्रेण कृतपादावनेजनः ॥ १८ ॥

उपसृत्य यथान्यायं प्रासादं संप्रविश्य च ।
स्वासने सुखमासीनः प्राङ्मुखो वाप्युदङ्मुखः ॥ १९॥

करशुद्धिं च दिग्बन्धं प्राणायामं समाप्य च ।
भूतशुद्धिं च विधिवन्मन्त्रविन्यस्तविग्रहः ॥ २० ॥

पक्षीशमुद्रां बद्ध्वाथ हृदयाम्भोरुहोदरे ।
स्वानन्दधामनिग्रस्य देवस्य चतुरात्मनः ॥ २१ ॥

संकर्षणांशात् संपूर्णविज्ञानबलसंकुलात् ।
अवतार्यामूर्तैर्भोगैर्जपान्तं प्रायवद्दर्च्य च ॥ २२ ॥

ततो मूर्तयजेद्ध्याद्यैः प्रागुक्तैर्भोगसंचयैः ।
पार्षदैश्च देवाद्यैः साधितैः पृथगेव वा ॥ २३ ॥

तदर्थं कल्पयेत् प्राग्वदर्घ्याद्यं पात्रपञ्चकम्।
द्वितयं चार्घ्यमेकस्मिन् पाद्यं स्नानीयवारि च ॥ २४ ॥
अर्घ्याचामे तदन्यस्मिन्नेकस्मिन् सकलं तु वा।
प्राग्वत् स्वदेहविन्यस्तान् मन्त्रानभ्यर्च्य मन्त्रवित् ॥
अर्घ्याद्यैर्धूपपर्यन्तैस्ततो द्वारचतुष्टये।
वास्त्वीशं क्षेत्रनाथं च द्वारलक्ष्मीं स्वमन्त्रतः ॥ २६ ॥
चण्डाद्यं च गणं प्राग्वदासनं कल्पयेत् ततः।
शेषपूर्वं च धर्माद्यमष्टकं वा द्विरष्टकम् ॥ २७ ॥
कालचक्रं तदूर्ध्वे तु सरोजाद्यं चतुष्टयम्।
समभ्यर्च्य च गन्धाद्यैर्गणनाथादिकानपि ॥ २८ ॥
हृत्पद्मकर्णिकामध्ये मानसैरर्चितं पुरा।
स्वविद्यया समावाह्य स्वस्थानाद्बिम्बहृत्कजे ॥ २९ ॥
सकलीकृत्य विधिवदङ्गलाञ्छनभूषणैः।
सत्याख्यया दक्षिणतो बलशक्त्या स्वरूपया ॥ ३० ॥
गाणित्रकं च मन्दारकुसुमस्तवकं तथा।
कलशं चामृताधारं फणीन्द्रं दक्षिणादितः ॥ ३१ ॥
विन्यसेल्लाञ्छनान्येवं किरीटं वनमालिकाम्।
अनन्तादीनि नागानि न्यस्यानि तदनन्तरम् ॥ ३२ ॥
शक्तिः प्रागुदिता तस्य बलधर्मस्वरूपिणी।
पक्षीशमुद्रां सन्दर्श्य लययागं समाचरेत् ॥ ३३ ॥
भोगयागश्च कर्तव्यः पद्मपीठतलोपरि।
प्रागादिपद्मपत्रेषु हृदयादीनि पूर्ववत् ॥ ३४ ॥
विदिक्पत्रेषु चैवास्त्रमेषां वर्णानि पूर्ववत्।
रूपलावण्यभूषाद्यैर्मूलमन्त्रशरीरवत् ॥ ३५ ॥
अग्नीशरक्षोवायव्यकोणेषु विहगेशितुः।
चतुष्टयं गणित्राद्यं किरीटं वनमालिकाम् ॥ ३६ ॥
पुरस्तात् पृष्ठतो न्यस्य दक्षिणोत्तरयोस्तथा।
चतुष्टयं क्रमेणैव शेषाद्याः पन्नगेश्वराः ॥ ३७ ॥
दक्षिणे विहगेशस्य सत्याख्याः कर्णिकोपरि।
प्राणापानसमानोदानव्यान प्राणरूपिणः ॥ ३८ ॥

मध्यस्थस्य खगेशस्य बहिः प्रागादितः क्रमात्।
सत्यः सुपर्णो गरुडस्तार्क्ष्यश्च विहगेश्वरः ॥ ३९ ॥
पञ्चात्मकस्य प्राणस्य विकारस्त्वेष पञ्चधा।
सत्याद्या दिक्षु चत्वारः कोणेषु विहगेश्वरः ॥ ४० ॥
ध्यानमेषां विशेषेण समाकर्णय साम्प्रतम्।
आचाङ्घ्रिगोचरात् सर्वो यस्य देहस्तु पौरुषः ॥
द्विभुजस्तुहिनाभस्तु स सत्यः प्राणदैवतम्।
सुपर्णः पद्मरागाभो निर्मलः स्वर्णलोचनः ॥ ४२ ॥
गरुडः काञ्चनाभस्तु कुटिलभ्रूररुणेक्षणः।
केकराक्षस्तु तार्क्ष्यो वै प्रावृड्जलदसन्निभः ॥ ४३ ॥
द्रवत्कनकनेत्रस्तु शबलाभस्तु पञ्चमः।
चतुर्भुजाः सुपर्णाद्याः सौम्यरूपा ह्यनाकुलाः ॥ ४४ ॥
पतत्त्रिचरणाः सर्वे पक्षमण्डलमण्डिताः।
लम्बोदराः सुपीनाङ्गाः कुण्डलाद्यैर्विभूषिताः ॥ ४५ ॥
कुटिलभ्रूसुवृत्ताक्षा वक्र (त्र) तुण्डाः सिताननाः।
अपानादिसमीराणामाधिपत्येन संस्थिताः ॥ ४६ ॥
महाबला महाकाया रक्ततुण्डोऽत्र पञ्चमः।
स्वस्वाङ्गुष्ठद्वयप्रोतगणित्रोभयपाणिना ॥ ४७ ॥
पुष्पाञ्जलिधराः सर्वे मुख्येन विहगोत्तमाः।
सुपर्णः पश्चिमाभ्यां तु पाणिभ्यां दक्षिणादितः ॥ ४८ ॥
मन्दारपुष्पस्तवकं दधद्विलयमुद्रिकाम्।
तथाविधाभ्यां गरुडस्ते धत्ते व्यात्ययेन तु ॥ ४९ ॥
तार्क्ष्यः पश्चिमयोर्नित्यं धत्ते दक्षिणवामयोः।
कद्रूं तथाऽमृतं कुम्भं पञ्चमो विहगेश्वरः ॥ ५० ॥
दक्षिणेन सुधाकुम्भं वामेन तु फणीश्वरम्।
नित्योदितस्य व्यूहस्य तथा शान्तोदितस्य च ॥ ५१ ॥
प्राणापानादिवायूनां पञ्चानामपि नामभाक्।
गरुडः परिवारत्वे ध्वजत्वेऽपि विशेषतः ॥ ५२ ॥
योजनीयस्तथान्येषु सपुत्र्यादिपदेषु तु।
वासुदेवादिमूर्तीनां चतुर्णां क्रमशस्त्वमी ॥ ५३ ॥

सत्याद्यास्तार्क्ष्यपर्यन्तास्तत्तन्मूर्त्यन्तरेषु तु ।
त्रिषु त्रिषु समादेयाः सत्याद्याः केशवादिषु ॥ ५४ ॥

पद्मनाभादिमूर्तीनां पञ्चमो विहगेश्वरः ।
परात्परपरव्यूह व्यूहान्तरतनोर्विभोः ॥

प्रादुर्भावतनोश्चापि जगद्रक्षणकाङ्क्षिणः ।
खगानां कारणत्वाच्च प्रागुक्तो वा खगेश्वरः ॥ ५६ ॥

इति ते गारुडव्यूहप्रभावः संप्रकीर्तितः ।
कुमुद्वाद्यास्ततो बाह्ये शक्राद्यास्तद्बहिः क्रमात् ॥ ५७ ॥

तद्बहिः कुमुदादीनां भूतेशाश्चोल्काटादयः ।
गणशः पूजनीयो वा तदग्रे बलिमण्डले ॥ ५८ ॥

महापीठेऽथवा पूज्या गरुडस्यानुयायिनः ।
पालयन्तश्च तद्भक्तान् दिव्यान्यायतनान्यपि ॥ ५९ ॥

ध्यात्वैवमर्चनं कुर्यादासनाद्यैर्यथोदितैः ।
चतुष्षष्ट्युपचारैर्वा द्वात्रिंशद्भिस्तु वेतरैः ॥ ६० ॥

षोडशैरुपचारैर्वा मुख्यमध्याधमक्रमात् ।
तन्निवेदितमन्नाद्यं नराणां रोगिणां सदा ॥ ६१ ॥

वन्ध्यानां वनितानां च जयेच्छूनां च भूभुजाम् ।
विषोपहतवेषाणां प्रदद्यात् संविभज्य च ॥ ६२ ॥

आर्द्रायां प्रतिमासं तं विशेषेणैवमर्चयेत् ।
उत्सवेषु विशेषेण भ्रामयेदुत्सवार्चया ॥ ६३ ॥

इति सम्यक् समाख्यातं गरुडस्यार्चनं परम् ।
इतः परं यच्छ्रोतव्यं तद्वतस्व मुनेऽधुना ॥ ६४ ॥

सनकः —

मुने ! सकलधर्मज्ञ ! भगवन् ! भक्तवत्सल ! ।
विष्वक्सेनस्य विघ्नारेः पूजनं विहितं पुरा ॥ ६५ ॥

तद्विधानं विशेषेण यद सानुग्रहो यदि ।

शाण्डिल्यः —

पौष्कराख्ये महाशास्त्रे पुरा पुष्करजन्मनः ॥ ६६ ॥

विष्वक्सेनार्चनं प्रोक्तं यथावच्छृणु तन्मुने ! ।

पौष्कर उवाच—

किमर्थमाह भगवन् ! विघ्नोच्छेदकरं प्रभुम् ॥ ६७ ॥

समस्तविघ्ननाथानां परमं कारणं च यः ।
विष्वक्सेनस्तु यष्टव्यो भोगभूमिगतेऽच्युते ॥ ६८ ॥

कैर्द्रव्यैः केनविधिना किं करोत्यभिपूजितः ।

श्रीभगवानुवाच—

भविनां भाविनो विघ्नाः सद्धर्मविनिवारकाः ॥ ६९ ॥

न यागयज्ञधर्माद्यैर्मन्ये संसारिणां शुभम् ।
तत्प्रवृत्तौ तु ये विघ्नाः प्रोत्साहविनिवारकाः ॥ ७० ॥

व्यपयान्ति च ते सर्वे चक्रज्वालाभयार्दिताः ।
प्रागार्जितेन केनापि कर्मणा द्विज ! साम्प्रतम् ॥

अनुभुङ्क्ते फलं यागाद्द्विविधं चाग्रतःस्थितम् ।
तस्य संरक्षणार्थं तु विष्वक्सेनः सदैव हि ॥ ७२ ॥

काले यागावसानाख्ये द्वितीयेऽवसरेऽथवा ।
कृत्वा निर्व्याकुलं चित्तं यष्टव्यः फलसिद्धये ॥ ७३ ॥

यागनिर्वर्तनाच्छेषैरम्लानैरर्घ्यपूर्वकैः ।
उपचारमयैर्भोगैः सर्वैराभरणादिकैः ॥ ७४ ॥

नैवेद्यैर्मधुपर्काद्यैर्मुख्यमूर्तेर्निवेदितैः ।
द्विजप्रदानशिष्टैस्तु स्वयं प्राशनवर्जितैः ॥ ७५ ॥

तथा चर्वन्तरस्थैश्च ह्यपरेभ्योऽनिवेदितैः ।
संस्कृतैरूष्मणोपेतैर्मधुराज्यपरिप्लुतैः ॥ ७६ ॥

पौष्कर उवाच —

क एषोऽतुलवीर्यो हि यस्य दूराद्द्रवन्ति च ।
विघ्ना निमेषमात्रेण त्रैलोक्योन्मूलनक्षमाः ॥ ७७ ॥

श्रीभगवानुवाच —

कालवैश्वानराख्या या मूर्तिस्तुर्यात्मनो विभोः ।
स एव द्विजदेवास्यो विष्वक्सेनः प्रकीर्तितः ॥ ७८ ॥

स्थित आहवनीयाद्विभेदेन मखयाजिनाम् ।
स्रुक्पूतं हुतमादाय तर्पयत्यखिलं जगत् ॥ ७९ ॥

एवं मन्त्रमयाद्यागात् सात्त्विकाद्ब्रह्मभावितात् ।
संप्राप्य गुरुमूर्तेर्वै प्रापणं मन्त्रसंस्कृतम् ॥ ८० ॥

अनाहुतामराणां च सर्वलोकनिवासिनाम्।
स्वयं संविभजत्याशु तदनुग्रहकाम्यया ॥ ८१ ॥

ज्ञात्वैवं तस्य माहात्म्यं व्यक्तिस्थं फलसिद्धये।
त्रिसन्ध्यं नित्यपूजायां यत्यन्ते तं समर्चयेत् ॥ ८२ ॥

वत्सरोत्सवपूर्वेषु तथा वैशेषिकेष्वपि।
व्यक्त्याद्याधारभूतेषु क्रमात् कृत्वा पुरार्चनम् ॥ ८३ ॥

केवलं वाथ होमान्तं स्वशक्त्या विभवेन वा।
विस्तरेणाथवा शश्वत्ततः कमलसंभव! ॥ ८४ ॥

कृत्वा पर्णपुटे तोयं पात्रे वा कलशेऽव्रणे।
तमात्मनोत्तरे भागे ह्यर्चयित्वा निवेद्य च ॥ ८५ ॥

अथापरस्मिन् भाण्डे तु तदन्नपरिमन्त्रिते।
नैवेद्याद्भागमादाय तथा चर्वन्तरस्थितात् ॥ ८६ ॥

ओदनादंशमुद्धृत्य दध्याज्यव्यञ्जनैः सह।
समालभनपुष्पार्घ्यकुशाम्बुपरिभावितम् ॥ ८७ ॥

तद्धृन्मन्त्रेण बहुशो ह्यभिमन्त्र्याब्जसंभव!।
तन्मूलमन्त्रमुच्चार्य ध्यानभावनयान्वितम् ॥ ८८ ॥

प्राक्सन्निवेशिते भाण्डे समुत्कीर्य पिधाय तत्।
प्रणवाष्टकजप्तं वा तन्नाम्ना सह पौष्कर! ॥ ८९ ॥

एकं वै सोदकं पात्रं सनैवेद्यं जलाप्लुतम्।
सर्वत्र सर्वदा यागे कुर्यात् प्राग्विधिना विना ॥ ९० ॥

तच्चापि क्ष्मातले कूपे तटाकादौ तु चोत्किरेत्।
नोपभोगं यथा याति काकादिष्वब्जसंभव! ॥ ९१ ॥

यस्मात् सन्मन्त्रपूतं तत् प्राधान्येनाभिवर्धते।
अतो निषिद्धः पापानामपापानां विशेषतः ॥ ९२ ॥

ज्ञात्वैवं यत्नतो मन्त्री तन्मन्त्रेण समर्चयेत्।
साङ्गं मन्त्रमतो वक्ष्ये यथावदवधारय ॥ ९३ ॥

आक्रान्तमनलेनैव प्राणाख्यं बीजनायकम्।
त्रैलोक्यैश्वर्यदोपेतमूर्जोपरि गतं तु तत् ॥ ९४ ॥

ततो वाराहमादाय भूधव्योमरभूषितम्।
विष्वक्सेनाय तदनु सनमस्कं पदं न्यसेत् ॥ ९५ ॥

प्रणवाद्यो ह्ययं मन्त्रो विष्वक्सेनस्य कीर्तितः।
पूर्वबीजं हि यच्चास्य ऊकारस्वरवर्जितम् ॥ ९६ ॥

आकाराद्यैश्च षड्दीर्घैर्भिन्नमङ्गगणं नयेत्।
प्रणवेन स्वनाम्नाथ जातिभिष्षड्भिरन्वितम् ॥ ९७ ॥

नमस्स्वाहादिभिश्चायं विष्वक्सेनस्य अङ्गकः।
साङ्गेनानेन मन्त्रेण प्रतिष्ठाप्यो विधानतः ॥ ९८ ॥

प्रथमावरणे वाथ द्वितीयावरणेऽथवा।
ईशानसोमदिङ्मध्ये प्रासादे दक्षिणामुखे ॥ ९९ ॥

मूलालयोचार्चे तु कल्पिते गर्भमन्दिरे।
ब्रह्मस्थानेऽथवा दिव्ये मूलबेरांशमानतः ॥ १०० ॥

कल्पितस्य शिलादारुलोहपूर्वैस्तु वस्तुभिः।
पूजनं मुख्यकल्पं स्यादनुकल्पेऽग्रमण्टपे ॥ १०१ ॥

प्रागुक्तकोणभूभागे मेखलात्रयनिर्मिते।
पीठेऽवतार्य गगनादमूर्तं मूर्तमेव वा ॥ १०२ ॥

केवलं बलिदानेन तर्पयेदुदकेन च।
चतुस्स्थानावतीर्णस्य मण्डलादिषु वृत्तिषु ॥ १०३ ॥

परव्यूहादिरूपस्य देवस्य यजनावधौ।
प्रासादान्तर्गतस्यापि स्वस्थानस्थस्य मण्डपे ॥ १०४ ॥

पूजनं विधिवत् कार्यमारम्भदिवसादितः।
सर्वकर्मावसाने तु मण्डलादिगते विभौ ॥ १०५ ॥

स्वे स्वे धाम्नि विसृष्टे तु ध्यात्वा मण्डलमध्यतः।
पूजयेद्विधिवन्मन्त्री द्वितीये वासरेऽपि च ॥ १०६ ॥

भगवद्यजनार्थं तु प्रासादस्थं विशेषतः।
यथाविधि समभ्यर्च्य नैवेद्यैस्तन्निवेदितैः ॥ १०७ ॥

अर्घ्याद्यैरखिलैरन्यैस्ताम्बूलाद्यैश्च नित्यशः।
जलस्थलादिनिलयांस्तद्भूतांश्चाथ तर्पयेत् ॥ १०८ ॥

प्रासादस्थस्य तस्याथ देहमानानुसारतः।
कृत्वा हेमादिभिर्द्रव्यैर्विशेषार्चां विधानतः ॥ १०९ ॥

उग्रां वा शान्तरूपां वा विघ्नविध्वंसनक्षमाम्।
चतुर्भुजां वा द्विभुजामासीनां वा समुत्थिताम् ॥

द्विभुजस्थं चतुर्हस्तामन्यथा वा प्रकल्पिताम् ।
वैशेषिकेषु प्राप्तेषु पूजयेदुत्सवार्चया ॥ १११ ॥

मृगयाद्युत्सवे प्राप्ते यत्र यत्र व्रजेत् प्रभुः ।
तत्र तत्र नयेदेनां निर्विघ्नफलसिद्धये ॥ ११२ ॥

ध्यानमस्य प्रवक्ष्यामि यथावच्छृणु सत्तम ! ।
नवदूर्वाङ्कुराभं च त्वीषत्पिङ्गलकान्तिभृत् ॥

चतुर्दंष्ट्रं चतुर्बाहुं चतुष्किष्कुं चतुर्गतिम् ।
पूर्णाङ्गं केसरिस्कन्धं पृथूरस्थलराजितम् ॥ ११४ ॥

दक्षिणावर्तनिम्नेन नाभिरन्ध्रेण शोभितम् ।
आजानुबाहुं श्रीमन्तं पिङ्गलार्चिर्जटाधरम् ॥ ११५ ॥

द्रवत्कनकपिङ्गाक्षं चिपिटं पृथुनासिकम् ।
सितदीर्घनखश्रेणीशोभितं कुटिलभ्रुवम् ॥ ११६ ॥

विस्तीर्णगण्डवदनं बालेन्दुकुटिलोपमैः ।
नवकिंश्वरुणाकारैर्लोमभिः संपूर्णविग्रहम् ॥११७॥

शोभनेन प्रलम्बेन पृथुना प्रोन्नतेन च ।
माणिक्यकुण्डलाढ्येन युक्तं श्रोत्रद्वयेन तु ॥ ११८ ॥

मकुटेनोन्नतेनैव हाराद्यैरुपशोभितम् ।
चित्रकौशेयवसनं विचित्रस्रग्विमण्डितम् ॥ ११९ ॥

प्रलयद्वादशादित्यसहस्रगुणदीधितिम् ।
ईषदूर्ध्वं तथातिर्यग्विनिपातितलोचनम् ॥ १२० ॥

कुन्देन्दुकान्तिदशनं किञ्चिद्विहसिताननम् ।
स्वभावसौम्यममलं मायाक्रोधोपरञ्जितम् ॥ १२१ ॥

सविलासचलत्पादन्यासस्थानकसंस्थितम् ।
स्वेनान्तःकरणेनैव भावयन्तं परं पदम् ॥ १२२ ॥

अङ्गुष्ठादि कनिष्ठान्तं वामपाणौ लतात्रयम् ।
नामयत्युन्नता चैका घ्राणाग्रे विनियोजिता ॥ १२३ ॥

सद्विभ्रमीतिप्रदया त्वनया मुद्रयान्वितम् ।
रथाङ्गशङ्खहस्तं च लम्बमानगदाधरम् ॥ १२४ ॥

श्रोणीतटनिविष्टेन सावहेलेन पाणिना ।
इत्थंरूपधरं देवमनेकाद्भुतविक्रमम् ॥ १२५ ॥

उग्ररूपमिति ध्यायेदाग्नेयमनलप्रभम् ।
दंष्ट्रातर्जननिर्मुक्तं साभयं शान्तलक्षणम् ॥ १२६ ॥

मुख्यदक्षिणहस्तेन भक्तानामभयप्रदम् ।
तथाविधेन वामेन लम्बमानगदाधरम् ॥ १२७ ॥

पृष्ठदक्षिणवामाभ्यां चक्रशङ्खधरं क्रमात् ।
एवं चतुर्भुजस्योक्तं द्विभुजस्यावधारय ॥ १२८ ॥

उक्ताभ्यामुग्रशान्ताभ्यां शङ्खचक्रद्वयं विना ।
प्रागुक्तद्वितयं वाथ द्वितीयं चिन्तितं तु वा ॥ १२९ ॥

गदाविरहितं वाथ वामकक्ष्यवलम्बितम् ।
स्थानके वाऽसने वाममूरुदेशे निवेशितम् ॥ १३० ॥

गोपनीमुद्रया वाथ कटकाकारमुद्रया ।
उभाभ्यामपि पाणिभ्यां विश्रान्तं पीठपृष्ठतः ॥ १३१ ॥

अवष्टभ्य गदामूर्ध्वे मातङ्गमुसलाकृतिम् ।
प्राक्पद्मदलमाक्रम्य पादाभ्यां कर्णिकासनम् ॥ १३२॥

सुस्थितं कर्णिकायां वा प्राग्वदन्यैरलंकृतम् ।
एवं ध्यानविशेषेषु त्वेकं स्थाप्य विधानतः ॥ १३३ ॥

समर्चयीत कालेषु प्रागुक्तेषु समन्ततः ।
चतुस्स्थानार्चनार्थं तु मण्डलानां तु मध्यतः ॥ १३४ ॥

पूजितेष्वथ मन्त्रेषु नियुक्तेषु स्वधामनि ।
ईशानसोमदिङ्मध्ये चतुरश्रे पुरेऽथवा ॥ १३५ ॥

द्वारशोभाश्रनिर्मुक्ते रेखात्रितयभूषिते ।
तदन्तरेऽर्धचन्द्रस्थे कमलेऽष्टदलान्विते ॥ १३६ ॥

साम्राज्येन नियुक्तेऽस्मिन् विघ्नानामच्युतेन तु ।
पूजिते विधिना शश्वदभीष्टं साधकोऽश्नुते ॥ १३७ ॥

तस्मान्मन्त्रैस्तदीयैस्तु स्नात्वा पूर्वविधानतः ।
प्रक्षाल्य पाणिपादौ वा त्वाचम्य न्यासमाचरेत् ॥

तदधिष्ठातृकत्वेन धारणाभिः स्वविग्रहम् ।
शोधयित्वा पुनर्यस्य षडङ्गं तत्करादितः ॥ १३९ ॥

प्राग्वदानन्दधामाच्च ह्यवतार्य तथा प्रभुम् ।
दृष्ट्वा हृत्पुण्डरीके तु सापेक्षानिष्कलात्मकम् ॥ १४० ॥

तमेव सकलत्वेन यातं ध्यात्वा यजेद्बहिः ।
प्राग्वदर्घ्यादिपात्राणि प्रतिष्ठाप्य स्वविग्रहे ॥ १४१ ॥
विन्यस्तमन्त्रानभ्यर्च्य द्वारेदक्षिणसौम्ययोः ।
चण्डप्रचण्डसदृशौ बलप्रबलसंज्ञितौ ॥ १४२ ॥
वायुवेगं महाप्राणं द्वाराग्रे गरुडोपमम् ।
समभ्यर्च्य यथापूर्वं प्राग्दत्वा कमलासनम् ॥ १४३ ॥
धर्माद्यनन्तपर्यन्तं पञ्चकं नवकं तु वा ।
सत्वेनाच्छादितं पश्चात् केवलेनाम्बुजं स्मरेत् ॥१४४॥
तस्मिन्नावाह्य तं देवं हृदये ध्यानचोदितम् ।
सन्निधानादिकं कृत्वा मुद्राबन्धपुरस्सरम् ॥ १४५ ॥
समभ्यर्च्यार्घ्यपुष्पाद्यैर्लययागविधानतः ।
कर्णिकामध्यगं तस्य हृदाद्यं मुख्यमन्त्रवत् ॥ १४६ ॥
पद्मच्छदान्तरस्थांश्च तदाकारद्युतिं विना ।
किन्त्वङ्गानां च सर्वत्र ध्यानमुक्तं सितादिकम् ॥१४७॥
क्रियाख्यां तैजसीं शक्तिं स्वाहापर्यायरूपिणीम् ।
लक्ष्मीरूपधरां पीतां सर्वालङ्कारमण्डिताम् ॥ १४८ ॥
प्रियानुरूपां सततं स्वासीनां वाथ सुस्थिताम् ।
दक्षिणोत्तरयोगेन चामरोभयधारिणीम् ॥ १४९ ॥
(ओं) ह्रीं क्रियायै स्वाहान्तो मन्त्रोऽयं संप्रकीर्तितः ।
अनेन स्वामिनो देहात्तैजसाद्विघ्नसूदनात् ॥ १५० ॥
वामपार्श्वेऽवतार्यास्य भोगयागावसानतः ।
गजाननो जयत्सेनो हरिवक्त्रो महाबलः ॥ १५१ ॥
कालप्रकृतिसंज्ञश्च चतुर्थः कमलोद्भव ! ।
गणराजेश्वरा ह्येते चत्वारश्चण्डविग्रहाः ॥ १५२ ॥
आज्ञाप्रतीक्षकाश्चास्य सुश्वेतचमरोद्यताः ।
विनयकादयश्चैव विघ्नेशाः प्रवरास्तु ये ॥ १५३ ॥
अमीषां गणनाथानां नित्यमाज्ञानुपालिनः ।
ईशानादिषु कोणेषु पद्मबाह्ये स्थितान् न्यसेत् ॥१५४॥
वीक्षमाणा विभोर्वक्त्रं तत्तुल्यस्थानकैः स्थिताः ।
तद्वत्कसङ्किताः सद्यः किन्तु मुद्राविवर्जिताः ॥ १५५ ॥

ध्यानमेषां पृथग्भूतं शारीरमवधारय ।
श्रीमद्द्विपेन्द्रवदनं चतुर्दंष्ट्रं त्रिलोचनम् ॥ १५६ ॥
कम्बुग्रीवं चतुर्बाहुं पूर्णचन्द्रायुतद्युतिम् ।
हारनूपुरकेयूरमेखलादाममण्डितम् ॥ १५७ ॥
नानास्रग्गन्धवस्त्राढ्यमनौपम्यपराक्रमम् ।
ध्यायेद्गजाननमतो जयत्सेनं च संस्मरेत् ॥ १५८ ॥
महत्तुरङ्गवदनं पद्मरागाचलप्रभम् ।
द्रवच्चामीकराक्षं च त्वनेकाद्भुतविग्रहम् ॥ १५९ ॥
हरिवक्त्रमतो ध्यायेत् सटाच्छुरितमस्तकम् ।
निष्टप्तकनकप्रख्यं घोरघर्घरनिस्वनम् ॥ १६० ॥
मृगराड्वदनं विप्र ! कल्पान्तानिलवेगिनम् ।
कालप्रकृतिनामानं भावयेदञ्जनाद्रिवत् ॥ १६१ ॥
दंष्ट्राकरालवदनं पिङ्गलश्मश्रुलोचनम् ।
झषकुण्डलभृद्रौद्रं मीनवच्छिन्ननासिकम् ॥ १६२ ॥
गणराजेश्वरा ह्येते महापुरुषलक्षणैः ।
संयुक्ताश्चाखिलैर्विप्र ! आपादात् कन्धरावधि ॥१६३॥
यत्किञ्चिन्मण्डनं वस्तु तथाद्योक्तं स्मरेत्त्रिषु ।
एतेषामर्चनं कुर्यात् स्वनाम्ना प्रणवादिना ॥ १६४ ॥
नमोन्तेनाब्जसंभूत ! नानासिद्धिफलाप्तये ।
अष्टाष्टकैस्तदर्धैर्वातस्यार्धैर्वा यथारुचि ॥ १६५ ॥
क्षिप्रकर्मप्रसिध्यर्थमष्टभिर्वा समर्चयेत् ।
तन्निवेदितमन्नाद्यमर्घ्यस्रक्चन्दनादिकम् ॥ १६६ ॥
न देयं कस्यचित् प्राज्ञैरैहिकामुष्मिकाप्तये ।
स्वाश्रितानामनुज्ञातं भूतानां चैव तेन तत् ॥ १६७ ॥
नित्यं तदूर्ध्वतस्तेषामाशास्थगितचारिणी ।
अत एव हि भोक्तृणामर्थहानिं ददन्ति ते ॥ १६८ ॥
नूनमाशागणं सर्वं ध्वंसयन्ति सदैव हि ।
तस्माद्ददाति योऽन्येषां स्वयमश्नाति वाऽधमः ॥
मोहादुपेक्षते वापि स याति नरकेऽधमः ।
अतः श्रेयोर्थिना कार्यः परिहारः सदैव हि ॥ १७० ॥

तच्चापि क्ष्मातले कूपे तटाकादौ तु चोत्क्षिपेत् ।
नोपभोगं यथा याति काकादिष्वब्जसंभव ! ॥ १७१ ॥

यस्मात् सन्मन्त्रपूतं तत् प्राधान्येनापि वर्धते ।
अतो निषिद्धः पापानामपापानां विशेषतः ॥ १७२ ॥

इति सम्यक् समाख्यातं विष्वक्सेनार्चनं तव ।
अतः परं यद्वक्तव्यमस्ति चेत्तद्वदस्व मे ॥ १७३ ॥

सनकः —

कुमुदाद्याद्युतीशानां द्वारावरणवासिनाम् ।
शिलालोहादिभिः क्लृप्ता या या मूर्तिः प्रतिष्ठिता ॥

तत्र तत्र च किं कार्यमर्चने तद्वदस्व मे ।

शाण्डिल्यः —

द्वारावरणदेवानां सुस्थितानां स्वसद्मसु ॥ १७५ ॥

चलानां वाथ हेमाद्यैर्निर्मितानां यथाविधि ।
त्रिकालं वा द्विकालं वा संकटे त्वेककालिकम् ॥

तत्तन्मन्त्रेण कुर्वीत पूजामष्टोपचारतः ।
परव्यूहादिरूपस्य विष्णोर्दिव्यालयादिषु ॥ १७७ ॥

प्रासादवेरप्राकारगोपुरद्वारमण्डपान् ।
पचनालयपानीयशालापुष्पादिमण्डपान् ॥ १७८ ॥

धनधान्याम्बरादासभालिकावलिविष्टरान् ।
तथाज्ञाश्रयसद्मानि गोशालावाहनास्पदान् ॥ १७९ ॥

अपूर्वानथवा जीर्णान् नष्टांश्चैवोद्धरन्ति ये ।
ग्रामादिरथ्यावरणानुत्सवभ्रमणाय च ॥ १८० ॥

फलपुष्पद्रुमाढ्यानि वापीकूपान्वितानि च ।
विश्राममण्डपोपेतनिपानालङ्कृतानि च ॥ १८१ ॥

उद्यानानि प्रकुर्वन्ति ये भक्त्या तु जगत्प्रभोः ।
केदारापणपूर्वाणि साधनानि ददन्ति ये ॥ १८२ ॥

समाराधकपूर्वाणां तथैव परिचारिणाम् ।
दासीदासकुटुम्बानां देवालयनिवासिनाम् ॥ १८३ ॥

पोषं कुर्वन्ति ये वृत्या नित्यया प्रीतये विभोः ।
देवस्याज्ञाङ्घ्रिरूपस्य परिवारगणस्य च ॥ १८४ ॥

नूपुरादिकिरीटान्तैर्विग्रहं भूषयन्ति ये ।
प्रासादगोपुरादीनि चामीकरमयानि च ॥ १८५ ॥

शयनासनयानानि रथानि विविधानि च ।
महान्ति हेमसद्रत्नरचितानि समन्ततः ॥ १८६ ॥

द्विरदांश्च वराश्वांश्च यागोपकरणानि च ।
पाद्यार्घ्यपात्रपूर्वाणि पादोदादिप्रतिग्रहान् ॥ १८७ ॥

भद्रपीठं तथा दीपधूपयोर्लक्षणान्वितम् ।
पात्रयुग्मं च वै घण्टामक्षसूत्रादिकान्यपि ॥ १८८ ॥

छत्राणि चामरादीनि सितानि विविधानि च ।
उपानत्पादुकादीनि पादपीठान्यनेकशः ॥ १८९ ॥

हविःस्थालीश्च विविधाः साधाराश्च सलक्षणाः ।
हेमराजतताम्रोत्थास्ताम्बूलाधारसंयुताः ॥ १९० ॥

स्रुक्स्रुवादीनि भाण्डानि यान्यन्यानि समर्चने ।
पयोर यानि सर्वाणि येऽर्पयन्ति जगद्विभोः ॥ १९१ ॥

देवद्रव्याणि रक्षन्ति देवस्वं च भयान्विताः ।
सदागमादिसिद्धान्तनिश्चयार्थप्रशंसकाः ॥ १९२ ॥

दीक्षापयन्ति सद्भक्तान् ये वेदान्तार्थसूचकाः ।
भाषाभिः स्वस्वकीयाभिर्ये तदर्थप्रबन्धकाः ॥ १९३ ॥

भक्तोत्तमास्ते विज्ञेयास्तान् दिव्यायतनादिषु ।
चलस्थिरविभागेन लोहैर्वा शिलयाथवा ॥ १९४ ॥

स्वस्ववर्णाश्रमाचारसद्वेशाकृतिचेष्टितान् ।
बद्धाञ्जलिपुटान् वाथ प्रमाणेनोपलक्षितान् ॥ १९५ ॥

लाञ्छितांश्चक्रशङ्खाभ्यां भुजयोर्दक्षिणादितः ।
पद्मविष्टरमध्ये तु स्वासीनान् वाथ सुस्थितान् ॥१९६॥

ऋजुस्थित्या यथाशोभं वैशाखस्थानकेन वा ।
निर्माय च विधानेन प्राङ्गणे मण्डपेऽथवा ॥ १९७ ॥

प्रासादेष्वनुरूपेषु कल्पितेष्वग्रतो विभोः ।
यथावकाशं वामे वा दक्षिणे वाथ पश्चिमे ॥ १९८ ॥

स्वस्वमन्त्रैः प्रतिष्ठाप्य विधिवच्छ्रद्धयार्चयेत् ।
शृणु मन्त्रांस्तदीयांस्तु स्थापनादिषु कर्मसु ॥ १९९ ॥

प्रधानपुरुषेशात्मतारकब्रह्मणाऽथवा ।
अहं स तारकेणैव सविसर्गेण चान्तिमे ॥ २०० ॥

आद्येन वा द्वितीयेन युक्तया त्रितयेन वा ।
संज्ञया योजनीयास्ते साङ्गयागानतः शृणु ॥ २०१ ॥

ताराद्ययोर्द्वयोरेकं षोढा कृत्वा तदन्तिमे ।
ज्ञानादिहृदयादीनि चतुर्थ्यन्तान्युदीरयेत् ॥ २०२ ॥

प्रणवाधारयुक्तानि प्रागेवाङ्गान्यमूनि वै ।
विन्यस्य संयजेन्नित्यं भक्तान् परमधर्मिणः ॥ २०३ ॥

पारतन्त्र्ये विधिरयं भक्तानां संप्रकीर्तितः ।
स्वातन्त्र्ये चाग्रहारादौ विपिने वा नदीतटे ॥ २०४ ॥

सप्राकारं विमानं तु यथेष्टतलशोभितम् ।
कल्पयित्वा प्रयत्नेन रथ्याभिश्च परिष्कृतम् ॥ २०५ ॥

देशान्तरगतानां वा भगवल्लोकवासिनाम् ।
दृश्यरूपमदृश्यं वा देवसारूप्यतां गतम् ॥ २०६ ॥

स्थापयित्वा विधानेन प्रासादे मानुषे पदे ।
दिव्यमानुषयोर्वाथ दिव्ये वा मानुषाश्रिते ॥ २०७ ॥

विष्णोर्मन्त्रासनाव्यक्तपद्ममध्यस्थचेतनात् ।
भक्तबिम्बहृदम्भोजे चैतन्यमवतार्य च ॥ २०८ ॥

सकलीकृत्य मन्त्रेण साङ्गेनाभ्यर्चयेत् सदा ।
आवाहने विशेषोऽयं जीवतां वाप्यजीवताम् ॥ २०९ ॥

सर्वत्राव्यक्तपद्माद्यैरष्टभिर्वा द्विरष्टभिः ।
भोगैः प्रागुदितैः स्फीतैस्ताम्बूलान्तैरनुक्रमात् ॥२१०॥

तत्तज्जन्मदिने कार्यं तेषां वैशेषिकार्चनम् ।
कृत्वा पञ्चध्वजारोहं कार्यस्तत्र महोत्सवः ॥ २११ ॥

देवेन सह कर्तव्यः परतन्त्रोत्सवे ध्वजः ।
भक्तप्रणीता गाथाश्च श्रुत्यन्तार्थोपबृंहिताः ॥ २१२ ॥

श्रावयेद्विधिवद्देवं भक्त्या गीतिपुरस्सरम् ।
तन्निवेदितमन्नाद्यं गायकेभ्यः प्रदापयेत् ॥ २१३ ॥

इति ते वैनतेयादिपरिवारगणस्य च ।
पूजनं सर्वमाख्यातं नानासिद्धिफलप्रदम् ॥ २१४ ॥

गोपनीयं प्रयत्नेन नास्तिकानां विशेषतः ।
प्रकाशयस्व भक्तानां नित्यकर्मरतात्मनाम् ॥ २१५ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे गरुडविष्वक्सेनादिपरिवारार्चनविधानं नामाष्टमोऽध्यायः समाप्तः ॥

॥ श्रीः ॥

# नवमोऽध्यायः ॥

शाण्डिल्यः —

एवं कालत्रये कुर्यात् पूजनं मन्त्रवित्तमः ।
न च कालत्रयान्न्यूनं पूजनं विहितं सदा ॥ १ ॥

प्रासादेषु स्वयं व्यक्तपूर्वेषु द्विजसत्तम ! ।
कालत्रयं प्रधानं स्यात्तदूर्ध्वं कर्तुरिच्छया ॥ २ ॥

विभवापेक्षया चैव वर्धयेत यथाक्रमम् ।
यावद्द्वादशमः कालस्तावद्वै मुनिपुङ्गव ! ॥ ३ ॥

श्रेष्ठः प्रभातकालः स्यात् त्रिषु कालेषु वै पुनः ।
यथावन्मन्त्रविन्यासमात्मनः करदेहयोः ॥ ४ ॥

द्वाराणां स्थानसंशुद्धिं सायामां भौतिकीं ततः ।
नित्यं प्राभातिके कुर्यादन्यत्रेच्छानुरूपतः ॥ ५ ॥

स्नपनं बलिदानं च कुर्यात् कालत्रये सदा ।
मूर्तेरासनपूजा तु कार्या कालचतुष्टये ॥ ६ ॥

पञ्चकाले भवेन्न्यासः षट्काले हवनक्रिया ।
अत ऊर्ध्वेषु कालेषु जपान्तं पूजनं भवेत् ॥ ७ ॥

अलङ्कारासनाद्यं च पूर्ववत् क्रमयोगतः ।
विनोक्तेन प्रकारेण ह्यन्यथा न समाचरेत् ॥ ८ ॥

मुख्यकल्पे तु होमान्ता नित्यनैमित्तिकात्मकाः ।
पूजाः क्रमेण वै कुर्यात् तत्तद्धोमावसानिकाः ॥ ९ ॥
अनुकल्पे तु जप्यान्तं यागानन्तरितेषु वै ।
यागेषु हवनान्तेषु नित्यनैमित्तिकादिषु ॥ १० ॥
तत्तद्यागं जपान्तं च क्रमात् कृत्वा ततः परम् ।
तत्तद्धोमान् मुनिश्रेष्ठ ! क्रमात् कुर्याद्यथाविधि ॥ ११ ॥
अनुकल्पेषु यागेषु ह्युपकालोदितेषु वै ।
आसनार्घ्यं ततः पाद्यमाचामं सप्रतिग्रहम् ॥ १२ ॥
गन्धं माल्यं तथा दीपं धूपं मात्रां क्रमेण तु ।
दत्वा भोज्यावसानं तु क्रमाद्दद्याद्विधानतः ॥ १३ ॥
अथ द्वादशकालादि यावत् कालत्रयं द्विज ! ।
नाडिकानां विभागं तु क्रमेणैवावधारय ॥ १४ ॥
ब्राह्मान्मुहूर्तादारभ्य सपादं घटिकाद्वयम् ।
निर्वर्त्य नित्यकर्म प्राक् स्नानपूर्वं यथाविधि ॥ १५ ॥
सपादैकोत्तरा नाड्यो दश प्राभातिकेऽर्चने ।
ततो नाडीचतुष्कं तु भवेद्यागद्वयस्य तु ॥ १६ ॥
ततस्त्वर्धोत्तरा नाड्यस्तिस्रः स्युस्त्वाह्निकस्य तु ।
पश्चादर्धोत्तराः सप्त नाड्यो मध्यन्दिनार्चने ॥ १७ ॥
भूयस्तु घटिकायुग्मं यागस्य द्विजसत्तम ! ।
ततोऽपराह्णयागस्य भवेत्तु घटिकात्रयम् ॥ १८ ॥
स्वाध्यायस्य भवेत् कालस्ततस्तु घटिकाद्वयम् ।
अर्धोत्तरा भवेन्नाडी स्वस्य सायन्तनी क्रिया ॥ १९ ॥
ततः प्रदोषयागस्य सार्धाः सप्त च नाडिकाः ।
ततो यागद्वयं कुर्याद्घटिकानां चतुष्टये ॥ २० ॥
पश्चान्निशीथयागस्य भवेद्वै नाडिकात्रयम् ।
भूयस्तु पूजनं विप्र ! कुर्याद्वै घटिकाद्वये ॥ २१ ॥
ततस्तु प्रत्युषो यागः सार्धं स्यान्नाडिकाद्वयम् ।
योगपूर्वं तु विश्रामश्चतस्रो नाडिकास्ततः ॥ २२ ॥
यत्र द्वादशकालेज्या तत्रायं कालनिर्णयः ।
यत्रैकादशकालेज्या तत्रायं क्रम उच्यते ॥ २३ ॥

निशीथयजनादूर्ध्वं प्रत्युषः पूजनं भवेत् ।
यद्वा प्रादोषिकादूर्ध्वं कालमेकं विलोपयेत् ॥ २४ ॥
विश्रामस्य भवेत् कालो नाडीनां षट्कमेव च ।
यदा तु दशकालेषु पूजनं विहितं तदा ॥ २५ ॥
मध्याह्नपूजनादूर्ध्वमपराह्णार्चनं भवेत् ।
तथा मध्याह्नपूजायाः सार्धास्तु नव नाडिकाः ॥ २६ ॥
यत्र कालेषु नवसु पूजनं विहितं तदा ।
निशीथपूजनात् पूर्वमेकं यागं तु लोपयेत् ॥ २७ ॥
दश नाड्योऽर्धहीनाः स्युस्तदा प्रादोषिकेऽर्चने ।
यत्र कालाष्टके यागा विहिता द्विजसत्तम ! ॥ २८ ॥
तदा प्राभादिकादूर्ध्वमेकं यागं विलोपयेत् ।
तदा प्राभातिके यागे सांशा नाड्यस्त्रयोदश ॥ २९ ॥
यजनं सप्तकालेषु यदा स्याद्द्विजसत्तम ! ।
प्रदोषश्च निशीथश्च प्रत्यूषश्च तथा निशि ॥ ३० ॥
निशीथस्य भवेत् कालश्चतस्रो नाडिकास्तदा ।
अर्धहीनाश्चतस्रस्तु घटिकाश्चरमस्य तु ॥ ३१ ॥
यत्र वै कालषट्के तु पूजनं विहितं तदा ।
पूर्वमध्यापराह्णास्तु दिवाकालास्त्रयः स्मृताः ॥ ३२ ॥
स्वस्य प्राभातकृत्यस्य सांशं नाडीत्रयं तदा ।
सार्धाश्चतस्रो नाड्यस्तु स्वस्य मध्यन्दिनस्य तु ॥ ३३ ॥
प्रातराद्या निशीथान्ताः पञ्चकाला उदाहृताः ।
तदा शिष्टास्तु घटिका योगविश्रामयोः स्मृताः ॥३४॥
एतेऽपराह्णरहिताश्चतुष्कालाः प्रकीर्तिताः ।
पञ्चकं घटिकानां तु स्वाध्यायस्य भवेत्तदा ॥ ३५ ॥
प्रातर्मध्यन्दिनं सायं त्रयः काला यथाक्रमम् ।
तदानीमवशिष्टास्तु घटिकाः स्वस्य कर्मणः ॥ ३६ ॥
अनुकल्पे तु कालः स्यादेको माध्यन्दिनोऽथवा ।
माध्यन्दिनश्च नैशश्च द्वौ कालौ शक्तितो द्विज ! ॥३७॥
यत्रावरणबाहुल्यं तथा च बलिविस्तरः ।
भगवद्यागविस्तारो महता विभवेन तु ॥ ३८ ॥

अनेका मूर्तयो यत्र पूज्यन्ते विस्तरेण तु।
तत्र तत्र समभ्यूह्य स्वबुद्ध्या तु समाचरेत् ॥ ३९ ॥

वृद्धिं प्रधानकाले तु नाडिकानां महामते!।
संक्षेपमुपसन्ध्यासु तत्तत्कर्मानुगुण्यतः ॥ ४० ॥

एवमुक्तेषु कालेषु यः पूजयति सर्वदा।
स पूजाफलमाप्नोति साकल्येन महामते! ॥ ४१ ॥

यथा कालात्ययो न स्यात्तथा कुर्यात् प्रयत्नतः।
उक्तेऽस्मिन् समतिक्रान्ते काले दोषो भवेन्महान् ॥४२॥

मनुजैः कल्पिते स्थाने इत्युक्ता नाडिकास्थितिः।
स्वयं व्यक्तादिकेऽप्येवं स्थानानामार्षपश्चिमे ॥ ४३ ॥

चतुष्टये भवेद्विप्र! कालानां तु विनिर्णयः।
विशेषः श्रूयतामत्र नियतेष्वपि कर्मसु ॥ ४४ ॥

वत्सरोत्सवपूर्वेषु नानानैमित्तिकेषु च।
पवित्रारोहणान्तेषु काम्येषु विविधेषु च ॥ ४५ ॥

तथा च प्रायश्चित्तेषु राष्ट्रभङ्गादिदोषतः।
यद्वा यजनविस्तारादसामर्थ्यादिकेन वा ॥ ४६ ॥

तत्तत्कर्मोदिते काले समतीते क्षणादिके।
न दोषो विद्यते विप्र! तत्तत्स्थानप्रभावतः ॥ ४७ ॥

सदागमपरैर्विप्रैः पञ्चकालपरायणैः।
चातुरात्म्यैकनिष्ठैस्तु अनन्यैरधिकारिभिः ॥ ४८ ॥

प्रागुक्तैर्व्यापकैर्मन्त्रैर्द्वादशाक्षरपूर्वकैः।
अङ्गोपाङ्गादिसंयुक्तैर्दिव्यशास्त्रोक्तमार्गतः ॥ ४९ ॥

यजनं क्रियते यत्र तत्रापि च विशेषतः।
कालातिक्रमदोषस्तु विद्यते न कदाचन ॥ ५० ॥

तथापि कालातिक्रान्तौ विशेषमवधारय।
व्यामिश्रयाजिभिर्वर्णैर्निर्मितायतनास्तु ये ॥ ५१ ॥

तेषु कर्मणि नित्येऽपि काम्ये नैमित्तिकेऽपि वा।
विविधेऽपि तथा विप्र! प्रायश्चित्ताख्यकर्मणि ॥ ५२ ॥

तत्तदुक्तस्य कालस्य मुहूर्तस्याप्यतिक्रमे।
कर्तुर्गुरोश्च स्थानस्य तस्य दोषो महान् भवेत् ॥ ५३ ॥

अनन्यशरणैर्वर्णैः स्थाने तु परिकल्पिते।
आरम्भः प्रातरिज्याया अपि यामाष्टमांशकम् ॥ ५४ ॥

नातिक्रामेन्न मध्याह्नः साष्टांशं प्रहरद्वयम्।
न च सायन्तनारम्भो रात्रौ यामाष्टमांशकम् ॥ ५५ ॥

निशीथपूजानारम्भो न च नाडीत्रयोदश।
प्रत्युषः पूजनारम्भो न च ह्येकोनविंशतिम् ॥ ५६ ॥

अतिक्रमेच्चेद्दोषः स्यात् कर्त्रादित्रितयस्य च।
नैमित्तिकादिके प्राग्वद्भवेद्दोषस्य निर्णयः ॥ ५७ ॥

सच्छूद्रैः कल्पिते विप्र! स्थाने तु विनिबोध मे।
अहनि प्रातरारम्भो यामांशं न व्यतिक्रमेत् ॥ ५८ ॥

न च माध्यन्दिनारम्भः सपादं प्रहरद्वयम्।
रात्रौ सायन्तनारम्भो यामांशं न व्यतिक्रमेत् ॥ ५९ ॥

निशीथयजनारम्भो न च नाडीद्विसप्तकम्।
नातिक्रामेत् प्रत्युषस्तु विंशतिं यद्यतिक्रमेत् ॥ ६० ॥

सबन्धुकस्य वै कर्तुः स्थानस्य च गुरोर्भवेत्।
भयं नैमित्तिकादीनां प्राग्वत्तत्तदतिक्रमे ॥ ६१ ॥

सद्वैश्यैः कल्पिते स्थाने विभागमवधारय।
प्रागिज्योपक्रमे नाडीद्वितयं ह्युदयात् परम् ॥ ६२ ॥

नातिक्रमेन्न माध्याह्नो ह्यष्टाविंशतिनाडिकाः।
रात्रौ सायन्तनारम्भस्त्रितयं न व्यतिक्रमेत् ॥ ६३ ॥

निशीथयजनारम्भो यामौ द्वौ न ह्यतिक्रमेत्।
प्रात्युषः पूजनारम्भो न च नाड्येकविंशतिम् ॥ ६४ ॥

नैमित्तिकाद्यं त्रितयं न च कालमतिक्रमेत्।
प्रागुक्तं यद्यतिक्रामेत् कर्तुर्वै देशिकस्य च ॥ ६५ ॥

सबन्धुकस्य जायेत महाव्याध्यादिपीडनम्।
स्थानस्य धान्यनाशः स्यान्महाभूतैरुपप्लवः ॥ ६६ ॥

सदागमज्ञैः क्षत्रैस्तु क्लृप्ते वक्ष्याम्यतः परम्।
प्रातरिज्यासमारम्भो यामार्धं न ह्यतिक्रमेत् ॥ ६७ ॥

न च माध्यन्दिनारम्भः सार्धं यामद्वयं द्विज!।
न च सायन्तनारम्भो यामार्धं न ह्यतिक्रमेत् ॥ ६८ ॥

निशीथयजनारम्भो नाडीषोडशकं न च ।
यामत्रयं तदन्यंस्तु न च नैमित्तिकादिकम् ॥ ६९ ॥

उक्तं कालमतिक्रामेत् प्रमादाद्यद्यतिक्रमेत् ।
देशक्षोभादिदोषः स्यात् पूर्वोक्तत्रितयस्य च ॥ ७० ॥

पञ्चकालपरैर्विप्रैः कल्पितेऽपि निबोध मे ।
प्रागिज्योपक्रमो नाडीपञ्चकं न व्यतिक्रमेत् ॥ ७१ ॥

न च माध्यन्दिनारम्भो नाडिकानां तु विंशतिम् ।
न च सायन्तनारम्भो नाडीषट्कमतिक्रमेत् ॥ ७२ ॥

नातिक्रमेन्निशीथेज्या नाड्यः सप्तोत्तरा दश ।
चतुर्विंशतिमन्त्तेज्या नाडीनां न ह्यतिक्रमेत् ॥ ७३ ॥

न च नैमित्तिकाद्यस्य प्राप्तकालव्यतिक्रमः ।
एवमुक्तं तु नियमं येन केनाप्यतिक्रमेत् ॥ ७४ ॥

स्थानभ्रंशादिदोषः स्याद्देशिकादित्रयस्य च ।
ऋषिभिः कल्पिते स्थाने विशेषमवधारय ॥ ७५ ॥

नातिक्रमेत् प्रागिज्याया नाडीषट्कमुपक्रमः ।
माध्यन्दिनसमारम्भो न च नाड्येकविंशतिम् ॥ ७६ ॥

सायमिज्यासमारम्भो नाडीनां न च सप्तकम् ।
नातिक्रामेन्निशीथेज्या नाड्यष्टादशकं द्विज ! ॥ ७७ ॥

नातिक्रामेत् पश्चिमेज्या नाडिकापञ्चपञ्चकम् ।
अतिक्रमेद्यदि कर्तुः स्यात् क्षयव्याधिप्रपीडनम् ॥ ७८ ॥

तद्देशे स्यादनावृष्टिः स्थानस्य च महद्भयम् ।
कल्पिते मन्त्रसिद्धैस्तु स्थाने समवधारय ॥ ७९ ॥

आरम्भः प्रातरिज्यायाः प्रहरं न ह्यतिक्रमेत् ।
एकविंशतिकं सार्धं मध्याह्नो न व्यतिक्रमेत् ॥ ८० ॥

नातिक्रमेत्तु प्रहरं सायं याग उपक्रमः ।
निशीथयागो नाडीनां न च त्वेकोनविंशतिम् ॥ ८१ ॥

षड्विंशतिमतिक्रामेद्य च पश्चिमपूजनम् ।
अतिक्रमेद्यदि कर्तुः पुत्रहानिर्भविष्यति ॥ ८२ ॥

स्थाने द्रव्यविनाशः स्याद्राष्ट्रस्य व्याधिपीडनम् ।
दिव्यस्थानेऽथ वक्ष्यामि प्रागिज्याया उपक्रमः ॥ ८३ ॥

अष्टकं न त्वतिक्रामेन्नाडीनां द्विजसत्तम ! ।
द्वाविंशतिं न मध्याह्नो न च सायन्तनोऽष्टकम् ॥ ८४ ॥

विंशतिं न निशीथेज्या सप्तविंशतिमन्तिमः ।
नातिक्रामेन्मुनिश्रेष्ठ ! प्रमादाद्यद्यतिक्रमेत् ॥ ८५ ॥

देशाधिपस्य पीडा स्याज्ज्वरादिव्याधिभिः सदा ।
स्थाने धान्यादिनाशः स्यात्तत्तद्देशनिवासिनाम् ॥८६॥

अथ स्थाने स्वयं व्यक्ते शृणु कालविधिं द्विज ! ।
प्रथमेज्यासमारम्भो घटिकादशकं न च ॥ ८७ ॥

अतिक्रामेन्न मध्याह्नो नाडीनां पञ्चविंशतिम् ।
सायमिज्यासमारम्भो दशकं न ह्यतिक्रमेत् ॥ ८८ ॥

द्वाविंशतिं निशीथेज्या नातिक्रामेत पश्चिमः ।
आदित्योदयवेलां तु नातिक्रामेत् कदाचन ॥ ८९ ॥

प्रमादाद्बुद्धिपूर्वाद्वा अतिक्रामेद्यदि द्विज ! ।
अरातिभिः परिभवो महाव्याध्यादिपीडनम् ॥ ९० ॥

सदा देशाधिपस्य स्यात् प्रजानां व्याधिपीडनम् ।
तत्स्थानस्य न सम्पत्तिस्तद्देशे वृष्टिवर्जनम् ॥ ९१ ॥

नित्यनैमित्तिकं कर्म नक्षत्रादिनिमित्तकम् ।
तत्तत्कर्मोदितं कालं नातिक्रामेत्तु मानुषे ॥ ९२ ॥

आर्षादिके तु त्रितये पूर्वभागोदितं तु यत् ।
तत् कुर्यात्तदतिक्रान्तौ भागे तु तदनन्तरे ॥ ९३ ॥

तत्कालातिक्रमे दोषो नित्यातिक्रान्तिवद्भवेत् ।
अपरांशोदितं कर्म तत्रैव तु समाचरेत्॥ ९४ ॥

पूर्वाह्णे विहितं कर्म मध्याह्ने तु समाचरेत् ।
मध्याह्ने विहितं यत्तदपराह्णे समाचरेत् ॥ ९५ ॥

पूर्वरात्रोदितं कर्म मध्यरात्रे समाचरेत् ।
मध्यरात्रोदितं यत्तत् कुर्यादपररात्रिके ॥ ९६ ॥

स्वयं व्यक्ते तु पूर्वांशविहितं स्यात्तु मध्यमे ।
पश्चिमे वापि तत्रोक्तं पूर्वं वा मध्यमेऽपि वा ॥ ९७ ॥

आचरेदनुकल्पे तु पूर्वादविहितं तु यत् ।
तत् कुर्यादथ मध्याह्ने अपराह्णेऽथवा द्विज ! ॥ ९८ ॥

पूर्वरात्रोदितं कुर्यान्मध्ये वा पश्चिमेऽपि वा ।
ऋक्षाणां पूर्वभागे तु ऋक्षकर्म समाचरेत् ॥ ९९ ॥

तिथीनां पश्चिमे भागे तिथिकर्म समाचरेत् ।
नक्षत्रभेदे चाधिक्ये तिथिभेदे तदन्तिमे ॥ १०० ॥

तत्रापि चेदमावास्या सद्भावात् परतो भवेत् ।
तस्मिन् कुर्यात्तु तत् कर्म तत् स्यात् पूर्वेद्युरन्यथा ॥

अतीते भगवद्यागमाचरेदुत्तरायणे ।
पश्चात् षोडशनाडीनामन्तरे होमपश्चिमम् ॥ १०२ ॥

स्नपनाद्यं मुनिश्रेष्ठ ! चैत्रे च विषुवे तथा ।
प्रागेव भगवद्यागमाचरेद्दक्षिणायने ॥ १०३ ॥

स्नपनाद्यं तु होमान्तं नाडीषोडशकान्तरे ।
अनुकल्पे तु तत् कुर्यात् पश्चात् षोडशकान्तरे ॥१०४॥

एवमाश्वयुजे मासि विषुवेऽपि समाचरेत् ।
उत्तरायणवत् कुर्यात् तत्सङ्क्रान्तिचतुष्टये ॥ १०५ ॥

यल्लग्नहेतुकं कर्म यन्मुहूर्तनिमित्तकम् ।
तत् सशेषं समापाद्य प्रायेण विभवेन तु ॥ १०६ ॥

तस्मिन् प्राप्ते शुभे काले शश्वच्छेषं समापयेत् ।
अर्घ्याद्यैर्देवमिष्ट्वा तु अग्नौ पूर्णाहुतिं ददेत् ॥ १०७ ॥

नैमित्तिकं दिवोक्तं तु दिवैव तु समापयेत् ।
नैमित्तिकं निशोक्तं तु निश्येव तु समापयेत् ॥ १०८ ॥

यस्मिन् यस्मिन्नहोरात्रे विहितं कर्म यद्द्विज ! ।
समापयेत् तत्तस्मिन् यत्नतोऽवश्यमेव हि ॥ १०९ ॥

महोत्सवः सदाकालं विहितं न त्वतिक्रमेत् ।
निशोत्सवस्य कालः स्यात्तपनस्योदयावधि ॥ ११० ॥

कालः स्यात्तीर्थयात्रायां विंशन्नाड्यन्तरे दिवा ।
मनुष्यनिर्मिते स्थाने मुख्यकल्पे द्विजोत्तम ! ॥ १११ ॥

अनुकल्पे तु तत्कालो यावदस्तमयावधि ।
स्वयं व्यक्तादिके स्थाने दिवा स्यान्मुख्यकल्पके ॥

अनुकल्पे निशायां तु पूर्वार्धावधिको भवेत् ।
मुख्यकल्पेऽपि रात्रौ वा शयनादेस्तु संभवे ॥ ११३ ॥

मर्त्यप्रतिष्ठिते स्थाने पवित्रारोहणस्य तु ।
कालः स्यादह्नि विप्रेन्द्र ! नाडीविंशतिकान्तरे ॥

स्वयं व्यक्तादिके स्थाने यावदस्तमयावधि ।
रात्रौ तु भूषणारोपं न कदाचित् समाचरेत् ॥ ११५ ॥

चन्द्रसूर्योपरागे च तत्कालात् पूर्वमेव तु ।
चतुस्स्थानस्थितस्यापि स्थानद्वयगतस्य वा ॥ ११६ ॥

देवस्य यजनं कृत्वा होमान्तं स्नपनादिकम् ।
औपचारिकसांस्पर्शैः प्रभूतैर्हृदयङ्गमैः ॥ ११७ ॥

पयोघृतादिभिः सम्यक् सविशेषैर्महामते ! ।
ततोऽक्षसूत्रमादाय तावत् कुर्याज्जपं सुधीः ॥ ११८ ॥

यावद्राहुविमुक्तस्य चन्द्रादेर्दर्शनं भवेत् ।
पूजाहोमजपादीनां फलानन्त्यमवाप्नुयात् ॥ ११९ ॥

अन्यथा विफलं कर्म कर्तुर्व्याध्यादिपीडनम् ।
अतोऽप्यन्यदनित्यं यन्नैमित्तिकमुदाहृतम् ॥ १२० ॥

पुण्यकालवशेनैव तत्राप्येवं समाचरेत् ।
काम्यानि सर्वकर्माणि तत्तत्काले समाचरेत् ॥ १२१ ॥

अन्यथा तानि कर्माणि न सिध्यन्त्यचिरेण तु ।
स्वयंव्यक्तादिके तानि सर्वदैव समाचरेत् ॥ १२२ ॥

प्रायश्चित्तं तु वै कुर्यात् सञ्जाते तन्निमित्तके ।
तदैव वाथ कर्मान्ते त्रिदिनाभ्यन्तरे तु वा ॥ १२३ ॥

तद्गुरुत्वानुगुण्येन पञ्चसप्तदिनान्तरे ।
तदारम्भः समाप्तिर्वा ह्यन्यथा द्विगुणं चरेत् ॥ १२४ ॥

प्रायश्चित्तं तु वै कुर्यात् स्वयंव्यक्तादिके स्थले ।
स्वयंव्यक्तादिके स्थानचतुष्केऽपि महामते ! ॥ १२५ ॥

प्राकारगोपुरादीनामारम्भं स्थापनं तथा ।
तथा च कर्मबिम्बानां स्थापनं च विशेषतः ॥ १२६ ॥

जीर्णोद्धारविधानं च पुनः संस्थापनं तथा ।
अङ्कुरारोपणं चैव ध्वजारोहावरोहणे ॥ १२७ ॥

सुमुहूर्ते सुनक्षत्रे सुलग्नेऽपि समाचरेत् ।
दोषः स्यात्तदतिक्रान्तौ तच्छान्तिं च समाचरेत् ॥

द्वादशी तु कलामात्रा त्रयोदश्यां समाचरेत् ।
कर्मावसाने शयनं प्रबोधं पुनरेव हि ॥ १२९ ॥

पवित्रारोहणाद्येषु विविधेषु तु कर्मसु ।
मुहूर्तातिक्रमे दोषो न भवेत्तु कदाचन ॥ १३० ॥

यत्र तु व्यापकैर्मन्त्रैरनन्यैरधिकारिभिः ।
दिव्यशास्त्रोक्तमार्गेण पूजनं क्रियते विभोः ॥ १३१ ॥

तत्र स्यात् कालनियमो दिव्यस्थानोक्तमार्गतः ।
एतेषां द्वितयं यत्र तत्र कालस्तु सैद्धवत् ॥ १३२ ॥

यत्र त्रयाणामेकं स्यात् तत्रापि स्थानवद्भवेत् ।
पुरोदितेषु स्थानेषु सर्वेष्वपि यथाक्रमम् ॥ १३३ ॥

य उक्तः कालनियमो नियताद्येषु कर्मसु ।
मुख्यानुकल्पभेदेन द्विविधस्तदतिक्रमे ॥ १३४ ॥

तद्दोषशान्तिं वै कृत्वा तानि कुर्यादनन्तरे ।
काले यथा कर्महानिर्न कदाचित्तु जायते ॥ १३५ ॥

तथा क्रमेण वै कुर्यात्तानि कर्माणि सर्वदा ।
नित्यनैमित्तिके प्राप्ते ह्येकस्मिन् समये तदा ॥ १३६ ॥

पूर्वं नैमित्तिकं कृत्वा पश्चान्नित्यं समाचरेत् ।
नैमित्तिके ह्यनित्ये च नित्ये च युगपद्गते ॥ १३७ ॥

प्रागनित्यं ततः पश्चान्नित्यनैमित्तिकं चरेत् ।
नैमित्तिके च काम्ये च प्राप्ते काम्यं तु पूर्वतः ॥ १३८ ॥

एतेष्वपि च सर्वेषु प्रायश्चित्ताख्यकर्मणि ।
एककाले तु संप्राप्ते प्रायश्चित्तं तु पूर्वतः ॥ १३९ ॥

समाप्य पश्चाद्वै कुर्यात् तानि कर्माणि सर्वदा ।
यदा नैमित्तिकाद्यं तु विभवाद्यैस्तु विस्तृतम् ॥ १४० ॥

तदा तात्कलिकं नित्यं तत्कालात् प्राक् समाचरेत् ।
कालातिक्रमदोषस्तु तत्र न स्यात् कदाचन ॥ १४१ ॥

देशिका बहवो यत्र बहवः परिचारकाः ।
तत्तत्कर्मार्थबिम्बानि संभवन्ति बहूनि च ॥ १४२ ॥

तत्र सर्वाणि कर्माणि ह्येकदैव समाचरेत् ।
कालातिक्रमदोषस्तु विद्यते तत्र पूर्ववत् ॥ १४३ ॥

वक्ष्यन्ते देशिका ऊर्ध्वं स्वयंव्यक्तादिषु द्विज ! ।
इदानीं मूर्तिभेदेषु लक्ष्यन्ते देशिकाः शृणु ॥ १४४ ॥

परात्परस्वरूपस्य परस्य च विभोः सदा ।
आचार्यान् शास्त्रविहितांश्चतुरः परिकल्पयेत् ॥१४५॥

अष्टौ द्वादश वा कल्प्या व्यूहे मूर्त्यन्तरेऽपि च ।
वैभवेष्वपि मूर्तेषु देशिकेन्द्रास्तथैव हि ॥ १४६ ॥

साधकाश्चैवमेव स्युः सदा षोडश वा द्विज ! ।
विभवेषु स्वतन्त्रेषु साधका द्वादशैव वा ॥ १४७॥

अवतारेषु दशसु स्वतन्त्रेषु महामते ! ।
प्रासादे स्थापितेष्वेषु कल्प्या वाराधका दश ॥१४८॥

यथोक्ताचारसंयुक्तास्तथाप्यधिकसंख्यकाः ।
तत्रैतत् कल्पनं श्रेष्ठमन्यत्र तदनर्थकम् ॥ १४९ ॥

न तु केवल एवैते दशकल्प्यः कदाचन ।
परात्परादिषु सदा दश संख्यां न कल्पयेत् ॥ १५० ॥

अस्वतन्त्रेऽवतारेऽपि दशसंख्यां न कल्पयेत् ।
परिचारकसंख्यां तु वक्ष्याम्युपरि विस्तरात् ॥ १५१ ॥

इति स्वार्थाविरोधेन परार्थाधिकृतस्य तु ।
एकायनस्य विदुषः प्रोक्ताः कालाः क्रमेण तु ॥ १५२ ॥

तथा वै दीक्षितस्यापि सिद्धान्तरतचेतसः ।
इदानीं कर्मणि स्वार्थे तयोर्निरतयोः सदा ॥ १५३ ॥

नित्यानां कालभेदं तु समाकर्णय साम्प्रतम् ।
अथाभिगमनाद्यास्तु पञ्चकालाः प्रकीर्तिताः ॥ १५४ ॥

पूर्वोऽभिगमनाख्यः स्यादुपादानाभिसंज्ञितः ।
द्वितीयस्तु भवेत् काल इज्याकालस्तृतीयकः ॥ १५५ ॥

स्वाध्यायाख्यश्चतुर्थः स्यात् पञ्चमो योगसंज्ञितः ।
कालानां प्रविभागं तु पृष्टः पुष्करजन्मना ॥ १५६ ॥

नारदेनापि भेदेन प्रोवाच भगवान् स्वयम् ।
स एव क्रमशो विप्र ! प्रोच्यतेऽत्र पृथग्द्विज ! ॥१५७॥

पौष्कर :—

ज्ञातुमिच्छामि भगवन् ! कालभेदेन वै सह ।

स्वरूपं मन्त्रसिद्धान्ताद्यागमानां यथास्थितम् ॥१५८॥
श्रीभगवानुवाच—
कालमेकं द्विजश्रेष्ठ! तद्व्यापारवशात् पुनः ।
भिन्नमाभाति कर्तॄणां भगवद्भाविनां तु वै ॥ १५९ ॥
नाडिकाकलितं यद्वै अहोरात्रं तु संस्मृतम् ।
पञ्चधा विषमांशैस्तद्‌प्रभाताद्विभज्य च ॥ १६० ॥
ब्राह्मं मुहूर्तमासाद्य मन्त्रज्ञः प्रयतः शुचिः ।
शोधयित्वा स्वकं देहमायामाद्यैर्यथोदितैः ॥ १६१ ॥
मन्त्रचिन्त्यस्वदेहोऽथ कुर्यान्मन्त्रार्चनं ततः ।
जपस्तोत्रावसानं च यावदादित्यदर्शनम् ॥ १६२ ॥
कुर्याद्योगार्चनं पश्चात् पुष्पमूलफलादिकम् ।
गते दिनाष्टमे भागे स्नानपूर्वं समाचरेत् ॥ १६३ ॥
प्राग्वदाराधनं मान्त्रं तृतीयप्रहरावधि ।
ततश्चतुर्थे प्रहरे शास्त्राध्ययनमाचरेत् ॥ १६४ ॥
चिन्तनं श्रवणोपेतं व्याख्यानं स्वधियेच्छया ।
अस्तं गते दिनकरे आसाद्याराधनालयम् ॥ १६५ ॥
कुर्यान्मन्त्रार्चनं सम्यग्जपध्यानसमन्वितम् ।
आसाद्य शयनं पश्चात् स्मरेन्मन्त्रेश्वरं हृदि ॥ १६६ ॥
क्षपयित्वा निशांशं तु उत्थाय शयनात्ततः ।
योगं युञ्जीत वै मान्त्रं प्राग्वद्धृत्कमलोदरे ॥ १६७ ॥
तल्पमासाद्य वै भूयः प्रबुद्धः कमलोद्भव! ।
उत्थाय शयनं त्यक्त्वा ततः पूर्वोक्तमाचरेत् ॥ १६८ ॥
कालभेदमिमं विद्धि सम्प्रपञ्चं पुरोदितम् ।
नारद :—
एको हि श्रूयते देव! कालो लोके न चापरः ॥ १६९ ॥
पञ्चकालास्त्वयोद्दिष्टाः किमेतन्मेऽत्र संशयः ।
श्रीभगवानुवाच—
एकस्यैव हि कालस्य भेदशून्यस्य नारद! ॥ १७० ॥
आप्रभातान्निशान्तं वै पञ्चधा परिकल्पना ।
पृथक्कर्मवशात् कार्या न काला बहवः स्मृताः ॥१७१॥

नारदः—
एककालाश्रितानां च कर्मणां लक्षणं वद ।
परिज्ञातैस्तु यैः सम्यक् कृतकृत्यो भवाम्यहम् ॥१७२॥
श्रीभगवानुवाच—
ब्राह्मान्मुहूर्तादारभ्य प्रागंशं विप्र! वासरे ।
जपध्यानार्चनस्तोत्रैः कर्मवाक्चित्तसंयुतैः ॥ १७३ ॥
अभिगच्छेज्जगद्योनिं तच्चाभिगमनं स्मृतम् ।
ततः पुष्पफलादीनामुत्थायार्जनमाचरेत् ॥ १७४ ॥
भगवद्यागनिष्पत्तिकारणं प्रहरं परम् ।
तदुपादानसंज्ञं वै कर्मकालपदाश्रितम् ॥ १७५ ॥
ततोऽष्टाङ्गेन योगेन पूजयेत् परमेश्वरम् ।
साधकः प्रहरं विप्र! इज्याकालस्तु स स्मृतः ॥१७६॥
श्रवणं चिन्तनं व्याख्या ततः पाठसमन्वितः ।
स्वाध्यायसंज्ञं तं विद्धि कालांशं मुनिसत्तम! ॥ १७७ ॥
दिनावसाने संप्राप्ते पूजां कृत्वा समभ्यसेत् ।
योगं निशावसाने च विश्रमैरन्तरीकृतम् ॥ १७८ ॥
पञ्चमो योगसंज्ञोऽसौ कालांशो ब्रह्मसिद्धिदः ।
नारदः —
श्रुतो मयाखिलः पूर्वं भगवद्याग उत्तमः ॥ १७९ ॥
तस्याङ्गानि विभागेन ज्ञातुमिच्छाम्यहं पुनः ।
श्रीभगवानुवाच—
अन्तःकरणयागादि यावदात्मनिवेदनम् ॥ १८० ॥
तदाद्यमङ्गं यागस्य नाम्नाभिगमनं महत् ।
पूजनं चार्घ्यपुष्पाद्यैर्भोगैर्यदखिलं मुने! ॥ १८१ ॥
बाह्योपचारैस्तद्विद्धि भोगसंज्ञं तु नारद! ।
मध्वाज्यक्तेन दध्ना च पूजा च पशुना च या ॥१८२॥
तत् तृतीयं हि यागाङ्गं तुर्यमन्नेन पूजनम् ।
निवेदितस्य यद्दानं पूर्वोक्तविधिना मुने! ॥ १८३ ॥
सम्प्रदानं तु तन्नाम यागाङ्गं पञ्चमं स्मृतम् ।
वह्निसन्तर्पणं षष्ठं पितृयागस्तु सप्तमः ॥१८४॥

प्राणाग्निहवनं नाम्ना त्वनुयागस्तदष्टमम् ।
इत्येतत् कथितं सर्वं यत् त्वया परिचोदितम् ॥१८५॥
प्रद्याद्‌दचिराद्यद्वै तन्निष्ठानां स्वकं पदम् ।
इति प्रोक्तं क्रमेणैव कर्मभेदेन वै सह ॥ १८६ ॥
पञ्चकालविभागं तु द्वयोरप्यधिकारिणोः ।
तत्रायं हि विशेषः स्यात् सत्यसंकल्पयाजिनः ॥१८७॥
चातुरात्म्यैकनिष्ठस्य मूलधर्मैकचेतसः ।
आयामन्यासपूर्वं तु विघ्नजिद्यजनान्तिमम् ॥ १८८ ॥
इहोदितं यत् तत् सर्वं वर्जनीयं प्रयत्नतः ।
आत्मनोऽभीष्टसिध्यर्थं सात्वताद्युक्तमार्गतः ॥ १८९ ॥
पूजने दीक्षितस्यापि शिष्यस्याधिकृतेऽपि च ।
तस्यापि विहितं सर्वमायामाद्यं पुरोदितम् ॥ १९० ॥
इति सम्यक् समाख्यातः कालभेदो मया तव ।
यज्ज्ञानात् सकलं कर्म कर्तुं युज्येत सत्तमः ॥ १९१ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे द्वादशकालार्चनकालविभागनिर्णयो नाम नवमोऽध्यायः ॥

श्रीः

# दशमोऽध्यायः ॥

सनकः —

पूर्वं तु भगवद्यागवेलायामुक्तमर्चनम् ।
प्रासादावयवस्थानां लोकादीनां समासतः ॥ १ ॥
तेषां स्वरूपं नामानि स्थानान्यपि विशेषतः ।
विस्तराच्छ्रोतुमिच्छामि प्रब्रूहि वदतां वर ! ॥ २ ॥

शाण्डिल्यः —

अनेकभेदभिन्नेषु प्रासादेषु महामते ! ।
विस्तरेण समस्तेषु वृत्तायतपुरस्सरम् ॥ ३ ॥
वक्ष्ये लोकाध्वतत्वानां देवतानां च संस्थितिम् ।
सन्निरोध्य च भूलोकं पादक्षितितलेऽखिलम् ॥ ४ ॥
एवं प्रासादपीठेषु भुवर्लोकं यथास्थितम् ।
स्मरेज्जङ्घावधिर्यावत् स्वर्लोकं तत्तदूर्ध्वगम् ॥ ५ ॥
आरभ्य प्रस्तरोद्देशात् महच्छिखरभूमिगम् ।
जनोलोकं च तद्वद्यां तपःसंज्ञ तदण्डकम् ॥ ६ ॥
सत्यसंज्ञं च यल्लोकं तच्छिखायां तु संस्मरेत् ।
भावयेच्च पुरा व्याप्तिमेवं वै साप्तलौकिकीम् ॥ ७ ॥
ततश्चाध्वमयीं व्याप्तिं भावयेत्तु यथाक्रमम् ।
कुम्भाधारोपलान्तस्थमध्वषट्कं स्मरन् यजेत् ॥ ८ ॥
बीजभूतं तदन्तस्थामध्वव्याप्तिमनुस्मरेत् ।
बीजतश्चाङ्कुरीभूता परस्ताद्व्यक्तिमेति सा ॥ ९ ॥
प्रासादपीठपर्यन्तं कुम्भाधारोपलात्तु वै ।
भुवनाध्वा यथावस्थो भावनीयस्तु सर्वतः ॥ १० ॥
गर्भोच्छ्रायावधिर्यावत् पदाध्वानं विलोकयेत् ।
मन्त्राध्वा शुकनासान्तं तत्त्वाध्वा वेदिकावधि ॥११॥
कलाध्वा तु गलान्तं च वर्णाध्वा च तदूर्ध्वतः ।
एवं कृत्वाध्वकीं व्याप्तिं ततस्तत्वानि विन्यसेत् ॥१२॥
संयोज्य पार्थिवं तत्त्वं पादक्षितितले द्विज ! ।
तोयतत्वं न्यसेत् पीठे जङ्घायां तैजसं स्मरेत् ॥१३॥
ग्रीवोद्देशावधिर्यावद्वायुतत्वं तदूर्ध्वतः ।
आकाशं शिखरस्थं स्यात्तदुद्देशात् क्रमेण तु ॥ १४ ॥
न्यसेच्छब्दादितन्त्रमात्रं यावत् पादतलान्तिमम् ।
पार्श्वतो नासिके श्रोत्रे त्वक् सुधा समुदाहृता ॥१५॥
गवाक्षे चक्षुषी स्यातां जिह्वा भद्राख्यवेदिका ।
घ्राणस्तु शुकनासा स्यादास्यं द्वारमुदाहृतम् ॥ १६ ॥
विज्ञेयाः पाणयः स्तम्भाः पादाः पादशिला घटाः ।
पायुः स्याज्जलनिर्याणमुपस्थं तु तदन्तरम् ॥ १७ ॥

मनोऽन्तर्व्योमविज्ञेयं गर्वो ब्रह्मशिलागतः।
बुद्धिस्तु पिण्डिका ज्ञेया प्रकृतिः स्यात्तदन्तरम् ॥१८॥
पञ्चविंशतमो ज्ञेयः प्रतिमा पुरुषः परः।
एवं न्यस्तेषु तत्वेषु न्यस्तव्या देवताः क्रमात् ॥ १९ ॥
घटाधारोपलस्याधस्त्वनन्तो नाम नागराट्।
सहस्रसंख्यासंख्यातफणामण्डलमण्डितः ॥ २० ॥
तदूर्ध्वं संस्थितं चक्रं सहस्रारोरशोभितम्।
या शिला कलशाधारसंज्ञा तां विद्धि सर्वगा ॥ २१ ॥
सामर्थ्यशक्तिः सामान्या निष्कला पारमेश्वरी।
तदूर्ध्वसंस्थिताः कुम्भा नव संख्यास्तु ये द्विज ! ॥
तेषां विदिक्स्थितानां च चतुर्णां मध्यतो न्यसेत्।
पद्मासनगतां लक्ष्मीं निधिभिः परिवारिताम् ॥ २३ ॥
चतुर्णामपि चान्येषां रत्नराट् कौस्तुभाभिधः।
समन्त्रेण स्वनाम्ना च निधिनाथैः समन्वितः ॥ २४ ॥
भगवान् सर्वशक्त्यात्मा एकस्मिन् परिचिन्तयेत्।
षडक्षरेण मन्त्रेण निष्कलं शब्दविग्रहम् ॥ २५ ॥
तत्र मध्यमकुम्भस्य पिधाने मध्यतो न्यसेत्।
शक्तिर्वै या परा देवी विश्वसन्धारणक्षमा ॥ २६ ॥
प्रभा सर्वेश्वरी दिक्षु ज्ञानशक्तिः स्मृता च सा।
विदिग्व्यक्तिसमूहे च स्मरेदानन्दलक्षणा ॥ २७ ॥
क्रियाख्या याऽऽच्युती शक्तिः शुद्धवर्गस्य जन्मदा।
पिधाननवके त्वस्मिन्नामध्यादीशगोचरम् ॥ २८ ॥
सर्तव्याः सर्वतो व्याप्ताः क्रमेणैव महामते !।
ज्ञानभासा निवसती तथाऽनन्तवला प्रभा ॥ २९ ॥
सर्वगा ब्रह्मवदना द्योतकी सत्यविक्रमा।
संपूर्णा चेति कथिताः शक्तयो विश्वधारिकाः ॥ ३० ॥
शक्त्यष्टकं तु न्यस्तव्यं तद्बहिर्दिग्विदिक्षु च।
प्रागादीशानदिङ्निष्ठं क्रमेणैव शिलाष्टके ॥ ३१ ॥
बलवीर्यवती नित्या अनन्ताख्या स्थिरा ध्रुवा।
सत्याख्या धृतिसंज्ञा च स्थितिर्नाम्ना द्विजाष्टमी ॥
शिलानामन्तरे भूमौ षट्कं षट्कं क्रमेण तु।
न्यस्तव्यं पूर्ववर्णाच्च वर्णानां सावसानकम् ॥ ३३ ॥
क्षाणेन चिन्तयेद्व्याप्तिं तद्बहिश्चाङ्गुलीयकम्।
ततो मसूरकाधारे धर्माद्यं यद्बहिरष्टकम् ॥ ३४ ॥
तदूर्ध्वं कोणदेशेषु यदा पद्मचतुष्टयम्।
कल्पितं तु तदा विप्र ! कमलोपरि संस्थिताः ॥ ३५ ॥
मूर्तयो वासुदेवाद्याः पावकादीशपश्चिमम्।
अधोपानतलोद्देशे चक्रं कालानलप्रभम् ॥ ३६ ॥
अधिष्ठानप्रदेशे तु पद्मं धामत्रयाश्रितम्।
सर्वाभिः शक्तिभिर्युक्तस्तन्मध्ये चिन्मयः पुमान् ॥
पीठस्य दिक्चतुष्के तु पूर्वाद्युत्तरपश्चिमम्।
अनन्तविहगाम्भोजचक्राख्याः क्रमशः स्थिताः ॥ ३८ ॥
ततश्चरणयुग्मे तु प्रागादौ दिक्चतुष्टये।
वासुदेवादयः स्थाप्याः पुरुषाद्यास्तु वा क्रमात् ॥३९॥
सर्वाधारमयं चक्रं शाखामूलं समाश्रितम्।
ज्ञानक्रियात्मके तत्वे शाखयोर्युगले स्थिते ॥ ४० ॥
परमेश्वर आद्यस्तु द्वारस्योर्ध्व उदुम्बरे।
संस्थितः सर्वतो व्यापी तत्पृष्ठे मध्यदेशतः ॥ ४१ ॥
चतुष्पात् सकलो धर्मः स्थितः सत्ववतां वरः।
यदा कवाटौ द्वारस्य कल्पितौ द्विजसत्तम ! ॥ ४२ ॥
कालवैश्वानरौ देवौ ह्यपां पतिरुमाविमौ।
दक्षिणोत्तरयोगेन कवाटपरिसंस्थितौ ॥ ४३ ॥
कल्पितौ शुकनासौ वा यदा साङ्गौ महामते !।
इच्छाप्राणौ तयोः स्याप्यावग्नीषोमौ गवाक्षयोः ॥४४॥
ततो जङ्घाद्विपट्टके तु तथैवान्तरभूमिषु।
कालो विधिर्नियन्ता च शास्त्रं नानाङ्गलक्षणम् ॥ ४५ ॥
विद्याधिपतयश्चैव सरुद्रः सगणः शिवः।
प्रजापतिसमूहस्तु इन्द्रः सपरिवारकः ॥ ४६ ॥
मुनयः सनपूर्वेऽन्ये ब्रह्मसारादिकैर्वृताः।
जीमूताश्चाखिला नागा अप्सरोगण उत्तमः ॥ ४७ ॥

ओषध्यश्चैव पशवो यज्ञाः साङ्गाखिलास्तु ये ।
विद्याश्चैवापरा विद्या पावकश्चैवमारुतः ॥ ४८ ॥
चन्द्रार्कौ वारिवसुधे इत्येते देवतागणाः ।
चतुर्विंशतिसंख्याता ध्यातव्यास्तु यथाक्रमम् ॥ ४९ ॥
मूर्तयः केशवाद्यास्तु जङ्घाग्रपरिसंस्थिताः ।
पार्श्वयोः शुकनासाया भित्तिमूलसमाश्रितम् ॥ ५० ॥
गजेशं योगनिद्रां च न्यसेद्वा दक्षिणादितः ।
तदूर्ध्वं प्रस्तरोद्देशकपोततल्लसंस्थितम् ॥ ५१ ॥
नासिकानवकं यच्च यास्तदन्तरभूमयः ।
तस्मिंस्तासु च सर्वासु ह्येते स्थाप्याः क्रमेण तु ॥
चक्रशङ्खौ गदापद्मे लाङ्गलं मुसलं शराः ।
शार्ङ्गं च खड्गखेटौ तु दण्डः परशुरीतिह्वा ॥ ५३ ॥
पाशाङ्कुशौ मुद्गरं च वज्रं शक्तिसमन्वितम् ।
प्रासादे चतुरश्रे च चतुरश्रायतेऽपि च ॥ ५४ ॥
गरुडं प्रस्तरस्योर्ध्वं न्यसेत् कोणचतुष्टये ।
तदूर्ध्वं वेदिकायां तु भावनीया महामते ! ॥ ५५ ॥
एते पूर्वादियोगेन एकशृङ्गतनुस्ततः ।
देवो वामनदेहस्तु सर्वव्यापी त्रिविक्रमः ॥ ५६ ॥
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ।
ज्वलत्परशुधृग्रामो रामश्चान्यो धनुर्धरः ॥ ५७ ॥
वेदविद्भगवान् कल्की पातालशयनः प्रभुः ।
ततो ग्रीवातले ध्येयः कूर्मः पातालधारकः ॥ ५८ ॥
वराहो नारसिंहश्चाप्यमृताहरणस्तु वै ।
श्रीपतिर्दिव्यदेहोऽथ कान्तात्माऽमृतधारकः ॥ ५९ ॥
राहुजित् कालनेमिघ्नः पारिजातहरो महान् ।
लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः ॥ ६० ॥
न्यग्रोधशायी भगवानित्येते द्विजसत्तम ! ।
ततस्तु शिखरोद्देशं त्रिधाकृत्य यथासमम् ॥ ६१ ॥
यावत्तु कलशाधारवेदिका द्विजसत्तम ! ।
अधोभागे क्रमाद्ध्येयाः शिष्टा देवास्तु वैभवाः ॥
अनन्तो भगवान् देवः शक्त्यात्मा मधुसूदनः ।
विद्याधिदेवः कपिलो विश्वरूपो विहङ्गमः ॥ ६३ ॥
क्रोडात्मा वडवावक्त्रो धर्मो वागीश्वरस्तथा ।
देव एकार्णवशय इति ये द्वादश स्मृताः ॥ ६४ ॥
ध्रुवस्तु सर्वतो व्यापी तदूर्ध्वपदसंस्थितः ।
पद्मनाभस्तदूर्ध्वं तु व्यापकः परितिष्ठति ॥ ६५ ॥
शुकनासामुखे देवः पूजनीयः परः पुमान् ।
भगवान् जगदाधारो जगदीशः सनातनः ॥ ६६ ॥
वासुदेवः परं ब्रह्म जगत्कारणमच्युतः ।
लोकानध्वगणं नित्यं तत्त्वाद्यमपि देवताः ॥ ६७ ॥
प्रासादोपरि विन्यस्ताः समाक्रम्य च संस्थिताः ।
यत्र प्रासाददेहे तु शुकनासा न कल्पिता ॥ ६८ ॥
तत्राग्रतो नासिकायां वासुदेवं तु संस्मरेत् ।
नासिकात्रितये शिष्टे अच्युताद्यास्त्रयः स्थिताः ॥६९॥
अथवा पुरुषाद्यास्तु नराद्या वा द्विजोत्तम ! ।
वराहाद्यास्तु वा यद्वा धर्मसूर्यादयः क्रमात् ॥ ७० ॥
यद्वा परशुरामाद्याः स्मर्तव्याः क्रमयोगतः ।
एते तु शक्तिभिः सर्वे युक्ता वा केवलास्तु वा ॥ ७१ ॥
द्रुमैः पल्लवलतायुक्तैर्भूषिते वेदिकातले ।
विन्यसेत् पद्मरं चक्रं तेजोज्वालासहस्रधृक् ॥ ७२ ॥
ततः सामलसारेषु वासुदेवादिकान् स्मरेत् ।
तदग्रदेशे चक्राणि ध्यातव्यानि यथाक्रमम् ॥ ७३ ॥
अमलं शान्तसंज्ञं तु तथा शान्तोदितोदितम् ।
नराद्यं कृष्णपर्यन्तं शुकनासाघटे तु वै ॥ ७४ ॥
अन्तर्मण्डलकोणेषु वन्ह्यादीशानपश्चिमम् ।
वराहरूपी भगवान् दीपमूर्तिधरः प्रभुः ॥ ७५ ॥
नृसिंहरूपी पुरुषस्तथा नारायणो विभुः ।
प्रासादाङ्गेषु विप्रेन्द्र ! क्रमाद्विगदितेषु च ॥ ७६ ॥
देवताधारभूतेषु यद्यदङ्गं न कल्पितम् ।
यत्र वा तत्तदधिकं तत्रापि च समाचरेत् ॥ ७७ ॥

तत्तत्स्थाने स्वबुध्या तु देवतान्यासमूहतः ।
यद्वा ह्यनवक्लृप्ताङ्गे देवतेष्टिं तु वर्जयेत् ॥ ७८ ॥

लोकाः सप्त तथाध्वानस्तत्वसङ्घाश्च देवताः ।
ध्यातव्यास्तु निराकाराः साधकैर्द्विजसत्तम ! ॥ ७९ ॥

विमानेऽपि तथा सिद्धविबुधैश्च प्रतिष्ठिते ।
किन्तु तत्र विमानाङ्गमूर्तिनां लाञ्छनादिकम् ॥ ८० ॥

तासां स्थानानि विप्रेन्द्र ! कल्पितानि यथाविधि ।
विमानावयवांश्चापि संपरीक्ष्यैव यत्नतः ॥ ८१ ॥

पूजयेत् सावधानेन चेतसा ध्यानपूर्वकम् ।
लाञ्छनाद्येषु मूर्तीनां प्रासादावयवेष्वपि ॥ ८२ ॥

अनभिव्यक्तरूपेषु लक्षणादेः परीक्षणात् ।
स्वप्नादेश्चापि विप्रेन्द्र! देशिकेन्द्रोपदेशतः ॥ ८३ ॥

यथावत् संपरीक्षेत प्रयत्नेन द्विजोत्तम ! ।
लक्षणादिषु हीनेषु विपर्यस्तेष्वपि द्विज ! ॥ ८४ ॥

न लक्षणादिकं कुर्यादन्यथा द्विजसत्तम ! ।
लक्षणं न परीक्षेत ह्यन्यथाकरणेच्छया ॥ ८५ ॥

अन्यथाकरणार्थं तु लक्षणाद्ये परीक्षिते ।
क्षयत्यायुः कृते तस्मिन् लक्षणैर्नरकं व्रजेत् ॥ ८६ ॥

तस्मात् सर्वप्रयत्नेन स्वयंव्यक्तादिकेऽपि च ।
विमाने संस्थितानां तु मूर्तीनां लक्षणादिकम् ॥ ८७ ॥

स्थानान्यपि च तासां वै विमानावयवानपि ।
यथास्थितं परीक्ष्यैव कृत्वा मूर्तिविनिर्णयम् ॥ ८८ ॥

स्वेन स्वेन विशेषेण लाञ्छनाद्येन वै स्फुटम् ।
स्वेन स्वेन तु मन्त्रेण पूजनं च समाचरेत् ॥ ८९ ॥

प्रासादेषु स्वयंव्यक्तं श्रेष्ठं सर्वेषु सत्तम ! ।
तद्रूपी भगवान् देवः स्वयमेवावतिष्ठते ॥ ९० ॥

तत्र सन्निहितः साक्षाद्भगवान् भक्तवत्सलः ।
जाते जीर्णादिदोषेऽपि न त्यजन्ति कदाचन ॥ ९१ ॥

स्वं स्वं प्रदेशमेतास्तु मन्त्राणां शक्तयः पराः ।
प्रासादान्तः स्थिताश्चापि स्वयंव्यक्तपुरस्सराः ॥ ९२ ॥

आकारास्तु विभोः सम्यग्ज्ञेयाः पूर्वोक्तयोगतः ।
नास्त्रैर्मन्त्रैर्ध्वजैर्येषां व्यक्तिर्व्यक्ता जगत्त्रये ॥ ९३ ॥

तेऽपि लाञ्छनवृन्दं तु धारयन्त्यङ्घ्रिगोचरे ।
ललाटे चांसपट्टे तु पृष्ठे पाणितलद्वये ॥ ९४ ॥

तनूरुहचये मूर्ध्नि, कर्मिणां प्रतिपत्तये ।
तत्तल्लाञ्छनवृन्दं तु परीक्ष्यैव विशेषतः ॥ ९५ ॥

तत्तदाकारनियतैर्वाचकैः संप्रपूजयेत् ।
येषां लाञ्छनवृन्दं तु न व्यक्तं चरणादिषु ॥ ९६ ॥

तानर्चयेद् द्विषट्कार्णपुरोगाणां महामते ! ।
व्यापकानां तु मन्त्राणामेकेनाभिमतेन तु ॥ ९७ ॥

इति ज्ञात्वा यथावच्च यः पूजयति मन्त्रवित् ।
स पूजाफलमाप्नोति ह्यन्यथा विपरीतभाक् ॥ ९८ ॥

एतान्युक्तानि सर्वाणि लोकादीनि क्रमेण तु ।
समाराधनकालेषु देवस्यामिततेजसः ॥ ९९ ॥

द्वारस्थदेवार्चनं कृत्वा पूजयेत्तदनन्तरम् ।
नमस्कारपदान्तेन स्वनाम्ना प्रणवादिना ॥ १०० ॥

अर्घ्यालभनमाल्यैश्च धूपेन द्विजसत्तम ! ।
अग्रतो देवदेवस्य द्वारदेशस्य बाह्यतः ॥ १०१ ॥

अन्तर्मण्डलदेशे तु गत्वा वा पूजयेत् क्रमात् ।
एवं प्रासादभेदे तु यस्मिन् साधकसत्तमैः ॥ १०२ ॥

एककालं द्विकालं वा त्रिकालं वार्चनं द्विज ! ।
नित्यशः क्रियते तत्र सदा संनिहितो विभुः ॥ १०३ ॥

अत एव द्विजश्रेष्ठ ! तदर्चनपुरस्सरम् ।
कुर्यादाराधनं विष्णोः साधकः सिद्धिलालसः ॥१०४॥

य एवं कुरुते भक्त्या ह्यनन्यपरया सदा ।
सोऽचिराल्लभते कामानिह लोके परत्र च ॥ १०५ ॥

मोक्षार्थी कुरुते यस्तु स याति परमं पदम् ।

सनकः —

प्रासादानां स्वयंव्यक्तपूर्वाणां तु विशेषतः ॥ १०६ ॥

प्रासादं तु स्वयंव्यक्तमत्यर्थं त्वं प्रशंससि ।

कीदृशं तत्स्वरूपं स्यादन्येषां वापि कीदृशम् ॥ १०७ ॥
कीदृशी च महत्तास्य ज्ञातुमिच्छामि सांप्रतम् ।
शाण्डिल्यः —
यदिदं दृश्यते विष्णोर्मायया निर्मितं जगत् ॥ १०८ ॥
कालादिबहुभिर्भेदैर्भिन्नं नानास्वरूपकैः ।
तदीये प्रभवो ह्यह्नि प्रलयश्च निशागमे ॥ १०९ ॥
दिव्यं युगसहस्रं हि तदीयं विद्धि वासरम् ।
रात्रिश्च तावती ज्ञेया एवं रात्रिक्षये सति ॥ ११० ॥
प्रवर्तमाने त्वहनि काले सन्ध्याख्यलक्षणे ।
स्वकारणमनुज्झित्य कार्यार्थं मुनिपुङ्गव ! ॥ १११ ॥
ज्ञानयोगप्रभावेन अमेयमहिमावृतम् ।
प्रेरितं नाभिरन्ध्रेण तेन हार्दं कुशेशयम् ॥ ११२ ॥
विज्ञप्तिमात्ररूपं तु स्वस्यान्तःकरणे स्थितम् ।
सहस्रार्कप्रतीकाशं सहस्रशशिकेसरम् ॥ ११३ ॥
सहस्रवह्निगर्भं च हेमनालं महाप्रभम् ।
तन्मध्ये मानसो ब्रह्मा तेन सृष्टश्चतुर्मुखः ॥ ११४ ॥
जगद्विभवकृद्विप्र ! विद्यादेहः सनातनः ।
सर्वसंस्कारसंपूर्णो वेदवेदाङ्गपारगः ॥ ११५ ॥
अणिमाद्यष्टकोपेतः सिसृक्षाशक्तिभिर्युतः ।
न तस्य विदितश्चासौ यदा यातः सगर्वताम् ॥ ११६ ॥
अशीति प्रत्ययं लब्ध्वा रजसा कलुषीकृतः ।
तस्मिंश्चान्तर्हिते तस्य पौष्करस्य मतिस्तदा ॥ ११७ ॥
विपर्यस्ता ततः सृष्टौ प्रवृत्तिर्नाभवद्द्विज ! ।
कार्याकार्यविशेषज्ञो नाभूद्बुद्धिश्च चेतनः ॥ ११८ ॥
ततः प्रसन्नचेतास्तु तपस्तेपे सुदुश्चरम् ।
अचिरात् पुण्डरीकाक्षं द्रष्टुकामः प्रजापतिः ॥ ११९ ॥
ततस्तु तप्यमानस्य ब्रह्मणो द्विजसत्तम ! ।
हरेः स्तोत्रार्थमुद्भूता बुद्धिर्बुद्धिमतांवर ! ॥ १२० ॥
ततो जगौ परं जप्यं साञ्जलिप्रग्रहो विभुः ।
ब्रह्मा —
" नमस्ते ब्रह्महृदय ! नमस्ते ब्रह्मपूर्वज ! ॥ १२१ ॥
योगार्थनयनश्रेष्ठ ! सांख्ययोगनिधे ! विभो ! ।
व्यक्ताव्यक्तकराचिन्त्य ! क्षेमं पन्थानमास्थित ! ॥
विश्वभुक् ! सर्वभूतानामन्तरात्मन्नयोनिज ! ।
अहं प्रसादजस्तुभ्यं लोकधाम्ने स्वयम्भुवे ॥ १२३ ॥
त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ।
चाक्षुषं यद्द्वितीयं मे जन्मेहासीत् पुरातनम् ॥ १२४ ॥
त्वत्प्रसादाच्च मे जन्म तृतीयं वाचिकं महत् ।
तत्वतः श्रावणं चापि चतुर्थं जन्म मे विभो ! ॥ १२५ ॥
नासिक्यं चापि मे जन्म त्वत्तः पञ्चममुच्यते ।
अण्डजं चापि मे जन्म त्वत्तः षष्ठं विनिर्मितम् ॥ १२६ ॥
इदं च सप्तमं जन्म पद्मजं त्वमितप्रभ ! ।
सर्गे सर्गे ह्यहं पुत्रस्तृतीयगुणवर्जित ! ॥ १२७ ॥
प्रथमः पुण्डरीकाक्षः प्रधानगुणकल्पितः ।
त्वमीश्वर ! प्रभावश्च भूतानां च प्रभावनः ॥ १२८ ॥
त्वं पञ्चकालकर्तॄणां गतिस्त्वं पाञ्चरात्रिक ! ।
त्वया हि निर्मितोऽहं वै वेदचक्षुर्वचोऽतिग ! ॥ १२९ ॥
स्रष्टुं जगदिदं सर्वं चेतनाचेतनात्मकम् ।
का शक्तिर्मम देवेश ! जगत् स्रष्टुं जगत्प्रभो ! " ॥ १३० ॥
एवं स्तुतः स भगवान् पुरुषः सर्वतोमुखः ।
स्वरूपं दर्शयामास तस्मै दिव्यमनुत्तमम् ॥ १३१ ॥
तं दृष्ट्वा महता युक्तो हर्षेण कमलासन ! ।
आनन्दाश्रुसमाविष्टः प्रणम्य प्राञ्जलिः स्थितः ॥ १३२ ॥
ततस्तु पुण्डरीकाक्षस्तमुवाच जगत्पतिः ।
" सृज प्रजाः पुत्र ! सर्वा मुखतः पादतस्तथा ॥ १३३ ॥
श्रेयस्तव विधास्यामि बलं तेजश्च सुव्रत ! ।
वेदं च मत्तो गृह्णीष्व सात्वतं नाम नामतः ॥ १३४ ॥
तेन सर्वं कृतयुगं स्थापयस्व यथाविधि ।
प्रजानामपि सर्वासां संवृत्ते सर्गकर्मणि ॥ १३५ ॥
दिव्यस्य महतो धाम्नः साक्षाद्व्यक्तस्य चान्तरे ।

स्वयंव्यक्तेन दिव्येन ह्याकारेणामलेन च ॥ १३६ ॥
अनन्तभोगिशयने शयानः पङ्कजेक्षणः ।
प्रकाशयिष्यति पुरो वासुदेवः परात्परः ॥ १३७ ॥
तमाराधय देवेशं विमानाभ्यन्तरस्थितम् ।
सर्वेषामपि लोकानां सृष्टिस्थित्यन्तकारणम् ॥ १३८ ॥
वासुदेवं तु परमं पुमांसं भक्तवत्सलम् ।
द्वादशाक्षरमन्त्रेण भोगैः सांस्पर्शिकादिकैः ॥ १३९ ॥
हृदयङ्गमसंश्लेष्य विविधैरौपचारिकैः ।
स्वाधिकारप्रवृत्त्यर्थं लोकानां हितकाम्यया ॥ १४० ॥
महोपनिषदाख्येन शास्त्रेणोक्तप्रकारतः ।
यत्पौष्कराख्यया लोके प्रथिमानं प्रयास्यति ॥ १४१ ॥
पौष्करस्य तवोक्तत्वात् प्रथितं तु तथा भवेत् ।
महाविभूतिरिति च तद्वक्ष्याम्यपरे युगे" ॥ १४२ ॥
अस्मिन्नादौ कृतयुगे समतीते तु मानुषे ।
ततो ब्रह्मा नमश्चक्रे देवाय हरिमेधसे ॥ १४३ ॥
ब्रह्मा चाग्र्यं स जग्राह सनिषत्संहितान्वितम् ।
कर्मारम्भादिभिर्मन्त्रैर्द्विषट्कार्णसमन्वितैः ॥ १४४ ॥
दिव्यैः समन्वितं विप्र ! द्वादशाध्यात्मसंयुतम् ।
अनिच्छातोऽधिकारीणां तत्प्रात्यैकफलप्रदम् ॥ १४५ ॥
चातुरात्म्यैकनिष्ठं च वासुदेवमुखोद्गतम्" ।
एवं स भगवान् देव आद्यं वेदं सनातनम् ॥ १४६ ॥
उपदिश्य ततो विप्र ! ब्रह्मणेऽमिततेजसे ।
दत्वा श्रेयो बलं तेजः सृष्टिकर्मप्रवर्तकम् ॥ १४७ ॥
जगाम तमसःपारं यत्राव्यक्तं व्यवस्थितम् ।
ततोऽथ वरदो देवो ब्रह्मा लोकपितामहः ॥ १४८ ॥
असृजत् स तदा लोकान् कृत्स्नान् स्थावरजङ्गमान् ।
एवं सृष्ट्वा जगत् सर्वं भूयश्च कमलासनः ॥ १४९ ॥
कदा द्रक्ष्याम्यहं देवं लोकानां हितकारिणम् ।
वासुदेवं विमानान्तःशयानं पीतवाससम् ॥ १५० ॥
इति चिन्तासमाविष्टस्तपस्तेपे सुदुश्चरम् ।

प्रादुरासीत् ततो दिव्यं विमानं परमाद्भुतम् ॥१५१॥
प्रकाशयद्दिशः सर्वाः प्रकाशेनामलेन च ।
उपानजगतीयुक्तं पीठाङ्घ्रिप्रस्तरादिकैः ॥ १५२ ॥
ग्रीवाशिखरतत्संस्थवेदीघटशिखान्तिमैः ।
दिव्यैरवयवैर्युक्तं दिव्यालङ्कारशोभितम् ॥ १५३ ॥
वृत्तायतं तु परितः शुकनासापरिष्कृतम् ।
तं दृष्ट्वा महदाश्चर्यमानन्दाश्रुपरिप्लुतः ॥ १५४ ॥
पुलकाचितसर्वाङ्गः प्रीतिविस्फारितेक्षण ः ।
ससम्भ्रमं समुत्थाय प्रणम्य प्राञ्जलिः स्थितः ॥ १५५ ॥
पीठाद्येषु शिखान्तेषु विमानावयवेषु च ।
भूराद्यं सत्यपर्यन्तं लोकानां सप्तकं क्रमात् ॥ १५६ ॥
अध्वनां भुवनाध्वादिषट्कं वर्णाध्वपश्चिमम् ।
धरादिपुरुषान्तं च तत्त्ववृन्दं द्विजोत्तम ! ॥ १५७ ॥
सत्तास्वरूपमास्थाय संस्थितं सन्ददर्श ह ।
ततस्तु देवतावृन्दं क्रमेण समलोकयत् ॥ १५८ ॥
पीठस्याधारभागे तु ह्यनन्तो नाम नागराट् ।
चक्रं सामर्थ्यशक्त्यादिशक्तिसङ्घं तथैव च ॥ १५९ ॥
ज्ञानभासादिकानां तु शक्तीनामष्टकं तथा ।
बलवीर्यवती पूर्वमष्टकं स्थितिपश्चिमम् ॥ १६० ॥
अकारादि क्षकारान्त वर्णचक्रं द्विजोत्तम ! ।
ततः पीठप्रदेशाच्च धर्माद्यं च द्विरष्टकम् ॥ १६१ ॥
चक्रं कालानलज्योतिः पद्मं धामत्रयाश्रितम् ।
चिन्मयः पुरुषो मध्ये सर्वाभिः शक्तिभिर्युतः ॥ १६२ ॥
दिक्चतुष्के ह्यनन्ताद्यं ततश्चरणवर्गके ।
वासुदेवादिकं दिक्षु शाखामूले सुदर्शनम् ॥ १६३ ॥
ज्ञानक्रियात्मके तत्त्वे शाखयोः परमेश्वरम् ।
आद्यं तु दुस्वरे ह्यूर्ध्वे तत्पृष्ठे धर्म एव च ॥ १६४ ॥
कवाटयोस्तु कालाग्नि वरुणं तु ततो द्विज ! ।
स्तम्भयोः शुकनासाया इच्छाप्राणौ गवाक्षयोः ॥१६५॥
अग्नीषोमौ ततो जङ्घा द्विषट्केऽन्तरभूमिषु ।

कालादिवसुधान्तं च जङ्घाग्रे केशवादिकम् ॥१६६॥
नासिकानां तु नवके कपोतस्थेऽन्तरेऽपि च।
चक्राद्यायुधसंघातं सत्तारूपेण संस्थितम् ॥ १६७ ॥
शुकनासामुखे देवं वासुदेवं जगत्पतिम्।
नासिकात्रितये शिष्टे ह्यच्युताद्यं क्रमात् स्थितम् ॥
सशक्तिकं तु पद्माद्यैर्भूषिते वेदिकातले।
सुदर्शनं तु षडरं घटानां तु चतुष्टये ॥ १६९ ॥
वासुदेवादिकान् विप्र! रथाङ्गानां तदग्रतः।
अमलाद्यं चतुष्कं तु क्रमेणोदितपश्चिमम् ॥ १७० ॥
अध्यक्षाद्यादिमूर्त्यन्तं शुकनासाघटेषु वै।
सर्वलोकमयं विप्र! सकलाध्वमयं तथा ॥ १७१ ॥
सर्वतत्त्वमयं चैव सर्वदेवमयं तथा।
इति क्रमेण सन्दृश्य विमानं हृष्टचेतनः ॥ १७२ ॥
ततः प्रदक्षिणीकृत्य चतुर्धा प्रणिपत्य च।
सर्वाङ्गैर्दण्डवद्भूमौ भक्त्या तु पुरुषोत्तमम् ॥ १७३ ॥
ततः कृतार्थमात्मानं मन्यमानः प्रविश्य च।
अभ्यन्तरं विमानस्य गर्भभूमौ तु मध्यतः ॥ १७४ ॥
आत्मप्रमाणरचिते मृदुस्पर्शे मनोहरे।
शुद्धस्फटिकसंकाशे दीप्यमानेऽतिभास्वरे ॥ १७५ ॥
फणामण्डलमध्यस्थैर्मणिभिर्दीपिते तथा।
अनन्तभोगशयने शयानं पीतवाससम् ॥ १७६ ॥
निष्केवलेन सत्त्वेन संपन्नं रुचिरप्रभम्।
वपुषा सुन्दरेणैव दिव्येनाविकृतेन च ॥ १७७ ॥
मुञ्चन्तमनिशं देहादालोकं ध्यानलक्षणम्।
प्रयत्नेन विनाऽज्ञाननाशकृद्ध्यायिनां महत् ॥ १७८ ॥
सवस्त्राभरणैर्युक्तं स्वानुरूपैरनूपमैः।
चिन्मयैः स्वप्रकाशैश्च अन्योन्यरुचिरञ्जितैः ॥ १७९ ॥
दन्तज्योत्स्नावितानैस्तु प्रकटीकृतदिङ्मुखम्।
रेखोत्थितैश्च कल्हारैः पादपद्मतलेऽङ्कितम् ॥ १८० ॥
निमग्नजनसन्तापशमनव्यापृताननम्।
करुणापूर्णहृदयं जगदुद्धरणोद्यतम् ॥ १८१ ॥
स्वदेहतेजःसंभूतज्वालामण्डलमध्यगम्।
घनकुञ्चितनीलालि गलिताञ्जनसन्निभैः ॥ १८२ ॥
कर्पूरधूसरैर्दिव्यैः पुष्पसंवलितान्तरैः।
किरीटमकुटाक्रान्तैः शोभितं सुशिरोरुहैः ॥ १८३ ॥
ईषदारक्तगोक्षीरशुद्धनीलाब्जलोचनम्।
शीतलैर्दृष्टिपातैस्तु जगदाप्यायकारणम् ॥ १८४ ॥
सुभ्रूललाटं सुनसं सुस्मिताधरविद्रुमम्।
सौन्दर्यचन्द्रसंकाशविलसद्गण्डमण्डलम् ॥ १८५ ॥
पूर्वकर्मानलार्तानां ध्यायिनां खेदशान्तये।
स्वदन्तेन्दुचयोत्थेन ह्लादयन् गोगणेन तु ॥ १८६ ॥
मुखसौन्दर्यनिष्यन्दचिबुकस्थलशोभितम्।
सविलासस्मिताधारं विभ्राणं मुखपङ्कजम् ॥ १८७ ॥
कम्बुग्रीवं महाबाहुं श्रीवत्साङ्कितवक्षसम्।
सिंहस्कन्धं विशालाक्षं दीर्घबाहुं महोरसम् ॥ १८८ ॥
शङ्खचक्राङ्कितारक्तकरद्वयविभूषितम्।
दक्षिणं भोगिभोगाभमुपधाय महाभुजम् ॥ १८९ ॥
प्रसारितोत्तरकरं कटिदेशस्य पार्श्वतः।
कौस्तुभेनाङ्कितोरस्कं लक्ष्मीभूषितवक्षसम् ॥ १९० ॥
आब्रह्मस्तम्बपर्यन्तजगद्ग्रासतनूदरम्।
ईषत्कुञ्चितवामाङ्घ्रिपङ्कजं पङ्कजेक्षणम् ॥ १९१ ॥
प्रसार्य दक्षिणं पादमीषदुत्तानशायिनम्।
अनेकरत्नखचितकिरीटमकुटोज्ज्वलम् ॥ १९२ ॥
उद्यदादित्यसंकाशैर्विचित्रैर्मणिसंचयैः।
विराजमानया सम्यक् स्फुरच्चूलिकयोज्ज्वलम् ॥
रत्नावतंसप्रभया दीप्तश्रवणशेखरम्।
ललाटान्तसमालम्बि वालालंकारभूषितम् ॥ १९४ ॥
ललाटतिलकेनैव सुन्दरेण विराजितम्।
अनेकरविसङ्काशलसन्मकरकुण्डलम् ॥ १९५ ॥
प्रभूतमणिमुक्ताढ्यग्रैवेयकविराजितम्।

वज्रवैडूर्यमाणिक्यपद्मरागादिशोभितैः॥ १९६ ॥
हारैरनेकैर्विविधैरुपशोभितवक्षसम्।
उद्यदादित्यसंकाशकौस्तुभेन विराजितम्॥ १९७ ॥
भ्राजयन्त्या जगत् सर्वं स्वतेजोभिर्निरन्तरम्।
मालया वैजयन्त्या च भ्राजमानमहोरसम्॥ १९८ ॥
नानारत्नविचित्रेण मुक्तादामविलम्बिना।
स्फुरता ब्रह्मसूत्रेण काञ्चनेन सुशोभितम्॥ १९९ ॥
द्युतिमद्भिर्महारत्नै रचितेन सुवर्चसा।
काञ्चनेनाथसूत्रेण उदरे कृतबन्धनम्॥ २०० ॥
नानामाणिक्यविलसत्कटिसूत्रेण शोभितम्।
अनेकरत्नसन्दर्भरशनादाममण्डितम्॥ २०१ ॥
अनेककोटिमार्ताण्डविलसत्पीतवाससम्।
अनेकरत्नसंभिन्ननूपुरादि विभूषितम्॥ २०२ ॥
एवमन्यैश्च विविधैः केयूरकटकादिकैः।
यथार्हैर्भूषणै रम्यैर्ज्वलद्भिः परिभूषितम्॥ २०३ ॥
प्रावृड्जलदसंकाशं भिन्नाञ्जनचयप्रभम्।
अभिन्नपूर्णषाड्गुण्यविभवेनोपबृंहितम्॥ २०४ ॥
योगिध्येयमजं नित्यं जगज्जन्मादिकारणम्।
अनादिनिधनं देवं साक्षाल्लक्ष्मीपतिं प्रभुम्॥ २०५ ॥
अप्राकृततनुं शान्तं वासुदेवं परात् परम्।
जनलोकगतैःसिद्धैः सनकाद्यैरभिष्टुतम्॥ २०६ ॥
नेत्राभ्यामनिमेषाभ्यां तृषिताभ्यां पिबन्निव।
उदैक्षत ब्रह्मयात्मा प्रणिपत्य मुहुर्मुहुः॥ २०७ ॥
स्तुत्वा च विविधैस्स्तोत्रैर्हर्षगद्गदया गिरा।
तदादाय महद्दिव्यं विमानं शिरसा ततः॥ २०८ ॥
जगाम भवनं विप्र! स्वकीयं कमलासनः।
तत्र संपूजयामास द्विषट्कब्रह्मविद्यया॥ २०९ ॥
महता विभवेनैव ब्रह्मा लोकपितामहः।
अत्रान्तरे तु विप्रेन्द्र! पौष्करस्य महात्मयः॥ २१० ॥
जिज्ञासायां तु जातायां शास्त्रे पौष्करसंज्ञके।
प्रादुर्भूतस्तदा विप्र! वासुदेवो जगत्पतिः॥ २११ ॥
महोपनिषदं शास्त्रं ग्राहयामास पद्मजम्।
यो मूलवेदो विख्यातस्ताद्दक् तस्मात् परिस्रुतम्॥
सिद्धिमोक्षप्रदं विप्र! सर्वशास्त्रार्थगर्भितम्।
नानाव्यूहसमोपेतं मूर्त्यन्तरसमन्वितम्॥ २१३ ॥
नानाविभवसंयुक्तं प्रादुर्भावान्तरान्वितम्।
लक्ष्म्यादिशङ्खचक्राख्यगारुत्म सद्गिरीश्वरैः॥ २१४ ॥
सगणैरस्त्रनिर्घैस्तु संपूर्णं द्विजसत्तम!।
बीजैः पिण्डात्मकैश्चैव पदैःसंज्ञामयैर्द्विज!॥ २१५ ॥
मन्त्रव्यूहैस्तु विविधैर्ध्यानैश्च विविधैर्युतम्।
तत्वसंख्यासमाख्यातैर्मण्डलैर्भद्रकादिभिः॥ २१६ ॥
तथा चतुर्दशव्यूहैरनेकैकजगर्भितैः।
षड्विंशैररकैर्युक्तैश्चक्राब्जैर्नवभिस्तथा॥ २१७ ॥
द्वारकादिसहस्रसारपर्यन्तैश्च सकारणैः।
तथाष्टादशभिर्विप्र! मिश्रचक्राभिधानकैः॥ २१८ ॥
आचार्यावरकैणैव रूपेण परिसंस्थितैः।
महाख्यनवनाभेन विश्वभेदस्थितेन च॥ २१९ ॥
घण्टाखक स्त्रयधूवैस्तु क्रियाङ्गैर्विविधैरपि।
नानालक्षणसंयुक्तैः कुण्डैश्च परिभूषितम्॥ २२० ॥
वत्सरोत्सवपर्यन्तैः स्थापनाद्यैश्च कर्मभिः।
नित्यनैमित्तिकैःकाम्यैः परिपूर्णं द्विजोत्तम!॥ २२१ ॥
स्वयंव्यक्तादिभेदोत्थैः प्रासादैश्च समन्वितम्।
तस्याधिकारवृत्त्यर्थं लोकानां हितकाम्यया॥ २२२ ॥
ततस्तदुक्तमार्गेण विविधैर्भोगसञ्चयैः।
नित्यनैमित्तिकैः काम्यैर्विविधैश्च महोत्सवैः॥ २२३ ॥
तत्र प्रतिदिनं कुर्वन् पूजां लोकपितामहः।
व्यापारान् जगतां चक्रे विविधान् लोकपूजितः॥
ततो मन्वन्तरे विप्र! प्राप्ते वैवस्वताभिधे।
इक्ष्वाकुर्नामनृपतिः सूर्यवंशसमुद्भवः॥ २२५ ॥
महात्मा सततं योगी सर्वभूतहिते रतः।

द्रष्टुकामः प्रसन्नात्मा वासुदेवं जगत्पतिम् ॥ २२६ ॥
तापसं वेषमास्थाय तपश्चर्तुं गतो वनम् ।
प्रविश्य तु तपस्तेपे शाकमूलफलाशनः ॥ २२७ ॥
ग्रीष्मे पञ्चाग्निमध्यस्थो नयन् कालं महातपाः ।
वार्षिके तु निरालम्बो हेमन्ते तु सरोजले ॥ २२८ ॥
इन्द्रियाणि समस्तानि नियम्य हृदये पुनः ।
मनो विष्णौ समाविश्य मन्त्रं वै द्वादशाक्षरम् ॥२२९॥
जपतो वायुभक्षस्य तस्य राज्ञो महात्मनः ।
आविर्बभूव भगवान् ब्रह्मा लोकपितामहः ॥ २३० ॥
तमागतमथालोक्य पद्मयोनिं चतुर्मुखम् ।
प्रणम्य भक्तिभावेन स्तुत्या च परितोषयन् ॥ २३१ ॥
"नमो हिरण्यगर्भाय, जगत्स्रष्ट्रे महात्मने ।
वेदशास्त्रार्थविदुषे, चतुर्वक्त्राय ते नमः" ॥ २३२ ॥
इति स्तुतो जगत्स्रष्टा ब्रह्मा प्राह नृपोत्तमम् ।
तपस्यभिरतं शान्तं त्यक्तराज्यमहासुखम् ॥ २३३ ॥
"लोकप्रकाशको राजन् सूर्यस्तव पितामहः ।
वसूनामपि सर्वेषां सदा मान्यो मनुः पिता ॥ २३४ ॥
कृतवन्तौ तपः पूर्वं दीर्घं पितृपितामहौ ।
तावतीव तपस्तेऽद्य वर्तते निस्पृहस्य वै ॥ २३५ ॥
किमर्थं राज्यभोगं तु त्यक्त्वा सर्वं नृपोत्तम ! ।
तपः करोषि घोरं त्वमाचक्ष्व च महामते !" ॥ २३६ ॥
इत्युक्तो ब्रह्मणा राजा तं प्रणम्याब्रवीद्वचः ।
"द्रष्टुमिच्छंस्तपश्चर्याबलेन मधुसूदनम् ॥ २३७ ॥
करोम्यत्र तपो ब्रह्मन् ! शङ्खचक्रगदाधरम्" ।
इत्युक्तः प्राह राजानं पद्मजन्मा हसन्निव ॥ २३८ ॥
"न शक्यस्तपसा राजन् द्रष्टुं नारायणो विभुः ।
मादृशैश्च न दृश्योऽजः केशवः क्लेशनाशनः ॥ २३९ ॥
त्वादृशैः किं पुनस्त्वीशो माधवस्त्विति भावय ।
पुरातनीं पुण्यकथां कथयामि निबोध मे ॥ २४० ॥
अहं पुरा महाराज ! वासुदेवं सनातनम् ।
द्रष्टुकामः प्रजासर्गे तपश्चर्यां सुदारुणाम् ॥ २४१ ॥
अकार्षं तपसश्चान्ते भगवान् भक्तवत्सलः ।
प्रसन्नः प्रादुरासीन्मे पश्यतः पद्मलोचनः ॥ २४२ ॥
प्रणम्य पुण्डरीकाक्षमस्तौषं विविधैः स्तवैः ।
तत्र श्रेयो बलं तेजो दत्वा स्रष्टुं जगद्विभुः ॥ २४३ ॥
अथोपदिष्टवान् मह्यमाद्यं वेदं सनातनम् ।
सदागमाख्यं मूलं तु परब्रह्मप्रकाशकम् ॥ २४४ ॥
दिव्यं सिद्धिप्रदं चैव शान्तिकृद्विश्वकर्मिणाम् ।
सर्गस्योत्तरकाले तु विमाने दिव्यलक्षणे ॥ २४५ ॥
अनन्तभोगशयने शयानः पद्मलोचनः ।
प्रादुर्भविष्यति पुरस्तं पूजय विशेषतः ॥ २४६ ॥
द्वादशार्णेन मन्त्रेण पौष्करेणोक्तमार्गतः ।
वक्ष्यमाणेन विधिना यथावत् कमलोद्भव ! ॥ २४७ ॥
इत्युक्त्वान्तर्दधे देवः परमात्मा जगत्प्रभुः ।
प्रादुरासीत्ततो दिव्यं विमानं परमाद्भुतम् ॥ २४८ ॥
शास्त्रं चापि मया लब्धं महोपनिषदाख्यकम् ।
तत्रस्थं देवदेवेशं वासुदेवं जगत्पतिम् ॥ २४९ ॥
पूजयामि विधानेन तदुक्तेन नृपोत्तम ! ।
तदहं ते प्रयच्छामि केशवानन्दमन्दिरम् ॥ २५० ॥
विसृज्येदं तपो घोरं पुरं व्रज निजं नृप ! ।
प्रजानां पालनं धर्मस्तपश्चैव महीभृतः ॥ २५१ ॥
विमानं प्रेषयिष्यामि दिवः सिद्धं नृपोत्तम ! ।
संयुक्तं पञ्चकालज्ञैः सद्ब्रह्मनिरतैर्द्विजैः ॥ २५२ ॥
तत्राराधय देवेशं बाह्यान्तरखिलैः शुभैः ।
वासुदेवमनन्ताहौ शयानं पुरुषोत्तमम् ॥ २५३ ॥
द्विषट्कार्णेन मन्त्रेण पौष्करोक्तविधानतः ।
क्रतुभिर्विविधैश्चैव यजन् देवं नृपोत्तम ! ॥ २५४ ॥
निष्कामो नृपशार्दूल ! प्रजा धर्मेण पालय ।
प्रसादाद्वासुदेवस्य मुक्तिस्ते भविता नृप !" ॥ २५५ ॥
इत्युक्त्वा पौष्करं शास्त्रमुपदिश्य यथाक्रमम् ।

तस्मै तु भूमिपालाय विधानान्तरभूत् पुनः ॥ २५६ ॥
इक्ष्वाकुश्चिन्तयन्नास्ते पद्मयोनेर्वचो द्विज ! ।
आविर्बभूव पुरतो विमानं तन्महीभृतः ॥ २५७ ॥
ब्रह्मदत्तं द्विजयुतं माधवानन्तयोः शुभम् ।
तं दृष्ट्वा परया भक्त्या नत्वा च पुरुषोत्तमम् ॥ २५८ ॥
ऋषीन् प्रणम्य वृद्धांश्च तदादाय ययौ पुरम् ।
पौरैर्जनैश्च नारीभिर्वृद्धं शोभासमन्वितैः ॥ २५९ ॥
लाजानि विक्षिपद्भिश्च ततो राजा स्वकं गृहम् ।
स्वमन्दिरे विशाले तु विमानं वैष्णवं शुभम् ॥ २६० ॥
संस्थाप्याराधयामास भवितात्मा नृपोत्तम ! ।
पौष्करोक्तविधानेन तैर्द्विजैरर्चितं हरिम् ॥ २६१ ॥
मानुष्यः शोभनाङ्ग्यस्तु दृष्ट्वा तु हरिचन्दनम् ।
मालाः कृत्वा सुगन्धाढ्याः प्रीतिं तस्य वितेनिरे ॥
पौराः कर्पूरश्रीखण्डकुङ्कुमाद्यं ददुस्तथा ।
पुष्पाणि विष्णुयोग्यानि ददुरानीय भूपतेः ॥ २६३ ॥
तत्तत्कर्मार्थबिम्बानि प्रतिष्ठाप्य यथाविधि ।
स्वे स्वे यथोदिते स्थाने सन्निवेश्य सुविस्तृतम् ॥
ततोऽष्टाष्टकसंख्यैस्तु भोगैः सर्वैरकृत्रिमैः ।
प्रधानैः साङ्गभोगैस्तु विविधैरौपचारिकैः ॥ २६५ ॥
सांस्पर्शिकैस्तथा विप्र ! हृदयङ्गमसंज्ञितैः ।
अर्चयित्वा जगन्नाथं वासुदेवं परात्परम् ॥ २६६ ॥
त्रिसन्ध्यं परया भक्त्या जप्यैः स्तोत्रैश्च वैष्णवैः ।
कारयामास देवस्य सुचिरं वत्सरोत्सवम् ॥ २६७ ॥
तथा च वत्सरीयाणि नानानैमित्तिकान्यपि ।
प्रतिष्ठां तत्प्रकारं च स्थानभेदं तथैव च ॥ २६८ ॥
उत्सवादिप्रकारं च वक्ष्याम्युपरि विस्तृतम् ।
भोगैश्च तोषयित्वा तं सर्वदेवमयं हरिम् ॥ २६९ ॥
निष्कामो दानधर्मैश्च परं ज्ञानमवाप्तवान् ।
यजन् यज्ञान् महीं रक्षन् स कुर्वन् केशवार्चनम् ॥
उत्पाद्य पुत्रान् पित्रर्थं चिरात् त्यक्त्वा कलेवरम् ।
॥
ध्यायन्निष्कलमयं देवं प्राप्तवान् वैष्णवं पदम् ॥ २७१ ॥
ततश्चैतत् क्रमाल्लेभे देवः सर्वेश्वरः स्वयम् ।
रामो राजीवनयनो भ्रातृभैर्देस्त्रिभिः सह ॥ २७२ ॥
निहन्ता राक्षसानां यो मनुष्योऽहमिति स्मरन् ।
दशेन्द्रियाननं घोरं यो मनोरजनीचरम् ॥ २७३ ॥
विवेकशरजालेन शमं नयति देहिनाम् ।
कृतत्यक्तस्तु यो वेत्ति स्वभावं दिव्यमुत्तमम् ॥ २७४ ॥
ददौ विभीषणायासौ प्रियाय प्रियकारिणे ।
शास्त्रोपदेशपूर्वं तु विमानं दिव्यलक्षणम् ॥ २७५ ॥
सोऽपि तच्छिरसा गृह्य ययौ देशं स्वकं प्रति ।
रवौ मध्यन्दिने प्राप्ते कवेरतनया तटे ॥ २७६ ॥
चन्द्रपुष्करिणीमध्येऽनन्तपीठेऽवतारयत् ।
दक्षाध्वरे च रुद्रेण परिभूतो निशाकरः ॥ २७७ ॥
मूर्ध्नि तस्य कृतावासो यत्र तप्त्वा महत्तपः ।
यस्मिंस्तु पुण्डरीकाक्षो देवो वामनरूपभृक् ॥ २७८ ॥
प्राप्तवाग्रयसंस्कारं यत्र तु स्वयमेव हि ।
विमानप्रवरं दिव्यं श्रीरङ्गमिति शब्दितम् ॥ २७९ ॥
प्रतिष्ठास्यति चात्रेति विनिश्चित्य जगत्पतिः ।
गणेशं योगनिद्रां च रक्षाहेतोः समादिशत् ॥ २८० ॥
तत्रावतार्य तन्मध्ये विमानं तद्विभीषणः ।
ततः संपूजयामास तैर्द्विजैरर्चितं हरिम् ॥ २८१ ॥
रमणीयैस्तु विविधैर्भोगैः सांस्पर्शिकादिकैः ।
तदुद्धर्तुमसौ यत्नमकरोद्बलवानपि ॥ २८२ ॥
न शशाक मनागस्मादेतच्चलयितुं तदा ।
अथापतद्धरण्यां वै विलपन् स च दुःखितः ॥ २८३ ॥
आर्तं विभीषणं दृष्ट्वा विलपन्तमनाथवत् ।
उवाच भगवान् रङ्गी स्वरेण महता तदा ॥ २८४ ॥

श्रीभगवानुवाच —

"आर्य ! धर्मज्ञ ! देशोऽयं रमणीयो हि मे मतः ।
अस्मिन्नेव शयानोऽहं रंस्ये त्वामभिवीक्ष्य च ॥ २८५ ॥

एतैरेकान्तिभिः सार्धं मदाराधनतत्परैः।
विभीषणानुजानीहि कुरुष्व च मम प्रियम् ॥ २८६ ॥

एतानाराधकान् विप्रान् पञ्चकालपरायणान्।
क्षेत्रारामगृहाद्यैस्तु सुसमृद्धान् कुरुष्व च ॥ २८७ ॥

मा भूस्त्वं दुर्मना याहि क्षिप्रं लङ्कां निशाचर!।
तत्र त्वं सुसमृद्धार्थः श्रियं भुङ्क्ष्वानपायिनीम्" ॥

इत्युक्तः सुसमृद्धार्थान् क्षेत्रारामगृहादिभिः।
कृत्वा चैकायनांस्तांस्तु पञ्चकालपरायणान् ॥ २८९ ॥

ततस्तु प्रययौ चार्तो लङ्कामेव विभीषणः।
मर्त्यानां भाग्यवैभव्याद्ब्राह्मणानां हिताय च ॥ २९० ॥

देवानां च प्रतिष्ठार्थं रेमे तत्र नदीतटे।
रङ्गधामनि रङ्गेशः शयानस्तु द्विजोत्तम! ॥ २९१ ॥

तद्धामोभयतोऽगच्छत् परिरभ्य सरिद्वरा।
यथा पतिं चिरं प्राप्तं भुजाभ्यां प्रियमङ्गना ॥ २९२ ॥

दिव्यं ह्येतन्महद्धाम दिव्यास्तत्र निवासिनः।
दिव्या चेयं नदी तद्वद्दिव्यतीर्थमिदं सरः ॥ २९३ ॥

अनन्तशक्तियुक्तं तद्विमानं हि स्वयम्भवम्।
किङ्करा विष्णुभूतेशा बलिनः कामरूपिणः ॥ २९४ ॥

ते च रक्षन्ति तं देशं सर्वं ह्यनिमिषेक्षणाः।
ये निष्पन्(प)न्द्रा निराहाराः सात्त्विकाश्च वसन्ति ते ॥

प्रव्याहरन्तो मधुरां वाणीं कर्णसुखावहाम्।
न तत्र वसतां पीडा क्षुत्पिपासाद्युपस्थिता ॥ २९६ ॥

नाध्यात्मिकादिपीडा वा न जरा नाविवेकिता।
त्रैकाल्यज्ञानसंपन्नाः सर्वकामविवर्जिताः ॥ २९७ ॥

पदार्थसमकज्ञानसंपूर्णा नान्ययाजिनः।
द्वादशाध्यात्मनिरताः पञ्चकालपरायणाः ॥ २९८ ॥

तमर्चयन्तोऽहरहस्तत्रैव निवसन्ति हि।
षट्कर्मनिरताश्चापि ब्रह्मण्याहितचेतसः ॥ २९९ ॥

चरन्ति तत्र विमलाः पुरुषाः संशितव्रताः।
देवासुरमुनीन्द्राद्याः सदा देवाभिकाङ्क्षिणः ॥ ३०० ॥

वसन्ति तत्र चास्थाय चित्रां स्थावररूपताम्।
अत्युन्मत्तः प्रशान्तः स्याद्बधिरोऽपि सुबोधवान् ॥

तस्य देशस्य माहात्म्यं सम्यग्ज्ञातुं न शक्यते।
ब्रह्मणापि मुनिश्रेष्ठ! किं पुनः खलु मादृशैः ॥ ३०२ ॥

तदेतत् परमं धाम श्रीरङ्गमिति शब्दितम्।
दिव्यलक्षणसंयुक्तं स्वयंव्यक्तमिति श्रुतम् ॥ ३०३ ॥

अत्र सन्निहितः साक्षाद्भगवान् पुरुषोत्तमः।
भक्तानां पुण्डरीकाक्षः परमात्माऽच्युतो हरिः ॥ ३०४ ॥

विविधेष्वपि चान्येषु नित्यं स्थानेषु यद्यपि।
वासुदेवस्तु मन्त्रात्मा स्थितः सन्निहितः स्वयम् ॥

तथापि यत्नवत्त्वेन सन्निधिं भजतेऽत्र वै।
ग्रीष्मकालं समासाद्य यथार्कस्तीक्ष्णतां व्रजेत् ॥

स्वरूपमजहच्चैव तथैवात्र जगत्पतिः।
दोषैः स दिग्विभागाद्यैस्त्वन्यथात्वं न याति च ॥३०७॥

नित्यसन्निधिमाहात्म्यात् कालं कल्पक्षयावधि।
उत्तरोत्तरता चैव जगत्यस्मिन् हि वर्तते ॥ ३०८ ॥

भूत्या कान्त्या च कीर्त्या च क्रियया चाप्रमेयया।
दुष्टोपशान्तिदा शक्त्या सिद्धिदा या च वै सह ॥

मुक्तिकामाश्च भविनः फलकामाश्च सत्तम!।
यथाभिमतसंप्राप्तिमिहैवाप्नुवन्त्यनश्वरीम् ॥ ३१० ॥

इह कर्मपराः सर्वं सायं प्रातस्तु मध्यतः।
कुर्वते सर्वकर्माणि विमानाभिमुखाः सदा ॥ ३११ ॥

एवं तु पुष्करक्षेत्रे तोताद्रिशिखरेऽपि च।
क्ष्माङ्के पुराणसंज्ञे तु मधुभाण्डाभिधेऽपि च ॥ ३१२ ॥

स्थितः संनिहितो देवः स्वयंव्यक्तो जगत्पतिः।
भगवान् पुण्डरीकाक्षो लोकानां हितकाम्यया ॥३१३॥

देवदेवो जगन्नाथ एवं क्षेत्रेषु केषुचित्।
स्थापितो विबुधाद्यैस्तु सन्निधत्ते द्विजोत्तम! ॥ ३१४ ॥

केषुचिन्मनुजेन्द्रैस्तु भक्तिबृंहितमानसैः।
स्थापितो विधिवद्विप्र! सन्निधत्ते जगत्पतिः ॥३१५॥

एवं भगवदाकारैर्नानासंस्थानलक्षणैः ।
नानाविशेषरूपैश्च नानाकार्यवशेन तु ॥ ३१६ ॥

विश्वमापूरितं सर्वं सर्वानुग्रहकाम्यया ।
स्वयंव्यक्तं तथासिद्धविबुधैश्च प्रतिष्ठितम् ॥ ३१७ ॥

मुनिमुख्यैस्तु गन्धर्वैर्यक्षैर्विद्याधरैरपि ।
रक्षोभिरसुरैर्मुख्यैः स्थापितं मन्त्रविग्रहम् ॥ ३१८ ॥

दिव्यशास्त्रोक्तविधिना पूजयेच्छास्त्रकोविदः ।
स्थापितं मनुजैर्देवं मुनिवाक्योक्तमार्गतः ॥ ३१९ ॥

पूजयेद् द्विज ! तत्रापि ज्ञानिभिस्तत्त्वदर्शिभिः ।
वासुदेवैकनिष्ठैस्तु देवतान्तरवर्जितैः ॥ ३२० ॥

व्यामिश्रयागमुक्तैस्तु तीव्रभक्तिसमन्वितैः ।
स्थापितं मनुजेन्द्रैस्तु ह्यनुवेदादिकोविदैः ॥ ३२१ ॥

अर्चयेद्देवदेवेशं दिव्यशास्त्रोक्तवर्त्मना ।
मुनिवाक्योक्तमार्गेण पूजनं यत्र वर्तते ॥ ३२२ ॥

तत्रापि दिव्यमार्गाच्चेत् पूजनं कर्तुमिच्छति ।
मुनिमार्गं परित्यज्य दिव्यमार्गेण पूजयेत् ॥ ३२३ ॥

भवेत् सन्निधिमाहात्म्यं कालं कल्पक्षयावधि ।
दिव्यमार्गेण पूजाद्यं वर्तते यत्र नित्यशः ॥ ३२४ ॥

तत्र दिव्यं परित्यज्य न कदाचिन्महामते ! ।
मुनिवाक्योक्तमार्गेण कुर्यात् संपूजनादिकम् ॥ ३२५ ॥

कुर्याद्वा यदि संमोहाद्विप्रः संमूढचेतनः ।
संप्रयात्यचिरात्तस्य भक्तिर्वीजेन वै सह ॥ ३२६ ॥

समन्त्रं कर्मतन्त्रं च सिद्ध्यश्च पराङ्मुखाः ।
इहैव शीघ्रं विप्रेन्द्र ! देहान्ते गतसन्ततिः ॥ ३२७ ॥

घोरं प्रयाति नरकं राजा राष्ट्रं च नश्यति ।
तस्मात् सर्वप्रयत्नेन दिव्यमार्गं तु न त्यजेत् ॥ ३२८ ॥

तामसेन तु मार्गेण पूजनं यत्र वर्तते ।
तत्रापि राजसेनैव पूजनं सिद्धिदं भवेत् ॥ ३२९ ॥

राजसेन तु पूजाद्यं वर्तते यत्र नित्यशः ।
तत्रापि सात्त्विकेनैव पूजनं शुभदं सदा ॥ ३३० ॥

सात्त्विकेन तु पूजाद्यं वर्तते यत्र चान्वहम् ।
तत्र राजसमार्गेण न कुर्यात् पूजनादिकम् ॥ ३३१ ॥

यत्र राजसमार्गेण प्रवृत्तं त्वर्चनादिकम् ।
तत्र तामसमार्गेण न कुर्यादर्चनादिकम् ॥ ३३२ ॥

विविधानां राजसानामन्योन्यं स्यान्न संकरः ।
सर्वत्रपौरुषे वाक्ये तद्ग्राह्यमविरोधि यत् ॥ ३३३ ॥

सनकः —

केवलं तद्विधानेन न कुर्यात् स्थापनादिकम् ।
दिव्याद्यायतनानां च पूजार्थं यत् त्वयोदितम् ॥ ३३४ ॥

शास्त्रं दिव्यादिभेदेन श्रोतुमिच्छामि तत्त्वतः ।
यज्ज्ञात्वा विनिवर्तेयं शास्त्रसाङ्कर्यदोषतः ॥ ३३५ ॥

शाण्डिल्यः —

वासुदेवेन यत् प्रोक्तं शास्त्रं भगवता स्वयम् ।
अनुष्टुप्छन्दोबन्धेन समासव्यासभेदतः ॥ ३३६ ॥

तथैव ब्रह्मरुद्रेन्द्रप्रमुखैश्च प्रवर्तितम् ।
लोकेष्वपि च दिव्येषु तद्दिव्यं विद्धि सत्तम ! ॥ ३३७ ॥

ब्रह्मरुद्रमुखैर्देवैः ऋषिभिश्च तपोधनैः ।
स्वयं प्रणीतं यच्छास्त्रं तद्विद्धि मुनिभाषितम् ॥ ३३८ ॥

एतत्तु त्रिविधं विद्धि सात्त्विकादिविभेदतः ।
विज्ञाय पुण्डरीकाक्षादर्थजालं यथास्थितम् ॥ ३३९ ॥

तद्बोधकं प्रणीतं यच्छास्त्रं तत् सात्त्विकं स्मृतम् ।
तस्माज्ज्ञातेऽर्थजाते तु किञ्चित् समवलम्ब्य च ॥

स्वबुद्ध्युन्मीलितस्यैव ह्यर्थजातस्य बोधकम् ।
यत् प्रणीतं द्विजश्रेष्ठ ! तथा विज्ञाय तत्त्वतः ॥ ३४१ ॥

ग्रन्थविस्तरसंयुक्तं शास्त्रं सर्वेश्वरेश्वरात् ।
तत्संक्षेपप्रसादेन स्वविकल्पविजृम्भणैः ॥ ३४२ ॥

ब्रह्मादिभिः प्रणीतं यत् तथा तदपि विद्धि द्विज ! ।
ब्रह्मादिभ्यः परिश्रुत्य तत् संक्षेपात्मना पुनः ॥ ३४३ ॥

स्वविकल्पात् प्रणीतं यत् तत् सर्वं विद्धि राजसम् ।
तत् स्याद् द्वेधा पञ्चरात्रवैखानसादिभेदतः ॥ ३४४ ॥

केवलात् स्वविकल्पोक्तैः कृतं यत् तामसं तु तम् ।
केवलं मनुजैर्यत्तु कृतं तत् पौरुषं भवेत् ॥ ३४५ ॥

सनकः :—

यैर्लिङ्गैर्वेदतांश्रेष्ठ ! भगवद्वाक्यपूर्वकम् ।
भेदं जानामि तत्त्वेन तानि विस्तरतो वद ॥ ३४६ ॥

शाण्डिल्य : —

यदर्थाढ्यमसन्दिग्धं स्वच्छमल्पाक्षरं स्थिरम् ।
चातुरात्म्यस्वरूपेण संस्थितस्य विभोः सदा ॥ ३४७ ॥

स्वाभाविकं परत्वं तु यत्र यत्र समीरितम् ।
अन्यासां मन्त्रमूर्तीनां यत्र चौपाधिकं तु यत् ॥३४८॥

तुर्यादिजाग्रत्पर्यन्तः पदभेदः प्रकाशितः ।
भक्तानामनुकम्पार्थं यत्र वै चतुरात्मनः ॥ ३४९ ॥

शक्तीशस्य विभोर्यत्र विभवः संप्रकाशितः ।
अङ्गलाञ्छनभूषाणां शक्तीनां विहगेशितुः ॥ ३५० ॥

लयादिभेदभिन्नं तु स्वरूपं यत्र भाषितम् ।
बीजपिण्डपदाद्येन चातुर्विध्येन सत्तम ! ॥ ३५१ ॥

मन्त्राः प्रवर्तिता यत्र यत्र स्थापनकर्मणि ।
अनुबन्धक्रिया प्रोक्ता यत्र वै नित्यपूजनम् ॥ ३५२ ॥

मूलमूर्तौ तु संपूर्णं प्रोक्तं प्राधान्यतो द्विज ! ।
तत्र कर्तुमशक्यं यत् स्नानाद्यं तावदेव तु ॥ ३५३ ॥

बिम्बान्तरे तदर्थं तु कर्मबिम्बपुरस्सरम् ।
विहितं दर्पणाद्येषु तदभावान्महामते ! ॥ ३५४ ॥

क्ष्माजलानलवाय्वाख्यनाभसीयेन वै द्विज ! ।
धारणापञ्चकेनैव धारणाद्वितयेन च ॥ ३५५ ॥

दहनाप्यायनाख्येन यत्र शुद्धिश्च भौतिकी ।
आगमश्रुतिमूलत्वं स्वस्य यद्युपपादकम् ॥ ३५६ ॥

तत् पारमेश्वरं वाक्यमाज्ञासिद्धं हि मोक्षदम् ।
एवमादेयवाक्योत्थ आगमो यो महामते ! ॥ ३५७ ॥

सन्मार्गदर्शनं कृत्स्नं विधिवादं च विद्धि तत् ।
तत्प्रामाण्यात्तु यत्किञ्चित् समभ्यूह्य यथार्थतः ॥

पूर्वापराविरोधेन निर्वाह्यमविचारतः ।
सर्वेषां रञ्जकं गूढं निश्चयीकरणाक्षमम् ॥ ३५९ ॥

पारमेश्वरवाक्योक्तमर्थजालं यथास्थितम् ।
प्रत्यभिज्ञापकं यद्यत् सात्त्विकं मुनिभाषितम् ॥३६०॥

प्रशंसकं यत् सिद्धीनां संप्रवर्तकमप्यथ ।
मूलमूर्तिमनादृत्य कर्मार्चायां तु पुष्कलम् ॥ ३६१ ॥

नित्यसंपूजनं प्रोक्तं प्राधान्येन तु यत्र वै ।
ब्रह्मरुद्रादिबिम्बानां प्रमाणं लक्षणं तथा ॥ ३६२ ॥

स्थापनं यत्र निर्दिष्टं यत्र वै जगतां पतेः ।
पूजनं तु समुद्दिष्टं प्राकृतानां जडात्मनाम् ॥ ३६३ ॥

तत्त्वानामपि विप्रेन्द्र ! दिशां कालस्य वाचकैः ।
परमेष्ठ्यादिभिर्मन्त्रैः पञ्चभिर्यत्र वै क्रमात् ॥ ३६४ ॥

स्थापनादिप्रतिष्ठान्तं पञ्चकं समुदीरितम् ।
यागपूर्वा हरिस्तोमपर्यन्ताः सप्त कीर्तिताः ॥ ३६५ ॥

यागा यत्र तथा सप्त तत्क्रमादधिकारिणः ।
उक्तं यत्र प्रतिष्ठायां षोडशन्यासकल्पनम् ॥ ३६६ ॥

एतज्जानीहि तत् सर्वं राजसं मुनिभाषितम् ।
भगवन्तं समुद्दिश्य ह्यङ्गभावं विनैव तु ॥ ३६७ ॥

ब्रह्मरुद्रमुखानां तु विबुधानां तथैव च ।
मातृणामपि दुर्गायाः स्वातन्त्र्येण तु यत्र वै ॥ ३६८ ॥

मन्त्रं ध्यानं प्रमाणं च लक्षणं स्थापनं तथा ।
निर्दिष्टं तामसं नाम मुनिवाक्यं तु विद्धि तत् ॥३६९॥

अनर्थकमसंबद्धमल्पार्थं शब्दडम्बरम् ।
अनिर्वाहकमाद्योक्तैर्वाक्यं तत् पौरुषं स्मृतम् ॥३७०॥

हेयं चानर्थसिद्धीनामाकरं नरकावहम् ।
पारमेश्वरवाक्यार्थैर्यद्विरोधि न तद् द्विज ! ॥ ३७१ ॥

संग्राह्यं सात्त्विकाद्येषु मुनिवाक्येषु यत्नतः ।
यद्दिव्यापेक्षितं विप्र ! संग्राह्यमविरोधि तत् ॥ ३७२ ॥

सात्त्विकादिक्रमात्तेषु समभ्यूह्य महामते ! ।
प्रसिद्धार्थानुपादाय सङ्गतार्थं विलक्षणम् ॥ ३७३ ॥

अपि चेत् पौरुषं वाक्यं ग्राह्यं तन्मुनिवाक्यवत् ।

सनक :—

दिव्यपूर्वाणि शास्त्राणि प्रोक्तैरेतैस्तु लिङ्गकैः ॥ ३७४ ॥

लिङ्गितानि द्विजश्रेष्ठ ! व्यक्तनामान्वितानि च ।
कौतूहलं हि मे श्रोतुं प्रब्रूहि गणशस्तथा ॥ ३७५ ॥

विज्ञातव्यान्यसंकीर्णं यथा च स्वल्पबुद्धिभिः ।

शाण्डिल्य :—

सात्वतं पौष्करं चैव जयाख्यं च तथैव च ॥ ३७६ ॥

एवमादीनि शास्त्राणि दिव्यानीत्यवधारय ।
संहिता चेश्वरस्यापि भरद्वाजस्य संहिता ॥ ३७७ ॥

सौमन्तवी तथा ह्येतत् पारमेश्वरसंज्ञितम् ।
वैहायसी संहिता च शास्त्रं चित्रशिखण्डिजम् ॥

तथा जयोत्तरं तत्र एवमादीनि तत्वतः ।
सात्विकानि विजानीहि मुनिवाक्यानि सत्तम ! ॥

तन्त्रं सनत्कुमाराख्यं तथा पद्मोद्भवाभिधम् ।
सत्यापि तेजोद्रविणं मायावैभविकं तथा ॥ ३८० ॥

इत्यादीन्यवगच्छ त्वं राजसान्येव तत्वतः ।
पञ्चप्रश्नं शुकप्रश्नं तत्वसागरसंहिता ॥ ३८१ ॥

इत्यादीन्यवबुद्ध्यस्व तामसानि विशेषतः ।
पूर्वोक्तलक्षणेनैव ज्ञातव्यं तत्र पौरुषम् ॥ ३८२ ॥

प्रासादानां च शास्त्राणां यथावत् संप्रकाशितम् ।
भेदं दिव्यादिकं सम्यग् ज्ञात्वा सर्वं समाचरेत् ॥

यो न ज्ञात्वा तु साङ्कर्यं ( यात् ) पूजाद्यमनुतिष्ठति ।
स हि सर्वस्य जगतः साङ्कर्यं कुरुते सदा ॥ ३८४ ॥

विशेषात् स्वस्य वंशस्य तस्मादापद्यपि द्विज ! ।
न कुर्याच्छास्त्रसाङ्कर्यं हितैषी शास्त्रकोविदः ॥ ३८५ ॥

तत् सर्वमुक्तं यत् पृष्टं किमन्यत् कथयामि ते ।

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे स्वयंव्यक्तादि प्रासाददेवतानिर्णयो नाम दशमोऽध्यायः समाप्तः ॥

---

श्रीः

# एकादशोऽध्यायः ॥

सनकः —

नित्योत्सवविधौ ब्रह्मन् ! पूजनं समुदाहृतम् ।
द्वारावरणदेवानां तेषां ध्यानादिकं क्रमात् ॥ १ ॥

ज्ञातुमिच्छामि विप्रेन्द्र ! प्रब्रूहि मम विस्तरात् ।

शाण्डिल्यः —

श्रूयतामभिधास्यामि यदहं चोदितस्त्वया ॥ २ ॥

प्रासादद्वारदेवेभ्यः समारभ्य यथाक्रमम् ।
प्रासादद्वारबाह्ये तु ह्यधस्थौदुम्बरान्तिमे ॥ ३ ॥

वास्त्वीशक्षेत्रनाथौ द्वौ स्थितौ दक्षेतरक्रमात् ।
शुक्लवस्त्रः कृष्णदेहो द्विभुजो रत्नपात्रधृक् ॥ ४ ॥

दक्षिणेन करेणैव सर्वामरसमाश्रयः ।
पुण्डरीकसमानाभवस्त्रस्रगनुलेपनः ॥ ५ ॥

गदोद्यतकरो विप्र ! ध्यातव्यो वास्तुपूरुषः ।
क्षेत्रेशं द्विभुजं ध्यायेद्धेमाभवसनस्रजम् ॥ ६ ॥

नीलजीमूतसंकाशं दण्डहस्तं महातनुम् ।
मुष्टिवद्वामहस्तेन यागक्षेत्रस्य पालकम् ॥ ७ ॥

कुण्डलाद्यैरलङ्कारैरेतौ शोभितविग्रहौ ।
वीक्षमाणौ विभोर्वक्त्रं तेजसातीव निर्भरौ ॥ ८ ॥

तप्तकाञ्चनवर्णाभां प्रवालसदृशाम्बराम् ।
हारनूपुरकेयूरकरण्डमकुटादिकैः ॥ ९ ॥

अलङ्कृतामलङ्कारैः पुण्डरीकनिभेक्षणाम् ।
अकलङ्कसुसम्पूर्णशरच्चन्द्रनिभाननाम् ॥ १० ॥
पद्मकुम्भकरां लक्ष्मीं पद्मोपरिगतां स्मरेत् ।
पद्मासनेनोपविष्टां द्वारस्योर्ध्व उदुम्बरे ॥ ११ ॥
तरुणादित्यसंकाशो महोरस्कश्चतुर्भुजः ।
उन्नतश्चोन्नतांसश्च पूर्णाङ्गो नातिमांसलः ॥ १२ ॥
तनूदरो निम्ननाभो रोमराजिविराजितः ।
दंष्ट्राकरालवदनः पिङ्गश्मश्रुजटाधरः ॥ १३ ॥
मधुपिङ्गलनेत्रश्च कुटिलभ्रूलतायुतः ।
प्रलम्बलोलश्रवणः पृथुघ्राणः स्मिताननः ॥ १४ ॥
कुण्डलालङ्कृतश्चैव हारकेयूरभूषितः ।
बद्धोष्णीषललाटश्च तिलकेनाप्यलङ्कृतः ॥ १५ ॥
शुक्लाम्बरधरः स्रग्वी भुजयुग्मेऽस्य दक्षिणे ।
प्रोद्यतं संस्मरेच्चक्रं प्रज्वलन्तीं गदां परे ॥ १६ ॥
श्रोणीतटनिषण्णां च विश्रान्तां वसुधातले ।
पूर्वं वामकरे शङ्खमन्यस्मिंश्चाक्षसूत्रकम् ॥ १७ ॥
एवं गणाधिपश्चण्डो विक्रमेणापराजितः ।
क्रुद्धो विघ्नायुतानां च क्षणात् संहरणक्षमः ॥ १८ ॥
ध्येयो गर्भगृहद्वारशाखामूले तु दक्षिणे ।
तत्रैवापरभागे तु प्रचण्डं त्वीदृशं यजेत् ॥ १९ ॥
किंतु सव्यापसव्याभ्यां पुजाभ्यां स्याद्विपर्ययः ।
भुजद्वये यच्चण्डस्य वामे संपरिकीर्तितम् ॥ २० ॥
दक्षिणे तत् प्रचण्डस्य ध्येयं वा परिकल्प्य च ।
ध्यायेद्द्वाराग्रदेशे तु गरुडं काञ्चनप्रभम् ॥ २१ ॥
कुटिलभ्रुसुवृत्ताक्षं पक्षमण्डलमण्डितम् ।
लम्बोदरं सुपीनाङ्गं सर्वभूषणभूषितम् ॥ २२ ॥
मकुटाद्यैरलङ्कारैर्नूपुराद्यैर्विराजितम् ।
नीलं वसानं वसनं नानामाल्योपशोभितम् ॥ २३ ॥
संमुखं देवदेवस्य भूगतं विधृताञ्जलिम् ।
द्विभुजं तुहिनाभं च सत्याख्यं विहगाधिपम् ॥ २४ ॥

प्राणाधिदैवतं चक्रे वलिमण्डलमध्यगे ।
संस्थितं संस्मरेत् सर्वैरङ्गैः पुरुषरूपिणम् ॥ २५ ॥
प्रलम्बमानजठरं पक्षराजिविराजितम् ।
दक्षिणेन करेणैव धारयन्तं गणित्रकत् ॥ २६ ॥
उत्तानितेतरकरं कुण्डलाद्यैर्विभूषितम् ।
नीलकौशेयवसनं नीलमाल्यानुलेपनम् ॥ २७ ॥
अनाकुलाभ्यां नेत्राभ्यां वीक्षमाणं सदा विभुम् ।
अथाग्रमण्डपद्वारशाखायुगलसंस्थितौ ॥ २८ ॥
पद्मगर्भप्रतीकाशावतिभीमपराक्रमौ ।
चण्डप्रचण्डसदृशौ भुजलाञ्छनभूषणैः ॥ २९ ॥
रक्ताम्बरधरौ चैव रक्तस्रगनुलेपनौ ।
गणौ धातृविधातारौ ध्यात्वा संपूज्य तत्परः ॥ ३० ॥
कुमुदादिगणेशानान् प्रथमावरणे यजेत् ।
पूर्वे च वह्निदिग्भागे पूज्यौ द्वौ गणनायकौ ॥ ३१ ॥
कुमुदः कुमुदाक्षश्च प्रसन्नवदनेक्षणौ ।
तुहिनाचलसङ्काशौ प्रथमे वयसि स्थितौ ॥ ३२ ॥
नानाभरणदिग्धाङ्गौ नानाकुण्डलभूषितौ ।
नानामाल्यचितौ चैव नानामौलिधरौ द्विज! ॥ ३३ ॥
नानागन्धविलिप्ताङ्गौ नानावस्त्रविभूषितौ ।
कुमुदाख्यगणेशस्य ध्यातव्यो दक्षिणः करः ॥ ३४ ॥
चन्द्ररश्मिप्रतीकाशचामरेण विराजितः ।
अभिगच्छाभयं ध्यायेद् द्वितीयं दक्षिणं करम् ॥ ३५ ॥
भवभङ्गात् प्रपन्नानां परेषां गुणशासनम् ।
तस्यैवाद्यं वामकरं प्रबुद्धकमलोद्यतम् ॥ ३६ ॥
तूर्णीं भीसूचकं ध्यायेद्बहिःस्थानां परं करम् ।
एतद्धि कुमुदाक्षस्य वैपरीत्येन भावयेत् ॥ ३७ ॥
द्वाभ्यां द्वाभ्यां कराभ्यां वै त्वन्येषामेवमेव हि ।
पुण्डरीको वामनश्च द्वावेतौ हुतभुक्प्रभौ ॥ ३८ ॥
गरुडध्वजहस्तौ च शेषमन्यत् पुरोदितम् ।
कृत्वा ध्यात्वाऽथवा न्यस्य दक्षिणे नैर्ऋतेऽपि च ॥३९॥

शङ्कुकर्णाभिधानो यः सर्वनेत्राभिसंज्ञितः ।
द्वावेतौ चम्पकाभौ तु मयूरव्यजनोद्यतौ ॥ ४० ॥

महाविभूतेर्देवस्य प्रत्यग्वायुदिगास्थितौ ।
सुमुखः सुप्रतिष्ठश्च विभोः सोमेशदिक्स्थितौ ॥ ४१ ॥

चिन्त्यौ मुद्गफलश्यामावातपत्रकरोद्यतौ ।
नोक्तशेषकराणां तु तद्विद्धि कुमुदोदितम् ॥ ४२ ॥

मानवः पृश्निगर्भश्च जगत्यम्बरसंस्थितौ ।
तप्तकाञ्चनवर्णाभौ करण्डमकुटोज्ज्वलौ ॥ ४३ ॥

दंष्ट्राकरालवदनौ नानामाल्यधरौ द्विज ! ।
तत्र मानवसंज्ञश्च पक्षनागविभूषितः ॥ ४४ ॥

तस्य दक्षिणहस्तश्च शङ्खराजेन शोभितः ।
तत्पृष्ठे कटके हस्ते अङ्गुष्ठान्तरलोलगा ॥ ४५ ॥

अक्षमालेति सा प्रोक्ता सर्वसिद्धिकरी सदा ।
मुख्यवामकरे चक्रं तत्पृष्ठे चोर्ध्वगा गदा ॥ ४६ ॥

एतद्धि पृश्निगर्भस्य वैपरीत्येन भावयेत् ।
कटिहस्ताद्गतां ध्यात्वा पक्षनागौ विना द्विज ! ॥ ४७ ॥

एते भगवतो विप्र ! त्वन्तरङ्गा मयोदिताः ।
कर्मणा मनसा वाचा तद्भावगतमानसाः ॥ ४८ ॥

ज्ञानादिषड्गुणोपेतैराकीर्णाः कोटिशः परैः ।
भूतैः सिद्धैरनन्तैश्च प्रार्थयानैः परं पदम् ॥ ४९ ॥

वस्त्रभूषाङ्गरागाद्यैः सर्वे ते कुमुदोपमाः ।
श्वेतमृत्कल्पितेनैव ह्यूर्ध्वपुण्ड्रेण भूषिताः ॥ ५० ॥

ललाटस्थेन सर्वेऽपि कुमुदादिगणाधिपाः ।
एवमन्येऽपि भूताद्याः सर्वे पारिषदा द्विज ! ॥ ५१ ॥

एवमावृतिदेवाश्च द्वारस्थाश्च तथैव हि ।
एवं तदीया विप्राश्च क्षत्रविट्छूद्रजातयः ॥ ५२ ॥

मृदैव वा चन्दनेन कल्पितैरूर्ध्वपुण्ड्रकैः ।
द्वादशैश्च चतुर्भिर्वा भूषिताः स्युः सदा द्विज ! ॥ ५३ ॥

अतसीकुसुमश्यामौ पीतमाल्याम्बरान्वितौ ।
पीतोष्णीषधरौ रौद्रौ प्राग्वद्भुजविभूषितौ ॥ ५४ ॥

गणौ चण्डाकृतिधरौ दुर्दर्शौ दुरतिक्रमौ ।
जयं च विजयं नाम्ना यजेत्तद्द्वारपार्श्वयोः ॥ ५५ ॥

तदुद्देशात् समारभ्य बहिर्द्वारावसानकम् ।
द्वितीयावरणक्षेत्रं षोढा कृत्वा तु पश्चिमे ॥ ५६ ॥

भागे तु गरुडं कृत्वा विप्र ! ध्यात्वाऽथवा न्यसेत् ।
द्रवच्चामीकराकारं भीमभ्रुकुटिलोचनम् ॥ ५७ ॥

पृथुदंष्ट्रं पृथुघ्राणं पृथुगात्रं पृथूदरम् ।
पक्षाङ्कुराञ्चितोरस्कं पक्षमण्डलमण्डितम् ॥ ५८ ॥

हारकेयूरताटङ्कमकुटाद्यैस्तु भूषणैः ।
भूषितं नीलवसनं नानामाल्यविभूषितम् ॥ ५९ ॥

नानागन्धविलिप्ताङ्गं नागैकादशभूषितम् ।
पुष्पस्तबकसंपूर्णमञ्जलिं दधतं द्विज ! ॥ ६० ॥

उन्नम्य दक्षिणं जानुमासनीकृत्य चेतरत् ।
सुखासनसमासीनं विभोराज्ञाप्रतीक्षकम् ॥ ६१ ॥

ततः (पः) कर्मात्मतत्वानां दशकं सिद्धतां गतम् ।
भगवत्तुल्यसामर्थ्यसार्वज्ञ्याद्गिुणैर्युतम् ॥ ६२ ॥

वियुक्तं प्राकृताद् दुःखाद्वियुक्तं चेश्वरेण तु ।
भवसन्तारकत्वेन ह्येतदावृतिकं क्रमात् ॥ ६३ ॥

उपेन्द्रः पूर्वदिग्भागे संस्थितो द्विजसत्तम ! ।
वह्नौ तेजोधराख्यस्तु दक्षिणे दुरतिक्रमः ॥ ६४ ॥

नैर्ऋते तु महाकर्मा पश्चिमे तु महाह्रदः ।
अग्राह्यो वायुदिग्भागे वसुरेतास्तथोत्तरे ॥ ६५ ॥

पूर्वोत्तरे वर्धमानः साक्षी गगनगोचरे ।
आधारनिलयं नाम्ना सर्वस्याधोगतं स्मरेत् ॥ ६६ ॥

एते स्फटिकवर्णाभाः श्वेतमाल्याम्बरान्विताः ।
गणित्रकं रथाङ्गं च शङ्खं चैव गदां तथा ॥ ६७ ॥

दधाना मुख्यदक्षादिमुख्यवामान्तमेव हि ।
करैश्चतुर्भिः सुसमा मकुटादिविभूषिताः ॥ ६८ ॥

तेजसा विघ्नजालानि प्रेरयन्तो महौजसः ।
स्थानकैः संस्थिताः सर्वे ध्यानोन्मीलितलोचनाः ॥ ६९ ॥

अथवा द्विभुजा एते वज्राद्यं दशकं क्रमात्।
दक्षेण लोकपालीयं धारयन्तः करेण तु ॥ ७० ॥

गणिवर्कं तु वामेन वरदाभयदास्तु वा।
तदा वर्णाङ्गरागाद्यैरिन्द्रादिसदृशास्तु वा ॥ ७१ ॥

द्वितीयगोपुरद्वारपार्श्वयोरन्तरस्थयोः।
विन्यसेद् द्वारपालाख्यावेतौ वामादितो गणौ ॥ ७२ ॥

निधीशौ शङ्खपद्मौ तु निधिभाण्डोपरिस्थितौ।
स्थूलदन्तौ च दान्तौ च द्विभुजौ भगवन्मयौ ॥ ७३ ॥

कुटिलभ्रूलतायुक्तौ किञ्चिदुन्नतवक्षसौ।
लम्बोदरौ सुपीनाङ्गौ ह्रस्वपाणिपदौ द्विज! ॥ ७४ ॥

शङ्खपद्मसमानाभौ नीलशुक्लाम्बरस्रजौ।
मकुटाद्यैस्तु विविधैरलङ्कारैरलंकृतौ ॥ ७५ ॥

दक्षिणेन करेणैव धारयन्तौ सरोरुहम्।
इतरेण करेणैव ह्युत्तानेन निधिं स्वकम् ॥ ७६ ॥

अथवा वामहस्ताभ्यां प्रवेशाभीतिदान्वितौ।
करद्वयेन शङ्खं वा पद्मं वा दधतौ द्विज! ॥ ७७ ॥

वामेन धारयेत् पद्मं यद्वा शङ्खं निधीश्वरः।
शङ्खपद्मधरौ वापि शिरसा मकुटोपरि ॥ ७८ ॥

शङ्खचक्रधरौ वापि साधकेच्छावशेन तु।
उन्नम्य दक्षिणं जानुं ह्यालनीकृत्य चेतरत् ॥ ७९ ॥

एवं शङ्खनिधेः पद्मनिधेस्तु विपरीतवत्।
तद्द्वारशाखानिष्ठौ तु संस्मरेद्दक्षिणादितः ॥ ८० ॥

क्षीरकुन्दावदातौ च नीलकौशेयवाससौ।
नीलनीरजवर्णाभैः पुष्पैर्भूषितविग्रहौ ॥ ८१ ॥

पूर्वोक्तगणसादृश्यौ नाम्ना भद्रसुभद्रकौ।
तद्द्वारबाह्यतः पश्चात् पार्श्वयोर्गोपुरस्थितौ ॥ ८२ ॥

एतौ गणेश्वरौ न्यस्येद् ध्यात्वा वा परिकल्प्य च।
अथवा द्विभुजावेतौ तदा भद्रस्य दक्षिणम् ॥ ८३ ॥

करं तु तर्जनीयुक्तं वाममीषत्तु कुञ्चितम्।
गदाग्रोपरिविश्रान्तं गदामूलोपरिस्थितम् ॥ ८४ ॥

व्यत्यस्तदक्षिणं पादं वामं तु भुवि संस्थितम्।
भद्रस्य वामयोर्विप्र! यदुक्तं पाणिपादयोः ॥ ८५ ॥

दक्षयोस्तत् सुभद्रस्य दक्षोक्तं वामगं भवेत्।
किन्तु तद्वामहस्तं तु युक्तं विस्मयमुद्रया ॥ ८६ ॥

चण्डप्रचण्डौ धाता च विधाता च जयस्तथा।
विजयश्चापि भद्रश्च सुभद्रश्च गणेश्वरः ॥ ८७ ॥

एते गणेश्वरा ह्यष्टौ प्रभापुष्पाम्बरैर्विना।
देहचक्राकृतैस्तुल्यास्तथैवाभरणायुधैः ॥ ८८ ॥

भक्तानां विघ्नजालस्य सर्वदिक्संस्थितस्य च।
संसारफलदातुर्वै च्छेदनार्थं समुद्यताः ॥ ८९ ॥

परस्परमुखाः सर्वे स्थानकैः संस्थिताः समैः।
गणेशायुतलक्षैस्तु नानावर्णवपुर्धरैः ॥ ९० ॥

अच्युताराधनपरैरेकैकं परिवारिताः।
तृतीयावरणे पश्चात् पूर्वादिक्रमयोगतः ॥ ९१ ॥

इन्द्रादिलोकपालानां दशकं विन्यसेद्द्विज!।
शतधामनिभं ध्यायेच्चतुर्बाहुं पुरन्दरम् ॥ ९२ ॥

सुसितद्विपसंस्थं तु सुतीक्ष्णकुलिशोद्यतम्।
अजारूढं स्मरेद्रक्तं शक्तिपाणिं हुताशनम् ॥ ९३ ॥

सहस्रार्चिभिराकीर्णं सहस्रादित्यभासुरम्।
महामहिषसंस्थं तु त्वञ्जनाद्रिसमप्रभम् ॥ ९४ ॥

सुभीमदण्डहस्तं तु स्मरेद्देवं पितृीश्वरम्।
दंष्ट्राकरालवदनं कृष्णमेघसमप्रभम् ॥ ९५ ॥

घोरं प्रेतासनं ध्यायेत् खड्गधृग्राक्षसेश्वरम्।
मुक्ताफलद्युतिसमं भीमं पाशकरोद्यतम् ॥ ९६ ॥

नागकन्यासहस्राढ्यं मकरस्थमपांपतिम्।
नीलतोयदसंकाशं महाध्वजपटाङ्कितम् ॥ ९७ ॥

ध्यायेत् समीरणं देवं सस्थितं हरिणोपरि।
सोमं तारागणोपेतं शङ्खगोक्षीरपाण्डरम् ॥ ९८ ॥

वृहच्छशकपृष्ठस्थं शिशिराब्जकरं स्मरेत्।
सितभूतिविलिप्ताङ्गं त्रिणेत्रं वृषवाहनम् ॥ ९९ ॥

त्रिशूलायुधहस्तं च त्वीशानं ज्ञानिनं स्मरेत् ।
पातालदिग्गतं ध्यायेत् कूर्मारूढं हलायुधम् ॥१००॥
सितं सहस्रफणभृद्योऽनन्तो नाम नागराट् ।
भचक्रं भ्राम्यमाणं तु दण्डहस्तं प्रजापतिम् ॥ १०१ ॥
हंसारूढं खसंस्थं तु ध्यायेद्ध्रुवमजं विभुम् ।
एते चतुर्भुजाः सर्वे अक्षसूत्रविभूषिताः ॥ १०२ ॥
चिन्तयन्तः परं तत्त्वं वराभयकरोद्यताः ।
दिव्याभरणदिग्धाङ्गा दिव्यमाल्याम्बरान्विताः ॥
दिव्यरूपधराश्चैव दिव्यगन्धवहा द्विज ! ।
रक्तशुक्लनिशापीतनीलचम्पकसप्रभैः ॥ १०४ ॥
व्योमस्फटिकमार्तण्डराजोपलनिभैस्तथा ।
माल्याङ्गरागवसनैः महार्घैः समलंकृताः ॥ १०५ ॥
भूषिता भूषणैश्चित्रैः करण्डमकुटादिभिः ।
एभ्यश्चतुर्भुजो ब्रह्मन् ! विज्ञेयो वृषभध्वजः ॥ १०६ ॥
द्विभुजास्त्वमराश्चान्ये वरदाभयदास्तु वा ।
इति लोकेश्वरेषूक्तं ततो वै द्विजसत्तम ! ॥ १०७ ॥
तृतीयावरणद्वारे शाखामूले तु दक्षिणे ।
सुदर्शनं चतुर्हस्तं ह्रस्वकायं ज्वलत्प्रभम् ॥ १०८ ॥
क्रोधरक्तेक्षणं दैत्यदानवासृग्विलेपनम् ।
नृत्यन्तं मदमत्तं च सहस्रारान्तरस्थितम् ॥ १०९ ॥
दंष्ट्राकरालवदनं कुटिलभ्रूलतायुतम् ।
कल्पान्तपावकाकारं स्वरश्मिपरिवेष्टितम् ॥ ११० ॥
दक्षिणे भुजयुग्मे तु पूर्वेण च सुदर्शनम् ।
धारयन्तं ततोऽन्येन विश्रान्तां भूतले गदाम् ॥१११॥
शङ्खं मुख्येन वामेन ह्यपरेण गणित्रकम् ।
हारकेयूरताटङ्कमकुटादिविभूषणैः ॥ ११२ ॥
विभूषितं विचित्रैस्तु श्वेतमाल्याम्बरादिकैः ।
विघ्नानुत्पाटयन्तं च दीप्तेन स्वेन तेजसा ॥ ११३ ॥
संस्मरेत्तु ततोऽन्यस्मिन् शाखामूले महामते ! ।
सुस्थितं गरुडं विप्र ! तप्तकाञ्चनसन्निभम् ॥ ११४ ॥

सौम्यवक्त्रं विवृत्ताक्षं रक्ततुण्डं सुभीषणम् ।
पृथूदरं दीर्घपुच्छपक्षमण्डलमण्डितम् ॥ ११५ ॥
रक्ताम्बरधरं चैव रक्तस्रगनुलेपनम् ।
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥ ११६ ॥
विचित्रकञ्चुकधरं भुजगेन्द्रैरलंकृतम् ।
मकुटाद्यैरलंकारैर्विविधैस्तु विभूषितम् ॥ ११७ ॥
भुजद्वये यथाक्रमं वामे संपरिकीर्तितम् ।
दक्षिणे तद्वदेवास्य, दक्षोक्तं वामगं भवेत् ॥ ११८ ॥
वज्रं शक्तिस्तथा दण्डः खड्गः पाशो ध्वजस्तथा ।
शिशिराख्यं त्रिशूलं च लाङ्गलं मुसलं तथा ॥११९॥
पूर्वादिक्रमयोगेन चतुर्थावरणे स्थिताः ।
एतेषां क्रमशो ध्यानं समाकर्णय साम्प्रतम् ॥१२०॥
वज्रं वज्रोपलाभं तु सितदीर्घनखाङ्कितम् ।
दंष्ट्राकरालवदनं ज्वलत्कलकलोचनम् ॥ १२१ ॥
सौदामिनीप्रभां शक्तिं शान्ताशिवदनेक्षणाम् ।
घनघर्घरनिर्घोषमुद्गिरन्तीं मुहुर्मुहुः ॥ १२२ ॥
बद्धमुष्टिं स्मरेद्दण्डं रक्ताङ्गं रक्तलोचनम् ।
क्रोधमूर्तिं सदशनैर्दशन्तमधरं स्वकम् ॥ १२३ ॥
स्व(स्व)रश्मिखचितं ध्यायेन्नृत्यमानं च नन्दकम् ।
शरदाकाशसंकाशं दशन्तं दशनावलीम् ॥ १२४ ॥
पाशं गुणगणाकीर्णं विधुज्जिह्वं भयानकम् ।
हेमालिपाण्डराभं च घोरास्यं रक्तलोचनम् ॥ १२५ ॥
शरज्जलदसंकाशं ध्वजं कुटिललोचनम् ।
स्वतेजसा जगत् सर्वं द्योतयन्तं बलोत्कटम् ॥ १२६ ॥
शिशिरं शीतधामाभं पीनाङ्गं पृथुविग्रहम् ।
जटाकलापधृक्सौम्यं पुण्डरीकनिभेक्षणम् ॥ १२७ ॥
उदयार्कसहस्राभं त्रिशूलं भीषणाकृतिम् ।
कल्पान्तपावकाकारस्वरश्मिपरिवेष्टितम् ॥ १२८ ॥
सन्ध्याजलदसंकाशं लाङ्गलं भीमलोचनम् ।
क्षामाङ्गमुन्नतांसं च वज्रकायं बलोत्कटम् ॥ १२९ ॥

कुन्दावदातं मुसलं सौम्यमीषत्स्मिताननम् ।
रथं रथन्तं मधुरं श्रोत्रेन्द्रियसुखावहम् ॥ १३० ॥
नीलरक्तसितापीतपावकाञ्चनसन्निभैः ।
हेमचन्द्रहिमाकाशसमानाभैः क्रमेण तु ॥ १३१ ॥
माल्याङ्गरागवसनै रुचिरैः समलंकृताः ।
दिव्यैराभरणैर्युक्ताः स्वचिह्नाङ्कितमस्तकाः ॥ १३२ ॥
तर्जयन्तश्च दुष्टौघं दक्षिणेन करेण तु ।
वामेन कटिमालम्ब्य सुसमैः स्थानकैः स्थिताः ॥१३३॥
चतुर्थावरणद्वारदक्षिणोत्तरशाखयोः ।
गङ्गां च यमुनां चैव ध्यात्वा संपूजयेत् क्रमात् ॥१३४॥
भगवत्पादसंभूतां गङ्गां कुमुदसन्निभाम् ।
नवयौवनलावण्यसौकुमार्यगुणैर्वृताम् ॥ १३५ ॥
नीलाङ्गरागवसनां नीलमाल्यैरलंकृताम् ।
द्विभुजां सौम्यवदनां पुण्डरीकनिभेक्षणाम् ॥ १३६ ॥
हारनूपुरकेयूरकुण्डलाद्युपशोभिताम् ।
संसारतापसन्तप्तानारुरुक्षून् परं पदम् ॥ १३७ ॥
वासनाकर्मपङ्कानि क्षालयन्तीं स्वतेजसा ।
वहन्तीं दक्षिणेनैव कलशं वारिपूरितम् ॥ १३८ ॥
वामेन तर्जयन्तीं च करेण प्राकृतान् जनान् ।
यमुनां नीलरत्ना(का)भां नीलकुञ्चितमूर्धजाम् ॥१३९॥
सिताङ्गरागवसनां सितमाल्योपशोभिताम् ।
दक्षिणे तर्जनी मुद्रा वामे तु कलशः स्मृतः ॥ १४० ॥
अन्यत् सर्वं तु गङ्गोक्तमत्रापि स्यान्महामते ! ।
लोहिताक्षो महावीर्यस्त्वप्रमेयः सुशोभनः ॥ १४१ ॥
वीरहा विक्रमो भीमः शतावर्तस्तु चाष्टमः ।
ऐश्वरीदिक्क्रमेणैव पञ्चमावरणे स्थिताः ॥ १४२ ॥
ध्यायेच्चन्द्रप्रतीकाशं लोहिताक्षं बलोत्कटम् ।
नीलाम्बरधरं नीलमाल्यं नीलानुलेपनम् ॥ १४३ ॥
महावीर्यं महाकायं पीतवर्णं महाभुजम् ।
प्रवालाभाम्बरधरं रक्तस्रगनुलेपनम् ॥ १४४ ॥

संस्मरेदप्रमेयाख्यमप्रमेयबलोत्कटम् ।
हरिताकृतिमापीतवसनस्रग्विलेपनम् ॥ १४५ ॥
सुशोभनं शोभनाङ्गं मुक्ताफलनिभं स्मरेत् ।
अतसीपुष्पसंकाशवासोमाल्यानुलेपनम् ॥ १४६ ॥
वीरघ्नं वीरहाख्यं च ध्यायेच्चम्पकसप्रभम् ।
बाह्लीकरञ्जितं रक्तवसनस्रग्विमण्डितम् ॥ १४७ ॥
विक्रमं विक्रमावासं चापोदरनिभं स्मरेत् ।
कुन्देन्दुकान्तिवसनं सितमाल्यानुलेपनम् ॥ १४८ ॥
भीमं भीमाकृतिं ध्यायेत्तप्तकाञ्चनसन्निभम् ।
पाण्डरारुणकौशेयं तद्वद्गन्धस्रगन्वितम् ॥ १४९ ॥
अतसीकुसुमश्यामं शतावर्तं तु भावयेत् ।
पीताम्बरधरं पीतमाल्यगन्धविभूषितम् ॥ १५० ॥
भुजद्वयान्विता ह्येते चान्तर्मुदितमानसाः ।
दक्षिणैः पाणिभिः सर्वे ज्वलन्तं परशुं तथा ॥ १५१ ॥
वामैः शङ्खवरं दीप्तं दधानाश्चारुकुण्डलाः ।
समाः समविभक्ताङ्गाः प्रशान्ताकृतयस्तथा ॥ १५२ ॥
स्थानकैः संस्थिताः सर्वे स्वप्रभाभिर्विराजिताः ।
प्रसन्नवदनाः सौम्यास्त्रैलोक्योद्धरणक्षमाः ॥ १५३ ॥
हारनूपुरकेयूरपूर्वभूषाविभूषिताः ।
तदाज्ञाप्रेक्षकाश्चैव दुष्टदोषोरशान्तिदाः ॥ १५४ ॥
बलेन महता क्षिप्तदेवासुरमहोरगाः ।
एकवीराऽसहायाश्च त्वप्रयत्नेन लीलया ॥ १५५ ॥
आब्रह्मभवनं शश्वत् परिवर्तयितुं क्षमाः ।
एतदावरणद्वारचतुष्के द्वारदेवताः ॥ १५६ ॥
न्यसेयुग्मप्रयोगेण पूर्वद्वारादितः क्रमात् ।
चक्रनाभं हरीशं च पूर्वस्यां दक्षिणोत्तरे ॥ १५७ ॥
ध्यायेत्तु चक्रनाभाख्यं शतधामसमप्रभम् ।
मुख्यदक्षिणहस्तेन निषेधाभिनयान्वितम् ॥ १५८ ॥
वेत्रलतां द्वितीयेन चक्रराजं तृतीयतः ।
मुख्यवामकरेणैव श्रोणीतटकृतार्पणम् ॥ १५९ ॥

शङ्खराजं द्वितीयेन तथा वज्रं तृतीयतः।
धारयन्तं, तथा रुक्मभूषणैर्विविधैरपि ॥ १६० ॥
रक्तमाल्याम्बरधरं रक्तस्रगनुलेपनम्।
एवमेव हरीशं च निषेधाभिनयोज्झितम् ॥ १६१ ॥
प्रवेशाभिनयाख्येन पाणिना किन्तु चिह्नितम्।
एको ह्यत्र निषेधं च स्वभक्तानां करोति वै ॥ १६२ ॥
भक्तानामपरश्चैव प्रवेशं संप्रयच्छति।
द्वारे द्वारे प्रतीहारद्वयस्यैवं प्रयोजनम् ॥ १६३ ॥
दक्षोक्तं वज्रनाभस्य तद्धरीशस्य वामगम्।
आद्यवामगतं सर्वमन्यद्दक्षिणपाणिगम् ॥ १६४ ॥
धर्माध्यक्षनियन्त्रीशौ दक्षिणे दक्षिणोत्तरे।
कुर्यादन्तकासादृश्यौ पूर्ववद्भुजभूषितौ ॥ १६५ ॥
पीतकौशेयवसनौ पीतमाल्यविलेपनौ।
किन्तु दण्डगदाहस्तौ वज्रचक्रविवर्जितौ ॥ १६६ ॥
शुद्धाक्षममृतानन्दं प्रतीच्यां दक्षिणादितः।
बाणकार्मुकमेकस्मिन् पाणौ पाशमथापरे ॥ १६७ ॥
आद्यं करचतुष्कं यत्तद्धयग्रं पूर्ववद्भवेत्।
आकृतौ जलनाथस्य सदृशौ सर्वदैव हि ॥ १६८ ॥
नीलकौशेयवसनौ नीलस्रगनुलेपनौ।
वसुनाथं सुदानन्दमुदग्दिग्दक्षिणोत्तरे ॥ १६९ ॥
खड्गमुद्गरहस्तौ च प्राग्वच्छेषं चतुष्टयम्।
कराणामनयोः कार्यं रूपेणोडुपतेः समम् ॥ १७० ॥
अतसीकुसुमश्यामकौशेयस्रग्विलेपनौ।
भूषणैर्भूषिता ह्येते विविधैर्वज्रनाभवत् ॥ १७१ ॥
षष्ठावरणदेवानां तद्द्वारस्थानां विशेषतः।
ध्यानं शृणु क्रमेणैव तत्त्वतो मुनिपुङ्गव! ॥ १७२ ॥
पूर्वादीशानपर्यन्तं षष्ठावरणसंस्थिताः।
एताश्च देवता विप्र! तेजोरूपं समाश्रिताः ॥ १७३ ॥
कालो विधविधन्ता च शार्ङ्गं नानाङ्गलक्षणम्।
विद्याधिपतयश्चैव सरुद्रः सगणः शिवः ॥ १७४ ॥

प्रजापतिसमूहस्तु इन्द्रः सपरिवारकः।
तन्मुख्यद्वाश्चतुष्के तु पूर्ववत् संस्थिताः क्रमात् ॥
चक्रशङ्खौ पद्मगदे लाङ्गलं मुसलं शराः।
शार्ङ्गं चैते क्रमाद्ध्येया विद्युत्तुहिनकुन्दभाः ॥ १७६ ॥
पीतनीलसितारक्तसितगोक्षीरसन्निभैः।
हरितालारुणाभैस्तु वस्त्रमाल्यानुलेपनैः ॥ १७७ ॥
सर्वरत्नमयैर्युक्तैर्भूषणैरप्यलङ्कृताः।
महाबला महावीर्यास्त्वेकवक्त्रा द्विबाहवः ॥ १७८ ॥
एते तु नायकाः सर्वे स्वचिह्नाङ्कितमस्तकाः।
दुष्टौघं तर्जयन्तश्च दक्षिणेन करेण तु ॥ १७९ ॥
कटिमालम्ब्य वामेन स्थानकैः सुसमैः स्थिताः।
दृढव्रतो बहुशिरा महाकायो महाबलः ॥ १८० ॥
जितक्रोधो दुराधर्षो महोत्साहस्त्रिविक्रमः।
अतुलो दुष्प्रहाऽर्चिष्मान् सर्वदृग् दुरतिक्रमः ॥ १८१ ॥
विषमो गहनोऽमोघः षोडशोपप्रवेशकाः।
शक्राग्निमध्यमारभ्य शक्रेशानान्तरावधि ॥ १८२ ॥
शुक्लशोणसुवर्णालिपिङ्गरक्तसितासिताः।
रक्तपीतातसीहेमाः शोणशुभ्रसितासिताः ॥ १८३ ॥
वर्णानुरूपसद्वस्त्रमाल्यालेपनभूषणाः।
नामानुरूपचारित्राः शङ्खमुद्गरधारिणः ॥ १८४ ॥
सव्येतरक्रमेणैव प्रवेशकनिषेधकाः।
क्षणाद्भुवनसंहारसृष्टिस्थितिकृतिक्षमाः ॥ १८५ ॥
उक्तानेतान् क्रमेणैव पूर्ववत् संप्रपूजयेत्।
मुनयः सप्त पूर्वेऽन्ये ग्रहास्तारादिकैर्वृताः ॥ १८६ ॥
जीमूताश्चाखिला नागास्त्वप्सरोगण उत्तमः।
ओषध्यश्चैव पशवो यज्ञाः साङ्गाखिलास्तु ये ॥ १८७ ॥
सूक्ष्मरूपेण तिष्ठन्ति पूर्ववत् सप्तमावृतौ।
संभवः प्रभवश्चैव पूर्णः पुष्कर एव च ॥ १८८ ॥
आनन्दो नन्दनश्चैव वीरसेनसुषेणकौ।
तन्मुख्यद्वारशालास्थौ द्वौ द्वौ दक्षिणवामयोः ॥१८९॥

संभवः श्वेतवर्णस्तु प्रभवः कुन्दसन्निभः ।
पूर्णस्तु रक्तवर्णाभस्त्वतिरक्तस्तु पुष्करः ॥ १९० ॥

आनन्दः पीतवर्णस्तु हेमाभो नन्द उच्यते ।
कृष्णाभो वीरसेनस्तु सुषेणोऽञ्जनसन्निभः ॥ १९१ ॥

मकुटाङ्गदचित्राङ्गा गदाहस्ता द्वियाहवः ।
चतुर्भुजा वा विप्रेन्द्र ! शङ्खचक्रगदाधराः ॥ १९२ ॥

पूर्ववत् पाणिनान्येन प्रवेशकनिषेधकाः ।
दंष्ट्राकरालवदना निग्रहानुग्रहक्षमाः ॥ १९३ ॥

क्षेमकृच्छियकृत् प्राशो होमकृद्भूतभावनः ।
युगान्तारन्यशनश्चैव संवर्तो भीषणस्तथा ॥ १९४ ॥

संक्रन्दनश्चानिमिषः शतपर्वा शताननः ।
औदुम्बरः प्राकृतिको छि (चि) रामश्चांशुमाल्यपि ॥

औपदौवारिकं त्वेतद्गणषोडशकं क्रमात् ।
दृढव्रतादिसदृशं वर्णतः षड्भुजान्वितम् ॥ १९६ ॥

वामदक्षिणयोगेन पृष्ठतः पूर्वपश्चिमम् ।
शङ्खमुद्गरपद्माक्षवराभयसमन्वितम् ॥ १९७ ॥

नानावर्णस्रगुष्णीषवस्त्रालेपनभूषणम् ।
प्रागुक्तगणशौर्याढ्यं सर्वकर्मकृतिक्षमम् ॥ १९८ ॥

तच्छोभाग्रकरक्षार्थं शतमन्युर्विरोचनः ।
अप्रतर्क्यस्त्वनुलङ्घ्यस्त्वप्रमेयाभिधानकः ॥ १९९ ॥

अमर्षी च महद्भूतः केकाराक्षस्तथाष्टमः ।
इन्द्राग्निमध्योपद्वारपार्श्वशोभास्वनुक्रमात् ॥ २०० ॥

एकैकशः स्थिताः शूराः प्रवेशकनिषेधकाः ।
नीलपीतजपाश्यामसितहिङ्गुलकेन्दुभाः ॥ २०१ ॥

महाबला महावीर्याः सुदुर्लङ्घ्यपराक्रमाः ।
नानाविधाम्बरैः स्रग्भिर्भूषणैरनुलेपनैः ॥ २०२ ॥

अन्यैरनुपदिष्टैश्च यथाशोभमलंकृताः ।
षाड्गुण्यमहिमायुक्ताश्चतुर्हस्ताः क्रमेण तु ॥ २०३ ॥

पृष्ठदक्षिणवामाभ्यां चक्रशङ्खसमन्विताः ।
गदाग्रोपरिविश्रान्तमुख्यहस्तद्वयान्विताः ॥ २०४ ॥

द्वारोपद्वारशोभेशानेतान् संपूजयेत् क्रमात् ।
विद्या चैवापरा विद्या पावकश्चैव मारुतः ॥ २०५ ॥

चन्द्रार्कौ वारि वसुधेत्येताः संसारदेवताः ।
सूक्ष्मरूपेण तिष्ठन्ति वाह्यावरणभूतले ॥ २०६ ॥

अमरेशो विरूपाक्षः सुधर्मिष्ठो नियामकः ।
सर्वसत्त्वाश्रयश्चातिगहनस्तदनन्तरम् ॥ २०७ ॥

महाराजेश्वरश्चापि धनाध्यक्षेश्वरस्तथा ।
एते गणेश्वरास्त्वष्टौ तन्मुख्यद्वारपालकाः ॥ २०८ ॥

ध्येयाश्चतुर्भुजाः सर्वे मुख्यपाणिद्वयेन तु ।
अमरेशविरूपाक्षौ वज्रवेत्रलताकरौ ॥ २०९ ॥

पृष्ठकाभ्यां तु पाणिभ्यां चक्रशङ्खसमुज्ज्वलौ ।
कुङ्कुमाञ्जनसंकाशौ दंष्ट्रया विकृताननौ ॥ २१० ॥

दक्षिणोत्तरयोगेन लाञ्छनव्यत्ययान्वितौ ।
द्वारदक्षिणवामस्थौ प्रवेशकनिषेधकौ ॥ २११ ॥

सुधर्मिष्ठो नियन्ता च सुसितश्यामलप्रभौ ।
सुभीमदण्डहस्तौ च वज्रायुधविवर्जितौ ॥ ११२ ॥

यथाक्रमोदितानन्यान् धारयन्तौ यथाविधि ।
सर्वसत्त्वाश्रयश्चातिगहनः श्यामलः सितः ॥ २१३ ॥

किन्तु पाशकरावेतौ पूर्ववद्भुजभूषितौ ।
महाराजेश्वरो रक्तो धनाध्यक्षेश्वरोऽसितः ॥ २१४ ॥

शिशिरायुधसंयुक्तौ त्रिकमन्यद्यथा पुरा ।
महाबला महावीर्या दुष्टदोषभयङ्कराः ॥ २१५ ॥

दुर्निरीक्षाश्च दुर्धर्षा दैत्यदानवहिंसकाः ।
नानामहार्घवासोभिः भूपालैरलंकृताः ॥ २१६ ॥

महर्षभं प्रभूतं च गम्भीरं प्राणगोचरम् ।
योगाङ्गं योगनिलयं सनातनमश्रृङ्खलम् ॥ २१७ ॥

तारकान्तरितं तारं विरामं विषमं तथा ।
दुरतिक्रमं दुर्ग्रहं च सुधूम्रमनिलाशनम् ॥ २१८ ॥

तत्सालकोपद्वारेषु विन्यसेत् पूर्ववर्त्मना ।
उक्तोपद्वारपालानां वर्णतः सममुज्ज्वलम् ॥ २१९ ॥

गणषोडशकं त्वेवं चतुष्पाणिसमन्वितम्।
गौणवामकराद्यं तु मुख्यवामकरावधि॥ २२०॥

शङ्खपट्टसहस्तं च निषेधाभिनयोद्यतम्।
प्रवेशाभिनयाङ्कं च नानावर्णाम्बरस्रजम्॥ २२१॥

नानास्थानकसंयुक्तं नानाभूषणभूषितम्।
अक्षसूत्रधरं वाऽथ प्रपन्नानां प्रवेशकृत्॥ २२२॥

निषेधकृत्तथान्येषां न्यस्तव्यं मुनिसत्तम!।
देवव्रतं निरातङ्कं भीमं च पुरुषं तथा॥ २२३॥

उग्रं वीरेश्वरं रम्यमरिष्टं मुनिसत्तम!।
अनिर्विण्णं युगान्तांशं शतानन्दं शताननम्॥ २२४॥

तेजोधरं विशालाक्षं युगांशं देवनन्दनम्।
एतद्द्विरष्टशोभासु गणमेकैकशो न्यसेत्॥ २२५॥

उपद्वारेशसदृशं वर्णतो लाञ्छनैर्विना।
चतुर्भिः पाणिभिश्चैव पृष्ठदक्षिणपूर्वकम्॥ २२६॥

मुख्यदक्षिणहस्तान्तं शङ्खचक्रगदाधरम्।
निषेधकृच्च पापानामपापानां प्रवेशकृत्॥ २२७॥

नानास्रगम्बरोष्णीषभूषालेपाद्यलंकृताः।
अनन्ताचिन्त्यविभवाः सर्वभूतसमाश्रयाः॥ २२८॥

नानाशस्त्रास्त्रकुशला नानाज्ञानसमन्विताः।
निरस्तानेकदैत्येशाः साधूनां पालनोद्यताः॥ २२९॥

द्वारद्वयान्विते साले मुख्यद्वारगतावुभौ।
तिष्ठतः सूक्ष्मरूपेण तदन्यद्वारपार्श्वयोः॥ २३०॥

प्राकारसर्वकोणेषु वह्निकोणादितो न्यसेत्।
प्रभवाप्ययरूपाणां मूर्तीनां चतुरात्मनाम्॥ २३१॥

तथा मूर्त्यन्तराणां च तत्कान्तानामनुक्रमात्।
मन्त्राणामस्त्रसङ्घादि तेषां रूपमनुस्मरन्॥ २३२॥

चतुर्णामपि कोणानामव्यक्तं भवनाद्बहिः।
संयजेद्भवनाख्यार्थं यस्मान्नान्यो भवः स्मृतः॥ २३३॥

तेषां बहिः स्वमन्त्रेण दिक्क्रमेण तु हेतिराट्।
स्वमरीचिगणेनैव भासयन्तं निवेद्य च॥ २३४॥

न्यस्यैवमर्चनं कुर्यान्मित्रमुद्रान्वितेन तु।
निरीक्षणादिशुद्धेन अर्घ्यस्रक्चन्दनादिना॥ २३५॥

वासुदेवाभिधानस्तु देवः षाड्गुण्यविग्रहः।
कर्मिणामुपकारार्थं प्रासादं स्थूलविग्रहम्॥ २३६॥

सर्वज्ञानक्रियाख्यं च सर्वतत्त्वसमाश्रयम्।
समासाद्यानुगृह्णाति सदाचान्तर्गतः प्रभुः॥ २३७॥

तस्मात्तदङ्गभूतेषु प्राकारेष्वष्टसु क्रमात्।
पृथ्व्यादिबुद्धिनिष्ठं तु बाह्यं तत्त्वाष्टकं न्यसेत्॥ २३८॥

प्रासादश्चाङ्गसंयुक्तः प्रकृतिस्त्रिगुणात्मिका।
तद्गता प्रतिमा जीवस्तद्गतः परमः पुमान्॥ २३९॥

अतोऽधिदैवतान्यत्र तत्त्वान्येतान्यनुक्रमात्।
सर्वत्र व्यापकत्वेन ध्यात्वा संपूजयेत्ततः॥ २४०॥

सर्वाधारमयेनैव सर्वतत्त्वाश्रयेण च।
सर्वदोषविषघ्नेन कालचक्राम्बुजेन तु॥ २४१॥

सम्पुटीकृत्य भवनं सप्राकारमथोर्ध्वतः।
संपूज्य ह्यादर्शीं मुद्रां चक्रमुद्रासमन्विताम्॥ २४२॥

प्रदर्श्य सर्वतोदिक्कं कवचेनावकुण्ठयेत्।
एकमूर्तिविधाने च तथैकद्वारभूषिते॥ २४३॥

भवनेऽयं विधानः स्याद्विव्यूहपरिनिष्ठिते।
चतुर्द्वारान्विते गेहे द्विद्वाराग्रस्थमण्डपे॥ २४४॥

सर्वतोभद्रसाले च अघनिर्मोचनेऽपि च।
सदख्याख्येऽथ धर्माख्ये द्वारद्विद्वितयान्विते॥ २४५॥

द्वारपालगणन्यासे विशेषोऽयं प्रदर्श्यते।
चण्डाद्याश्च सुभद्रान्ताः प्रासादद्वाश्चतुष्टये॥ २४६॥

न्यसनीयाः क्रमेणैव पूर्ववद् द्वन्द्वयोगतः।
द्वारोर्ध्वोदुम्बरद्वन्द्वद्वितयस्था यथाक्रमम्॥ २४७॥

लक्ष्मी कीर्तिर्जया माया देव्यः प्रागुक्तलक्षणाः।
सत्यः सुपर्णो गरुडः तार्क्ष्यस्त्वग्रेषु संस्थिताः॥२४८॥

अनिवर्ती महावर्ती दर्पहा सर्वजित् स्थिरः।
जयन्तो भयकृन्मानी त्वष्टमो द्विजसत्तम!॥ २४९॥

दिगग्रमण्डपद्वारशाखापार्श्वे समास्थिताः ।
अनिर्वर्ती महावर्ती कृष्णाभः शुकसन्निभः ॥ २५० ॥

दर्पहा सर्वजिच्चैव पाण्डुरकसुवर्णभौ ।
स्थिरो जयन्तः सततं श्यामाञ्जनसमद्युती ॥ २५१ ॥

भयकृच्चैव मानी च पिङ्गलः पाण्डुरोज्ज्वलः ।
द्विभुजाः सर्व एवैते दक्षिणेन करेण तु ॥ २५२ ॥

नन्दकं शङ्खमन्येन दधानाः क्रूरविक्रमाः ।
यदा चतुर्भुजा ध्येयाः तदा चैते गणेश्वराः ॥ २५३ ॥

मुख्यदक्षिणहस्तेन खड्गवेत्रलतान्विताः ।
तथा वामकरे शङ्खं पृष्ठगे दक्षिणादितः ॥ २५४ ॥

पाणिद्वये चक्रपद्मौ बिभ्रतो ज्वलनप्रभौ ।
नानावस्त्रस्रगुर्णापभूषणालेपनान्विताः ॥ २५५ ॥

व्यत्यस्तहस्तचरणा लाञ्छनव्यत्ययान्विताः ।
ऊर्जितश्चामृताङ्गस्तु सर्वाङ्गः सर्वतोमुखः ॥ २५६ ॥

शुभ्राङ्गो वरदश्चैव वागीशः शब्दविक्रमः ।
पाञ्चजन्यविशेषा हि द्वौ द्वौ चैव क्रमात् स्थितौ ॥

सर्वतोभद्रसालस्थचतुर्द्वारेषु पूर्ववत् ।
द्विवाहवस्तु संसार्या दक्षिणेन करेण तु ॥ २५८ ॥

गृहीतमुसलाः सर्वे शङ्खमन्येन पाणिना ।
दधानाश्चैव चत्वारः पूर्वे बन्धूकसन्निभाः ॥ २५९ ॥

अन्ये परभृताभास्तु सर्वभूषणभूषिताः ।
बलेन महता क्षिप्तदेवासुरमहोरगाः ॥ २६० ॥

एकवीराऽसहायाश्च अप्रयत्नेन लीलया ।
आब्रह्मभवनं शश्वत् परिवर्तनकृत्क्षमाः ॥ २६१ ॥

विश्वेशो विश्वभुग्विश्वो विश्वात्मा विश्वलोचनः ।
विश्वपादो विश्वभुजः तथा वै विश्वकर्मकृत् ॥ २६२ ॥

एते द्वितीयसालस्य दिग्द्वारेषु नियामकाः ।
द्विवाहवः परिज्ञेया वामदक्षिणयोगतः ॥ २६३ ॥

गदाखड्गास्त्रसंयुक्ताः करण्डमकुटान्विताः ।
शोणपिङ्गसितश्यामरक्तपीतसितासिताः ॥ २६४ ॥

सर्ववर्णाम्बरालेपस्रग्भूषाभिर्विराजिताः ।
एकवीराऽसहायाश्च सर्वदोषनिवारकाः ॥ २६५ ॥

तद्द्वारान्तरभागेषु वामदक्षिणयोगतः ।
प्रासादाभिमुखान् न्यस्येन्निधिनाथेश्वरान् क्रमात् ॥

शङ्खपद्मौ महापद्मशतधामाभिधौ ततः ।
अखण्डितः सन्ततश्चानन्तधार इति श्रुतः ॥ २६७ ॥

सर्वद्वार इति ख्यातः प्रथमौ पूर्वमीरितौ ।
अन्येषां वक्ष्यते षण्णां वर्णरूपादिकं क्रमात् ॥२६८॥

रक्तः कृष्णः सुवर्णाभः सितारुणतमालभाः ।
शङ्खपद्मनिधीशोक्तसर्वलक्षणलक्षिताः ॥ २६९ ॥

वसुरत्नसुवर्णाद्यलोहधान्यधनाधिपाः ।
सर्वौषधिनिधीशानास्तेषामूर्ध्वे सुखासनाः ॥ २७० ॥

सर्वालङ्कारसंयुक्ताः स्वाश्रिताभिमतप्रदाः ।
ततस्तृतीयावरणद्वारेषु द्वन्द्वयोगतः ॥ २७१ ॥

तद्दक्षिणोत्तराभ्यां तु शाखाभ्यां विन्यसेत् क्रमात् ।
पुरतश्चक्रगरुडौ हलतालौ तु दक्षिणे ॥ २७२ ॥

पश्चिमे शार्ङ्गमकरौ सौम्ये नन्दकश्चाश्वकौ ।
चक्रपक्षीशतालाणां शार्ङ्गनन्दकयोरपि ॥ २७३ ॥

स्वेषु स्थानेषु पूर्वोक्तं वर्णरूपादिकं द्विज ! ।
अन्येषां तालपूर्वाणां त्रयाणामथ वक्ष्यते ॥ २७४ ॥

तालो ध्वजः स्याद्भूतादिकालरूपाभिमानकः ।
झषः सर्वाङ्गनिभृतो जगद्बीज उदाहृतः ॥ २७५ ॥

स सर्वोपद्रवो ऋद्धयः संसारश्चपलात्मकः ।
एतान् सूक्ष्मस्वरूपेण ध्यात्वा संपूजयेत् क्रमात् ॥

गङ्गा च यमुना गोदा नदी च महती तथा ।
वितस्ता नर्मदा चैव जम्ब्वाख्या च सरस्वती ॥२७७॥

नद्यश्चतुर्थसालस्य दिग्द्वारेषु क्रमात् स्थिताः ।
गङ्गायमुनायोरुक्तं वर्णरूपादिकं पुरा ॥ २७८ ॥

ताभ्यामन्याः समानास्तु वर्णशोभां विनैव तु ।
सितारुणासितस्वर्णसितकुन्दसमप्रभाः ॥ २७९ ॥

प्रमत्तप्रौढवेषाश्च नानाभरणभूषिताः ।
सर्वधातुविचित्राङ्गाः सर्वरत्नविराजिताः ॥ २८० ॥

सुधाकुम्भधरा द्वाभ्यां कराभ्यां पूर्ववच्च ताः ।
एवं दिग्द्वारभवनद्वास्थस्थितिरुदाहृता ॥ २८१ ॥

एकमूर्तेषु दिङ्मूर्तेः प्राकारेषूर्ध्वगेषु च ।
द्वारादयस्तदीयाश्च सामान्याः समुदाहृताः ॥ २८२ ॥

सर्वसालप्रतीहारशाखापार्श्वगतावुभौ ।
ध्येयौ वा स्थापनीयौ वा बाह्यद्वारगतौ यदि ॥ २८३ ॥

यथोक्तलक्षणोपेतौ स्थापनीयौ यथाक्रमम् ।
एवमावरणेशानान् ध्यात्वा संस्थाप्य वार्चयेत् ॥

ध्यानोत्थाः पीठदेशेषु स्वाकाराः स्वासु सद्मसु ।
तदर्धमङ्गणक्षेत्रं त्रिधा वा पञ्चधा भवेत् ॥ २८५ ॥

त्रिभागमेकभागं वा त्यक्त्वा तन्मध्यतो बहिः ।
पीठं वायतनं कुर्यात् सर्वदिक्ष्वन्तरेऽथवा ॥ २८६ ॥

अधरोत्तरनिष्ठाभ्यां प्रागुक्ते पूर्ववत् स्थिते ।
शिलेष्टकादिभिः कॢप्ताः पीठिका हस्तविस्तृताः ॥

तदर्धेनोच्छ्रिताः सर्वाः सर्वालङ्कारशोभिताः ।
चतुरश्राः सुवृत्ता वा संपूज्या वाऽथ केवलाः ॥२८८॥

ग्रामादिवास्तुदेवानां स्वदिग्भागगतेषु च ।
गोमयादिविलिप्तेषु मण्डलेषु बलिं हरेत् ॥ २८९ ॥

विस्तारोच्छ्रायमानाढ्यं पीठाः प्रागुक्तलक्षणाः ।
अर्धमानेन वा कार्या रथयात्राऽविरोधकम् ॥ २९० ॥

एवमावरणेशानाः पीठेषु स्वासु दिक्षु च ।
दुष्टदोषनिरासार्थं प्रासादाभिमु(खं)खाः स्थिताः ॥

चतुः स्थानावतीर्णस्य द्वारे च यजनालये ।
स्थापनं गणनाथानां शृणु त्वं मुनिपुङ्गव ! ॥ २९२ ॥

वास्तुक्षेत्रेशसंज्ञौ द्वौ प्राग्द्वारे पूर्ववत् स्थितौ ।
लक्ष्मीः कीर्तिर्जया माया द्वारेषूर्ध्वस्थिताः क्रमात् ॥

वज्रनाभादयो देवा द्वौ द्वौ दिग्द्वारशाखयोः ।
प्रागादिद्वारकुम्भेषु संभवप्रभवादयः ॥ २९४ ॥

कुमुदाद्यन्तरङ्गं च भूतानामष्टकं परम् ।
द्वारान्तर्युग्मयुक्त्या तु भ्रमणीदेशमाश्रितम् ॥ २९५ ॥

सुपर्णश्चक्रसंज्ञश्च सत्यः कौमोदकी द्विज ! ।
योजनीयाः क्रमेणैव द्वाराणामग्रभूतले ॥ २९६ ॥

हेमदण्डगतः सत्यः किन्तु पश्चिमदिग्गतः ।
चण्डाद्याश्च सुभद्रान्ता द्वौ द्वौ प्रागादिषु द्विज ! ॥

दक्षिणोत्तरयोगेन तोरणस्तम्भमूलगाः ।
चक्रद्वितयमध्यस्थः पक्षीशस्तोरणोपरि ॥ २९८ ॥

सुसितासु पताकासु सत्याख्यो विहगाधिपः ।
सुपर्णः शोणवर्णासु गरुडः पिङ्गलासु च ॥ २९९ ॥

राजपाषाणवर्णासु तार्क्ष्यसंज्ञः प्रतिष्ठितः ।
नानावर्णपताकायां संपूज्यो विहगेश्वरः ॥ ३०० ॥

इन्द्रादिलोकपालास्ते सिद्धसङ्घपुरस्सराः ।
वज्रादयस्तदस्त्राश्च स्वासु दिक्षु बहिः स्थिताः ॥

मुख्यकल्पेऽथवान्येषु निमित्तेष्वेवमाचरेत् ।
अनुकल्पेऽथ चण्डादीन् वास्तुनाथादिपूर्वकम् ॥

द्वारेषु केवलान् न्यस्य गरुडान्तं प्रपूजयेत् ।
सर्वद्वारेषु वा पूज्यः सहेतीशः पतत्रिपः ॥ ३०३ ॥

विविधासु प्रतिष्ठासु जीर्णोद्धारविधावपि ।
महोत्सवेषु सर्वेषु ध्वजारोहणकर्मणि ॥ ३०४ ॥

मङ्गलाङ्कुररोपे च पवित्रारोहणादिषु ।
तथा चानन्तकलशाद्यभिषेकविधावपि ॥ ३०५ ॥

प्रायश्चित्तेष्वनित्येषु तुलारोहादिषु द्विज ! ।
शान्तिकादिषु मुख्येषु काम्येष्वन्येषु नित्यशः ॥३०६॥

मुख्यकल्पोक्तविधिना कुर्यादन्यत्र चान्यथा ।
सिद्धसङ्घास्तथेन्द्राद्यास्तदस्त्राश्च यथाक्रमम् ॥३०७॥

लोकदिक्पालकास्त्वेते स्वसेनाभिः समावृताः ।
प्रसिद्धप्रारवशेनैव नित्यं स्वस्थानमाश्रिताः ॥ ३०८ ॥

दिक्पालकत्वादाद्यैश्यैर्नस्तेषां स्थितिः स्थिरा ।
भगवन्मन्त्रमूर्तीनामनन्तानां महामते ! ॥ ३०९ ॥

स्वस्थानस्था नमस्यन्ति पूजयन्ति जपन्ति च ।
ध्वजाद्यैरुपचारैश्च सम्यक् परिचरन्ति च ॥ ३१० ॥

कैवल्यसिद्धये शश्वद्द्वास्थैः स्वानुगैः सह ।
पालयन्ति च, भक्तानां बलमोजो ददन्ति च ॥

ध्वंसयन्ति च विघ्नौघमनिशं मन्त्रयाजिनाम् ।
संरक्षन्ति फलं मान्त्रं वर्धमानं द्विलक्षणम् ॥ ३१२ ॥

अधिकारमनादीयं शक्तिबीजं जगत्प्रभोः ।
द्विक्सिद्धये दशात्मत्वं तद्व्यक्त्यष्टदिशात्मिका ॥

बाह्यत्रिसालभूमिष्ठाः कालाद्या भवदेवताः ।
तत्साधकत्वात् पूर्वोक्तदिग्भागनियताः सदा ॥३१४॥

वज्रनाभादयो देवा लोकदिग्द्वारपालकाः ।
तथामरेशपूर्वाश्च संभवप्रभवादयः ॥ ३१५ ॥

प्रसिद्धप्राक्क्रमेणैव दिग्द्वारेषु स्थिताः क्रमात् ।
कालाद्यमष्टकं नित्यमिन्द्राद्यं रुद्रपश्चिमम् ॥ ३१६ ॥

नियन्ता कालतत्त्वान्ते तदन्ते सुस्थितं वियत् ।
क्रमात् पूर्वोत्तरे कोणे न्यसेद्दक्षिणपश्चिमे ॥ ३१७ ॥

विद्याऽविद्याद्वयं यद्वै स्वपदस्थेऽग्निमारुते ।
चन्द्रादित्यावुदग्याम्यस्थानयोर्विनिवेद्य च ॥ ३१८ ॥

प्रत्यग्भागगतं तोयं प्राग्भागे विन्यसेद्धराम् ।
कुमुदाद्यावृतीशाना लोहिताक्षादयस्तथा ॥ ३१९ ॥

वज्रनाभादिकं मुक्त्वा द्वारपालत्रिरष्टकम् ।
द्वारपालगणास्त्वन्ये सालकोणगणास्तथा ॥ ३२० ॥

प्रोक्तक्रमेण तिष्ठन्ति भगवत्प्रागपेक्षया ।
कुमुदादिगणेशानाः पुरग्रामादिवास्तुनि ॥ ३२१ ॥

पालिकावसथे चैव दिक्पालोक्तवशात् स्थिताः ।
त्रिसन्ध्यमेवं देवानां बलिदानं समाचरेत् ॥ ३२२ ॥

संकल्पितेषु सालेषु द्वारावरणवासिनाम् ।
असंकल्पितसालोकदेवानां नाचरेद्बलिम् ॥ ३२३ ॥

तत्तन्निर्माणकाले तान् प्रतिष्ठाप्य यथाविधि ।
देवयात्रा समेतं तु बलिदानं समाचरेत् ॥ ३२४ ॥

एवं सर्वं समपाद्य महापीठोर्ध्वभूतलम् ।
प्राक्षलितं समारुह्य प्राङ्मुखो वाप्युदङ्मुखः ॥ ३२५ ॥

तदूर्ध्वोम्बुजदिक्पत्रे कुमुदादीनथान्तरे ।
सर्वभूतान् पारिषदानाहूय ग्रहसंज्ञितान् ॥ ३२६ ॥

संपूज्य सोदकं तत्र बलिशेषं समुत्किरेत् ।
पश्चादाचम्य विधिवत् स्नात्वा वा संविशेद्गृहम् ॥

सर्वद्वारावृतीशानां कोणस्थानां समर्चने ।
नतिप्रणवसंयुक्तस्वनाम मन्त्र ईरितः ॥ ३२८ ॥

महापीठस्थभूतानां पार्षदानां गृहात्मनाम् ।
तारान्ते विष्णुशब्दं च नियुञ्ज्याद्वदितक्रमात् ॥३२९॥

सर्वकोणगता मन्त्राः फडन्ताः समुदीरिताः ।
सर्वे समुदिता मन्त्राः स्वाहान्ता होमकर्मणि ॥ ३३० ॥

ध्यात्वैवमर्च्य तन्मन्त्रैरर्घ्याद्यैरुपचारकैः ।
दर्शयेदावृतीशानां मुद्रां तर्जनिसंज्ञिताम् ॥ ३३१ ॥

द्वारपालगणानां तु चण्डाद्युक्तमनन्तरम् ।
धर्माद्यावरणादूर्ध्वं हेतुना येन केनचित् ॥ ३३२ ॥

बलिदानमशक्यं चेत्तत्स्थानां यथाक्रमम् ।
सर्वतोभद्रपूर्वेषु द्विगुणीकृत्य चाचरेत् ॥ ३३३ ॥

मुख्यकल्पे तथान्यत्र यथाशक्त्यावृतिक्षितौ ।
तद्बाह्यावृतिदेवानामावृत्यावृत्य तर्पयेत् ॥ ३३४ ॥

द्वारोपद्वारपालानां तस्मिन् द्वारे समर्पयेत् ।
महापीठोदितानां च तद्द्वाराग्रगमण्डले ॥ ३३५ ॥

ध्यानोत्थानां तु सञ्चारे न दोषः केन हेतुना ।
तत्तदावरणद्वारदेशेषूक्तक्रमेण तु ॥ ३३६ ॥

द्रव्यमूर्तिगतानां च संचारः स्यादनिष्टदः ।
एवमावृतिदेवानां त्रिसन्ध्यं बलिमाचरेत् ॥ ३३७ ॥

नित्योत्सवार्थबिम्बस्य सन्निधौ तत् समाचरेत् ।
नृत्तगेयादिसंयुक्तं वेदघोषसमन्वितम् ॥ ३३८ ॥

नित्योत्सवार्थबिम्बे तु यानाद्विपतिते भुवि ।
उत्तमं स्नपनं कृत्वा शान्तिहोमं समाचरेत् ॥ ३३९ ॥

यानमारोप्य तद्बिम्बं पुनर्नित्योत्सवं चरेत् ।
द्वादशाहं व्रतं कुर्यात् साधकः खिन्नमानसः ॥ ३४० ॥

जपेत् स्वमन्त्रायुतकं यदि भेदादिदूषिते ।
विधिवत् तत् समाधाय कृत्वा संप्रोक्षणं ततः ॥३४१॥

उत्सवं शेषमापाद्य खिन्नचित्तस्तु साधकः ।
तदारभ्य निराहारो ब्रह्मचर्यव्रते स्थितः ॥ ३४२ ॥

चतुष्कमयुतानां तु स्वमन्त्रस्य तदा जपेत् ।
तत्र त्रिरात्रं षडहं द्वादशाहं द्विपक्षकम् ॥ ३४३ ॥

व्रतमाचर्य यत्नेन पात्रेभ्यो दानमाचरेत् ।
गोभूहेमादिकानां तु यथाशक्ति द्विजोत्तम ! ॥ ३४४ ॥

दैवाद्दहति भङ्गं वा तदा बिम्बान्तरेण तु ।
स्नपनादिनियुक्तेन बलिदानैस्तु केवलैः ॥ ३४५ ॥

कर्मशेषं समापाद्य कृत्वा मन्त्रविसर्जनम् ।
जीर्णोद्धारक्रमेणैव व्रताचरणमारभेत् ॥ ३४६ ॥

जपायुतचतुष्कं च त्रिरात्राद्यं चतुष्टयम् ।
यावद्बिम्बसमापत्तिर्भूयः कृच्छ्रादिकं चरेत् ॥ ३४७ ॥

बिम्बारम्भदिनात् पूर्वं ततस्त्वेकादशाह्निकम् ।
व्रतं कृत्वा तु देवे तु बिम्बारम्भदिने द्विज ! ॥ ३४८ ॥

संपूज्य द्वादशाचार्यान् सममूल्यं पृथक् पृथक् ।
तेभ्यो द्वादशदानानि दत्वा गोभूतिलानि वा ॥ ३४९ ॥

एतेषां सन्निधौ भूयो बिम्बापादनमारभेत् ।
यद्वा बिम्बं समादध्यात् प्रतिष्ठादिकमाचरेत् ॥ ३५० ॥

गोभूहेमादिकानां तु दानं चापि समाचरेत् ।
जातलोकापवादस्तु भूयश्च व्रतमाचरेत् ॥ ३५१ ॥

यावल्लोकापवादस्तु शान्तः स्यात्तावदाचरेत् ।
मनःप्रसादपर्यन्तकालं च व्रतमाचरेत् ॥ ३५२ ॥

अन्येषामपि बिम्बानां जाते भेदादिके सति ।
एवमेव भवेद्विप्र ! प्रायश्चित्तविधिक्रमः ॥ ३५३ ॥

शूद्रस्याराधकस्यैवं प्रायश्चित्तं समीरितम् ।
वैश्यस्य द्विगुणं त्वेतत् त्रिगुणं क्षत्रियस्य तु ॥ ३५४ ॥

चतुर्गुणं ब्राह्मणस्य प्रायश्चित्तं समीरितम् ।
मनुष्यस्थापितानां तु बिम्बानां भेदनादिके ॥ ३५५ ॥

सञ्जाते साधकस्यैवं प्रायश्चित्तं समीरितम् ।
आर्षे तु भगवद्बिम्बे तदेव द्विगुणं भवेत् ॥ ३५६ ॥

दैवैः प्रतिष्ठिते बिम्बे तदेव त्रिगुणं भवेत् ।
सिद्धप्रतिष्ठिते बिम्बे तदेतत् स्याच्चतुर्गुणम् ॥ ३५७ ॥

स्वयंव्यक्तेषु बिम्बेषु जाते भेदादिके सति ।
प्रायश्चित्तं यथोक्तं तु भवेत् पञ्चगुणं द्विज ! ॥ ३५८ ॥

द्विविधं स्यात् स्वयंव्यक्तं बिम्बं भगवतो विभोः ।
सालग्रामशिलारूपैरितरैस्तु शिलादिभिः ॥ ३५९ ॥

उभयत्र समानं स्यात् प्रायश्चित्तं समीरितम् ।
तत्रायं हि विशेषः स्यात् स्वयंव्यक्तादिषु द्विज ! ॥

पूजायां वर्तमानायां समाधानादिकं चरेत् ।
प्रायश्चित्तादिकं सर्वं सविशेषं समाचरेत् ॥ ३६१ ॥

स्वयंव्यक्तादिकानां तु विना मर्त्यप्रतिष्ठितम् ।
सर्वेषामपि बिम्बानां प्राप्तमेकतमं तु यत् ॥ ३६२ ॥

स्वीकारसमये विप्र ! लक्षणादिविवर्जितम् ।
खण्डितं स्फुटितं वापि यथावस्थितमेव हि ॥ ३६३ ॥

स्वीकृत्याराधयेन्नित्यं न दोषस्तस्य विद्यते ।
सालग्रामशिलाबिम्बे तत्तन्मूर्तिविनिर्णयम् ॥ ३६४ ॥

तत्तद्वयस्थितैश्चिह्नैर्ज्ञात्वा सम्यक् समर्चयेत् ।
पश्चाद्भेदादिके जाते प्रायश्चित्तं समाचरेत् ॥ ३६५ ॥

पूर्वोदितं प्रयत्नेन साधकः क्षीणमानसः ।
चोरभूचारिवन्ह्याद्यैर्जाते भेदादिकेऽपि च ॥ ३६६ ॥

बिम्बे चापहृते वापि मार्जाराद्यैश्च जन्तुभिः ।
भेदादिकेऽपि संजाते प्रागुक्तं साधकश्चरेत् ॥ ३६७ ॥

तस्माद्दिनात् समारभ्य प्रायश्चित्तं तु यत्नतः ।
यस्मात् प्रागार्जितं पापं कर्म तत्रापि कारणम् ॥३६८॥

तस्मात्तच्छान्तये वापि ह्यपवादस्य शान्तये ।
प्रायश्चित्तं तु कर्तव्यं विहितं प्राक् प्रयत्नतः ॥ ३६९ ॥

अन्यथा पातकी स स्यादेतस्मात् पातकाद्द्विज ! ।
प्रमादतः कृतेप्येवं प्रायश्चित्तं समाचरेत् ॥ ३७० ॥
बुद्धिपूर्वकृते भेदे प्रायश्चित्तैर्न निष्कृतिः ।
अवश्यं दण्ड्य एव स्यात् स पापिष्ठोऽतिदुर्मतिः ॥
स्वप्रमादकृते भेदे जन्त्वन्तरकृतेपि वा ।
साधको ह्यनुतापार्तो नाचरेद्यदि कीर्तितम् ॥ ३७२ ॥
प्रायश्चित्तं तथा सोपि दण्ड्यः स्यात् प्रथमं ततः ।
प्रायश्चित्तं च यै कुर्यादयोरयस्त्वन्यथा भवेत् ॥ ३७३ ॥
गोपनेपि च दोषस्य तस्य भेदादिकस्य च ।
दण्डश्च प्रायश्चित्तं च विधेयमुभयं भवेत् ॥ ३७४ ॥
एवं भेदादिके जाते भयं स्याद्राजराष्ट्रयोः ।
तच्छान्त्यै सप्तदिवसं यजेत् कुम्भस्थलादिकम् ॥
एकस्मिन् वा दिनस्ताहं बिम्बसंस्थं च मन्त्रपम् ।
दोषे प्रसिद्धे भेदादौ प्रायश्चित्तं समीरितम् ॥ ३७६ ॥
अप्रकाशे यथोक्तात्तु चतुर्थांशं समाचरेत् ।
पूर्वं स्वपहृतं बिम्बं भूयः प्राप्तं यदि द्विज ! ॥ ३७७ ॥
प्रायश्चित्ताद्यथोक्तात्तु यत्नेनार्धं समाचरेत् ।
बिम्बानां तु क्षते जाते शृणु दोषान् विशेषतः ॥
क्षतमिन्द्रियचक्रस्थं कर्तुर्भवति दोषदम् ।
आकण्ठान्नाभिपर्यन्तं मन्त्रस्थं पुत्रमृत्युकृत् ॥ ३७९ ॥
पार्श्वद्वये तु जायायाः पृष्ठस्थं भ्रातृहानिदम् ।
नाभेर्यन्मेढ्रपर्यन्तं स्थानमासाद्य तिष्ठति ॥ ३८० ॥
क्षतं सुतशिशूनां च नाशकृद्भवति द्विज ! ।
आकटेः पायुपर्यन्तं भगिनीनां क्षयावहम् ॥ ३८१ ॥
ऊरुमूलाच्च जान्वन्तं यत्र यत्र भवेत् क्षतम् ।
धनधान्यपशूनां च क्षयो भवति सर्वदा ॥ ३८२ ॥
जान्वोः पादतलान्तं च भृत्यवर्गस्य दोषदम् ।
सर्वेषामनुकम्पार्थमात्मनश्चापि वृत्तये ॥ ३८३ ॥

कर्ता कमलसंभूत ! क्षतमक्षततां नयेत् ।
अल्पक्षते समाधानं विहितं तु निबोध मे ॥ ३८४ ॥
योजयेच्चित्रबिम्बस्य गलितं गन्धभावितैः ।
सितरक्तादिकै रागैः पावनैरस्त्रमन्त्रितैः ॥ ३८५ ॥
मृण्मयानां तु बिम्बानां मध्वाज्यक्षीरमिश्रया ।
मृदा कौशेयसंपूर्णयुक्त्या हेमोदसिक्तया ॥ ३८६ ॥
सन्धानं कारयेद्विप्र ! दारुजस्य निबोधतु ।
भेदे भङ्गे च सन्दध्याद्वज्रशास्त्रद्वयेन तु ॥ ३८७ ॥
अश्मजानां क्षते जाते सति रत्नशलाकया ।
सहेमया च विहितं घृष्टशाणस्य घर्षणम् ॥ ३८८ ॥
मनुष्यनिर्मितानां तु ह्यश्मजानां बृहत्क्षते ।
सर्वथा विहितस्त्यागः स्वयं व्यक्तादिकेषु तु ॥ ३८९ ॥
शिलामयेषु बिम्बेषु भिन्नं भग्नं च योजयेत् ।
सुवर्णनिर्मितैः पट्टैर्यथा दृढतरं भवेत् ॥ ३९० ॥
यद्वा तदङ्गैर्हैमेन कृत्वा सम्यङ्नियोजयेत् ।
दारुजे लोहजेष्वेवं स्वयं व्यक्तादिकेष्वपि ॥ ३९१ ॥
भेदे भङ्गे समाधिः स्यात् स्वयं व्यक्ताश्मबिम्बवत् ।
रत्नजेऽपि समाधानमेवमेव समाचरेत् ॥ ३९२ ॥
सालग्रामशिलाबिम्बं भिन्नं भग्नं बृहत् क्षतम् ।
अल्पक्षतं च सौवर्णैः पट्टैर्दृढतरं यथा ॥ ३९३ ॥
बन्धयेल्लोहजे बिम्बे शृणु मर्त्यप्रतिष्ठिते ।
केवलस्य हि हैमस्य यथालाभं क्षते क्षिपेत् ॥ ३९४ ॥
स्वर्णरत्नमयं चूर्णं द्वादशाक्षरमन्त्रितम् ।
अन्यथा तु स्थिते बिम्बे क्षतं सम्यङ्महामते ! ॥ ३९५ ॥
ईषत्सुवर्णमिश्रेण पूरयेत् स्वेन धातुना ।
स्वयं व्यक्तादिकेऽप्येवं मुख्यकल्पे समाचरेत् ॥ ३९६ ॥
प्रासादे मण्डपे चापि गोपुरादिषु वा द्विज ! ।
शोभार्थं संस्थितानां च बिम्बानां पररूपिणाम् ॥

व्यूहानां विभवानां च सदा भगवतो विभोः ।
भेदादिके तु सञ्जाते समादध्यात् तथैव तु ॥ ३९८ ॥

तत्तत्सन्निध्यनुगुणं प्रतिष्ठादिकमाचरेत् ।
प्रायश्चित्तं समभ्यूह्य साधकस्तु समाचरेत् ॥ ३९९ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे द्वारावरणदेवताध्याननिर्णय, बलिबिम्बादिपतन भङ्ग अङ्गवैकल्य प्रायश्चित्त, दारुजादिबिम्बसमाधानं नाम एकादशोऽध्यायः ॥

---

श्रीः

# द्वादशोऽध्यायः ॥

सनकः —

जाते ह्याकस्मिके लोपे सद्व्यापारस्य नित्यशः ।
स्नानादियोगनिष्ठस्य तथा नैमित्तिकस्य च ॥ १ ॥

वत्सरोत्सवनिष्ठस्य विविधस्य महामते ! ।
कृच्छ्रचान्द्रायणादीनां सद्व्रत्तानां तथैव च ॥ २ ॥

चतुर्णामाश्रमस्थानां वर्णानां च स्त्रियस्तथा ।
श्रेष्ठमध्यमवित्तानां न्यू(ज)नानामपि तत्वतः ॥ ३ ॥

भक्तानां पुण्डरीकाक्षे श्रद्धासंयमसेविनाम् ।
यावज्जीवावधि कालं तत्पूजाकृतचेतसाम् ॥ ४ ॥

साक्षात्तन्मन्त्रनिष्ठानां यथावन्मुनिपुङ्गव ! ।
पातत्राणमुपायं तु श्रोतुमिच्छामि साम्प्रतम् ॥ ५ ॥

कृतेन येन भक्तानां जायते कृतकृत्यता ।

शाण्डिल्यः —

वक्ष्ये सम्यङ्महाबुद्धे ! सारमुद्धृत्य सर्वतः ॥ ६ ॥

सर्वलोकहितार्थाय सावधानेन चेतसा ।
लोप(भ)बुद्धिं विना यस्य भोगानामप्यसंभवः ॥ ७ ॥

सामर्थ्येन विना यस्य कृच्छ्रादीनां परिच्युतिः ।
ज्वरादिव्याधिदोषेण जातं यस्याह्निकक्षयम् ॥ ८ ॥

चातुर्मास्यस्य चाप्राप्तिः यस्य स्वातन्त्र्यतो विना ।
तस्य तस्य महाबुद्धे ! शृणु यद्विहितं हितम् ॥ ९ ॥

सांस्पर्शिकानां भोगानां मात्रावित्तं हि पूरणम् ।
हृदयङ्गमसंज्ञानामन्नं च हविषा प्लुतम् ॥ १० ॥

औपचारिकभोगानां बीजानि विविधानि च ।
कृच्छ्रचान्द्रायणादीनां व्रतानां परिपूरकः ॥ ११ ॥

विशेषार्चनसंयुक्तश्चातुर्मास्यस्य संयमः ।
सौत्रं प्रतिसरं चित्रं मुक्ताहारोपमं शुभम् ॥ १२ ॥

शमं नयति भक्तानां सर्वदा लोपमाह्निकम् ।
यथाश्वमेधं विप्राणां सर्वेच्छापरिपूरकम् ॥ १३ ॥

राजसूयं नृपाणां च भक्तानां भूषणं तथा ।
भूषणानां यथा मध्ये कौस्तुभं वरभूषणम् ॥ १४ ॥

ज्ञेयं पवित्रकं तद्वद्भोगजालस्य चान्तरे ।
यत् पूरयति भक्तानां व्यापारं पारमेश्वरम् ॥ १५ ॥

भोगमोक्षाप्तये शश्वद्भोगस्तस्मात्तु कोऽधिकः ।
भक्तानां सततं भक्त्या सालोक्यं विदधाति वै ॥ १६ ॥

सामीप्यं साधकानां च नानासिद्धिसमन्वितम् ।
सायुज्यं साधकेन्द्राणां स्वमन्त्रात्मनि यच्छति ॥ १७ ॥

तदुत्तरायणेऽतीते चातुर्मास्यस्य मध्यतः ।
कुर्याच्छुभे दिने विप्र ! सर्वदोषविवर्जिते ॥ १८ ॥

कालोऽपि त्रिविधः प्रोक्तश्चातुर्मास्योपलक्षितः ।
आषाढपक्षद्वयास्तु यावद्वै कार्तिकस्य च ॥ १९ ॥

संपूर्णचन्द्रदिवसं तं कालं चान्द्रमन्तिनम् ।
आकर्कटकसंक्रान्तेस्तुलाभोगक्षयावधि ॥ २० ॥

कालं तमष्टपक्षं च सौरं मध्यमसंज्ञितम् ।
एकादश्यादि (मा) वाऽन्तो यश्चातुर्मास्योपलक्षितः ॥

कालं तं वैष्णवं विद्धि तूत्तमं सर्वसिद्धिदम् ।
अप्राप्तेरस्य कालस्य त्वन्तरायेण केनचित् ॥ २२ ॥

निर्वाहणीयो ह्यपरः कालश्चान्द्रायणादिना ।
सम्पाद्यं चैव तन्मध्ये विधिवद्यागपूरकम् ॥ २३ ॥

प्रावृट्काले प्रवृत्ते तु त्रैलोक्योदरवर्तिनाम् ।
मनुष्यामरसिद्धानां कर्तव्यं चाग्रवर्तिनाम् ॥ २४ ॥

प्रवर्तन्ते हि ये येन श्रद्धया वत्सरं प्रति ।
महत्यस्मिन् महाबुद्धे! व्यापारे पारमेश्वरे ॥ २५ ॥

विभोः शयनसंस्थस्य काले पुष्पफलाकुले ।
गगने लम्बमाने तु सबलाकैर्वलाहकैः ॥ २६ ॥

कुमुदोत्पलकह्लारैर्भूषिते वसुधातले ।
घनोपवन उद्यानैर्हरिते शाद्वलादिकैः ॥ २७ ॥

शालिसस्यादिकैर्युक्ते पल्वलोदकशोभिते ।
पवित्रकं कृतं विष्णोरनन्तस्यातितुष्टिदम् ॥ २८ ॥

तस्माद्यत्नेन तत् कुर्याच्चातुर्मास्यस्य मध्यतः ।
श्रावण्यां शुक्लपक्षे तु द्वादश्यां द्विजसत्तम! ॥ २९ ॥

आद्यावन्ते तथा कुर्याद्द्वादशीष्वखिलासु च ।
सङ्क्रान्तिषु च सर्वासु पौर्णमासीषु वा द्विज! ॥३०॥

अमावास्यास्वशेषासु तृतीयासु तथैव च ।
नभस्येषु च रोहिण्यामष्टम्यां च महामते! ॥ ३१ ॥

प्रथमा च द्वितीया च पञ्चमी च त्रयोदशी ।
दशम्येकादशीत्येवमेतास्वपि यथारुचि ॥ ३२ ॥

कृष्णपक्षेऽप्रशस्ताःस्युः शुक्लपक्षे विशेषतः ।
चन्द्रो गुरुस्सितश्चान्द्रो ज्ञेयास्त्वेते शुभप्रदाः ॥ ३३ ॥

पवित्रारोहणादौ तु नक्षत्राणि शृणुष्व मे ।
ध्युत्तरासु च रेवत्यामश्विन्यां भरणीषु च ॥ ३४ ॥

पुनर्वसौ तथा हस्ते रोहिण्यां श्रवणेऽपि च ।
वैष्णवेष्वथ ऋक्षेषु तत्क्षणेष्वखिलेषु च ॥ ३५ ॥

चातुर्मास्यस्य कालस्य तूत्थानद्वादशी तु या ।
षडशीतिमुखा दिव्या तस्यामारोपयेत्तु यः ॥ ३६ ॥

पवित्रकं जगद्योनेः स पवित्रीकरोति च ।
अतीतां वर्तमानां च एष्यां स्वकुलसन्ततिम् ॥ ३७ ॥

तत्र सन्निहितः साक्षान्नानानिर्माणविग्रहैः ।
भक्तानां पुण्डरीकाक्षः परमात्माच्युतो हरिः ॥ ३८ ॥

यद्यप्येवं महाबुद्धे! भक्तनां नित्यमेव हि ।
नारायणस्तु मन्त्रात्मा स्थितः सन्निहितः स्वयम् ॥

तथापि बलवत्ता वै तत्तिथेस्तत्र कर्मणि ।
सन्निधिं भजते येन मन्त्रिणां मन्त्रराट् प्रभुः ॥ ४० ॥

ग्रीष्मकालं समासाद्य यथार्कस्तीक्ष्णतां व्रजेत् ।
स्वरूपमजहन्नेव सन्निधानतरं विभोः ॥ ४१ ॥

सत्पात्रदेशकालानामाख्यैः स्थितये तु वै ।
अतः पवित्रकं तस्यामन्यस्यां तदसम्भवात् ॥ ४२ ॥

कार्यं क्रियापरैर्भक्त्या साखण्डा येन जायते ।
पवित्रारोहणं विष्णोर्वर्जयेदितरेषु च ॥ ४३ ॥

प्रासादस्याग्रतः कुर्यात्तदर्थं मण्टपं द्विज! ।
प्रथमावरणे वापि द्वितीयावरणेऽपि वा ॥ ४४ ॥

तृतीयावरणे वाथ चतुर्थे पञ्चमेऽपि वा ।
अप्रालाभे तदन्यत्र यथावाञ्छितदिग्गतम् ॥ ४५ ॥

चतुरश्रं समं वापि प्राक्पश्चिमदिगायतम् ।
सौम्ययाम्यायतं वापि कर्तुरिच्छानुरूपतः ॥ ४६ ॥

तथा प्रागाननं यद्वा यथाभिमतदिङ्मुखम् ।
द्वाविंशतिधनुर्मानं मण्टपं चोत्तमं भवेत् ॥ ४७ ॥

अष्टादशधनुर्मानं मण्टपं मध्यमं भवेत् ।
अधमं द्वादशधनुर्मानं स्यादथवा द्विज! ॥ ४८ ॥

पञ्चहस्तात् समारभ्य द्विद्विहस्तविवर्धनात् ।
त्रिसप्तकरपर्यन्तं मानैर्नवविधं भवेत् ॥ ४९ ॥

यद्वोत्तमं दशकरं मध्यमं चाष्टहस्तकम्।
षड्ढस्तमधमं विद्यात् क्षुद्रं हस्तत्रयायतम्॥ ५०॥

त्रिंशत्करावसानं वा षड्करात् पञ्चविंशतिः।
एवं संगृह्यमानेषु ह्येषु वित्तानुरूपतः॥ ५१॥

सोपपीठमधिष्ठानं केवलं वा मसूरकम्।
अधिष्ठानोपरिस्तम्भं प्रस्तरं च त्रिवर्गकम्॥ ५२॥

कपोतवृतिसंयुक्तं यद्वोक्ताकृतिवर्जितम्।
एकत्रिपञ्चसप्तादिभित्तिभेदैः समावृतम्॥ ५३॥

प्रत्यङ्गोक्तैरलङ्कारैर्युक्तं वा तद्विवर्जितम्।
शिलयेष्टकया वापि पक्वया वाप्यपक्वया॥ ५४॥

एकद्वारं चतुर्द्वारं यद्वा द्वारद्वयान्वितम्।
भित्तियुक्तमयुक्तं वा कोणभित्तियुतं तु वा॥ ५५॥

केवलं वा प्रपामात्रमुक्तलक्षणवर्जितम्।
क्षिप्रकर्मप्रसिद्ध्यर्थं शरकाष्ठमयं शुभम्॥ ५६॥

गवाक्षकान्वितं चैव द्वारैस्तु परिभूषितम्।
छन्नं वितानकेनोर्ध्वं प्राकारं परिकल्पयेत्॥ ५७॥

क्षेत्रसङ्कोचविस्तारः कर्तुरिच्छानुरूपतः।
शिल्पशास्त्रानुसारेण कृत्वैवं मण्टपं द्विज!॥ ५८॥

यागार्थं सुशुभं विप्र! तन्मध्येऽथ प्रकल्पयेत्।
दृढां समां तदाकारामीषत् प्रागुत्तरप्लवाम्॥ ५९॥

प्रोच्छ्रितां च विशेषेण स्थलां दर्पणसन्निभाम्।
सामान्या न भवेद्येन मेदिनीमण्टपस्य तु॥ ६०॥

द्विद्विकेनाङ्गुलीनां तु प्रोन्नतेर्यावदष्टकम्।
एकवृद्ध्याल्पमानानां यागानां तु स्थलांगणम्॥ ६१॥

नवाङ्गुलोन्नतेस्तावद्यावत्पञ्चदशाङ्गुलम्।
प्रोन्नतत्वं स्थलानां च मध्यमानमितात्मनाम्॥ ६२॥

चतुर्विंशत्यङ्गुलान्तमुच्छ्रायं षोडशाङ्गुलात्।
प्रागुक्तवृद्ध्या कर्तव्यं ज्येष्ठमानमितात्मनाम्॥ ६३॥

एतदुच्छ्रायमानं च कथितं ते स्थलासु च।
पादमर्धं तु हस्तं वा विस्तारात् सर्वदिक्षु वै॥ ६४॥

स्थलानामिष्टकाद्यैश्च चिन्वीयात् प्रथमं ततः।
मृदा सम्पूर्य तन्मध्यमीषद्वालुकयान्वितम्॥ ६५॥

परीक्ष्य केशकीटादीनाकोट्य तदनन्तरम्।
यावद्भवति पूर्वोक्तलक्षणं वा विशेषतः॥ ६६॥

स्थलां मध्योन्नतां रम्यां सत्ताद्यं संपरीक्ष्य सा।
न ददाति यथाभेदं यागयोग्या भवेत्तदा॥ ६७॥

तदूर्ध्वं वेदिकां कुर्यात् अनेकचरणान्विताम्।
तोरणैश्च समायुक्तां विभवेच्छानुरूपतः॥ ६८॥

पावनैर्यज्ञकाष्ठैश्च सुदृढैः सरलैः समैः।
यथालक्षणयुक्तानि तोरणानि चतुर्दिशि॥ ६९॥

द्वाराणां बाह्यतो विप्र! तदन्तर्वा नियोजयेत्।
त्रीणि त्रीण्यथवा सम्यगेकैकस्यां न्यसेद्दिशि॥ ७०॥

बुद्ध्वा मण्टपविस्तारं पञ्चकं सप्तकं तु वा।
एतानि हेमरत्नाद्यैश्चित्रयेद्विभवे सति॥ ७१॥

श्रीवृक्षोदुम्बरवटप्लक्षोत्थैरथवा द्विज!।
पूर्वाद्युत्तरपर्यन्तं तोरणानां चतुष्टयम्॥ ७२॥

चतुष्टयं चतुर्दिक्षु ह्येषामेकैकमेव वा।
तोरणानां समुच्छ्रायस्तम्भायामसमः स्मृतः॥ ७३॥

स्तम्भद्वयान्तरस्थेन मानेन स्यात्तु विस्तृतिः।
स्तम्भमस्तकमानेन साधिकेन सदैव हि॥ ७४॥

तद्दण्डी विन्यसेद्भूमौ स्तम्भाभ्यन्तरगा स्थितिः।
सदैव हकुसरूपाणां कार्या वेदविदांवर!॥ ७५॥

द्वाराणां बाह्यतो विप्र! तोरणानां यथा(द्वा) स्थितिः।
तलाच्छिखरपर्यन्तं मानमुच्छ्रायतस्तदा॥ ७६॥

सार्धं समं वा द्विगुणं तद्दण्डेषु च भूगतम्।
चक्रद्वितयमध्यस्थं पक्षमण्डलमण्डितम्॥ ७७॥

तोरणे तोरणे कुर्याद्गरुडं चोर्ध्वसंस्थितम्।
मत्स्यादीनवतारांश्च प्रादुर्भावाननेकशः॥ ७८॥

चित्रोदितेन विधिना चतुर्दिक्षु समालिखेत्।
मुनिसिद्धामरव्रातैरनेकाद्भुतदर्शिभिः॥ ७९॥

द्वीपाचलवनोद्यानैर्बहुभिर्मृगयूथपैः ।
सरःसारसकल्हारैर्जलक्रीडापरान्वितैः ॥ ८० ॥

खेचरैरङ्गनायुक्तैर्नृपैर्विद्याधरादिकैः ।
प्रशान्तमानसैर्विप्रैरात्मध्यानपरायणैः ॥ ८१ ॥

एवमाद्यैरनन्तैश्च व्यापारैश्चित्रसंभवैः ।
तद्यागवेश्म सकलं रञ्जनीयं प्रयत्नतः ॥ ८२ ॥

कुर्यात् सुधाविलिप्तं वा भूषयेत्तदनन्तरम् ।
दर्पणैश्चामरैर्वस्त्रैर्दुकूलैर्विविधोज्ज्वलैः ॥ ८३ ॥

घण्टाभिरर्धचन्द्राद्यैरातपत्रैर्मनोहरैः ।
प्रोच्छ्रितैः कदलीपूगैर्द्रुमाङ्गैः पावनैर्दृढैः ॥ ८४ ॥

मध्वाज्यदधिसत्क्षीरसंपूर्णैः कांस्यभाजनैः ।
शालितण्डुलपात्रैश्च सहिरण्यैः फलैः शुभैः ॥ ८५ ॥

लाजसिद्धार्थकैर्बीजभाजनैः पङ्कान्वितैः ।
सत्सुगन्धैस्त्वगेलाद्यैः पर्णैः पूगफलैस्तथा ॥ ८६ ॥

मधूकबदरद्राक्षा इक्षुभिस्त्रिफलैः फलैः ।
यथर्तुप्रभवैः पुष्पैर्बहुभिः प्रकरीयकैः ॥ ८७ ॥

इत्येवमाद्यैर्विविधैर्भोगपूगैस्तु पावनैः ।
पवित्रेण वितानेन सुसितेनोज्ज्वलेन वा ॥ ८८ ॥

चक्राम्बुरुहचिह्नेन भूषयेच्च तदूर्ध्वतः ।
स्तम्भान् संवेष्टयेत् पश्चाद्दुकूलैर्विविधैः पृथक् ॥८९॥

प्रागुत्तरादिदिग्भागाद्यावत्कोणं च मारुतम् ।
सितादिवर्णभेदोत्थाः पताकास्तत्र योजयेत् ॥ ९० ॥

एवं रागविभागेन प्रत्यग्भागाच्च वै पुनः ।
दक्षिणाशावधिर्यावद्द्वितीयं च चतुष्टयम् ॥ ९१ ॥

एकैव सर्ववर्णा च नाभौ कार्या वितानके ।
बाह्यतो वेदिकायास्तु मण्डपस्य दिगष्टके ॥ ९२ ॥

वह्निकोणात् समारभ्य यावत्कोणं तु शाङ्करम् ।
सितारुणं च पीतं च कृष्णं कुर्याच्चतुष्टयम् ॥ ९३ ॥

भूयश्चोत्तरदिग्भागाद्यावद्दिक्पश्चिमा द्विज ! ।
तथाविधं चतुष्कं तु ध्वजानां परिकीर्तितम् ॥ ९४ ॥

राजपाषाणवर्णाभं चक्रपक्षीश्वरोपगम् ।
वैजयन्तीत्रयं कुर्यात्तोरणे पूर्वदिक्स्थिते ॥ ९५ ॥

दक्षिणे स्फटिकाभं तु आप्ये सिन्दूरवर्चसम् ।
हेमाभं चोत्तरे कुर्यात्तोरणे ध्वजकत्रयम् ॥ ९६ ॥

चतुष्केण पताकानां युक्तं श्वेतादिकेन च ।
एकैकं तोरणं चात्र त्रितयं पञ्चकं तु वा ॥ ९७ ॥

अर्धेन तोरणायामात् पताकानां च दीर्घता ।
एवं त्वभिनवं कृत्वा यागार्थं मण्डपं द्विज ! ॥ ९८ ॥

स्नपनाद्युत्सवान्तस्य वैशेषिकगणस्य च ।
पुरा प्रकल्पितं वाथ मण्डपं भूषयेत्तदा ॥ ९९ ॥

एवं कृते ततः पश्चाद्वेदिकां तोरणैः सह ।
विलिप्य चन्दनाद्यैस्तु गन्धवर्णोज्ज्वलैः क्रमात् ॥

चन्दनेन समालभ्य वेदिकां केवलेन च ।
बाह्लीकभावितेनैव तेनैवाद्यं च तोरणम् ॥ १०१ ॥

लिप्तं मृगमदेनैव कुर्याद्दक्षिणदिग्गतम् ।
तुषारधूलीधवलं पश्चिमं कारयेत्ततः ॥ १०२ ॥

कुङ्कुमेन समालभ्य केवलेनोत्तरे स्थितम् ।
क्षीरेण चन्दनेनैव कुङ्कुमेन कृतां स्थलाम् ॥ १०३ ॥

रजनीचूर्णयुक्तेन ह्रीवेरेणाम्बुना सह ।
पुण्यगन्धौषधीभिस्तु द्वाराणां मण्डपावनिम् ॥ १०४ ॥

ततस्तु विविधैर्धूपैर्बहुभिर्धूपयेद्द्विज ! ।
ततस्तिरस्करिण्या तद्वेष्टयेत् सर्वतो बहिः ॥ १०५ ॥

मण्डपस्योत्तरे भागे कुर्यात् कुण्डं पुरैव तु ।
यद्वा द्विज ! ततोऽन्यत्र यागात्रस्या च वर्ज्यदिक् ॥

दिक्त्रयेऽभिमता या दिक् कुर्याद्दनलमण्डपम् ।
धूमनिर्गमनोपेतं नानाकुण्डविभूषितम् ॥ १०७ ॥

सार्द्रैं(न्द्रैः)श्च सुपलाशैश्च सुयुक्तं तोरणादिकैः ।
यद्वा पचनगेहे तु कुण्डं कुर्यात् सलक्षणम् ॥ १०८ ॥

अन्यन्नैमित्तिकार्थं तु पुरा क्लृप्तं तु वा भवेत् ।
एवं कृते ततः कुर्यात् सम्भारग्रहणं द्विज ! ॥ १०९ ॥

सप्तमे पञ्चमे वापि वासरे कर्मवासरात्।
पूर्वं कृत्वाङ्कुरारो(पा)पं ततः कर्म समारभेत् ॥११०॥

ततः प्रवेशयेत्तस्मिन् सम्भारान् यागमण्डपे।
दशम्यां द्विजशार्दूल! यत्किञ्चिच्चोपयुज्यते ॥१११॥

भूषणादि ततः कुर्याद्यथा तदवधारय।
तेषां द्विविधं रूपं सूक्ष्मस्थूलविभेदतः ॥ ११२ ॥

सर्वभावेन भक्तानां यत् पालयति सर्वदा।
मनोवाक्चित्तजं कृत्स्नं व्यापारं शुभलक्षणम् ॥११३॥

परिज्ञेयमतस्तस्मात् स्वरूपं तस्य यादृशम्।
फलमेति च वै येन भक्तानां तत्समापनात् ॥ ११४ ॥

यदच्छिन्नं जगद्योनेरनन्तप्रसरं सितम्।
विच्छेदमकृतज्ञानामेति नानात्मना स्वयम् ॥ ११५ ॥

जगत्सूत्रं तु तद्विद्धि हेमसूत्रादिना तु वै।
षाड्गुण्यमहिमानं यद्धत्ते प्रतिसरात्मना ॥ ११६ ॥

ज्ञानरागोपरक्तं तु युक्तं कार्यैस्तु वीर्यजैः।
तैजसैरावृतं मन्त्रैर्बलेनावसितं परि ॥ ११७ ॥

ऐश्वर्यमुपचारे तु सम्पत्तौ शक्तितोऽव्ययम्।
एवं पवित्रकं तावत् परिज्ञातं जगत्प्रभोः ॥ ११८ ॥

ब्रह्मण्यधिपतौ विष्णौ तथाकारे प्रतिष्ठिते।
भक्त्या च विधिवद्दत्तं ददाति भगवत्पदम् ॥ ११९ ॥

स्थूलस्य व्यतिरिक्तस्य व्यवहारपदस्थितैः।
पदार्थैः कल्पनीया च यथा तदवधारय ॥ १२० ॥

सूक्ष्मं दृढं सितं श्लक्ष्णं सूत्रं ब्रह्मप्रसूतया।
विनिर्मितं कुमार्या वा वृद्धया वा विनीतया ॥ १२१ ॥

शुद्धया वा विधवया सम्पादितमथापि वा।
क्षौमं वा पट्टजं वापि केशरोमादिवर्जितम् ॥ १२२ ॥

यथालब्धं समादाय सम्यक् प्रक्षाल्य वारिणा।
तस्य शुद्धिं पुरा कृत्वा दहनाप्यनेन च ॥ १२३ ॥

अवलोक्य सरन्मूलं विनिष्पाद्य चतुर्गुणम्।
चातुरात्म्यव्यपेक्षायामथवाष्टगुणं द्विज! ॥ १२४ ॥

प्रभवाप्ययबुद्ध्या तु भेदभिन्नोपलक्षितम्।
केशवादिष्वधिष्ठातृभावेन त्रिचतुर्गुणम् ॥ १२५ ॥

तन्तुभिर्विषमैर्विष्णोः समस्य परिवर्जयेत्।
पावित्रिकी क्रिया यस्माद्विषमा सा न कस्यचित् ॥

पवित्रकाणि कार्याणि तन्तुभिस्तैः सुतानितैः।
मूलमन्त्रादिमन्त्राणां सर्वेषां मुनिसत्तम! ॥ १२७ ॥

कुम्भस्थमन्त्रमूर्तेः प्राक् कल्पयेद्भूषणं द्विज!।
अध्यर्धशमजैर्व्यासाद्वाराकारैश्च तन्तुभिः ॥ १२८ ॥

शतेनाष्टोत्तरेणाद्यं द्विगुणेन द्वितीयकम्।
त्रिगुणेन तृतीयं तु व्यासमेवं तु तन्नयेत् ॥ १२९ ॥

षट्त्रिंशद्ग्रन्थिकं चाद्यं द्वितीयं द्विगुणं स्मृतम्।
तृतीयं त्रिगुणं कुर्यादेवमेव महामते! ॥ १३० ॥

मण्डलस्थस्य च विभोस्तथा वह्निगतस्य च।
बिम्बस्थस्य पवित्राणां विशेषमवधारय ॥ १३१ ॥

मालाकृतिं च शिरसि यथेच्छग्रन्थिपूर्वकम्।
द्वितीयमंसयोर्याबल्लम्बितं जानुमण्डले ॥ १३२ ॥

मूर्ध्नः पादावधिर्यावत्तृतीयमिति विस्तृतम्।
आमूर्ध्नः पीठपर्यन्तं वनमालापवित्रकम् ॥ १३३ ॥

पृथक्पीठस्य वै कुर्यात् स्वप्रमाणेन शोभनम्।
बिम्बप्रतिसराणां च ह्रासवृद्धानियतः स्मृतः ॥ १३४ ॥

सूत्रमानं च पूर्वोक्तं द्विगुणं सति संभवे।
त्रिगुणं वा मुनिश्रेष्ठ! वनमालाख्यभूषणम् ॥ १३५ ॥

अष्टोत्तरेण सूत्राणां सहस्रेण समन्वितम्।
यद्वा तदर्धं पादं वा कुर्याद्वित्तानुरूपतः ॥ १३६ ॥

लेपभित्तिपटस्थे तु मूलबिम्बे यदा द्विज!।
कुर्यादुत्सवबिम्बस्य भूषणानां तु पञ्चकम् ॥ १३७ ॥

तदापि मूलबिम्बस्य भूषणान्यपि पूर्ववत्।
कल्पयेदाद्यपूर्वाणि बिम्बप्रतिसरेषु तु ॥ १३८ ॥

विभवे देवदेवेशं हारपञ्चसमन्वितम्।
नानाकाराणि तन्तूनि मुक्ताहारसमन्वितम् ॥ १३९ ॥

त्र्यङ्गुलान्तरिता देयाः सर्वेषां ग्रन्थयः समाः ।
सङ्ख्यानेन विना सम्यङ्मातुलुङ्गोपमाः शुभाः ॥
अष्टोत्तरशतग्रन्थिसंयुक्ता वनमालिका ।
चतुःस्थानावतीर्णस्य विभोरामन्त्रणाय च ॥ १४१ ॥
पवित्रमाद्यसदृशमेकैकं वा द्वयं द्वयम् ।
सर्वेषां कर्मबिम्बानां तथा वै गोपुरादिषु ॥ १४२ ॥
स्थितानां मन्त्रबिम्बानां भजतां सन्निधिं सदा ।
उत्तमादीनि सर्वाणि कुर्याद्धि मुख्यकल्पने ॥ १४३ ॥
प्रकल्पयेत् तत्सदृशं मध्यमेनोत्तमेन वा ।
द्वितयं द्वितयं वापि ह्येकैकं वानुकल्पने ॥ १४४ ॥
अङ्गानामप्युपाङ्गानां लाञ्छनानामपि द्विज ! ।
भूषणानां च शक्तीना तथैव विहगेशितुः ॥ १४५ ॥
प्राग्वत्त्रीण्यथवा द्वे द्वे ह्येकैकं वाथवा द्विज ! ।
यथेच्छमानसंख्योत्थैः सूत्रैस्तु परिकल्पयेत् ॥ १४६ ॥
सूत्रभ्रमसमोपेतैर्गर्भैर्भूषणसञ्चयम् ।
अन्येषां मण्डलाङ्गानां देवानां विभवे सति ॥ १४७ ॥
पवित्रकगणं कुर्याद्यथेच्छग्रन्थितन्तुभिः ।
तथैव विष्वक्सेनादेः परिवारगणस्य च ॥ १४८ ॥
मन्त्रास्त्रकुम्भयोर्द्वे वै ह्येकं वै मण्डलस्य च ।
द्वयं च कुण्डानलयोः शास्त्रपीठस्य च द्वयम् ॥ १४९ ॥
लिपेर्वाकृतत्वभूतस्य शब्दतत्वस्य च प्रभोः ।
घण्टाक्षसूत्रपूर्वाणां क्रियाङ्गानां महात्मनाम् ॥ १५० ॥
बलिपीठादिदेवानां देशान्तरनिवासिनाम् ।
गुर्वादीनां चतुर्णां तु हरिवीप्सापलापिनाम् ॥ १५१ ॥
द्विजोत्तमादिवर्णानां नित्यमच्युतभाविनाम् ।
गृहस्थब्रह्मचारीणां यतीनां वनवासिनाम् ॥ १५२ ॥
वृद्धानां जनकादीनां भगवत्तत्ववेदिनाम् ।
बन्धूनां भ्रातृपूर्वाणां नारायणरतात्मनाम् ॥ १५३ ॥
जायाया भक्तिनम्राया रताया अर्चने हरेः ।
सम्बन्धिनां च मित्राणां भगवद्धामसेविनाम् ॥ १५४ ॥
तदुत्तरसहायानां चातुरात्म्याभिलाषिणाम् ।
भृत्यानां स्वानुकूलानां पुरुषोत्तमयाजिनाम् ॥ १५५ ॥
वृद्धये योग्यतायैव पवित्रीकरणाय च ।
यथाभिमतमानैस्तु तन्तुभिर्ग्रन्थिभिस्तथा ॥ १५६ ॥
कुर्यात् पवित्रनिचयमथवा मुनिसत्तम ! ।
गुर्वादीनां चतुर्णां तु यतीनां च कुटुम्बिनाम् ॥ १५७ ॥
क्रमाच्चतुर्विंशतिभिः सूत्रैः षोडशभिस्तथा ।
ततो द्वादशभिश्चैव अष्टाभिःषड्त्रिभिस्तथा ॥ १५८ ॥
पवित्रकाणि कार्याणि ग्रन्थयः सूत्रसंख्यया ।
आराधकस्य च गुरोः कुर्याद्धि भूषणद्वयम् ॥ १५९ ॥
स्थूलकल्पमिदं प्रोक्तं सूक्ष्मकल्पमतः शृणु ।
शिरःप्रमाणेनार्चाया भूषणं प्रथमं स्मृतम् ॥ १६० ॥
चतुःशतेन सूत्राणां द्वात्रिंशद्भिस्तथाधिकैः ।
सूत्रावर्तैश्च सुसमैः परिकल्प्य सुशोभनम् ॥ १६१ ॥
सप्तविंशत्प्रमाणेन दत्वास्मिन् ग्रन्थिसञ्चयम् ।
कर्णार्ध्वगतं नाभिप्रमाणेन पवित्रकम् ॥ १६२ ॥
परिकल्प्य द्वितीयं च सूत्राणां मुनिसत्तम ! ।
शतत्रयेण च तथा चतुर्विंशद्भिरेव च ॥ १६३ ॥
द्विगुणैर्ग्रन्थिनिचयैरनुगर्भं तु तत् स्मृतम् ।
स्कन्धदेशात् समारभ्य यावत्पादद्वयावधि ॥ १६४ ॥
नेत्रसूत्रैस्त्रिभागोनैः सूत्रग्रामैश्च कल्पयेत् ।
त्रिगुणैर्ग्रन्थिनिचयैस्ततोऽन्यद्द्विजसत्तम ! ॥ १६५ ॥
अष्टोत्तरेण सूत्राणां शतेन ग्रन्थिभिस्तथा ।
शिरः पूर्वावतारादौ यावत्पीठं तु वैष्णवम् ॥ १६६ ॥
सूत्रैर्ग्रन्थिगणैश्चैव गर्भैस्तु विविधैस्ततः ।
मण्डलस्य प्रमाणेन कुर्याद्यान्यच्चतुष्टयम् ॥ १६७ ॥
प्रथमं पद्ममानेन नाभिमानं द्वितीयकम् ।
अरतुल्यं तृतीयं स्याच्चतुर्थं नेमिभिः समम् ॥ १६८ ॥
एकाशीतिभिरावर्तैः सूत्राणां द्विजसत्तम ! ।
अग्नेः कुण्डप्रमाणेन ग्रन्थिभिस्तावदेव हि ॥ १६९ ॥

भूषणत्रितयं कुर्याद्यथायोगं महामते!।
अष्टोत्तरशतादर्धैः सूत्रैस्तद्ग्रन्थिभिस्तथा ॥ १७० ॥
भूषणं सुलभं चैव सुशुभं परिकल्पयेत्।
द्विजेन्द्र! द्विजमुख्यानां ब्राह्मणानां तदर्धतः ॥ १७१ ॥
मुख्यमेतत् स्मृतं कल्पमनुकल्पमिदं शृणु।
अष्टाधिकेन सूत्रेण शतेन प्रथमं त्विदम् ॥ १७२ ॥
चतुर्भागोनमपरं तदर्धेन तृतीयकम्।
आद्याच्चतुर्थभागेन चतुर्थं कल्पयेत् ततः ॥ १७३ ॥
त्रिभागोनं चतुर्थात्तु शनैः कुर्यात्तु भूषणम्।
द्विजेन्द्राणां प्रकुर्वीत सप्तविंशतितन्तुजम् ॥ १७४ ॥
ब्राह्मणानां प्रकुर्वीत तन्तुभिर्नवभिर्द्विज!।
स्नानादूर्ध्वमधोनाभेर्न कर्तव्यं कदाचन ॥ १७५ ॥
सूत्रत्रयेण चान्येषां भक्तानां तु जगद्गुरोः।
सूक्ष्मकल्पमिदं विद्धि परकल्पमिदं शृणु ॥ १७६ ॥
चतुःस्थानावतीर्णस्य मुख्यमन्त्रस्य वै विभोः।
शतेनाष्टोत्तरेणैव ह्यर्धेनांशेन वा मुने! ॥ १७७ ॥
तन्तूनां भूषणं कुर्यादेकैकं वा त्रयं त्रयम्।
जपहोमादिका संख्या पूर्णा रिक्ता महात्मनाम् ॥१७८॥
समीकरोति भक्तानां मन्त्रिणामत एव हि।
कुर्यात्तद्ग्रन्थिनिचयं सूत्रसंख्योपलक्षितम् ॥ १७९ ॥
यदृच्छया ततोऽन्येषां याज्यानां परिकल्प्य च।
सूत्रभ्रमसमोपेतैर्गर्भैर्भूषणसञ्चयम् ॥ १८० ॥
ततस्तु देवदेवस्य चतुःस्थानस्थितस्य यत्।
पवित्रकगणं विप्र! प्रोक्तमाद्यपुरस्सरम् ॥ १८१ ॥
कुर्यात्तु गर्भरचनां तस्य सर्वस्य सत्तम!।
हेमसद्रत्नकर्पूरमाल्यक्षोदकुङ्कुमैः ॥ १८२ ॥
सर्वौषधिसमोपेतैस्त्वगेलादिविमिश्रितैः।
पाचनैर्विविधैर्द्रव्यैर्नील्या च पिचुना सह ॥ १८३ ॥
बीजपूरसमाकारमार्द्रामलकशङ्खवत्।
तदन्तरालानि पुनस्त्वच्छिन्नेन तु तन्तुना ॥ १८४ ॥
विभागप्रतिपत्त्यर्थं ग्रथनीयान्यदूरतः।
अन्येषां सर्वबिम्बानां यथावित्तानुरूपतः ॥ १८५ ॥
कल्पयेद्गर्भरचनां पूर्वोक्तद्रव्यसञ्चयैः।
आराधकस्य च गुरोः सगर्भं भूषणद्वयम् ॥ १८६ ॥
विहितं भगवन्मन्त्रन्यासात्तादात्म्यभावनात्।
अतोऽन्येषामगर्भं च रचनीयं यथाक्रमम् ॥ १८७ ॥
अन्तरालगणं गार्भं कुर्याद्बाह्लीकरञ्जितम्।
अलङ्कृत्य च सौवर्णैरुपरिष्टाच्च रूप्यकैः ॥ १८८ ॥
पवित्रच्छेदसम्भूतं जातरूपमयैस्तु वा।
शङ्खपद्मगदाचक्रमालाश्रीवत्सपूर्वकैः ॥ १८९ ॥
एकस्थैव बहूनां वा यथावित्तानुसारतः।
एवं कृत्वा पवित्राणि क्रमेण द्विजसत्तम! ॥ १९० ॥
धातुजे विततं भाण्डे वस्त्रच्छन्ने निधाय च।
अथवा पैत्तले भाण्डे मृण्मये वा सुशोभने ॥ १९१ ॥
पालाशे वापि चैकस्मिन् मान्त्रं भूषणसञ्चयम्।
अन्यस्मिन् लौकिकं स्थाप्य समस्तं द्विजसत्तम! ॥
आच्छाद्य वाससा पश्चात् सुसितेनाहतेन तु।
बन्धयित्वा तु सूत्रेण दृढेन सुसितेन च ॥ १९३ ॥
मध्ये तु यागद्रव्याणां ते भाण्डे विनिवेश्य च।
देशिकः पूर्वविधिना कृतस्नानः कृताह्निकः ॥ १९४ ॥
देशिकेन्द्रेण सहितौ गत्वा मन्त्रेशसन्निधिम्।
प्रपूज्य देवदेवेशमर्घ्यगन्धादिभिः क्रमात् ॥ १९५ ॥
विज्ञाप्य देवदेवाय "मा मे विघ्नं भव"त्विति।
तस्मादनुज्ञां संगृह्य शिरसाप्यवनतेन तु ॥ १९६ ॥
निशामुखे प्रवृत्ते तु कर्तार्घ्यकुसुमोद्यतः।
सहसद्ब्रह्मघोषेण स्तुतिमङ्गलपाठकैः ॥ १९७ ॥
शङ्खतूर्यनिनादैश्च पुष्पैरर्घ्यसमन्वितैः।
कृत्वा द्वारस्थार्चनं विप्र! प्रविशेद्यागमण्टपम् ॥ १९८ ॥
इदमुच्चारयेन्मन्त्रं स्वरेणोच्चतरेण तु।
"(ओं) नमो ब्रह्मण्यदेवायाच्युतायाव्ययाय च ॥

ऋग्यजुस्सामरूपाय शब्ददेहाय विष्णवे।"
प्रविश्य कलशस्थानं समीपे तु वरासने ॥ २०० ॥
प्राङ्मुखः संस्मरेन्मन्त्रं पूर्ववद्भाविभाविते ।
उपविश्य यथान्यायमन्तर्यागान्तमाचरेत् ॥ २०१ ॥
करादिशुद्धिपूर्वं तु, पश्चादर्घ्यादिकल्पनम्।
प्राग्वत् कृत्वा ततोऽभ्यर्च्य मन्त्रसङ्घं तु देहजम् ॥
द्वौ द्वौ तु पूर्णकलशौ सौवर्णौ राजतौ तु वा।
ताम्रजौ मृण्मयौ वाथ सापिधानौ सपल्लवौ ॥ २०३ ॥
फलै रत्नादिकैर्युक्तौ सूत्रेण परिवेष्टितौ ।
शालिपीठोपरि स्थाप्य प्रतिद्वारं तु पार्श्वयोः ॥२०४॥
पालिकानां शरावाणां विन्यसेत्तु त्रयं त्रयम्।
प्रतिकोणं तु संस्थाप्य घटिकानां त्रयं त्रयम् ॥ २०५ ॥
द्वारयागं ततः कुर्यात् पूर्वायुत्तरपश्चिमम्।
अर्घ्यालभनमाल्यैश्च धूपैर्गुरुगुलुमिश्रितैः ॥ २०६ ॥
वास्त्वीशः क्षेत्रनाथश्च द्वारलक्ष्मीस्तथा द्विज!।
चण्डप्रचण्डौ गरुडः पूर्वद्वारे तु संस्थिताः ॥ २०७ ॥
दक्षे धातृविधातारौ पश्चिमे तु जयेतरौ।
भद्राख्यश्च सुभद्राख्यो ह्युत्तरे दक्षिणादितः ॥ २०८ ॥
मूलबिम्बे यदा कुर्यात् पवित्रारोहणं तदा।
मण्डलस्थस्य देवस्य प्रागाद्युत्तरपश्चिमम् ॥ २०९ ॥
संस्थानं द्वारथदेवानां यात्राबिम्बे यदा भवेत्।
तत्प्रागपेक्षया तेषां संस्थानमुदितं तदा ॥ २१० ॥
मुख्येनार्घ्याम्भसा प्रोक्ष्य पृथग्भाण्डे स्थितं पुरा।
पञ्चगव्यं ततो विप्र! कल्पयित्वा हृदादिकैः ॥ २११ ॥
कुशोदकं तदस्त्रेण दत्वाथेनाभिमन्त्रयेत्।
कल्पयेत् पञ्चगव्यं तु पञ्चोपनिषदैस्तु वा ॥ २१२ ॥
अथ पाणिद्वयेनैव अग्नीषोमात्मकेन तु।
योस्यतापदवीं नीत्वा शोधयेद्वसुधां ततः ॥ २१३ ॥
मूलेन साम्भसानेन प्रोक्षयेद्यत् पुराहृतम्।
कौशेयेन पवित्रेण ध्यायमानस्तमेव हि ॥ २१४ ॥

सर्वबीजानि धान्यानि सिद्धार्थकयुतान्यथ।
कृत्वास्त्रपरिजप्तानि ध्यात्वा ह्यस्त्रसमानि च ॥ २१५ ॥
विघ्नोपशान्तये वेगाद्दशदिक्षु विनिक्षिपेत्।
संहृत्य वहुकूर्चेन प्राच्यां दिशि निधाय वै ॥ २१६ ॥
ईशानदिशि वा न्यस्त्वा यागस्येच्छानुरूपतः।
तद्गर्भीकृत्य संलिख्य हेतिराट् चन्दनादिना ॥ २१७ ॥
चक्रं ध्यात्वा मण्डपोर्ध्वे पङ्कजं वसुधातले।
निर्गमे च गदां देवीं शङ्खं च ककुभाष्टके ॥ २१८ ॥
प्राकाराकारदेहां च नानाज्वालासमाकुलाम्।
शक्तिरूपां गदां वाथ केवलां मन्त्रतो न्यसेत् ॥ २१९ ॥
एवं कृते तदा सम्यग्भवेद्विघ्नविनाशनम्।
अथादाय दृढं शुद्धमेकरूपं च निर्व्रणम् ॥ २२० ॥
कुम्भं च मृण्मयं रम्यं सौवर्णं वाथ राजतम्।
रत्नहाटकस्रग्गन्धफलसर्वौषधीयुतम् ॥ २२१ ॥
शुभपादपशाखाढ्यं पट्टस्रग्गन्धभूषितम्।
गालितोदकसंपूर्णवारिधारान्वितं नवम् ॥ २२२ ॥
चन्दनाद्युपलिप्तं च परितश्चाक्षतान्वितम्।
वेष्टितं परितः सूत्रैः विकीर्योपरि तन्न्यसेत् ॥ २२३ ॥
तद्देवताशरीरं तु वश्यदं वलवर्चसम्।
सास्त्रेण चक्रमन्त्रेण मन्त्रयेदथ वर्धनीम् ॥ २२४ ॥
पूर्वोक्तद्रव्यसंयुक्तां परितः सूत्रवेष्टिताम्।
आवाह्य मन्त्रनाथस्य दक्षिणे कलशोत्तरे ॥ २२५ ॥
विन्यस्य परितस्तत्र स्थापयेत् कलशाष्टकम्।
सपल्लवं सापिधानं सूत्रेण परिवेष्टितम् ॥ २२६ ॥
कुम्भमध्ये विभोःप्राग्वदासनं परिकल्प्य च।
तन्मध्ये पुण्डरीकाक्षं समावाह्य विधानतः ॥ २२७ ॥
सन्निधिं सन्निरोधादिभोगयागावसानकम्।
पूर्ववत् सकलं कृत्वा तस्य दक्षिणदिग्गतम् ॥ २२८ ॥
अस्त्रविग्रहरूपं च ध्यात्वाऽभ्यर्च्य यथाविधि।
ध्वंसयन्तं च विघ्नानां जालं कर्मावसानिकम् ॥२२९॥

इदमभ्यर्थयेद्देवं साम्रं बद्धाञ्जलिः स्थितः।
"यागालयं हि विश्वेश! गृहाण रचितं मया ॥ २३० ॥
आसमाप्तं भज विभो क्रियाङ्गानां च सन्निधिम्।"
ततोऽस्त्रोदकधारां चाप्यच्छिन्नां भित्तिगां नयेत् ॥
प्रदक्षिणेन प्राग्भागात्तत्पदान्तं च तत् स्मरेत्।
अथवेशानदिग्भागात् तत्पदान्तं द्विजोत्तम! ॥ २३२ ॥
पृष्ठतः कलशौ भ्राम्य तुल्यकालं तु वा पृथक्।
कलशं वर्धनीयुक्तं विन्यस्य विकिरोर्ध्वगम् ॥ २३३ ॥
अर्घ्यदानं तयोः कृत्वा पुष्पाद्यैः पूजयेत् पुनः।
अस्त्रेण वस्त्रयुग्मं तु अहतं चाभिमन्त्र्य वै ॥ २३४ ॥
धूपादिवासितं कृत्वा तावुभौ परिवेष्ट्य च।
अथवा भद्रपीठं तु विन्यसेद्विकिरोर्ध्वगम् ॥ २३५ ॥
सास्त्रं हि मन्त्रकलशं तत्राधारगतं न्यसेत्।
चतुस्त्रिद्व्येकभारैर्वा शालिभिर्विष्टरे कृते ॥ २३६ ॥
तावन्मानांस्तदर्धान् वा तदूर्ध्वं तण्डुलान् न्यसेत्।
तत्पादांस्तत्समान् वापि तदूर्ध्वं विन्यसेत्तिलान् ॥
तदूर्ध्वं चाहतं वस्त्रयुग्ममास्तीर्य वै शुभम्।
कलशं वर्धनीयुक्तं तदूर्ध्वं वापि विन्यसेत् ॥ २३८ ॥
प्राग्वत् सास्त्रं तु देवेशमासनादिक्रमाद्यजेत्।
व्यापारमाचरेद्दिव्यं कुम्भके च स्मरन् विभुम् ॥२३९॥
नानिशं युज्यते यस्मात् तस्मादेषा प्रतिक्रिया।
विभाव्या मन्त्रिणा कौम्भी आक्षीरक्षार्थमेव हि ॥
ततोऽवतार्यो भगवान् स्थण्डिलेऽभ्यर्च्य सासनम्।
प्रदक्षिणप्रणामान्तं कुर्यात् सर्वं तु पूर्ववत् ॥ २४१ ॥
मण्डले कुम्भयागे च प्रोक्षणस्नानमाचरेत्।
ततस्तु ब्रह्मघोषेण यायाद्देवनिकेतनम् ॥ २४२ ॥
अथ देवगृहं गत्वा पुण्डरीकाक्षमच्युतम्।
अष्टाङ्गेन नमस्कृत्य पूजयेत् पुरुषोत्तमम् ॥ २४३ ॥
अर्घ्यालभनमाल्यैश्च धूपैरङ्गादिसंयुतम्।
तत् सर्वं योरयमाहर्तुं पूजान्तरनिवेदितम् ॥ २४४ ॥
पुष्पपूर्वं समादाय शिरसा चाभिनन्द्य तत्।
समर्प्य विष्वक्सेनस्य ह्यग्रमन्त्राभिमन्त्रितैः ॥ २४५ ॥
सपीठं भगवद्बिम्बं निर्मलीकृत्य वारिभिः।
प्रासादं शोधयित्वा तु देवदेवं समर्चयेत् ॥ २४६ ॥
स्नानैस्तु क्षीरपूर्वैर्वा धात्रीफलपुरस्सरैः।
यथाक्रमोपदिष्टैस्तु चान्यैर्भोगैरकृत्रिमैः ॥ २४७ ॥
प्रदक्षिणप्रणामान्तं विशेषात् सर्वमाचरेत्।
लेपभित्तिपटस्थं तु मूलबिम्बं यदा द्विज! ॥ २४८ ॥
तदा नैमित्तिके बिम्बे सर्वं कुर्याद्विशेषतः।
एतस्य सन्निधौ विप्र! कृत्वा स्नपनमात्रकम् ॥ २४९ ॥
स्नपनाधिकृते बिम्बे नित्यनैमित्तिकेऽपि वा।
सर्वमन्यत् पवित्रान्तं मूलबिम्बे समाचरेत् ॥ २५० ॥
नित्योत्सवार्थबिम्बे तु तदा कुर्यात् तदुत्सवम्।
तेषामसन्निधौ विप्र! दर्पणे तत्समीपगे ॥ २५१ ॥
कुर्यात् स्नपनमात्रं तु तदा कुर्यात् तदुत्सवम्।
दर्भमञ्जरिजे कूर्चे चक्रे वा कुम्भकेऽपि वा ॥ २५२ ॥
प्राग्वदन्यत् समस्तं तु मूलबिम्बे समाचरेत्।
ततो होमगृहं गत्वा कुण्डं संस्कृत्य पूर्ववत् ॥ २५३ ॥
तत्रानलं च संस्कृत्य कुर्याद्वै मन्त्रतर्पणम्।
पूर्वोक्तविधिना पश्चात् संस्कृतेनाथ वह्निना ॥ २५४ ॥
चरुं संस्थापयेच्चुल्यां हृदा क्षीराज्यतण्डुलैः।
समुद्धृत्याज्यपूतं तं विनिवेद्य यथाक्रमम् ॥ २५५ ॥
कलशस्थलबिम्बानामेकांशं जुहुयात्ततः।
यद्वा यागसमारम्भात् पूर्वं संसाध्य वै चरुम् ॥ २५६ ॥
कलशस्थलबिम्बानां क्रमात् कृत्वा तु पूजनम्।
सर्वं द्विजप्रदानान्तं वह्नौ सन्तर्पयेत्ततः ॥ २५७ ॥
दत्वा पूर्णाहुतिं पश्चात् प्रयायाद्बिम्बसन्निधिम्।
पुरा यस्मिन् दिने विप्र! अतीते वत्सरे कृतः ॥ २५८ ॥
पवित्रकोपसंहारस्तद्दिनादादितः स्मरन्।
अर्घ्यपुष्पादिबलिभिः पूजयेत् सर्वमध्वरम् ॥ २५९ ॥

तद्वदाज्यं सपूर्णान्तं क्रमेण जुहुयात्ततः ।
मण्डलाग्रमथासाद्य मुद्राबन्धादिकं तु वै ॥ २६० ॥
कृत्वा प्रणामपर्यन्तं ततस्त्वेकं पवित्रकम् ।
वासितं धूपगन्धाभ्यां चतुःस्थानस्थितस्य च ॥ २६१ ॥
विनिवेद्य क्रमेणैव धूपं दत्वार्घ्यपूर्वकम् ।
" निजानन्दमयैर्भोगैर्नित्यतृप्तस्त्वमव्ययः ॥ २६२ ॥
तथापि भक्त्याऽतृप्तोऽहं त्वां यजाम्यात्मसिद्धये । "
इति विज्ञाप्य देवस्य ततोऽस्त्रेणार्घ्यवारिणा ॥ २६३ ॥
सर्वं भूषणपूर्वं तु संप्रोक्ष्य द्रव्यसञ्चयम् ।
शालिभिस्तण्डुलैर्वापि तिलैर्वा त्रितयेन वा ॥ २६४ ॥
चतुस्त्रिद्व्येकभारैर्वा कृते पीठेऽथवा स्थले ।
निवेश्य वायुदिग्भागे स्थलस्याग्रापेक्षया ॥ २६५ ॥
यद्वा पश्चिमदिग्भागे देशिकेच्छानुरूपतः ।
सितवस्त्रान्वितेनैव त्वक्षतेनैव वर्मणा ॥ २६६ ॥
अर्चयित्वास्त्रमन्त्रेण स्थगयेत् कवचेन तु ।
एवं सर्वत्र वा कुर्याद्द्रव्याणामधिवासनम् ॥ २६७ ॥
बर्हिपक्षसमोपेतं साङ्गमिष्यष्टकं ततः ।
द्विविधदिक्ष्वस्त्रजप्तं तद्वद्यागनिकेतनम् ॥ २६८ ॥
पञ्चरङ्गेण सूत्रेण दृढेन सुसितेन वा ।
चतुर्गुणेन संवेष्ट्य त्वभ्यन्तराद्यागमण्डपम् ॥ २६९ ॥
प्रदक्षिणचतुष्कं तु वर्ममन्त्रं तु संस्मरन् ।
प्रासादं बाह्यतस्तद्वद्वेष्टयेदग्निमन्दिरम् ॥ २७० ॥
वेष्टयेदन्तरा प्राग्वत्ततो देशिकसत्तमः ।
स्वयं समूहमभ्यर्च्य पञ्चकालपरायणम् ॥ २७१ ॥
षट्कर्मनिरतं चापि यतिवृन्दं तु वैष्णवम् ।
समक्षं भवतां भक्त्या श्वः प्रभुं पूजयाम्यहम् ॥ २७२ ॥
सन्निधानमतः कार्यं मदनुग्रहकाम्यया ।
एवमभ्यर्थितेभ्यस्तु ह्यनुज्ञां प्रतिगृह्य च ॥ २७३ ॥
प्राङ्मुखस्त्वासनारूढो गुरुपाणिपरिच्युतम् ।
ब्रह्मकूर्चं पिबेत् पश्चाच्चरुशेषं तु भक्षयेत् ॥ २७४ ॥

पिबेद्धृदयसंजप्तं हेमरत्नकुशोदकम् ।
भगवत्पादतोयं च सर्वपापहरं शुभम् ॥ २७५ ॥
अद्यात्तदनु ताम्बूलं दन्तकाष्ठसमन्वितम् ।
आचम्य न्यासपूर्वं तु सकलीकृत्य विग्रहम् ॥ २७६ ॥
स्थलस्थं मन्त्रमुद्धृत्य कुम्भेऽग्नौ न्यस्य वात्मनि ।
कुतपे कम्बलोपेते स्थित्वा च सकुशास्तरे ॥ २७७ ॥
जपेन्मन्त्रवरं साङ्गं पठंस्तोत्रवरान् शुभान् ।
कथां सार्वेश्वरीं पुण्यां कुम्भं निष्पाद्य मण्डलम् ॥
एकाब्जं बहुपद्मं वा चक्राब्जाद्यमथापि वा ।
स्वयं भगवता प्रोक्तमेतेषां लक्षणादिकम् ॥ २७९ ॥
पौष्करे देवदेवेन सम्यक् पुष्करजन्मनः ।
अथवा मण्डलं कुम्भमपरे वासरे द्विज ! ॥ २८० ॥
भूषणानां ततो गत्वा सन्निधिं द्विजसत्तम ! ।
दाहाप्यायनयोगेन कुर्याच्चैवाधिवासनम् ॥ २८१ ॥
ध्यात्वा दक्षिणहस्ते तु द्वादशारं ज्वलत्प्रभम् ।
कलाद्वादशसंयुक्तं तदन्तःस्थं दिवाकरम् ॥ २८२ ॥
दग्धं तद्रश्मिसङ्घेन भस्मकूटगतं स्मरेत् ।
मान्त्रं पवित्रसङ्घं तु निश्शेषं जनयेत्ततः ॥ २८३ ॥
सितं षोडशपत्राढ्यं वामहस्तेऽम्बुजं स्मरेत् ।
क्षपाकरं तु तन्मध्ये ध्यायेत् पूर्णकलान्वितम् ॥
पीयूषवृष्टिसंपातं मुञ्चमानं विचिन्तयेत् ।
तेनामृतेन तद्भस्म भावयेत् सञ्चितं द्विज ! ॥ २८५ ॥
समुत्थितं भस्ममध्यात् तत् सर्वं चिन्तयेत् पुनः ।
पञ्चभूतात्मकं ध्यात्वा व्यापकत्वेन तत् पुनः ॥ २८६ ॥
मूलमन्त्रेण सम्प्रोक्ष्य संस्पृश्याथ निरीक्ष्य च ।
कुम्भयोरयानि चैकस्मिन् माण्डलीयानि चापरे ॥
बिम्बयोरयानि चैकस्मिन्नाग्नेयान्यपरे द्विज ! ।
अन्यानि मन्त्रयोरयानि ह्येकस्मिन् द्विजसत्तम ! ॥
पात्रे पात्रे पृथक् स्थाप्य पात्रलाभानुरूपतः ।
आच्छाद्य वाससा पश्चात् सुसितेनाहतेन तु ॥ २८९ ॥

तानि भूषणपात्राणि क्रमेण च पृथक् पृथक् ।
बन्धनीयानि सूत्रेण दृढेन सुसितेन च ॥ २९० ॥

आच्छाद्य पूर्ववत् तानि जागरेण नयेन्निशाम् ।
एकादश्यां प्रभातेऽथ स्नात्वा पूज्य जनार्दनम् ॥

आनिमन्त्र्य गृहं गत्वा यन्त्रितः प्रणिपत्य च ।
ब्राह्मणान् गुरुपूर्वांश्च विष्णुभक्तान् दृढव्रतान् ॥२९२॥

स्वधर्मनिरतांश्चैव देवदेवक्रियापरान् ।
आपत्कालेऽपि संप्राप्ते येऽर्चयन्त्यच्युतं प्रभुम् ॥२९३॥

अथान्यान् वैष्णवान् कांश्चित् सुहृत्सम्बन्धिबान्धवान् ।
ततः पुण्याहघोषेण प्रवृत्ते तु निशामुखे ॥ २९४ ॥

शङ्खशब्दैः सुमङ्गल्यैर्ब्राह्मणैर्ध्वनिभिः सह ।
पठद्भिःशाकुनं सूक्तं प्रविशेद्देवमन्दिरम् ॥ २९५ ॥

ततो नैमित्तिकं बिम्बं वस्त्रैर्माल्यैश्च भूषणैः ।
विलेपनैरलङ्कृत्य मूर्तिपैः सह देशिकः ॥ २९६ ॥

यानमारोप्य निष्क्रम्य शङ्खकाहलतूर्यकैः ।
तालवृन्तैस्तथा च्छत्रैश्चामरैर्विविधैः सितैः ॥ २९७ ॥

नरनाथो यथादेवं मण्डपे सन्निवेशयेत् ।
अथ भद्रासने देवं चतुष्पादसमन्विते ॥ २९८ ॥

समारोप्यार्चयेद्देवं सविशेषं विधानतः ।
महाहविर्निवेद्याथ तर्पयेद्वह्निमध्यतः ॥ २९९ ॥

ततोऽपराह्णवेलायां प्रवृत्ते वा निशामुखे ।
पुण्याहोद्घोषणाद्यैश्च सहोक्तैः सर्वमङ्गलैः ॥ ३०० ॥

प्रवेशयेज्जगन्नाथं देवेशं यागमण्डपे ।
यागस्य पश्चिमे देशे सौवर्णे भद्रविष्टरे ॥ ३०१ ॥

उपरीष्टाद्वितानेन मौक्तिकेनैव शोभयेत् ।
देवमारोप्य यागस्थविभोरभिमुखं द्विज ! ॥ ३०२ ॥

यद्वा दशम्यां बिम्बस्थं यागागारे विभुं न्यसेत् ।
प्राग्दिक्प्रत्यङ्मुखा योज्या ऋङ्मयाः स्वासनेषु च ॥

दक्षिणे च उदग्वक्त्रान् यजुर्वेदांश्च योजयेत् ।
प्राङ्मुखान् पश्चिमे भागे सामज्ञान् विनिवेश्य च ॥

सह चैकायनैर्विप्रैर्मूर्तिसंज्ञोपलक्षितैः ।
दिश्युत्तरस्यां च ततो नित्यकर्मपरायणान् ॥ ३०५ ॥

निवेश्याथर्ववेदज्ञान् सर्वान् द्विद्विकसंख्यया ।
शृणु विध्यन्तरं भूयो विस्तराद्द्विजसत्तम ! ॥ ३०६ ॥

पूर्वं प्रत्यङ्मुखं कृत्वा आसनस्थं द्विजोत्तमम् ।
पुष्पवस्त्रैस्तथोष्णीषैर्भूषितं चाङ्गुलीयकैः ॥ ३०७ ॥

ऋङ्मन्त्रान् पाठयेत् पुण्यान् मन्त्रविद्भगवन्मयान् ।
अथ दक्षिणदिक्संस्थं वीक्षमाणमुदग्दिशम् ॥ ३०८ ॥

यजुर्वृन्दं वैष्णवं तत् पाठयेद्देशिकस्तु तत् ।
गायेच्छुद्धानि सामानि सामज्ञः पश्चिमे स्थितः ॥

भक्तश्चोदक्स्थितो ब्रूयाद्दक्षिणास्योऽप्यथर्ववित् ।
स्वशाखोक्तांस्ततो मन्त्रान् ज्ञानलिङ्गानशेषतः ॥ ३१० ॥

एकैकं शिष्यवर्गेण वृतो योग्यः क्रमेण तु ।
भगवद्भाविनो ये च यतयः पाञ्चरात्रिकाः ॥ ३११ ॥

चतुर्भिराप्तैर्विप्राद्यैर्युक्तस्त्वीशद्दिशि न्यसेत् ।
एकान्तिनस्त्वनाप्तैश्च युक्तांश्चाग्नेयदिग्गतान् ॥ ३१२ ॥

निवेद्य विप्राद्यैर्ऋत्यां भक्तान् वैखानसांस्तथा ।
चतुर्भिरञ्जलीकैस्तु ततो वायव्यगोचरे ॥ ३१३ ॥

सारम्भिणः सात्वतांश्च तत्काले भगवन्मयान् ।
चत्वारोऽथ चतुर्दिक्षु योज्याश्च शिखिनो मुने ! ॥

तेषां चैवानुयायीरंश्चत्वारस्तु प्रवर्त्तिनः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च मुनिसत्तम ! ॥३१५॥

एकायनीयशाखोत्थान् मन्त्रान् परमपावनान् ।
पाठयेच्च यतीनात्मपूर्वान् यैः पाञ्चरात्रिकान् ॥ ३१६ ॥

स्वानुष्ठाने स्वकान् मन्त्रान् जपन्तः संवदन्ति च ।
प्रागादौ चोत्तरान्तं च चत्वारो गुरुपूर्वकाः ॥ ३१७ ॥

बहवः समयज्ञानाः सात्वतज्ञाः स्वशक्तितः ।
कृतन्यासास्तथा ध्यानमुद्रालङ्कृतपाणयः ॥ ३१८ ॥

सव्यासव्या स्वकां मुद्रां च्छन्नां कुर्युः परस्परम् ।
गीतनृत्तपराश्चान्ये अग्रतः स्तोत्रपाठकाः ॥ ३१९ ॥

घण्टिवृन्दयुता वाद्ये तथा दुन्दुभिवादिनः ।
अन्ये तु वैष्णवाः सर्वे पृष्ठतः पार्श्वतोऽपि च ॥ ३२० ॥

एवं निवेशनं कृत्वा सर्वेषां तु यथाक्रमम् ।
ततस्तु देवदेवस्य चतुःस्थानस्थितस्य च ॥ ३२१ ॥

क्रमेण पूजनं कुर्यात् पूर्ववद्द्विजसत्तम ! ।
आसाद्य फलशोद्देशं विनिवेदनमाचरेत् ॥ ३२२ ॥

नानाविशेषभोगानां विभोरामन्त्रणाय च ।
दन्तकाष्ठं सताम्बूलं मुखवासं सदर्पणम् ॥ ३२३ ॥

चन्दनादीनि गन्धानि जातिपूगफलानि च ।
विनिवेद्य निधायाग्रे दक्षिणेऽथ जगत्प्रभोः ॥ ३२४ ॥

गुग्गुलुं मृष्टधूपं च प्राकाशं ताम्रपात्रगम् ।
रुक्प्रभामण्डनं रम्यं हेमसूत्रं सकङ्कणम् ॥ ३२५ ॥

मध्वाज्यपूरिते पात्रे तैजसे रोचनाञ्जनम् ।
न्यसेत् पट्टकं महन्मूर्तेर्नेत्रवस्त्रे सितारुणे ॥ ३२६ ॥

पश्चिमे च विभोर्दद्यात् पुण्यनद्युदकं तथा ।
तीर्थतोयं नगोत्थं च नगमृच्छ्रीफलादि यत् ॥ ३२७ ॥

शाद्वलं नीलदर्भांश्च ताम्रपात्रेऽथवायसे ।
उत्तरेऽथ विभोर्दद्याद्देवदेवस्य सत्तम ! ॥ ३२८ ॥

माल्यान्योषधयः सप्त बीजानि च फलानि च ।
तिलतण्डुलपात्राणि क्षीरं दधि घृतं सिता ॥ ३२९ ॥

गन्धवृन्दं त्वगेलाद्यं धातवो गैरिकादयः ।
सफलं नारिकेलं च विकारास्त्वैक्षवाखिलाः ॥ ३३० ॥

सराजते कांस्यपात्रे संभवानुगुणं द्विज ! ।
यज्ञपर्णपुटे वा तु विनिवेद्यमसंभवे ॥ ३३१ ॥

सकुशोदं स्थलस्थस्य ताम्बूलं दन्तधावनम् ।
सितानि सोत्तरीयाणि उपवीतानि चन्दनम् ॥ ३३२ ॥

चतुर्दिक्षु विनिवेद्याथ बिम्बेऽन्नावेद्यमेव हि ।
तानि भूषणपात्राणि विनिवेद्य पृथक् पृथक् ॥ ३३३ ॥

सन्निवेद्यानि पुरतश्चतुःस्थानस्थितस्य च ।
मूलबिम्बे यदा कुर्यात्तदा सर्वं तदग्रतः ॥ ३३४ ॥

स्थाप्य भूषणपर्यन्तं विनिवेद्य यथाक्रमम् ।
कुङ्कुमागरुकर्पूरश्रीखण्डैरधिवासितम् ॥ ३३५ ॥

चतुःस्थानावतीर्णस्य दद्याद्गन्धपवित्रकम् ।
ततोऽर्घ्यं पुष्पधूपं च मुद्राबन्धं समाचरेत् ॥ ३३६ ॥

आदिमध्यावसाने तु सम्यक् छिद्रस्य शान्तये ।
जपेन्मन्त्रवरं साङ्गं पश्चाद्बद्धाञ्जलिः पठेत् ॥ ३३७ ॥

प्रणवद्वितयाद्यं तु स्तोत्रमन्त्रं निमन्त्रयेत् ।
" सर्वमन्त्रमयाऽनन्त ! नित्यसन्निहिताव्यय ! ॥ ३३८ ॥

गुणप्रधानयोरीश ! भावनाभोगविग्रह ! ।
नारायण ! परं ब्रह्म ! प्राणेश ! चतुराकृते ! ॥ ३३९ ॥

सर्वगाच्युत ! सन्मूर्ते ! सर्वज्ञ ! पुरुषोत्तम ! ।
अस्मात् काललवाद्यावद्विसर्जनदिनावधि ॥ ३४० ॥

नानामन्त्रगणोपेतः सन्निधिं भज मे प्रभो ! ।
देवबिम्बे तु सन्मूर्तौ कलशे मण्डलक्षितौ ॥ ३४१ ॥

संख्यासूत्रेऽक्षसूत्रे च पावके गुरुविग्रहे ।
घण्टायां शास्त्रपीठे च यागोपकरणेषु च ॥ ३४२ ॥

स्रुक् स्रुवाद्येष्वशेषेषु एकान्तिद्विजमूर्तिषु ।
विष्णुपार्षदभेदेषु जन्मकर्मरतेषु च ॥ ३४३ ॥

श्रद्धापूतेषु दक्षेषु त्वदेकशरणेषु च ।
अतीतवात्सरीयाणां स्नानादीनां हि कर्मणाम् ॥ ३४४ ॥

नैमित्तिकानां नित्यानामपूर्णानां हि शान्तये ।
त्वत्प्रीतये यथाशास्त्रमद्य निर्वर्तयाम्यहम् ॥ ३४५ ॥

पावित्रकविधानं च सर्वकर्मप्रपूरणम् ।
अतोऽद्य मुखवासाद्यमुपचारं हि चार्चनम् ॥

होमान्तमधिवासीयं कुरु सर्वं हि चात्मसात् ।
त्वामर्चयाम्यहं भक्त्या शक्त्यातीतेऽथ जागरे ॥

यथावद्ब्रह्मसूत्रान्तैर्भोगैर्भोगापवर्गदैः ।
विज्ञतोऽसीति भगवन् ! वेत्सि सर्वं हृदि स्थितम् ॥

भक्तस्य मम वात्सल्यात् प्रातः कार्यस्त्वनुग्रहः ।"
एवं निमन्त्रयित्वाजमष्टाङ्गेन नमेत् क्षितौ ॥ ३४६ ॥

चतुः प्रदक्षिणीकृत्य हृदि मन्त्रमनुस्मरन् ।
गीतनृत्तादिकैः स्तोत्रैर्वेदपाठसमन्वितैः ॥ ३५० ॥

जयशब्दसमेतैस्तु जागरेण नयेन्निशाम् ।
स्नात्वा ब्राह्मे मुहूर्तेऽथ कृतकौतुकमङ्गलः ॥ ३५१ ॥

महता विभवेन प्राग्द्वारयागं समाचरेत् ।
नित्यं कर्म पुरा कृत्वा ह्येकस्मिन्नधिकारिणि ॥ ३५२ ॥

कुम्भस्थं तु यजेत् प्राग्वन्मण्डलस्थं ततः क्रमात् ।
बिम्बस्थं देवदेवेशं सविशेषं समर्चयेत् ॥ ३५३ ॥

क्षीरादिपञ्चविंशद्भिर्यथावदधिवासितैः ।
स्नानैरन्यैश्च विविधैर्भोगैर्भक्ष्यादिनिर्मितैः ॥ ३५४ ॥

सांस्पर्शिकैरासनाद्यैर्विविधैरुपचारकैः ।
हृदयङ्गमसंज्ञैस्तु बहुभेदविनिर्मितैः ॥ ३५५ ॥

जपमुद्रावसानान्तमेवं कृत्वा क्रमेण तु ।
अग्निस्थं तर्पयेत् पश्चाद्यथावदनुपूर्वशः ॥ ३५६ ॥

अथ भूषणपात्रस्य गत्वा वै सन्निधिं द्विज ! ।
पूजयित्वा समुद्घाट्य पात्रं प्रातिसरीयकम् ॥ ३५७ ॥

अवलोक्य समादाय गत्वा कलशसन्निधिम् ।
आराधनाङ्गनिचयमव्यक्तं तात्त्विकं भवेत् ॥ ३५८ ॥

तृतीयमुभयात्मं तु आध्यात्म्यादित्रयं तथा ।
अनुसन्धाय वै तस्मिन् संस्मरन् हृदयं धिया ॥ ३५९ ॥

तत्राष्टाष्टकसंख्यं तु अव्यक्तं भोगसङ्ग्रहम् ।
मन्त्रमुद्रासमूहं तु तात्त्विकं परिकीर्तितम् ॥ ३६० ॥

स्वाध्यायगीतवाद्यादिव्रतानि नियमानि च ।
दानान्युत्सवपूर्वाणि नानानैमित्तिकानि च ॥ ३६१ ॥

एतान्युभयरूपाणि पुरुषार्थप्रदानि च ।
प्रीतिदानि जगद्योनौ मन्त्रमूर्तौ जनार्दने ॥ ३६२ ॥

भास्वरं चिन्मयं शुद्धं यदेषां रूपमक्षयम् ।
तद्गर्भेष्वनुसन्धेयं सूक्ष्मं तदनु भास्वरम् ॥ ३६३ ॥

सूर्येन्दुवह्निसंकाशमियत्तापरिकल्पितम् ।
तद्ग्रन्थिगणदेशेषु भावनीयं महामते ! ॥ ३६४ ॥

सुस्थूलं व्यावहार्यं च तृतीयं सार्वलौकिकम् ।
तत् तन्तुनिचयोद्देशे भावनीयं सदैव हि ॥ ३६५ ॥

एवमाध्यात्मिकीं व्याप्तिं लक्षयित्वा तु तत्परम् ।
चिन्तयेदधिदैवाख्यां व्याप्तिं मान्त्रीमनश्वरीम् ॥ ३६६ ॥

चतुर्णामविनाभावि यद्रूपममृतोपमम् ।
नानाभासगणाकीर्णं मूर्तामूर्तमनश्वरम् ॥ ३६७ ॥

किरीटमालाश्रीवत्सकौस्तुभानां महामते ! ।
सन्निधिं भावयेन्नित्यमधिदैवात्मनां स्वयम् ॥ ३६८ ॥

पृथ्व्यप्तेजोऽनिलाकाशपञ्चानां समुदायि यत् ।
रमणीयं शुभं रूपं भक्तानां परितोषकृत् ॥ ३६९ ॥

तदस्य चाधिभूतत्वं मन्तव्यं योजनावधौ ।
ध्यात्वैवं मूलमन्त्रं तु समुदीर्य ततः परम् ॥ ३७० ॥

प्रणवालङ्कृतं मन्त्रं तमुद्यतकरः पठेत् ।
"(ओं) त्वत्प्राप्तिसाधनं देव ज्ञानं यदमलं परम् ॥३७१॥

भक्तिश्रद्धासमोपेता सत्क्रिया त्वत्प्रकाशिता ।
अखण्डसिद्धये तस्या ह्युपायः कथितस्त्वया ॥ ३७२ ॥

ज्ञानकर्मप्रसक्तानां भक्तानां भावितात्मनाम् ।
पवित्रार्थं यथाशक्त्या त्वत्प्रसादान्मया कृतम् ॥

यथोचितमिदानीं तद्ध्यायस्व परमेश्वरम् ।
तस्माच्छुभतरं कर्म विज्ञानममलं हि यत् ॥ ३७४ ॥

विध्यन्तरं मन्त्रगणं द्रव्यसङ्घस्त्वमेव हि ।
प्राप्तिः पूरयिता पूर्णमपूर्णानां हि कर्मणाम् ॥ ३७५ ॥

तथ्येनानेन भगवन् ! भवभङ्गार्दितस्य च ।
अशठस्य क्रियाकांडमखण्डं सर्वमस्तु ते ॥ ३७६ ॥

विज्ञप्तोऽसीति भगवन् ! आर्थिता मे परा त्वयि ।
विना त्वत्परितोषेण सम्यग्ज्ञानप्रदेन च ॥ ३७७ ॥

आपत्कालेऽपि संप्राप्ते बुद्धिपूर्वं मयाच्युत ! ।
न सन्त्याज्यं क्रियाज्ञानं त्वं सर्वं वेत्सि तत्त्वतः ॥३७८॥

यथाकालं यथावच्च भोगैर्देव ! यथोचितैः ।
नार्चितोऽसि यथा सम्यक् खेदध्वंतसि तेन मे ॥

पूजनं भोगसंभोगैराज्यहोमैस्तु तर्पणैः ।
त्वयैतत् कृतकृत्यत्वान्न किञ्चिदुपयुज्यते ॥ ३८० ॥
सुक्षेत्रं यापितं ह्येतदखिलार्थस्य मेऽखिलम् ।
फलिष्यत्यमृतत्वेन ज्ञात्वैवं हि मया पुरा ॥ ३८१ ॥
अङ्गीकृतं गुरुमुखात् किन्तु सर्वेश्वर! प्रभो!।
परिस्फुरति मे बुद्धौ न निर्व्यूढं यथास्थितम् ॥३८२॥
मनोवाक्कायकर्मैस्तु आप्रभातान्निशावधि ।
अस्वातन्त्र्याद्सामर्थ्यान्मनसश्चानवस्थितेः ॥ ३८३ ॥
शीतोष्णवातवर्षाद्यैरन्तरायैर्ज्वरादिभिः ।
असम्पत्तेः क्रियाङ्गानां देव! त्वदनुरूपिणाम् ॥३८४॥
आप्रवृत्तेः परानन्दप्राप्तिनिष्ठं यदाह्निकम् ।
यथोक्तममराणां तु यस्मान्न घटते ततः ॥ ३८५ ॥
तस्य सम्पूरणार्थं तु प्रधानतरमर्चनम् ।
पवित्रकाख्यमादिष्टं वत्सरं प्रति यत् त्वया ॥ ३८६ ॥
तन्मया कृतमध्यक्षमर्चितं यदनिर्मलम् ।
क्रियायोगादसंपूर्णं तन्मे निर्मलतां नय ॥ ३८७ ॥
ज्ञानतोऽज्ञानतो वापि यथोक्तं न कृतं मया ।
तत् सर्वं पूर्णमेवास्तु सुतृप्तो भव सर्वदा ॥ ३८८ ॥
ओमच्युत ! जगन्नाथ ! मन्त्रमूर्ते ! जनार्दन ! ।
रक्ष मां पुण्डरीकाक्ष! क्षमस्वाज! प्रसीद ओम् ॥ ”
उक्त्वैवं मूलमन्त्रं तु हृदाद्यैर्लाञ्छनैः सह ।
समुदीर्य ततो दद्यान्मूर्ध्नि मन्त्रात्मनो विभोः ॥ ३९० ॥
सर्वज्ञानक्रियाभोगशुभसंकल्पविग्रहम् ।
मण्डलान्तर्गतस्यैवं प्रासादान्तःस्थितस्य च ॥ ३९१ ॥
एवमर्न्तैः पवित्रे द्वे प्रदद्याद्द्विजसत्तम!।
यद्वा किरीटमाधे तु मध्ये श्रीवत्सकौस्तुभे ॥ ३९२ ॥
तृतीये वनमालां च मन्त्रैरेभिस्तु विन्यसेत् ।
“ पद्मराजे किरीटाय पद्मरागवृतः स्वयम् ॥ ३९३ ॥
पवित्रकेऽस्मिन्नागच्छ क्षिप्रं सन्निहितो भव ।
श्रीवत्साय नमस्तुभ्यं कौस्तुभागच्छ ओं नमः ॥३९४॥

पवित्रकेऽस्मिन् सन्तिष्ठ सच्छ्रीवत्सामलप्रभ!।
आगच्छ वनमाले! त्वं अस्मिन् सन्निहिता भव ॥
पवित्रके जगद्योनेर्यन्मया परिकल्पितम् । ”
शृणु विध्यन्तरं भूयो ध्यायेद्यद्वै द्विजाखिलम् ॥३९६॥
सांवत्सरं तु यत् कर्म आप्रभातान्निशान्तिमम् ।
ध्यानोत्थं निष्कलं सम्यगपवर्गप्रदं तु यत् ॥ ३९७ ॥
संस्मृत्य निष्कलं मन्त्रं शुद्धोच्चारक्रमेण तु ।
मन्त्रे सन्धाय तत्सूत्रं सूत्रे मन्त्रं तथैव च ॥ ३९८ ॥
एकीकृत्यात्मना सार्धं दद्याद्वै मन्त्रमूर्धनि ।
समादायापरं सूत्रं तस्मिन् सकलनिष्कलम् ॥ ३९९ ॥
ध्यानकर्मस्वरूपं तु कर्म ध्यायेच्च वात्सरम् ।
स्मृत्वा चोभयरूपं तु मन्त्रं कलशपूजितम् ॥ ४०० ॥
पूर्ववच्चानुसन्धानं कृत्वा दद्यात् पवित्रकम् ।
ततः प्रतिसरं विप्र! तृतीयं च समाहरेत् ॥ ४०१ ॥
याह्यसांवत्सरं कर्म सकलं चाखिलं स्मरेत् ।
पूजयन्तं स्वमात्मानमाधाराच्च परावधिम् ॥ ४०२ ॥
लयभोगाधिकाराख्यक्रमेण सकलात्मना ।
सकलं मन्त्रनाथं तु लयभोगादिविग्रहम् ॥ ४०३ ॥
स्मृत्वा कृत्वा च सन्धानं दद्यात् प्रतिसरं ततः ।
अर्घ्यपुष्पैस्तथा गन्धैर्माल्यैर्धूपैस्तथा द्विज! ॥ ४०४ ॥
पूजया सम्पुटीकुर्याद्भूषणानि पृथक् पृथक् ।
अन्तरान्तरयोगेन घण्टाशब्दसमन्वितम् ॥ ४०५ ॥
समस्तरत्नसद्धातुपुष्पाक्षतफलान्विता ।
सत्सुगन्धार्घ्यदर्भाढ्यलाजसिद्धार्थकैर्युता ॥ ४०६ ॥
प्रक्षेप्तव्या तु बहुशो वृष्टिः करद्वयेन मुदा ।
केवला पुष्पवृष्टिर्वा शङ्खादीन्यपि नादयेत् ॥ ४०७ ॥
मन्त्राख्यकुम्भयोर्दद्याद्भूषणे ध्यानवर्जिते ।
दत्त्वैवं कलशस्थस्य पुरा विप्र! पवित्रकम् ॥ ४०८ ॥
अनेन विधिना दद्यान्मण्डलस्थस्य वै पुरा ।
पवित्रकत्रयं शुभ्रं भोगस्थाने च नारद! ॥ ४०९ ॥

दद्यात् समस्तमन्त्राणां त्रीण्येकं वा यथेच्छया।
बिम्बस्थं तु समभ्यर्च्य प्रदद्याद्भूषणानि तु ॥ ४१० ॥

कलशोक्तक्रमेणैव वनमालाख्यभूषणे।
अव्यक्ताद्यनुसन्धानं यद्वा विध्यन्तरोदितम् ॥ ४११ ॥

परादिस्थूलपर्यन्तं सर्वं कृत्वा निवेदयेत्।
पृथङ्न्यासो यथा प्रोक्तः किरीटाद्यस्य सत्तम! ॥४१२॥

तत्रायं हि विशेषः स्यात् किरीटाद्यं चतुष्टयम्।
क्रमेणावाहयेद्विप्र! भूषणानां चतुष्टये ॥ ४१३ ॥

"किरीटाख्यसुरेशस्य भानुतुल्यप्रभान्वित!।
परिवारयुतस्तिष्ठ त्वमस्मिन् शीर्षभूषणे ॥ ४१४ ॥

वक्षःस्थले जगद्योनेर्भूषणं कल्पितं मया।
श्रीवत्सागच्छ पूर्णेन्दुसमान! भगवत्प्रिय! ॥ ४१५ ॥

वक्षःस्थले जगद्योनेर्भूषणं कल्पितं मया।
कौस्तुभागच्छ रत्नानामीश! त्वं भगवत्प्रिय! ॥४१६॥

धातुपुष्पसमाकीर्णे! प्रवालमणिभूषिते!।
वनमाले! समागच्छ देवदेवप्रिये! शुभे!" ॥ ४१७ ॥

चतुर्भिरेतैर्मन्त्रैस्तु क्रमेणावाहयेद्द्विज!।
अङ्गानामप्युपाङ्गानां लाञ्छनानां तथैव च ॥ ४१८ ॥

भूषणानां च शक्तीनां गरुडस्य च वै क्रमात्।
पीठस्य तु पवित्राणि प्रदद्यात् क्रमशस्ततः ॥ ४१९ ॥

एवमेव विभोर्दद्यान्मूलबिम्बगतस्य च।
सर्वेषां कर्मबिम्बानां लक्ष्म्यादीनां तथैव च ॥ ४२० ॥

अन्येषामङ्गबिम्बानां परिवारगणस्य च।
क्रमेण भूषणं दत्वा यायादग्निनिकेतनम् ॥ ४२१ ॥

अग्निस्थस्य विभोर्दद्याद्भूषणानि तु पूर्ववत्।
यदा पवित्रकारोपो मूलबिम्बे तदा भवेत् ॥ ४२२ ॥

नित्यं कुण्डेऽन्यथा स स्यान्नित्यनैमित्तिकेऽपि च।
अग्नौ निवेदयेद् विप्र! भूषणं न तु होमयेत् ॥ ४२३ ॥

यस्मात् सन्यासमूर्ध्वं तु विहितं भूषणस्य च।
नाहर्तुं युज्यते दग्धं दोषमाहरणं विना ॥ ४२४ ॥

देशिकस्य हृदारोप्य पूजितस्य च देववत्।
स्वं स्वं चारोप्य चान्येषां देशिकानां तथैव च ॥४२५॥

साधकानां ततो दत्वा यागाङ्गानामपि द्विज!।
शास्त्रात्मनस्ततो दत्वा ह्यन्येषां क्रमशस्तथा ॥ ४२६ ॥

पश्चात् पद्मासनं बद्ध्वा देवस्याभिमुखं स्थितः।
सकृज्जपेन्महामन्त्रं सर्वकर्मप्रवर्धनम् ॥ ४२७ ॥

नाशनं समयानां च दोषाणां स्मरणादपि।
ततः संश्रावयेद्देवं त्रिस्थानस्थं क्रमेण तु ॥ ४२८ ॥

"कामतोऽकामतो वापि न कृतं नियमार्चनम्।
केनचिद्विघ्नदोषेण मया यत्परमेश्वर! ॥ ४२९ ॥

तेन मे मनसोऽतीव सन्तापो दहनात्मकः।
यतः समयदोषेण बाधितोऽस्मि जनार्दन! ॥ ४३० ॥

त्वयोद्दिष्टं पुरा नाथ! भक्तानां हितकाम्यया।
दोषविध्वंसकृच्छुभ्रं पवित्रं तत् कृतं मया ॥ ४३१ ॥

प्रसीद मे कुरु त्राणं जहि कोपं हि लोपजम्।
निमज्जतो भवाम्भोधौ समयप्रच्युतस्य च ॥ ४३२ ॥

नमो नमस्ते मन्त्रात्मन्! प्रसीद परमेश्वर!।
पाहि पाहि त्रिलोकेश! केशवाऽऽर्तिविनाशन! ॥

त्वत्प्रसादाच्च मे मास्तु दोषः समयसंश्रितः।
अद्यास्तु कर्मसम्पत्तिर्नित्यनैमित्तिके प्रभो!" ॥ ४३४ ॥

श्रुत्वैवमादरात्तस्य संसारार्तस्य मन्त्रराट्।
पूर्णभावं नयेच्छीघ्रं हन्ति दोषांश्च सामयान् ॥ ४३५ ॥

ततः प्रावरणैर्दानैर्यथासम्पत्तिसंभृतैः।
सोपवीतोत्तरीयैश्च च्छत्रोपानहसंयुतैः ॥ ४३६ ॥

विविधैर्भोजनैर्विप्र! धूपार्घ्यालभनादिकैः।
पूजयेदात्मपूर्वांश्च यतिपूर्वास्तथैव च ॥ ४३७ ॥

पश्च वैखानसान्तांश्च विप्रादींश्चतुरस्तथा।
पश्च योगरताद्यांस्तु तथान्यान् वैष्णवान् द्विज! ॥

एकायनीयशाखोत्थमन्त्राणां प्रथमं ततः।
त्रयीमयानां मन्त्राणां स्तोत्राणां च तथैव च ॥ ४३९ ॥

उद्घोषणं च कर्तव्यं ब्राह्मणैरग्रतो विभोः ।
शङ्खभेरीनिनादैश्च काहलीगीतकैस्तथा ॥ ४४० ॥

नृत्तैश्च विन्दैर्स्यैर्मङ्गलैस्तोषयेत् प्रभुम् ।
पश्चादुत्सवबिम्बं तु यानमारोप्य देशिकः ॥ ४४१ ॥

महोत्सवविधिप्रोक्तं सर्वमङ्गलसंयुतम् ।
प्रदक्षिणक्रमेणैव प्रासादं तु प्रवेशयेत् ॥ ४४२ ॥

प्रार्थनां च ततः कुर्याद्यतीनां भावितात्मनाम् ।
"युष्मत्प्रसादसामर्थ्यान्मिनसः परिपूर्णता ॥ ४४३ ॥

क्रियाङ्गानां तु सर्वेषां मा मेऽस्तु समयच्युतिः ।"
"एवमस्त्विति" वक्तव्यं सर्वैस्तालसमन्वितम् ॥४४४॥

तांश्चानुपृच्छ्य नैवेद्यपूर्वं कुर्यात् सुभोजनम् ।
बन्धुभृत्यसमोपेतः स विशेषं द्विजोत्तम ! ॥ ४४५ ॥

एकरात्रं त्रिरात्रं वा सप्तरात्रं तु वा द्विज ! ।
पवित्रकं स्थापयित्वा ततः सन्यासमाचरेत् ॥४४६॥

अथवार्चागतं विप्र ! तावत् संस्थाप्य भूषणम् ।
यावदेकादशी शुक्ला संवृत्ता कार्तिकस्य तु ॥ ४४७ ॥

अपनीय च माल्यादीन् प्रदद्याद्वा दिने दिने ।
नो यान्ति म्लानतां यावत् संप्राप्ते कालवासरे ॥

महदर्चनपूर्वं तु कृत्वा पूर्णावसानकम् ।
क्रमशश्चोपसंहृत्य स्वयं गुर्वात्मना तु वा ॥ ४४९ ॥

आदाय पूजिते पात्रे अर्चयित्वा यथाविधि ।
जानुनी भूगते कृत्वा प्रणिपत्य च देशिकम् ॥ ४५० ॥

मानयित्वार्घ्यपुष्पाद्यैः प्रणिपत्य स्वयं पुरा ।
विनिवेद्य च तत् पात्रं "प्रसादः क्रियतां प्रभो" ॥

स्वाशिषं भगवत्प्रीतिर्वाच्याचार्येण तस्य तु ।
"यथागमं यथाशास्त्रं प्रसादाच्चतुरात्मनः ॥ ४५२ ॥

त्वयि सांवत्सरं कृत्यं सुसंपूर्णं सुतास्तु ओम् ।"
समुत्कीर्य ततस्तस्य आसनस्थस्य मूर्धनि ॥ ४५३ ॥

फलशाद्वितयं मान्त्रं कृत्वा सौभाग्यमोक्षदम् ।
विसर्जनं विभोः कुर्यात् पूजापूर्वं यथाक्रमम् ॥ ४५४ ॥

विष्वक्सेनं यजेत् साङ्गं तर्पयेत् तदनन्तरम् ।
समाहृत्याखिलं पश्चात् कृते चैतद्विसर्जने ॥ ४५५ ॥

यच्चिवेदितं तस्य ह्यगाधेऽम्भसि निक्षिपेत् ।
यथासंवत्सरकृतो दोषः समयपूर्वकः ॥ ४५६ ॥

नाशमायाति वै क्षिप्रं पवित्रारोपणान्मुने ! ।
पाति यस्मात् सदोषं हि पतनात् परिरक्षति ॥ ४५७ ॥

विशेषेण द्विजं त्राति पूर्णं कर्म करोति च ।
साधके च क्रियाहीने तस्मादुक्तो महान् मया ॥

याग एष पवित्राख्य उक्तलक्षणलक्षितः ।
पतितं च क्रियालोपाद्विद्वित् त्रायते यदा ॥ ४५९ ॥

तदा पवित्रकं विप्र ! भूषणं सूत्रजं स्मरेत् ।
अज्ञानादथवा मोहाद्यद्वा कर्मण्यनादरात् ॥ ४६० ॥

नास्तिक्याद्वाप्यहङ्कारात् कर्तृणामुपरोधतः ।
वैशेषिकान्तरप्राप्तेर्यद्वा निद्रादिदोषतः ॥ ४६१ ॥

कालातिक्रान्तिभीत्या वा त्वेवमन्येन केनचित् ।
विकलं यजनं कृत्वा यदा दद्यात् पवित्रकम् ॥ ४६२ ॥

मन्त्रेशस्य तदानीं तु भवेत् तत् कर्म तामसम् ।
देशाधिपो देशिकश्च प्राप्नुयात् तामसं फलम् ॥

ज्वरादिव्याधिपीडा स्यात् तदा तद्देशवासिनाम् ।
त्वराविष्टोऽथवा विप्र ! रजसा कलुषीकृतः ॥ ४६४ ॥

यागं कृत्वा तु देवस्य यदा दद्यात् पवित्रकम् ।
तदा स्याद्राजसं कर्म फलं स्यादेव तादृशम् ॥ ४६५ ॥

अज्ञानपूर्वकैर्दोषैः प्रागुक्तैस्तु विवर्जितः ।
यागं कृत्वा सुपूर्णं तु भूषणेन यदा यजेत् ॥ ४६६ ॥

तदा कर्ता गुरुश्चापि पवित्रोक्तं फलं लभेत् ।
तदा सांवत्सरं कर्म परिपूर्णतरं भवेत् ॥ ४६७ ॥

पतितस्य क्रियालोपात् परित्राणं भवेत् तदा ।
तस्मात्तु यजनं सम्यग्विभोः कृत्वा सुविस्तरम् ॥

तदन्ते शोभने प्राप्ते मुहूर्ते देशिको विभुम् ।
भूषणैर्भूषयेत् सम्यगत्वरः शान्तमानसः ॥ ४६९ ॥

न लभ्यते मुहूर्तं तु यागान्ते यदि शोभनम् ।
तदन्यस्मिन् समारोप्य पवित्राणि यथाविधि ॥
तदतिक्रान्तिदोषस्य शान्तयेऽथ जपेद्गुरुः ।
अष्टोत्तरसहस्रं तु मूलमन्त्रं तथाक्षपम् ॥ ४७१ ॥
जपेत् समयदोषघ्नमष्टधा मन्त्रनायकम् ।
एवं सर्वेषु यागेषु मुहूर्तातिक्रमे भवेत् ॥ ४७२ ॥
तिथिनक्षत्रवारेषु पवित्रारोहणे विधिः ।
कथितो मुनिशार्दूल ! यदा पुण्येक्षणादिके ॥ ४७३ ॥
केवले वैष्णवे वापि तत् कुर्यात् तत्र मे शृणु ।
पुण्यक्षणादिकं यस्मिन् दिने भवति तद्दिनात् ॥ ४७४ ॥
प्राक्सप्तमे दिने कृत्वा प्राग्वदङ्कुररोपणम् ।
प्राग्वत् कृत्वाधिवासं तु पुरस्ताद्वासरद्वये ॥ ४७५ ॥
ततः कर्मदिने ब्राह्मे मुहूर्ते स्नानकर्म च ।
कृत्वा प्राग्वत् समभ्यर्च्य चतुःस्थानस्थितं विभुम् ॥
केवलं बिम्बगं वापि यथाकालानुरूपतः ।
क्षणे तु वैष्णवे प्राप्ते पवित्रैस्तु यजेद्विभुम् ॥ ४७७ ॥
यदा तु केवले बिम्बे पवित्रारोहणं भवेत् ।
तदा स्याद्बिम्बगस्यैव अधिवासोक्तपूजनम् ॥ ४७८ ॥
तथा वह्निगतस्यापि वर्जयेत् कुम्भमण्डले ।
अतीतेऽस्मिन् मुहूर्ते तु भगवद्यागविस्तरात् ॥ ४७९ ॥
क्षणान्तरे तु तत् कृत्वा साष्टमूलायुतं जपेत् ।
समस्तदोषशमनमष्टाविंशतिकं जपेत् ॥ ४८० ॥
तिलैराज्यैरक्षतैर्वा सहस्रं जुहुयाद्गुरुः ।
विरोधात् समतिक्रान्ते क्षणे तस्मिन् महामते ! ॥
तदन्यस्मिन् समारोप्य पवित्राणि यथाविधि ।
ततस्तु पूर्ववत्के प्रथमस्नपनं चरेत् ॥ ४८२ ॥
द्वितीयं वा तृतीयं वा गुरोरिच्छावशेन तु ।
यद्वा मूलायुतं साष्टं जप्त्वा पश्चात्तिलादिकैः ॥४८३॥
आहुतीनां सहस्रं तु प्रत्येकं जुहुयात् त्रिभिः ।
जपेन्मन्त्रवरं पश्चात् पञ्चाशच्चतुरुत्तरम् ॥ ४८४ ॥

विधानमेवं कथितं स्थाने मर्त्यप्रतिष्ठिते ।
स्वयंव्यक्तादिके स्थाने पवित्रारोहणादिषु ॥ ४८५ ॥
नैमित्तिकेषु सर्वेषु नित्येष्वपि विशेषतः ।
मुहूर्तातिक्रमे तत्तत्कालातिक्रमणेऽपि च ॥ ४८६ ॥
न दोषो द्विज ! पूर्वोक्तस्तत्रापि च विशेषतः ।
भगवद्यागविस्ताराद्दतेऽन्येन च केनचित् ॥ ४८७ ॥
विघ्नानामुद्यमे तेन अतिक्रान्ते क्षणादिके ।
तत्तत्कर्माखिलं कृत्वा कालेऽन्यस्मिन् यथाविधि ॥
तद्दोषशान्तये कुर्यान्महामन्त्रजपं सुधीः ।
सकृद्द्विधा चतुर्धा वा अष्टधा वा द्विपञ्चधा ॥ ४८९॥
द्विपट्पोडशधा वापि अष्टाविंशतिधा तु वा ।
तत्तत्कर्मविशेषाणां गुरुत्वाद्यानुगुण्यतः ॥ ४९० ॥
यद्वाधिकं जपं कुर्याद्यथा चित्तं प्रसीदति ।
प्रायश्चित्तविशेषं तु ह्यूर्ध्वं वक्ष्यामि विस्तरात् ॥
दोषसंभावना प्रोक्ता तत्र कालावधिस्तथा ।
कीर्तितो विस्तरेणैव तस्मादत्र प्रतन्यते ॥ ४९२ ॥
इत्येष कथितः सम्यक् पवित्रारोहणे विधिः ।
कृते पवित्रके विप्र ! भक्तैर्मन्त्रक्रियापरैः ॥ ४९३ ॥
कश्चिद्विशेषनियमः पालनीयः प्रयत्नतः ।
यावदेकादशी शुक्ला कार्तिकस्यातिपुण्यदा ॥ ४९४ ॥
वक्ष्यते सूक्ष्मरूपोऽन्यः प्रकारो मुनिपुङ्गव ! ।
केवले बिम्बके वापि यागमन्दिरसंस्थिते ॥ ४९५ ॥
प्रासादसंस्थिते वापि दशम्यामधिवासिते ।
कल्पयेद्भूषणारोपं विना कलशमण्डले ॥ ४९६ ॥
अग्निस्थेऽपि तदा कुर्यात् तत् प्राग्वदधिवासिते ।
एकं द्वे त्रीणि वा दद्यात् पवित्राणि तदा विभोः ॥
समानीयोत्तमाद्येन भेदेन तु कृतानि वा ।
द्रव्याभावो द्विजश्रेष्ठ ! अशक्तिर्यदि वा भवेत् ॥४९८॥
सद्योऽधिवासं द्वादश्यां कृत्वा शक्त्या तु कारयेत् ।
सोपवासं द्विजश्रेष्ठ ! अर्चायां भूषणं विभोः ॥ ४९९ ॥

यथेच्छाकल्पितैः सूत्रैर्ग्रन्थिभिस्तु यथेच्छया।
निशारोचनया वापि पवित्राणां च धातुना ॥ ५०० ॥

केनचिद्ग्रन्थयो(?)विप्र! विधिवत् परिरञ्जयेत्।
पुष्पपूर्णानि गर्भाणि कृत्वा वा केवलान्यतः ॥ ५०१ ॥

प्रपूज्य पूर्ववद्विप्र! विम्बसन्निहितं विभुम्।
निवेद्य भूषणं दद्याद्वाणीमुच्चारयेदिमाम् ॥ ५०२ ॥

"यन्मया ब्रह्मसूत्रं च कल्पितं ग्राहयस्व च।
कर्मणां पूरणार्थाय, यथा दोषो न मे भवेत्" ॥५०३॥

इत्युक्त्वा च ततो दद्यात् पूज्योपरि पवित्रकम्।
स्तुत्वा च देवदेवेशं द्वितीयेऽह्नि प्रयत्नतः ॥ ५०४ ॥

पूजयित्वाथ देवेशं कुर्यात् तदुपसंहृतिम्।
गृहे पवित्रयागे तु विशेषमधुनोच्यते ॥ ५०५ ॥

विम्बस्थे मण्डलस्थे वा चतुस्स्थानस्थितेऽपि वा।
पवित्राणां त्रयं दद्यादेकैकं वा यथेच्छया ॥ ५०६ ॥

इत्युक्तं योगिनां श्रेष्ठ! पवित्रारोहणं परम्।
ऊनातिरिक्ताद्यत् पाति भुवि भक्तजनं सदा ॥ ५०७ ॥

तस्य निर्वर्तनाद्भक्त्या ब्राह्मणो वेदविद्भवेत्।
श्रीमानत्युग्रशक्तिर्वै क्षत्रियोऽच्छिन्नसन्ततिः ॥ ५०८ ॥

धनधान्ययुतो वैश्यः शूद्रस्तु सुखभाग्भवेत्।
गोभूहिरण्यदानानामनन्तानां हि यत् फलम् ॥ ५०९ ॥

यावज्जीवं प्रदत्तानां प्रत्यहं तत् समाः शतम्।
परमायुश्च संपूर्णं तत् फलं प्राप्नुयान्नरः ॥ ५१० ॥

प्राप्तकालं स्वबुद्ध्या तु आसाद्यायतनं हरेः।
स्मरन् सर्वेश्वरं सम्यक् समुत्सृजति विग्रहम् ॥ ५११ ॥

यानैश्चन्द्रप्रकाशैश्च दिव्यस्त्रीजनसङ्कुलैः।
वीज्यमानो दिवं याति पूज्यमानस्तथाऽमरैः ॥ ५१२ ॥

भुञ्जीत सकलान् भोगान् सर्वलोकान्तरोद्भवान्।
यः कुर्याद्भूषणारोपं निष्कामः प्रीतये विभोः ॥५१३॥

संप्राप्य विष्णुलोकं स आस्ते कल्पशतान् बहून्।
कालेन महतासाद्य मानुष्यं पुनरेव हि ॥ ५१४ ॥

शुभे काले शुभे देशे जायते सुशुभे कुले।
निवृत्ते बालभावे तु व्यक्ते करणसङ्ग्रहे ॥ ५१५ ॥

बुद्धितत्त्वे प्रबुद्धे तु ह्यगभ्यासवशात्तु वै।
कर्मणा मनसा वाचा नारायणपरो भवेत् ॥ ५१६ ॥

नित्यं क्रियापरो धीमान् ब्रह्मण्यः सत्यविक्रमः।
अनन्ययाजी शुद्धात्मा दुष्टसङ्गविवर्जितः ॥ ५१७ ॥

व्याधिशोकविनिर्मुक्तः पुत्रदारादिकैर्युतः।
अपमृत्युविनिर्मुक्तो ज्ञानमासाद्य निर्मलम् ॥ ५१८ ॥

श्वेतद्वीपं समासाद्य सुराणां यत् सुदुर्लभम्।
ज्ञानिनामपि चान्येषां तत्र दृष्ट्वा जगत्पतिम् ॥ ५१९ ॥

परब्रह्मत्वमायाति तत्कर्मपरमः पुमान्।
पश्यन्त्यारोप्यमाणं ये ब्रह्मसूत्रं जगत्प्रभोः ॥ ५२० ॥

तथानुमोदन्त्यन्योन्यं यान्ति ते परमां गतिम्।
शृण्वन्ति ये विधानं तु पवित्रं पापनाशनम् ॥ ५२१ ॥

प्राप्नुवन्ति च ते पुण्यमिष्टापूर्तोदितं हि यत्।
नारी ह्यनन्यशरणा पतिना परिचोदिता ॥ ५२२ ॥

तद्भक्ता सद्गुणा साध्वी कर्मणा मनसा गिरा।
नित्यं भर्तरि चाद्रोहा प्रयाता सह तेन वै ॥ ५२३ ॥

पवित्रकं जगद्योनेरारोपयति या द्विज!।
सातुलं चैव सौभाग्यं प्राप्नुयादचिरेण तु ॥ ५२४ ॥

देहान्ते देवनारीणां देवानां याति पूज्यताम्।
सा त्वरुन्धतिपूर्वाणामर्वाक् समभिवीक्ष्यते ॥ ५२५ ॥

ज्ञानमासाद्यत्यन्ते येन यात्यच्युतं पदम्।
प्रोत्तारयति बन्धूनां दुष्कृतेभ्योऽब्जसंभव! ॥ ५२६ ॥

पितृणां जनकादीनां नाम्ना स्नेहपरस्तु यः।
ददाति भूषणं विप्र! मन्त्री मन्त्रात्मनो विभोः ॥ ५२७ ॥

दुर्गतेः सुगतिं यान्ति घुसिन्धोररिथना यथा।
यथा सुराणाममृतं नृणां गाङ्गं यथा जलम् ॥ ५२८ ॥

स्वधा यथा पितृणां च कर्मिणां तद्वदेव हि।
पवित्रकं क्रियाढ्यानां पावनं भूतिवर्धनम् ॥ ५२९ ॥

सर्वदोषभयघ्नं च सर्वोपद्रवनाशनम् ।
सर्वसौख्यप्रदं चैव सर्वगुह्यप्रकाशनम् ॥ ५३० ॥

तपोदानव्रतानां च विहितस्याह्निकस्य च ।
निश्शेषयागभोगानां कृत्वा संपूरणक्रियाम् ॥ ५३१ ॥

अपरेऽहनि वै कुर्याच्चतुर्थे सप्तमेऽपि वा ।
स्नपनं पूज्यमन्त्रस्य तीर्थोद्देशेऽथ सङ्गमे ॥ ५३२ ॥

नद्यां समुद्रगामिन्यां देवखाते ह्रदे तु वा ।
प्रीतये परमेशस्य त्वात्मनो दुःखहानये ॥ ५३३ ॥

आह्लादायामराणां च पितॄणां तृप्तये तु वै ।
आप्यायनार्थं भूतानां भुवनानां च भूतये ॥ ५३४ ॥

देशदोषप्रशान्त्यर्थं गोब्राह्मणहिताय वै ।
यथावत् स्नपनं कुर्यात्तीर्थबिम्बे विशेषतः ॥ ५३५ ॥

नित्यस्नपनबिम्बे वा कुर्यात्तत्तदसन्निधौ ।
नित्योत्सवपरे बिम्बे ह्याचरेत्तदसन्निधौ ॥ ५३६ ॥

तदभावे पवित्रे तु दर्भमञ्जरिजे शुभे ।
विधानमत्र मे सम्यक् शृणु विप्र ! समाहितः ॥

बहुशाखमभग्नाग्रं समूलं यदपुष्पितम् ।
प्राङ्मुखो दर्भमादाय प्रणवेन पुरा क्षितेः ॥ ५३८ ॥

ततस्तेनैव तन्मूलं प्राग्वत् कुर्यादधिष्ठितम् ।
तस्य मध्यमनालं यन्न्यग्भूतमवतिष्ठते ॥ ५३९ ॥

आराध्य मन्त्रनाथेन स्मरेद्व्याप्तं महात्मना ।
विवर्तं परमात्मीयमध्यक्षाख्यं च विद्धि तम् ॥ ५४० ॥

अनेकगर्भमुख्यं यत् काण्डं काण्डेषु चोत्तमम् ।
अणिमादिगुणैर्युक्तं पुंस्तत्त्वं तेन कल्प्यते ॥ ५४१ ॥

वाचकं तस्य योक्तव्यं हंसयुक्तं द्विलक्षणम् ।
बहिष्काण्डचतुष्केण चित्तपूर्वं चतुष्टयम् ॥ ५४२ ॥

ग्रथनीयमथो वक्ष्यमव्यक्तान्तं स्वकैः पदैः ।
प्रणवादिनमोन्तैस्तु व्यापकं सूक्ष्मलक्षणम् ॥ ५४३ ॥

एवं श्रोत्रादिकान् पञ्च स्वनाम्ना ग्रथयेत्तदा ।
कर्मेन्द्रियाणि तदनु ततस्तन्मात्रपञ्चकम् ॥ ५४४ ॥

पञ्चकं त्वथ भूतानां बद्ध्वा वै क्ष्मावसानिकम् ।
अवशिष्टैस्तु तत्काण्डैर्बध्नीयात्तु करण्डवत् ॥ ५४५ ॥

विना शिखासमूहेन समुत्थानावधेरथ ।
किञ्चित्तदूर्ध्वदेशाच्च यथा नो याति वै पुनः ॥ ५४६ ॥

बहुधा काण्डसङ्घस्तु कल्पितस्तत्स्वसंख्यया ।
विभिन्नानां च काण्डानां भङ्गादेकतरस्य च ॥ ५४७ ॥

उत्पद्यतेऽन्यथात्वं च तस्मात्तद्ग्रथयेद्दृढम् ।
दर्भमञ्जरिजं त्वेवं समाधाय्य पवित्रकम् ॥ ५४८ ॥

अनुसन्धीयते तत्र मान्त्रध्यानं यथास्थितम् ।
पूजयित्वार्घ्यपुष्पाद्यैरलङ्कृत्य पठेदिदम् ॥ ५४९ ॥

" त्वमेव तीर्थं भगवंस्त्वमेवायतनं परम ।
त्वयैवाधिष्ठितं सर्वमिद जानामि तत्त्वतः ॥ ५५० ॥

तत्रापि च त्वया दिष्टं क्रियाकाण्डं शुभप्रदम् ।
यत्तन्निर्वाहयास्यद्य त्वदनुग्रहकाम्यया " ॥ ५५१ ॥

एवं विज्ञाप्य भगवन् ! मन्त्रमूर्तिं परात्परम् ।
तत्पत्रपात्रगं कृत्वा ब्रह्मयानगतं तु वा ॥ ५५२ ॥

वेदगेयध्वनीशङ्खशब्दमङ्गलपूर्वकम् ।
नीत्वा तीर्थान्तिकं तत्र तीरदेशे निधाय च ॥ ५५३ ॥

पूर्वामुखं च तद्यानमादाय च पवित्रकम् ।
वामहस्ततले कुर्यात् क्ष्मामण्डलगतं स्थिव ॥ ५५४ ॥

विधूयान्मध्यभागाच्च पाणिना दक्षिणेन तु ।
अवतीर्याम्भसो मध्यं निमज्जेत् सह तेन वै ॥ ५५५ ॥

सन्निधिं तत्र तत्कालं प्रकुर्वन्त्यचिरात्तु वै ।
त्रिदशेशाणि च तीर्थानि लोकत्रयगतानि च ॥ ५५६ ॥

मन्त्रात्मा यत्र रक्षार्थं क्षणमास्ते जलाशये ।
तत्रायतनतीर्थानां सर्वेषां स्यात् समागमः ॥ ५५७ ॥

किं पुनर्यत्र भगवान् मन्त्रमूर्तिरधोक्षजः ।
साधकाभ्यर्थितः स्नायात् सर्वानुग्रहया धिया ॥५५८॥

विद्वान् योऽनेन विधिना तीर्थमासाद्य तत्त्ववित् ।
स्नापयेद्बान्धवादीनां प्राप्नुवन्त्यचिराच्च ते ॥ ५५९ ॥

तेषां फलमनायासान्मन्त्रमूर्तेः प्रसादतः ।
किं तु तद्यानवाद्यित्रवर्जितस्तु भवेद्विधिः ॥५६०॥

इमं विद्धि महाबुद्धे! विशेषं चात्र कर्मणि ।
सामान्यमघनाशं यच्चिन्मयं रूपवर्जितम् ॥ ५६१ ॥

विशेषज्ञानसंबद्धं जीवहंसं विभाव्य तम् ।
पवित्रकं तदाकारं स्मृत्वाऽऽप्लाव्यं ततोऽम्भसा ॥

एवं तेनैव चान्येषां बहूनां बहुभिस्तु वा ।
सम्पाद्यं विष्टरे स्नानं दूरस्थानां सदैव हि ॥ ५६३ ॥

सम्पन्ने स्नपने त्वेवं द्वितीयेऽह्नि महामते ! ।
रथे कृतार्चिते तं वै प्रपूज्य च यथाविधि ॥ ५६४ ॥

यात्राख्यमुत्सवं कुर्याद्बहुदानपुरस्सरम् ।
सनृत्तगेयवादित्रं जागरेण समन्वितम् ॥ ५६५ ॥

एकरात्रं द्विरात्रं वा त्रिरात्रं भक्तिपूर्वकम् ।
सकृत् संवत्सरस्यान्ते तूत्सवं स्नपनादिकम् ॥ ५६६ ॥

कुर्याद्यो मन्त्रनाथस्य स सिद्धिं लभते पराम् ।
प्रस्वापे च प्रबोधे च ह्युत्सवे वत्सरीयके ॥ ५६७ ॥

तथा सहस्रकलशैरभिषेकविधावपि ।
अङ्कुरारोपणे चैव मन्त्राङ्गाभरणे द्विज ! ॥ ५६८ ॥

विविधासु प्रतिष्ठासु जीर्णोद्धारविधावपि ।
प्रायश्चित्तेषु मुख्येषु तुलाभारादिकेऽपि च ॥ ५६९ ॥

एवमादिनिमित्तेषु काम्येष्वपि तथैव च ।
द्वादश्यादिषु कालेषु कल्पयेद्यागपूर्वकम् ॥ ५७० ॥

यागमण्डपविन्यासं चतुस्स्थानार्चनक्रियाम् ।
तत्रायं हि विशेषः स्यात् पूर्वेद्युः कर्मवासरात् ॥

रजन्यामधिवासः स्यात् प्रभाते कर्म तद्भवेत् ।
उत्सवेषु तदारम्भवासरे ह्यधिवासनम् ॥ ५७२ ॥

तद्रात्रौ कर्म कुर्वीत कुम्भाद्यर्चनपूर्वकम् ।
पुष्पयागेषु विप्रेन्द्र ! कुर्यात् सद्योऽधिवासनम् ॥

संप्रोक्षणे च पूर्वं तु वह्न्याप्यायनात्मकम् ।
स्याद्वा सर्वत्र तत् सद्यो देशकालानुरूपतः ॥ ५७४ ॥

प्रस्वापे स्वस्तिकं नाम कुर्याद्यागवरं द्विज ! ।
प्रबोधे तु विवेकाख्यं व्यूहेष्वेकतमं तु वा ॥ ५७५ ॥

उत्सवे ह्येकपद्मं वा नैकाब्जं चक्रपङ्कजम् ।
भूषितं परितो विप्र ! केवलैः परशूपमैः ॥ ५७६ ॥

कर्तर्यन्तरितैर्वापि यद्वा पद्मदलोपमैः ।
इन्दीवरदलाकारैर्यववल्मीकरूपकैः ॥ ५७७ ॥

यागं वा नवनाभाख्यं यागानामुत्तमोहि सः ।
यद्वा कुम्भोदरान्तानां वृत्तादीनां क्रमेण तु ॥ ५७८ ॥

नवानामपि बिम्बानामेकैकं प्रतिवासरम् ।
प्रथमाह्नात् समारभ्य यावन्नवमवासरम् ॥ ५७९ ॥

यागं व्यूहाभिधानं वा नवभिः पङ्कजैर्युतम् ।
अथ व्यूहाच्चतुष्पद्माद् यावदष्टसरोरुहम् ॥ ५८० ॥

नवानां व्यूहयागानामेकैकं च क्रमेण तु ।
नियमो नवसंख्याख्यस्तत्संख्ये स्यान्महोत्सवे ॥ ५८१ ॥

न्यूनाधिकदिनेऽन्यस्मिन्नुत्सवे नववासरे ।
द्वयोरप्येकपद्मादिविधिः साधारणो भवेत् ॥ ५८२ ॥

सर्वदा पुष्पयागे तु मातुलुङ्गोपमाऽरकैः ।
युक्तं चक्राम्बुजं कुर्यादनन्तकलशे द्विज ! ॥ ५८३ ॥

चक्राम्बुजं चाभिमतमङ्कुरारोपणे तथा ।
विविधासु प्रतिष्ठासु चक्राब्जे संयजेद्विभुम् ॥ ५८४ ॥

यथाभिमतरूपे तु व्यूहे वाभीप्सिते द्विज ! ।
भूतावासाह्वये वापि ध्रुवे वा नित्यसंज्ञके ॥ ५८५ ॥

जीर्णोद्धारादिविधिषु ह्येवमेव महामते ! ।
क्ष्मापरिग्रहपूर्वेषु सर्वेष्वपि च कर्मसु ॥ ५८६ ॥

प्रायश्चित्तनिमित्ते तु संजाते संकरादिके ।
अभीष्टैररकैर्युक्तं कुर्याच्चक्राम्बुजं सदा ॥ ५८७ ॥

तुलाभारादिकेऽप्येवं यद्वा काम्यानुरूपतः ।
सङ्क्रान्तिद्विचतुष्केषु मेषसंक्रान्तिपूर्वकम् ॥ ५८८ ॥

सदध्वदे तु धर्माख्ये वसुगर्भं क्रमेण तु ।
सर्वकाम्ये ह्यमित्रघ्ने ह्यायुष्ये बलभद्रके ॥ ५८९ ॥

आरोग्ये संयजेद्देवं पुण्डरीकाक्षमव्ययम् ।
वारिविभूतिप्रदे चैव मानसाख्येऽयनद्वये ॥ ५९० ॥
चन्द्रसूर्योपरागे तु जयेऽनन्ते तदेव हि ।
द्वादश्योः सुप्रतिष्ठाख्ये बुद्ध्याधारे तु पूर्वयोः ॥५९१॥
अमोघसंज्ञितेऽन्यासु प्रशस्तासु तिथिष्वपि ।
नक्षत्रेषु प्रशस्तेषु यजेद्यागे गुणाकरे ॥ ५९२ ॥
शान्तिकर्मणि वै कुर्याद्यागे शङ्खोदराभिधे ।
पूजनं देवदेवस्य यागे वा शान्तिकाह्वये ॥ ५९३ ॥
पौष्टिके च यथायागे ह्यथवा कौस्तुभोदरे ।
वनमालोदरे वाथ यष्टव्यो भगवान् विभुः ॥ ५९४ ॥
रक्षाकर्मण्यमित्रघ्ने आरोग्ये वा यजेत् प्रभुम् ।
आप्यायनेऽर्धचन्द्राख्ये यद्वा पूर्णेन्दुमण्डले ॥ ५९५ ॥
कजाभिधाने यागे वा यजेत् कुम्भोदरे तु वा ।
धर्मार्थी संयजेन्नित्यं देवदेवं जनार्दनम् ॥ ५९६ ॥
सद्ध्यदेवा धर्माख्ये अघनिर्मोचनेऽथवा ।
अर्थार्थी पूजयेन्नित्यं पद्मे कौमोदकीगदे ॥ ५९७ ॥
वसुगर्भाभिधे यागे सर्वतोभद्रकेऽथवा ।
काम्याभिलाषी कुर्वीत सर्वकामप्रदाभिधम् ॥ ५९८ ॥
विजयो राज्यलाभश्च शतारं मिश्रचक्रराट् ।
सहस्रारं तु वा मिश्रं मिश्रं वारिजचक्रराट् ॥ ५९९ ॥
इच्छासंख्यारसंपूर्णं सहस्रारावसानकम् ।
मोक्षार्थी परमानन्दे यागे वा चक्रपङ्कजे ॥ ६०० ॥
सहस्रसंख्यासंख्यातैररकैः परिभूषिते ।
अथवा मिश्रचक्रे तु तत्संख्यारपरिष्कृते ॥ ६०१ ॥
सर्वेष्वेतेषु यागेषु सर्वेषामपि कर्मणाम् ।
पूजयेद्वा जगन्नाथं वासुदेवं सनातनम् ॥ ६०२ ॥
प्रस्वापं च प्रबोधं च उत्सवं वात्सरीयकम् ।
पवित्रारोहणं चैव स्थापनं विविधं तथा ॥ ६०३ ॥
जीर्णोद्धारविधानं च तुलाभारादि कर्म च ।
प्रायश्चित्तानि मुख्यानि वर्जयित्वा तु कर्मसु ॥ ६०४ ॥
नैमित्तिकाख्येष्वन्येषु सर्वेषु द्विजसत्तम ! ।
अनुकल्पे यजेद्देवं कुम्भमण्डलके विना ॥ ६०५ ॥
प्रायश्चित्तप्रकारस्तु विभिन्नस्त्रित्रिभेदतः ।
उत्तमादिविभागेन कलशे मण्डलक्षितौ ॥ ६०६ ॥
बिम्बेऽग्नौ संयजेद्देवं प्रकारे ह्युत्तमोत्तमे ।
कुम्भमण्डलवह्निस्थं यजेत्तन्मध्यमे विभुम् ॥ ६०७ ॥
कुम्भेऽग्नौ च यजेद्देवं विभुं तदधमे द्विज ! ।
बिम्बेऽग्नौ च यजेद्देवं गुरोरिच्छानुरूपतः ॥ ६०८ ॥
स्नपनैः परमेदोत्थैः स्नापयेन्मध्यमोत्तमे ।
अपरोदितभेदैस्तु चतुर्भिः स्नापयेद्विभुम् ॥ ६०९ ॥
क्रमेण मध्यमध्याद्ये न्यूनमध्यावसानिकैः ।
चतुष्टये तदन्यस्मिन्नग्नौ सन्तर्पयेद्विभुम् ॥ ६१० ॥
प्रायश्चित्तेषु सर्वेषु जपं चापि समाचरेत् ।
देशकालस्वसामर्थ्यद्रव्यादेरानुगुण्यतः ॥ ६११ ॥
प्रायश्चित्तेषु सर्वेषु चतुस्स्थानार्चनादिके ।
दशप्रकारे विप्रेन्द्र ! दिनसंख्यां निबोध मे ॥ ६१२ ॥
दिनानि चत्वारिंशच्च त्रिंशद्विंशतिरेव च ।
तथा पञ्चदशाद्यश्च क्रमादेकदिनान्तिमम् ॥ ६१३ ॥
एवमष्टादशविधा दिनसंख्या प्रकीर्तिता ।
उत्तमोत्तमपूर्वेण भेदेन नवधा तु वा ॥ ६१४ ॥
द्विकद्विकक्रमेणैव तदा ह्येकदिनान्तिमम् ।
प्रायश्चित्तप्रकारस्तु प्रसङ्गादत्र कीर्तितः ॥ ६१५ ॥
विस्तरेण प्रवक्ष्यामि ह्युपरिष्टान्महामते ! ।
इति पावित्रकं सम्यग्विधानं कथितं मया ।
इतः परं मुनिश्रेष्ठ ! किमन्यच्छ्रोतुमिच्छसि ॥ ६१६ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे पवित्रारोपणविधानं नाम द्वादशोऽध्यायः ॥

श्रीः

# त्रयोदशोऽध्यायः ॥

सनकः —

शयनस्थे जगन्नाथे चातुर्मास्यस्य मध्यतः ।
पवित्रारोहणं प्रोक्तं त्वया मतिमतां वर ! ॥ १ ॥

किं देवशयनं नाम ; किं देवः स्वप्स्यतीत्यसौ ।
देवः किमर्थं स्वपिति ; किं विधानं तथा वद ॥ २ ॥

के मन्त्राः ; के च नियमाः ; व्रतान्यस्य क्रिया तु का ।
किं ग्राह्यं ; किं च मोक्तव्यं सुप्ते देवे जनार्दने ॥ ३ ॥

शाण्डिल्यः —

श्रूयतामभिधास्यामि गुह्याद्गुह्यतरं तव ।
पुरा तपः प्रभावेन तोषितो योगनिद्रया ॥ ४ ॥

" ममाङ्गं मानयस्वे "ति प्रार्थितो जगतांपतिः ।
निरीक्ष्य चात्मनो देहे रुद्धं लक्ष्म्या उरःस्थलम् ॥ ५ ॥

शङ्खचक्रासिशार्ङ्गाद्यैर्बाहवः सुविभूषिताः ।
अधोनाभेर्निरुद्धं च वैनतेयेन पक्षिणा ॥ ६ ॥

मकुटेन शिरो रुद्धं कुण्डलाभ्यां श्रवोयुगम् ।
ततो ददौ सुसन्तुष्टो नेत्रयोः स्थानमादरात् ॥ ७ ॥

" चतुरो वार्षिकान् मासान् वासं प्रीता गमिष्यसि ।"
योगनिद्रापि तद्वाक्यं श्रुत्वा हृष्टतनूरुहा ॥ ८ ॥

चकार लोचनावासमत्यर्थं शार्ङ्गधन्वनः ।
द्वादश्यां शुक्लपक्षस्य आषाढस्य द्विजाधिप ! ॥ ९ ॥

तदादौ कौमुदाख्यस्य यावन्मासस्य तद्दिनम् ।
देवः सर्वेश्वरस्तां तु मानयञ्शयनस्थिताम् ॥ १० ॥

योगनिद्रां महानिद्रां शेषाहिशयने स्वपन् ।
क्षीरोदतोयवीच्यग्रैः धौतपादः समाहितः ॥ ११ ॥

लक्ष्मीकराम्बुजस्पर्शनमृज्यमानपदद्वयः ।
प्रवृत्ते तौद्दिने काले प्रबुद्ध्यति जनार्दनः ॥ १२ ॥

वासुदेवो जगन्नाथः क्रियार्थं स्वेच्छया द्विज ! ।
सेवमानोऽपि तां निद्रां जडतां न व्रजेत् प्रभुः ॥ १३ ॥

यथा प्राकृतिकः सुप्तः कश्चिन्मलिनमानसः ।
अकर्ता सर्वकार्याणां योगनिद्रावशीकृतः ॥ १४ ॥

न तादृक्त्वे जगद्धातुरप्रमेयः सनातनः ।
यतः प्रबुद्धः सर्वज्ञो नित्योऽजः परमेश्वरः ॥ १५ ॥

तस्य निद्रादयो दोषाः सततं यान्ति वश्यताम् ।
निद्रादिदोषरहिते प्रसुप्ते ह्यच्युतेऽमले ॥ १६ ॥

निवर्तन्ते क्रियाः सर्वाश्चातुर्वर्ण्यस्य सर्वशः ।
विवाहव्रतबन्धादिचूडासंस्कारदीक्षणम् ॥ १७ ॥

यज्ञो गृहप्रवेशादिगोदानार्चाप्रतिष्ठनम् ।
पुण्यानि यानि कर्माणि वर्जयेद्दक्षिणायने ॥ १८ ॥

अनङ्क्रान्तं तु यन्मासं दिव्ये पित्र्ये च वर्जयेत् ।
मलिम्लुचमशौचं च सूर्यसङ्क्रान्तिवर्जितम् ॥ १९ ॥

नैमित्तिकान् मासि मासि तथा संवत्सरोत्सवान् ।
विशेषयागसंयुक्तान् सर्वसंपूरणादृते ॥ २० ॥

नान्यन्नैमित्तिकं कार्यं कार्यं मासचतुष्टये ।
अभीष्टव्रतमाश्रित्य नेतव्यं तच्चतुष्टयम् ॥ २१ ॥

भगवद्भक्तिनिष्णातैः कार्यं यच्चापरं शृणु ।
विष्णोरायतनस्याग्रे कुर्याच्छयनमन्दिरम् ॥ २२ ॥

षट्करादादितो यावच्चतुर्दशकरावधि ।
स्तम्भयुक्तं सुधालिप्तं नानारागैः सुरञ्जितम् ॥ २३ ॥

ऊर्ध्वं तथा भित्तिगणं पूरयेच्चित्रनिर्मितैः ।
ब्रह्मरुद्रेन्द्रचन्द्रार्कबिम्बैश्चान्यैस्तु ये बुधैः ॥ २४ ॥

अण्डयोनिगतैर्विप्र ! सर्वैश्चोपनतस्थितैः ।
ब्रह्मर्षिसिद्धमनुजैर्भक्तैश्चान्यैस्तथाऽसुरैः ॥ २५ ॥

अप्सरोभिश्च विविधैस्तुवद्भिश्चाञ्जलीयकैः।
सम्मुखे देवदेवस्य सर्वाभरणभूषितैः ॥ २६ ॥

एवं तु शयनागारं कृत्वा वस्त्रादिभूषितम्।
ब्रह्मस्थानं समाश्रित्य तस्मिन् कुर्यात्ततो द्विज ! ॥२७॥

एकद्विचतुरष्टाभिः स्वकीयैस्तु करैः स्थलाम्।
कोणेषु तत्समैर्दण्डैः शुभैर्यज्ञतरूद्भवैः ॥ २८ ॥

सुलक्षणैर्वेदिका कार्या चतुर्भिस्तोरणान्विता।
वितानकं तदूर्ध्वं तु मध्ये पङ्कजभूषितम् ॥ २९ ॥

प्रलम्बिपुष्पमालाभिर्घण्टाचामरदर्पणैः।
भूषयेद्बुद्बुदाद्यैश्च सुवर्णरजतोद्भवैः ॥ ३० ॥

मुक्तेन्द्रनीलवैडूर्यपद्मरागविचित्रितैः।
सितादिवस्त्रभेदेन पताकाभिस्तथा ध्वजैः ॥ ३१ ॥

खगेन्द्रतालमकरऋश्यसंज्ञैः समुच्छ्रितैः।
पूर्वादिदिक्षु संयुक्तैः कोणे पूर्णघटैर्युतम् ॥ ३२ ॥

बीजैर्गन्धैस्त्वगेलाद्यैः पूरितैः पात्रसञ्चयैः।
राजद्भिः सत्फलोपेतैर्विविधैः परितो वृताम् ॥ ३३ ॥

विचित्रपुष्पप्रकरां चन्दनाद्यनुलेपिताम्।
विचित्रवस्त्रसञ्छन्नां कुर्याद्वेदिं जगद्गुरोः ॥ ३४ ॥

इत्येवं शयनागारं संपाद्यादौ मनोहरम्।
हेमरत्नविचित्राङ्गं शयनं लक्षणान्वितम् ॥ ३५ ॥

सुपर्णतालमकरऋश्यैर्दिक्स्थैर्विभूषितम्।
मकरास्यसमायुक्तं व्याघ्राङ्घ्रिसदृशाङ्घ्रिकम् ॥ ३६ ॥

यद्वा गर्भगृहे विष्णोर्मूलमूर्तेस्तु दक्षिणे।
शयनं कल्पयेद्विप्र ! स्वगृहे वाऽनुकल्पने ॥ ३७ ॥

एवं पुरा समापाद्य यथा वित्तानुरूपतः।
संगृह्य सर्वसंभारान् दशम्यां द्विजसत्तम ! ॥ ३८ ॥

संकल्प्य पूर्वविधिना पूर्वोक्तं यागमण्डपम्।
प्रविशेद्देशिकेन्द्रास्य एकादश्यां निशामुखे ॥ ३९ ॥

पूर्ववत् पूजनं कुर्यात् कलशे मण्डले क्षितौ।
संप्रविश्य ततः प्राग्वन्मूलमूर्तौ तु पूजनम् ॥ ४० ॥

कुर्यात् स्नपनयोग्यायां यात्रामूर्तावतोऽन्यथा।
वह्नौ सन्तर्पयेन्मन्त्रं समिद्भिः सप्तभिः क्रमात् ॥ ४१ ॥

यागमण्डपमासाद्य जागरेण नयेन्निशाम्।
ब्राह्मे मुहूर्ते संप्राप्ते उत्थाय शयनात्ततः ॥ ४२ ॥

स्नातः कृताभिगमनो नित्यं निर्वर्त्य पूरयेत्।
पूर्वोक्तमण्डलं विप्र ! रजोभिर्विविधैस्ततः ॥ ४३ ॥

कुम्भमण्डलयोः पूर्वं समाराध्य यथाक्रमम्।
ततो नैमित्तिकं बिम्बं पश्चिमे मण्डपस्य तु ॥ ४४ ॥

संस्थाप्य संयजेत् सम्यग्भोगैर्व्यक्तैः क्रमोदितैः।
अष्टाष्टसंख्यासंख्यातैर्विविधैरौपचारिकैः ॥ ४५ ॥

सांस्पर्शिकैस्ततो ब्रह्मन् ! हृदयङ्गमसंज्ञकैः।
एवमिष्ट्वा तु होमान्तं सविशेषं विधानतः ॥ ४६ ॥

इन्द्रादिलोकपालानां बलिं दद्याद्द्विजोत्तम !।
ततो विसृज्य मन्त्रेशं कुम्भमण्डलकुण्डगम् ॥ ४७ ॥

विष्वक्सेनं यजेत् साङ्गं भोगैर्मण्डलमध्यतः।
ततस्तां भगवद्व्यक्तिं प्रासादान्तः प्रवेशयेत् ॥ ४८ ॥

उत्सवोक्तविधानेन सर्वालङ्कारसंयुतम्।
संप्रवेश्य प्रवेशाथ मूलमूर्तिं महामते ! ॥ ४९ ॥

अर्घ्येण गन्धपुष्पाभ्यां धूपेन सुशुभेन च।
प्रपूज्यावाह्य शय्यार्थमूर्तौ वै मूलमूर्तितः ॥ ५० ॥

तां समानीय यागार्थमण्डपे स्नापयेत् क्रमात्।
अलङ्कृतामलङ्कारैर्नूपुरान्तैः समुज्ज्वलैः ॥ ५१ ॥

श्रीखण्डशशिबाह्लीकविलिप्तां पुष्पवेष्टिताम्।
प्रावृतां नेत्रवस्त्रेण मृष्टधूपैः सुधूपिताम् ॥ ५२ ॥

पूजयेद्विभवेनैव भोगपूगैस्तु पावनैः।
यद्वा ह्यनुमतो विप्र ! देशिको गुरुणा मुने ! ॥ ५३ ॥

पूर्वमेव यजेन्मूर्तिमेनां स्नपनपूर्वकम्।
ततो निशामुखे प्राप्ते देशिकः साधकैः सह ॥ ५४ ॥

यानेनाभिमतेनैव प्रदक्षिणचतुष्टयम्।
प्रासादं संपरिक्रम्य सर्वाण्यावरणानि वा ॥ ५५ ॥

सह चैकायनैर्विप्रैर्द्विजेन्द्रैः पाञ्चकालिकैः ।
सिद्धान्तनिष्ठैस्तत्कर्मनिरतैर्भगवन्मयैः ॥ ५६ ॥

मङ्गलानि प्रयुञ्जानैः पुष्पाक्षतकरैर्द्विज ! ।
कृत्वा द्वारार्चनं सार्घ्यैः पुष्पगन्धानुलेपनैः ॥ ५७ ॥

"लक्ष्मीनिवासेश ! विभो ! भोगपर्यङ्कशायन ! ।
ममाशु पापनिचयं विघ्नजालं विनाशय" ॥ ५८ ॥

पठन्मन्त्रमिमं सम्यक् प्रणवब्रह्मसंयुतम् ।
प्रविशेच्छयनागारं हृदि मन्त्रमनुस्मरन् ॥ ५९ ॥

ततः शयनदेशे तु पश्चिमे हेमविष्टरे ।
निवेश्य प्राङ्मुखीं मूर्तिं, यदा गर्भगृहे तदा ॥ ६० ॥

निवेश्य द्वाराभिमुखीं स्वयं समुपविश्य तु ।
पञ्चगव्येन चाभ्युक्ष्य ततः शय्यास्थलं द्विज ! ॥ ६१ ॥

कुङ्कुमागरुकर्पूरैरुपलिप्य च चन्दनैः ।
तस्मिन् मध्ये शुभं कुर्यात् स्वस्तिकं सूक्ष्मलक्षणम् ॥

शुक्लारुणैस्तथा पीतैर्धातुभिश्चासितैर्मुने ! ।
चतुर्विधेन रजसा कुर्याद्वाब्जोद्भवेन वा ॥ ६३ ॥

मूर्धोपधानसंयुक्तं मसूरकवरान्वितम् ।
गण्डोपधानसंयुक्तं चरणाधारसंयुतम् ॥ ६४ ॥

ज्योत्स्नावितानसदृशप्रच्छादनपटान्वितम् ।
सुधूपितं च शयनं संस्थाप्य च तथोपरि ॥ ६५ ॥

प्रागुत्तरशिरश्शुभ्रं प्राक्छिरस्त्वथवा द्विज ! ।
मूलबिम्बे शयनगे स्थाप्यं तदनुरूपतः ॥ ६६ ॥

तद्दक्षिणेऽथ द्विभागे देशे समवलम्ब्य वै ।
तस्मिन् शुभतरे ब्रह्मन् ! शयने शशिपालिते ॥ ६७ ॥

क्षीरोदार्णवमध्यस्थं सहस्रफणमौलिनम् ।
हिमकुन्देन्दुधवलं नागराजं महामते ! ॥ ६८ ॥

प्रणवेन स्वनाम्ना च वर्णान्तेन सबिन्दुना ।
ध्यात्वार्चयित्वा स्तुत्वा च नमस्कृत्वा प्रसाद्य च ॥

निवेश्य तस्मिंस्तां मूर्तिं केवलां वा श्रिया सह ।
स्वबीजं मन्त्रपूतं (वर्णं) तु "ओं लक्ष्मीपतये नमः" ॥

समुदीर्य धियाचार्य अङ्गोपाङ्गक्रमेण तु ।
द्वादशाक्षरवर्णैस्तु स्वनामपदसंयुतैः ॥ ७१ ॥

दत्वा गन्धानि माल्यं च धूपं शय्यास्थितं प्रभुम् ।
पूजयेत् पूर्वविधिना भोगैः सर्वैर्यथोदितैः ॥ ७२ ॥

ततस्त्वभिनवं कुण्डं संस्कृत्याभ्यन्तरे द्विज ! ।
तेजस्तस्मिन् समाहूय मन्त्रेणानेन विन्यसेत् ॥ ७३ ॥

"(ओं) हुताशनागच्छ विभो! कुण्डेऽस्मिन् हव्यवाहन! ।
सन्निधानं घटे चास्मिन् कुरु मासचतुष्टयम्" ॥ ७४ ॥

ततश्चावाह्य देवेशं तर्पयेत् पूर्ववत् क्रमात् ।
होमं समाप्य संपूज्य ह्यर्घ्याद्यैः संपठेदिदम् ॥ ७५ ॥

"सुप्ते त्वयि जगन्नाथे जगत् सुप्तं भवेदिदम् ।
प्रबुद्धे त्वयि बुध्येत जगत् सर्वं चराचरम्" ॥ ७६ ॥

शाययित्वोपरि सितं दुकूलं धूपधूपितम् ।
दत्वोपरि समभ्यर्च्य पुष्पधूपविलेपनैः ॥ ७७ ॥

सर्वसत्वोपसंहारां चिन्ताशक्तिं च विन्यसेत् ।
दक्षिणे त्वभिमानाख्यमूर्तिं तु चमरोद्यताम् ॥ ७८ ॥

एवं ज्ञाननिशां वामे तालवृन्तकरोद्यताम् ।
उत्तमाङ्गपदे निद्रां करसंवाहने रताम् ॥ ७९ ॥

पदारविन्ददेशस्थां लालयन्तीं कराम्बुजैः ।
आदाय चरणौ दिव्यौ साक्षाच्छ्रीं निधिसंश्रिताम् ॥

आनन्दं ब्रह्मणो रूपं तस्यै देवोऽधिदेवता ।
तदन्तः स्मरणानन्दजातविस्मयलोचनाम् ॥ ८१ ॥

स्वनामपदमन्त्रैस्ताः सम्पूज्याः प्रणवादिभिः ।
राजती काञ्चनी मूर्तिस्ताम्रजा रीतिजाऽथवा ॥ ८२ ॥

पूर्वा पूर्वा प्रशस्ता स्याच्छयनोत्थानकर्मणि ।
यदि कुर्याद्विपर्यासं राजा राष्ट्रं विनश्यति ॥ ८३ ॥

दर्भमञ्जरिजे कूर्चे सर्वाभावे तदाऽचरेत् ।
एवं हि देवशयनं प्रतिष्ठाप्य द्विजोत्तम ! ॥ ८४ ॥

तस्यैवाग्रे स्वयं वाचा गृह्णीयान्नियमान्नरः ।
चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि ॥ ८५ ॥

स्त्री वा नरो वा तद्भक्तो धर्मार्थी सुदृढव्रतः ।
गृह्णीयान्नियमानेतान् दन्तधावनपूर्वकम् ॥ ८६ ॥

तेषां फलानि वक्ष्यामि तत्कर्तृणां पृथक् पृथक् ।
मधुस्वरो भवेद्विप्र ! पुरुषो गुडवर्जनात् ॥ ८७ ॥

लभेत सन्ततिं दीर्घां तैलसेवाविवर्जनात् ।
अभ्यङ्गवर्जनाद्ब्रह्मन् ! सुन्दराङ्गः प्रजायते ॥ ८८ ॥

कटुतैलपरित्यागाच्छक्रावासमवाप्नुयात् ।
मधूकतैलत्यागेन सौभाग्यमतुलं लभेत् ॥ ८९ ॥

पुष्पादिभोगत्यागेन स्वर्गे विद्याधरो भवेत् ।
योगाभ्यासी भवेद्यस्तु स ब्रह्मपदमाप्नुयात् ॥ ९० ॥

कस्तूरं कुङ्कुमक्षोदचन्दनाद्यनुलेपनम् ।
यो वर्जयेत् स वैरूप्यं दौर्गन्ध्यं न तु वाप्नुयात् ॥ ९१ ॥

ताम्बूलवर्जनाद्भोगी रक्तकण्ठश्च जायते ।
घृतत्यागात् स लावण्यं सर्वस्निग्धतनुर्भवेत् ॥ ९२ ॥

फलत्यागाच्च मतिमान् बहुपुत्रश्च जायते ।
पादाभ्यङ्गपरित्यागाच्छिरोभ्यङ्गविवर्जनात् ॥ ९३ ॥

दीप्तिमान् दीप्तकरणः साक्षाद्द्रव्यपतिर्भवेत् ।
दधिदुग्धतक्रनियमाद्गोलोकं लभते नरः ॥ ९४ ॥

इन्द्रातिथित्वमाप्नोति स्थालीपाकविवर्जनात् ।
लभते सन्ततिं दीर्घामपि पक्वमभक्षयन् ॥ ९५ ॥

भूमौ प्रस्तरशायी च विष्णोरनुचरो भवेत् ।
सदा मुनिः सदा योगी मधुमांसस्य वर्जनात् ॥ ९६ ॥

एवमादिपरित्यागाद्धर्मी स्याद्धर्मनन्दनः ।
एकान्तरोपवासेन ब्रह्मलोके महीयते ॥ ९७ ॥

धारणान्नखरोमाणां गङ्गास्नानं दिने दिने ।
मौनव्रती भवेद्यस्तु तस्याज्ञा तुलिता भवेत् ॥ ९८ ॥

द्विषट्काक्षरनिष्णातः प्राप्नुयात् परमं पदम् ।
नमो नारायणायेति जपन्नामशतं फलम् ॥ ९९ ॥

पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम् ।
विष्णुपादाम्बुसंस्पर्शात् कृतकृत्यो भवेन्नरः ॥ १०० ॥

विष्णोरायतने कुर्यादुपलेपनमार्जने ।
कल्पस्थायी भवेद्विप्र ! स नरो नात्र संशयः ॥ १०१ ॥

प्रदक्षिणशतं यस्तु करोति स्तुतिपाठकः ।
हंसयुक्तविमानेन स च विष्णुपुरं व्रजेत् ॥ १०२ ॥

गीतवाद्यकरो विष्णोर्गान्धर्वं लोकमाप्नुयात् ।
कृत्वा प्रदक्षिणं दिव्यं स्थानमप्सरसां व्रजेत् ॥ १०३ ॥

नित्यं शास्त्रविनोदेन लोकान् यस्तु प्रबोधयेत् ।
स व्यासरूपी विष्णवग्रे अन्ते विष्णुपुरं व्रजेत् ॥१०४॥

पुष्पमालाकुलां पूजां कृत्वा विष्णोःपुरं व्रजेत् ।
प्रातःस्नायी नरो यस्तु नरकं स न गच्छति ॥ १०५ ॥

भोजनं वर्जयेद्यस्तु स स्नानं पौष्करं लभेत् ।
तीर्थाम्बुना हरेःस्नानान्निर्मलं देहमाप्नुयात् ॥ १०६ ॥

पञ्चगव्याशनाद्विप्र ! चान्द्रायणफलं लभेत् ।
पर्णेषु यो नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् ॥ १०७ ॥

शिलायां भोजनान्नित्यं स्नानं प्रायागजं लभेत् ।
यामद्वयाशनत्यागान्न रोगैः परिभूयते ॥ १०८ ॥

एवमादिव्रतैर्देवस्तुष्टिमाप्नोति तोषितः ।
यस्मिन् देशे तु तद्भक्तो यो मासांश्चतुरः क्षिपेत् ॥

व्रतैरनेकैर्नियमैर्महद्भिः श्रेष्ठमानसः ।
कल्पस्थायी विष्णुलोके संवसेन्नात्र संशयः ॥ ११० ॥

चतुरो वार्षिकान् मासान्नियमो येन यत्कृते ।
कथयित्वा द्विजेन्द्रेभ्यो भुक्तेभ्यस्तं स दक्षिणाम् ॥

दत्त्वा विसर्जयेद्विप्रांस्ततो भुञ्जीत च स्वयम् ।
यद्व्रतं चतुरो मासान् प्रवृत्तिं तस्य वाऽऽचरेत् ॥ ११२ ॥

एवं य आचरेद्विद्वान् सोऽनन्तं धर्ममाप्नुयात् ।
यस्य विष्णोः समाप्येत चातुर्मास्यव्रतं द्विज ! ॥११३॥

स भवेत् कृतकृत्यस्तु न पुनर्मानुषो भवेत् ।
तदन्ते जन्म चासाद्य शुचीनां श्रीमतां गृहे ॥ ११४ ॥

शास्त्रमेकायनं ज्ञात्वा सम्यक् कृत्वा तदुद्यमम् ।
त्रयोदशविधं कर्म भगवन्तं समाप्नुयात् ॥ ११५ ॥

एवं संकल्प्य नियमानन्यान् वै शास्त्रचोदितान् ।
कार्यात्र प्रत्यहं पूजा मार्जनं चोपलेपनम् ॥ ११६ ॥

मृदा धातुविकारैर्वा सुगन्धैश्चन्दनादिकैः ।
प्रदानं धूपदीपानां व्यजनेनानिलोत्थितिः ॥ ११७ ॥

शशिचन्दनसंमिश्रं शीतलोदकसत् क्रिया ।
कदलीफलकल्हारैः पद्मोत्पलविमिश्रितैः ॥ ११८ ॥

स्वेदशान्तिं समापाद्य पौनःपुन्येन पूजनम् ।
वेणुवीणासमोपेतां गीतिं च मधुरस्वनाम् ॥ ११९ ॥

एवं मासद्वये याते याते मेघरवेऽम्बरात् ।
ब्रह्मन् ! भाद्रपदे मासि द्वादश्यां हि निशामुखे ॥

ईषत् प्रबोधमाश्रित्य देवदेवो ह्यधोक्षजः ।
स्थित्यर्थममराणां च परिवर्तनमाचरेत् ॥ १२१ ॥

दक्षिणेनाङ्गसङ्गेन त्यक्त्वा चोत्तानशायिनीम् ।
योगनिद्रां समाश्रित्य प्रकुर्वन् प्रभवाप्ययौ ॥ १२२ ॥

वायुचक्रान्तरस्थस्य जगद्बीजचयस्य च ।
मुखेन्दुमण्डलान्नाथ अपोह्याच्छादनाम्बरम् ॥ १२३ ॥

आस्ते चाश्वयुजे चैव द्वादश्यां परमेश्वरः ।
सन्त्यज्य शयनं दिव्यं निशायां कार्तिकस्य तु ॥

उत्थायामरनाथस्तु समाक्रम्य पतत्रिराट् ।
निश्शेषभुवनग्रामवीथीनां दोषशान्तये ॥ १२५ ॥

विचरत्यप्रमेयात्मा नन्दयंस्तु सुरादिकान् ।
संदर्शयन् जगत्यस्मिन् सुकृतां धर्मपद्धतिम् ॥ १२६ ॥

एवं भक्तजनैः कार्यं तस्य तच्चेष्टितं महत् ।
विविधैरुत्सवैर्दानैर्जपजागरणस्तवैः ॥ १२७ ॥

नृत्तगीतसमोपेतैर्विलासैर्हास्यसंयुतैः ।
क्रीडमानैः सुमनसैः प्रयतैः प्रणतैर्विभोः ॥ १२८ ॥

एकदेशस्थितैर्विप्र ! अनन्यमनसैः सदा ।
विशेषयागपूर्वं तु परिवर्तनमाचरेत् ॥ १२९ ॥

तद्वत् प्रभातवेलायामासनं च विधीयते ।
प्रबोधनं ततः कुर्याच्छयनस्थस्य वै विभोः ॥ १३० ॥

द्वादश्यां शुक्लपक्षस्य कार्तिके मासि वै द्विज ! ।
दशम्यां विधिवत् कृत्वा संकल्पं पूर्ववद्बुधः ॥ १३१ ॥

निमन्त्रणं द्विजातीनामेकादश्यां तथैव च ।
पूर्ववत् पूजनं कृत्वा चतुःस्थानस्थितस्य वै ॥ १३२ ॥

रात्रौ प्रजागरं कुर्यात् सहायैः सह देशिकः ।
पुण्याख्यानकथाभिस्तु स्तोत्रपूर्वैस्तु गीतकैः ॥ १३३ ॥

सवाद्यैर्मधुरैर्नृत्तैरपहासैस्तु हर्षदैः ।
जयशब्दैर्नमस्कारैः करतालसमन्वितैः ॥ १३४ ॥

सोपवासः शुचिः स्नात्वा समाराध्य परं प्रभुम् ।
भोगैः षड्रसपूर्णैस्तु सुपूर्णैरौपचारिकैः ॥ १३५ ॥

अर्घ्यैर्विलेपनैर्माल्यैर्मृष्टधूपसमन्वितैः ।
ब्राह्मे मुहूर्ते द्वादश्यां मन्त्रमूर्तिं प्रबोधयेत् ॥ १३६ ॥

“प्रबुद्ध ! त्वं जगन्नाथ ! प्रबुद्ध ! परमेश्वर ! ।
प्रबुद्ध ! पुण्डरीकाक्ष ! भक्तानामनुकम्पया ॥ १३७ ॥

त्वयि प्रबुद्धे देवेश ! तवाग्रे परमेश्वर ! ।
लौकिकानीह यज्ञानि तानि निर्वर्तयाम्यहम् ॥ १३८ ॥

अग्रतः सर्वयज्ञानां त्वं प्रभुर्नामतः सदा ।
नापरेषु जगन्नाथ ! पूजितेषु सुरेषु च ॥ १३९ ॥

मयि यज्ञसमाप्तिः स्यात् त्वयि सन्तर्पितेऽनले ।
सर्वे देवानलमुखाः स चाग्निस्त्वन्मुखे कृतः ॥ १४० ॥

ब्रह्मा स्वयं ब्रह्मलोके स्वर्गे स्वर्गनिवासिनः ।
सात्विका मानुषे लोके नागाद्याश्च रसातले ॥ १४१ ॥

त्वयि प्रबोधयन्त्यंते स्वार्थसंसिद्धये सदा ।
त्यज योगमयीं निद्रां कृपां कुरु सनातन ! ” ॥ १४२ ॥

‘ बोधश्च मामनिर्बोध ’ इति मन्त्रमुदाहरन् ।
‘ उत्तिष्ठ ब्रह्मणस्पते उदुत्यं जातवेदसम् ’ ॥ १४३ ॥

‘ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । ’
‘ समूढमस्य पाँ सुरे स्वाहा ’ ॥ १४४ ॥

जितंतेनोच्चया वाचा समस्तव्यस्तयोगतः ।
शङ्खध्वनिसमोपेतैः दुन्दुभीपटहस्वनैः ॥ १४५ ॥

वन्दिवृन्दोत्थितोच्चाभिर्नानावाग्भिर्महामते!।
महाजयजयारावैः पुनःपुनरुदीरितैः ॥ १४६ ॥
प्रबोधलक्षणैः स्तोत्रैरुत्थाप्य शयनात्ततः।
अर्घ्यगन्धादिनाभ्यर्च्य प्रविशेद्यागमण्डपम् ॥ १४७ ॥
संपूर्याभिमतं रागैर्मण्डलं चाधिवासितम्।
कुम्भमण्डलयोः पूर्वं पूजां कृत्वा विधानतः ॥ १४८ ॥
पश्चादुत्सवमूर्तिं च यजेन्मण्डलपश्चिमे।
महास्नपनपूर्वैस्तु भोगैः पूर्णैर्यथोचितैः ॥ १४९ ॥
होमं तु विधिवत् कृत्वा तोषयेत् परितो द्विज!।
एकायनीयशाखोत्थैः साक्षात्तत्प्रतिपादकैः ॥ १५० ॥
दिव्यैर्बलादिकैर्मन्त्रैर्व्यापकैः प्रणवान्वितैः।
ऋग्यजुस्सामसंभूतैर्मन्त्रैः स्तोत्रैः पृथग्विधैः ॥ १५१ ॥
गीतकैर्विविधैर्नृत्तैर्वाद्यैस्तन्त्र्यादिभिस्तदा।
एवं प्रवृत्ते गीताद्ये यायाच्छय्यानिकेतनम् ॥ १५२ ॥
प्रबोधितं तु विधिवत् स्नापयेत् पूर्ववत् प्रभुम्।
संपूज्य च तथा भक्त्या क्रमेण च महामुने!॥ १५३ ॥
महाविभूतिसंभारैः पुष्पधूपानुलेपनैः।
नैवेद्यैर्विविधैर्विप्र! स्तोत्रवादित्रपूर्वकैः ॥ १५४ ॥
अग्नौ सन्तर्पयेत् पश्चात् सविशेषं यथाविधि।
पश्चादुत्सवमूर्तिं तां पूजितां यागमण्डपात् ॥ १५५ ॥
समानीय रथाद्येषु यानेष्वभिमतेर्चिते।
स्थाप्य प्रासादपूर्वं वा भ्रामयेद्ग्रामपूर्वकम् ॥ १५६ ॥
चक्राधिष्ठानपूर्वं वा संस्थाप्य भ्रामयेद्द्विज!।
गणिका भगवद्भक्तैः सह नागरिकैर्जनैः ॥ १५७ ॥
परिव्राड्ब्रह्मचारिभिः जपस्तुतिपरायणैः।
द्विजेन्द्रप्रमुखैर्वृत्तसंयुक्तैस्तत्परायणैः ॥ १५८ ॥
श्वेताम्बरधरैः सर्वैर्ध्वजोत्तरकरैः शुभैः।
बालव्यजनहस्तैश्च पताकोद्यतपाणिभिः ॥ १५९ ॥
पद्मोत्पलकरैश्चान्यैर्द्विजैर्वेत्रलताकरैः।
लाजसिद्धार्थककरैरन्यैरक्षतपाणिभिः ॥ १६० ॥

सुसुगन्धतयाच्छिन्नधूपपात्रकरैस्तथा।
फलपुष्पकरैश्चान्यैस्तथा पूर्णघटोद्यतैः ॥ १६१ ॥
अन्यैः कलशहस्तैश्च गदाचक्रधरैः सदा।
शङ्खातपत्रहस्तैश्च दण्डलाङ्गलधारिभिः ॥ १६२ ॥
ऋङ्मन्त्रोद्घोषणपरैर्जपस्तुतिपरैस्तथा।
प्रयत्नाद्देवदासीभिर्नृत्तगीतादि चोत्सवम् ॥ १६३ ॥
कारयेत् सर्वतो वीथीर्वाद्यैरन्यैः पृथग्विधैः।
प्रदहेत् सुरभिं धूपं पृथक् साज्यं च गुग्गुलुम् ॥ १६४ ॥
अर्थिनश्चार्थनिचयैस्तर्पणीयाश्च शक्तितः।
देवीयब्रह्मयानस्य भ्रममाणस्य वै द्विज!॥ १६५ ॥
अल्पमात्रं तु यो दद्यात् पञ्चकालपरायणे।
दानं सहस्रगुणितं विस्तारं याति तत्र तत् ॥ १६६ ॥
पुष्पमूलादिनैवेद्यैः फलमूलैर्धनैस्तथा।
ब्रह्मयानगतं देवं यः पूजयति भक्तितः ॥ १६७ ॥
तद्दानं लक्षगुणितं विस्तारं नात्र संशयः।
सर्षपाक्षतपुष्पाणि अग्रतः पृष्ठतो विभोः ॥ १६८ ॥
क्षेप्तव्यानि द्विजश्रेष्ठ! ऊर्ध्वं च ककुबष्टके।
एवं विधं ब्रह्मरथं वैष्णवं विघ्ननाशनम् ॥ १६९ ॥
ग्रामे पुरे वा नगरे भ्राम्यते यत्र कुत्रचित्।
विपापोऽसौ भवेद्देशो न दुर्भिक्षभयं भवेत् ॥ १७० ॥
नाकालमृत्युना किञ्चित् प्राप्यते विधिना तथा।
ईतयोपद्रवाद्याश्च प्रसमं यान्ति सर्वदा ॥ १७१ ॥
नश्यन्ति तस्करास्तत्र नाधर्मः संप्रवर्तते।
धर्मयुक्तो भवेद्राजा जना धर्मपरास्तथा ॥ १७२ ॥
भवन्ति सुखिनः सर्वे दुःखशोकविवर्जिताः।
एवं प्रदक्षिणीकृत्य क्षिप्त्वा पुष्पाञ्जलिं ततः ॥ १७३ ॥
अवतार्य रथान्मन्त्रं चक्राधिष्ठानपूर्वकम्।
यष्टव्यमर्घ्यगन्धाद्यैर्मुद्रां बद्ध्वा जपेत्ततः ॥ १७४ ॥
तर्पणीयमथाज्याद्यैर्दद्यात् पूर्णाहुतिं शुभाम्।
अर्घ्यधूपप्रधानाद्यैः क्षमयेत् पुरुषोत्तमम् ॥ १७५ ॥

ततो यागगृहं नीत्वा प्रणिपत्य मुहुर्मुहुः ।
ततः शयनमूर्तेस्तु गत्वैवं सन्निधिं गुरुः ॥ १७६ ॥

चतुः प्रदक्षिणीकृत्य अष्टाङ्गेन नमेत् क्षितौ ।
तोषयित्वा जगन्नाथं ब्रह्मयानादिषु द्विज ! ॥ १७७ ॥

संस्थाप्य भ्रामयेद्भक्त्या प्रासादं साम्प्रतं क्रमात् ।
प्रविश्य गर्भगेहं तु द्वारदेशे स्थितः प्रभुम् ॥ १७८ ॥

अर्घ्यपाद्यादिभिः पूज्य निनयेदन्तरं ततः ।
मूलमूर्तिं प्रणम्याथ अर्घ्यगन्धादिभिर्यजेत् ॥ १७९ ॥

विसर्जयेत्तु तन्मूर्तौ मन्त्रं शयनमूर्तिगम् ।
पश्चादुत्सवमूर्तिं तां पूजितां यागमण्डपात् ॥ १८० ॥

प्रदक्षिणक्रमेणैव गर्भगेहं प्रवेशयेत् ।
मूलमूर्तिगतं देवमर्घ्याद्यैः संप्रपूज्य च ॥ १८१ ॥

स्तुत्वा विज्ञाप्य तद्भूयो गुणातीतमधोक्षजम् ।
" अनेनोत्सवयोगेन यागपूजादिकेन च ॥ १८२ ॥

निर्वर्तितेन भगवंस्त्वं मम प्रीयतामिति । "
ततो विसर्जयित्वा तु कुम्भमण्डलमध्यगम् ॥ १८३ ॥

कृत्वा यागं गणेशस्य कुर्यात्तस्य विसर्जनम् ।
अनुकल्पं तु देवस्य परिभ्रमणकर्मणः ॥ १८४ ॥

प्रागेव देवदेवेशं कुम्भमण्डलकुण्डगम् ।
विसर्जयित्वा तत्पश्चात् परिभ्रमणमाचरेत् ॥ १८५ ॥

यद्वा विष्वेशयागं च तथैव तु समाचरेत् ।
प्रागेव मुख्यकाले तु कृत्वा शयनगं विभुम् ॥ १८६ ॥

ततो विसर्जयेद्देवं कुम्भमण्डलकुण्डगम् ।
यानपात्रं तथा च्छत्रं प्रतिपाद्य सदक्षिणम् ॥ १८७ ॥

शयनं स्वगुरोर्विप्र ! द्विजानां तदसन्निधौ ।
देवदेवस्य देवस्य मूलमूर्तिगतस्य च ॥ १८८ ॥

कृत्वा जानुद्वयं भूमौ बद्धाञ्जलिरिदं पठेत् ।
" देव ! सर्वेश्वरानादे ! कर्मणानेन चाखिलाम् ॥ १८९ ॥

शुभां गतिं जनो यातु प्रीतिं च परमां भज । "
इति विज्ञाप्य देवस्य ब्राह्मणान् प्रीणयेत्ततः ॥ १९० ॥

विविधैरन्नपानाद्यैर्यथाशक्ति द्विजोत्तम ! ।
बन्धुभृत्यसमोपेतमनुयागमथाचरेत् ॥ १९१ ॥

अनेन विधिना कुर्याच्छयनस्थस्य बोधनम् ।
यदा तु मूलमूर्तौ तु चतुःस्थानार्चनं भवेत् ॥ १९२ ॥

तदाप्युत्सवमूर्तौ स्यात् पूजितायां तदुत्सवम् ।
कुर्याच्छयनमूर्तौ च शयनं शास्त्रकोविदः ॥ १९३ ॥

यात्राव्यक्तेरभावे तु मूलबिम्बेऽर्चनं भवेत् ।
तदा स्नपनबिम्बे तु तदीयस्नपनं भवेत् ॥ १९४ ॥

तदा शयनमूर्तौ स्यादुत्वो द्विजसत्तम ! ।
तदभावे तु तत् कर्म दर्भमञ्चरिजे हितम् ॥ १९५ ॥

विष्टरे विष्टरं कल्प्य रक्षार्थं किञ्चिदूनतः ।
तदा मन्त्रेशकुम्भेस्याच्छस्त्रकुम्भे तदुत्सवम् ॥ १९६ ॥

अथवा चक्रराजस्य विष्टरे वा समाचरेत् ।
अभावे स्नपनव्यक्तेर्दर्पणे स्नपनं भवेत् ॥ १९७ ॥

तदभावे निवेद्यैव प्रक्षिपेत् कलशान् क्रमात् ।
इत्येवमुक्तं देवस्य शयनं च प्रबोधनम् ॥ १९८ ॥

यदुक्तमेवामखिलं यथाकालमसंभवात् ।
अस्वातन्त्र्यादसामर्थ्याद्वित्ताभावात्तु वा द्विज! ॥१९९॥

द्वादशीष्वखिलास्वेवं कुर्यात् संवत्सरान्तरे ।
परीते तु शयानां तु चातुर्मास्ये तु संयमे ॥ २०० ॥

भक्तैर्निर्वहणीयं तु तुलाभोगावसानकम् ।
पूर्वोक्तविधिना शय्यां यो विष्णोः परिकल्पयेत् ॥

सोऽचिराल्लभते लक्ष्मीं सौभाग्यमतुलं तथा ।
पुत्रदारकुटुम्बेषु कदाचित् केनचित् सह ॥ २०२ ॥

वियोगं नाप्नुयात् किञ्चिद्योषिद्वा पुरुषस्तथा ।
अतुलं पुण्यमाप्नोति दीर्घमायुश्च विन्दति ॥ २०३ ॥

रोगाद्य मुच्यते रोगी भीतो मुच्येत वै भयात् ।
अजय्यः सर्वशत्रूणां पूज्यः सर्वजनस्य च ॥ २०४ ॥

भुक्त्वा भोगांस्तु विविधान् विष्णुलोके महीयते ।
शेषशय्यागतं विष्णुं यः पूजयति भक्तितः ॥ २०५ ॥

विभवेनाथ भक्त्या वा तस्य तुष्यति केशवः ।
तस्मिन् काले तु ये किंचित्तत्र तिष्ठन्ति मानवाः ॥
याति पापं क्षयं तेषामन्ते स्वर्गं व्रजन्ति च ।
इदं शय्याविधानं तु शृणुयाद्यस्तु वैष्णवः ॥ २०७ ॥
त्रिविधस्य तु पापस्य क्षयस्तस्य तु वै क्षणात् ।
अनेन विधिना यस्तु कुर्याद्विष्णोः प्रबोधनम् ॥
सकामानखिलान् प्राप्य दीर्घमायुश्च विन्दति ।
विधिनानेन यः कुर्यात् प्रतिसंवत्सरं द्विज ! ॥ २०९ ॥
प्रबोधनं तु देवस्य स वै जन्मनि जन्मनि ।
सुखप्रबुद्धो भवति सर्वदोषविवर्जितः ॥ २१० ॥
सर्वेषां बान्धवादीनां वन्दनीयस्त्वसौ नरः ।
विष्णोर्भक्तिपरो ब्रह्मन् ! स गच्छेद्वैष्णवं पदम् ॥
दुग्धाब्धिभोगिशयने भगवाननन्तो
यस्मिन् दिने स्वपिति वाथ विबुध्यते वा ।
तस्मिन्ननन्यमनसामुपवासभाजां
पुंसां ददाति सुगतिं गरुडांससंस्थः ॥ २१२ ॥

इति श्रीपाद्मरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे स्वापशयनोत्थापनोत्सवविधिर्नाम त्रयोदशोऽध्यायः ॥

---

श्रीः

# चतुर्दशोऽध्यायः ॥

सनकः :—
स्नपनानां विधिं ब्रह्मन् ! समाख्याहि सविस्तरम् ।
यज्ज्ञानात् सकलाः पूर्णाः नित्यनैमित्तिकाः क्रियाः ॥
शाण्डिल्यः :—
शृणुवत्स ! महाबुद्धे ! सावधानेन चेतसा ।
विधानं स्नपनानां तु बहुभेदविनिर्मितम् ॥ २ ॥
प्रासादस्याग्रतः कुर्यान्मण्डपं तु तदर्धतः ।
प्रथमावरणे चापि द्वितीयावरणेऽपि वा ॥ ३ ॥
तृतीयावरणे चापि चतुर्थे पञ्चमेऽथवा ।
आग्नेय्यां दक्षिणस्यां वा नैर्ऋत्यां पश्चिमे तु वा ॥ ४ ॥
वायव्यामुत्तरस्यां वा ऐशान्यां वा यथा रुचि ।
कुर्यान्मानादिकं सर्वं यागमण्डपवद्द्विज ! ॥ ५ ॥
विना यागस्थलान्मध्ये वेदिं चापि तदूर्ध्वतः ।
अधिवासश्च कुम्भानां स्थापनं स्नपनं तथा ॥ ६ ॥
युज्यतेवै यथैकस्यां तथाभ्यूह्य समाचरेत् ।
आचार्यांश्चतुरो विप्र ! षडष्टौ द्वादशापि वा ॥ ७ ॥
यजमानस्तु वरयेच्छास्त्रज्ञान् गुरुणा सह ।
प्रवीणांश्च, बहुत्वे तु तत्संख्यानियतिः कृता ॥ ८ ॥
तेषां यथोक्तसंख्यानामभिज्ञानामसन्निधौ ।
तादृशान् वरयेद्विप्रांश्चतुस्त्रिद्व्येकमेव वा ॥ ९ ॥
साधकांश्चतुरः षड्वा ह्यष्टौ द्वादश षोडश ।
वरयेच्छास्त्रकुशलान् प्रवीणानुक्तकर्मसु ॥ १० ॥
एवं सर्वेषु यागेषु नित्यनैमित्तिकात्मसु ।
आचार्याणां साधकानां संख्यानियम ईरितः ॥ ११ ॥
संख्याहीनं न गृह्णीयादापद्यपि कदाचन ।
मोहेन यदि गृह्णीयाद्भयं स्याद्राजराष्ट्रयोः ॥ १२ ॥
प्राङ्मुखे मण्डपे भागे तृतीये पश्चिमे स्थिते ।
मध्यसूत्रं समाश्रित्य स्नानपीठं प्रकल्पयेत् ॥ १३ ॥
प्रागग्रं प्रत्यगास्ये तु, सौम्यास्ये दक्षिणाग्रतम् ।
तद्वास्यं चोत्तरासंस्थं यथा लक्षणलक्षितम् ॥ १४ ॥
यदा स्नपनबिम्बादौ बिम्बे स्नपनमाचरेत् ।
एवं तदा प्रकुर्वीत मण्डपं द्विजसत्तम ! ॥ १५ ॥

मूलबिम्बे यदा कुर्यात्तदग्रे मण्डपं तदा ।
तदानीं न तु कुर्वीत स्नानपीठं द्विजोत्तम ! ॥ १६ ॥

सप्तमे पञ्चमे वापि पूर्वं स्नपनवासरे(रात्) ।
तृतीये वा मुनिश्रेष्ठ ! तस्मिन्नहनि वा द्विज ! ॥ १७ ॥

अङ्कुरानर्पयित्वा तु ततः स्नपनमारभेत् ।
यदा पूर्वदिने कुर्यात् कुम्भानामधिवासनम् ॥ १८ ॥

तदानीं पूर्वरात्रौ तु कुर्यात् कौतुकबन्धनम् ।
पूर्वैर्युर्विहिते पश्चात्तस्मिन्नहनि वाचरेत् ॥ १९ ॥

यदा कर्मदिने विप्र ! कुर्यात् कुम्भाधिवासनम् ।
तदानीं तु दिने तस्मिन् कुर्यात् कौतुकबन्धनम् ॥२०॥

ततः प्रभात आचार्यः कृतस्नानः प्रसन्नधीः ।
प्रविश्य मण्डपं सार्धं परिचर्यापरैर्जनैः ॥ २१ ॥

शलाकासहितैर्दर्भैः सहदेवीविमिश्रितैः ।
मार्जयेत् सर्वतो विप्र ! प्राङ्मुखो वाप्युदङ्मुखः ॥

आलेपयेद्गोमयेन पूर्वादीशानपश्चिमम् ।
नूतनेनाम्बरेणैव गालितेन जलेन तु ॥ २३ ॥

प्रोक्षयेत् सर्वदिग्विप्र ! पञ्चगव्यकुशाम्बुभिः ।
एको द्वौ बहवो वापि देशिकाः स्नपने स्मृताः ॥२४॥

नवसूत्रधराः सर्वे सर्वालङ्कारसंयुताः ।
नववस्त्रोत्तरीयाश्च सोष्णीषा गुरुसम्मताः ॥ २५ ॥

नियमस्थास्तु बहवस्तथैव परिचारकाः ।
यथयोग्यं भवेद्ब्रह्मन् ! स्नपने यत्र यत्र तु ॥ २६ ॥

तत् समस्तं समाहृत्य मण्डपे संप्रवेश्य च ।
स्नपनं प्रारभेत् पश्चाद्देशिकः शास्त्रपारगः ॥ २७ ॥

स्नपनं द्विविधं विद्धि परापरविभेदतः ।
परं तु दशधा प्रोक्तं प्रधानादिविभेदतः ॥ २८ ॥

प्रधानं [1]प्रथमं विद्धि [2]द्वितीयं तु परं स्मृतम् ।
[3]तृतीयं परसूक्ष्मं स्यात् परस्थूलं [4]चतुर्थकम् ॥ २९ ॥

[5]पञ्चमं स्यात् सूक्ष्मपरं सूक्ष्मसूक्ष्मं तु [6]षष्ठकम् ।
सूक्ष्मस्थूलं [7]सप्तमं स्यात् स्थूलं स्यात् [8]परमष्टमम् ॥

स्थूलसूक्ष्मं तु [9]नवमं स्थूलस्थूलं [10]तदुत्तरम् ।
चतुर्धा त्वपरं विद्धि ह्येकैकं नवधा स्थितम् ॥ ३१ ॥

उत्तमोत्तमपूर्वेण भेदेन द्विजसत्तम ! ।
परापरविभेदानामेषां साधारणं स्थितम् ॥ ३२ ॥

अनन्तकलशं नाम्ना स्नपनं सर्वपूरकम् ।
एषां प्रधानपूर्वाणां सूत्रपातपुरस्सरम् ॥ ३३ ॥

सर्वमुद्धारपर्यन्तं क्रमेण शृणु सत्तम ! ।
लोहजं दारुजं वापि मृण्मयं वा सुशोभनम् ॥ ३४ ॥

मण्डपेशानदिग्भागे संस्थाप्य जलभाजनम् ।
वेदिं प्रक्षाल्य तोयेन वस्त्रैः संवेष्ट्य नूतनैः ॥ ३५ ॥

सूत्रपातं ततः कुर्यात् कुम्भसंख्यानुरूपतः ।
यथोक्तमानविस्तीर्णक्षेत्रमण्डपमध्यतः ॥ ३६ ॥

मण्डपस्य तु विप्रेन्द्र ! प्राग्भागमवलम्ब्य वा ।
स्वीकृत्य पश्चात् प्राक् प्रत्यक् दद्यात् सूत्रचतुष्टयम् ॥

दक्षिणोत्तरगं सूत्रपञ्चकं विनिवेशयेत् ।
एवं कृते भवन्त्यत्र पदानि द्वादश द्विज ! ॥ ३८ ॥

एकैकस्य तु विस्तारं तालं प्रादेशमेव वा ।
हस्तं वाऽरत्निमात्रं वा मण्डपस्यानुरूपतः ॥ ३९ ॥

सहस्रस्य च कुम्भानामेवं सर्वत्र चोह्यतः ।
पिष्टचूर्णैरलङ्कृत्य चतुर्दिक्षु समन्ततः ॥ ४० ॥

कोष्ठेषु पीठिकां कुर्यात्तण्डुलैर्व्रीहिभिस्तु वा ।
तासां हि प्रतिकोष्ठं तु कुर्यादाढकसंमितैः ॥ ४१ ॥

अर्धाधिकैस्त्रिभिः प्रस्थैरथवा केवलैस्त्रिभिः ।
अर्धोत्तरेण वा विप्र ! कुर्यात् प्रस्थद्वयेन वा ॥ ४२ ॥

यद्वा प्रस्थद्वयेनैव प्रस्थेनार्धोत्तरेण वा ।
प्रस्थेन वा तदर्धेन तत्पादेनाथवा द्विज ! ॥ ४३ ॥

तुर्याश्रामथवा वृत्तां कृत्वैवं पीठिकां ततः ।
सौवर्णा राजता ताम्रास्ताम्रा वा भेदवर्जिताः ॥ ४४ ॥

श्लक्ष्णा न सुषिराः कुम्भा चतुर्विंशाङ्गुलोन्नताः ।
विस्तृतेर्मध्यतस्तद्वत्तद्वलं त्र्यङ्गुलोन्नतम् ॥ ४५ ॥

ततमङ्गुलिषट्केन तत्रास्यं त्र्यङ्गुलं स्मृतम् ।
मेखला परितो ज्ञेया त्र्यङ्गुला द्विजसत्तम ! ॥ ४६ ॥

यद्वा तदर्धमानं तु सर्वमुच्छ्रायपूर्वकम् ।
यद्वोत्तमोत्तमा विप्र ! द्रोणमानोदपूरकाः ॥ ४७ ॥

तदष्टमांशतो न्यूनाः क्रमात् प्रस्थद्वयावधि ।
अधमाधमकुम्भास्तु प्रस्थमात्रोदपूरकाः ॥ ४८ ॥

एवं लक्षणयुक्तास्तु कार्या वित्तानुरूपतः ।
चक्राधारोपरिस्थास्तु विततः कमठो(लो)दराः ॥४९॥

पाञ्चजन्यवलिग्रीवाः शतपत्रमुखाननाः ।
ऊर्ध्वाधः (ध्वतः) कौमुदीमालामण्डलालंकृता द्विज ! ॥

मकराननशोपाभिः (दि ?) अमृताम्बुप्रवाहकाः ।
नदीसमुद्र(?)श्रीवृक्षनानामाल्यैः परिष्कृताः ॥ ५१ ॥

चक्राधाराधिभिर्यद्वा रहिताः सत्यसंभवे ।
मृण्मया वानुकल्पे तु भेदच्छिद्रविवर्जिताः ॥ ५२ ॥

पक्वबिम्बफलाकाराः काल्यवृत्तैर्विवर्जिताः ।
न द्वितप्ताः सुतप्ताश्च हंकवर्णास्तु सुस्वनाः ॥ ५३ ॥

संगृह्य क्षालयेत् सम्यक् शुद्धतोयैश्च सर्वतः ।
सूत्रेण वेष्टयेद्यत्नादङ्गुलाङ्गुलमन्तरम् ॥ ५४ ॥

पश्चिमे कलशस्थानात् कलशानधिवासयेत् ।
शालिभिः स्थण्डिलं कृत्वा केवले स्थण्डिले तु वा ॥

पूर्वाग्रानुत्तराग्रांश्च कुशांस्तत्र परिस्तरेत् ।
तारेण तत्र कलशान् न्यस्य पुष्पेण पूज्य च ॥ ५६ ॥

अधोमुखांस्तु तानेव न्यस्य पङ्क्तिक्रमेण तु ।
कुशानुपरि संस्तीर्य प्राङ्मुखं परमेष्ठिना ॥ ५७ ॥

दर्भमुद्रां प्रदर्श्याथ गन्धतोयेन सर्वतः ।
संप्रोक्ष्य "पुंसा" "विश्वेन" विकिरेदक्षतानि च ॥

"निवृत्त्या" चोन्मुखीकृत्य, सर्वेण मुनिपुङ्गव ! ।
पृथगुद्धृत्य कलशान्, स्वस्थानेषु क्रमान्न्यसेत् ॥५९॥

कुम्भन्यासादि सर्वं तु द्विषट्काणेन वाचरेत् ।
निरीक्षणादिसंशुद्धान् कृत्वा सहृदयेन तु ॥ ६० ॥

द्वादशाक्षरमन्त्रेण मन्त्रयेत् तान् सकृत् सकृत् ।
तेनैव पूजयेत् पश्चादर्घ्यस्रक्चन्दनादिना ॥ ६१ ॥

तदाहरणहोमं तु यथाशक्ति समाचरेत् ।
पूर्णान्तमथ संपूर्य क्रमाद्द्रव्यैर्निबोध तत् ॥ ६२ ॥

पङ्क्तित्रये पश्चिमादि पूर्वान्तं च चतुश्चतुः ।
तत्र दक्षिणदिक्पङ्क्तौ कलशे पश्चिमे स्थिते ॥ ६३ ॥

धात्रीफलोदकं चैव लोध्रतोयमनन्तरम् ।
रक्तचन्दनतोयं च रजनीनीरमुत्तमम् ॥ ६४ ॥

ततस्तु मध्यपङ्क्तौ तु तथैव विनिवेशयेत् ।
ग्रन्थिपल्लववार्येव ततस्तु तगरोदकम् ॥ ६५ ॥

प्रियङ्गुवारि तदनु मांसीजलमतः परम् ।
तथैवोत्तरपङ्क्तौ तु भवेदेतच्चतुष्टयम् ॥ ६६ ॥

सिद्धार्थकोदकं चैव सर्वौषधिजलं ततः ।
सर्वरत्नोदकं चैव शुद्धोदकमतः परम् ॥ ६७ ॥

न्यसेत्, कूर्चं कुशं दर्भमुदग्रं षोडशाङ्गुलम् ।
अङ्गुलं ग्रन्थिमानं तु मूलं वै द्वादशाङ्गुलम् ॥६८॥

शेषमग्रं विजानीयादित्येतत् कूर्चलक्षणम् ।
अथवाथाङ्गुलो ग्रन्थिरग्रं वै त्र्यङ्गुलं भवेत् ॥ ६९ ॥

मूलं कुर्यात्तु विप्रेन्द्र ! द्वादशाङ्गुलसंमितम् ।
ब्राह्मणस्य चतुर्दर्भं त्रिदर्भं क्षत्रियस्य तु ॥ ७० ॥

द्विदर्भं तु विशां कूर्चं स्त्रीशूद्राणां तथा भवेत् ।
सर्वेषामथवा कूर्चं चतुस्सप्तकृतं तु वा ॥ ७१ ॥

मूलमन्त्रेण तदनु पूजयेद् द्वादशात्मना ।
अर्घ्यालभनपुष्पैश्च धूपेन मुनिपुङ्गव ! ॥ ७२ ॥

अपिधाय क्रमेणैव विधानैः सूत्रवेष्टितैः ।
प्रतिकुम्भं तु वसनैर्वेष्टयेद्विभवे सति ॥ ७३ ॥

आच्छाद्य नववस्त्रेण सर्वतः प्रागुदङ्मुखः ।
पूर्ववत् पूजयित्वा तु ततो होमं समारभेत् ॥ ७४ ॥

अष्टोत्तरशतं हुत्वा समिदादीन् पृथक् पृथक् ।
पूर्णाहुतिं ततो हुत्वा कलशानभिमन्त्रयेत् ॥ ७५ ॥

मूलमन्त्रेण सर्वेषां स्नपनं विहितं द्विज ! ।
अन्तरान्तरयोगेन कुम्भैः शुद्धोदपूरितैः ॥ ७६ ॥

स्नपनं चार्घ्यदानं च द्रव्याणां तु समाचरेत् ।
द्रव्यन्यासक्रमेणैव तदुद्धारः प्रकीर्तितः ॥ ७७ ॥

[1]प्रधानमेतत् कथितं द्विपट्कलशात्मकम् ।
सर्वेषां कारणमिदं कार्याण्यन्यानि सत्तम ! ॥ ७८ ॥

[2]अम्बुना पञ्चगव्येन क्षीरेण तदनन्तरम् ।
दध्ना घृतेन मधुना सर्वौषधिजलेन तु ॥ ७९ ॥

बीजाम्बुफलतोयं च गन्धपुष्पाम्बुना ततः ।
हेमरत्नोदकेनाथ पूरितं तु यथाक्रमम् ॥ ८० ॥

कलशानां द्विपट्कं यत् [3]परमेतदुदाहृतम् ।
[3]पञ्चगव्यदधिक्षीरघृतमध्विक्षुवारिणा ॥ ८१ ॥

सर्वौषधीगन्धरत्नफलपुष्पजलैस्तथा ।
केवलेनोदकेनापि क्रमेण परिपूरितम् ॥ ८२ ॥

द्विषट्कमेतत् कुम्भानां [3]परसूक्ष्ममुदाहृतम् ।
[4]पयोदधिघृतक्षौद्रैः सर्वगन्धोदकेन च ॥ ८३ ॥

सर्वौषधिजलेनापि पत्रपुष्पफलाम्बुभिः ।
बीजाम्बुना हेमरत्नजलेनैकीकृतेन च ॥ ८४ ॥

मिश्रैः पुण्यसरित्तोयैः परिपूर्णं क्रमेण तु ।
[5]परस्थूलमिमिदं विद्धि कलशं द्वादशात्मकम् ॥ ८५ ॥

सूत्रपातादिकं चान्यत् त्रितयेऽस्मिन् प्रधानवत् ।
[5]पञ्चधा भाजिते क्षेत्रे भागाः स्युः पञ्चविंशतिः ॥

बहिः प्रागादियोगेन कलशानां द्विरष्टके ।
क्षीरं दधि घृतं चैव मधु वै रसमैक्षवम् ॥ ८७ ॥

धात्रीफलादिदशकं सर्वौषध्यन्तमेव हि ।
पत्रोदकं ततः पश्चात् तदन्तः कलशाष्टके ॥ ८८ ॥

प्रागादिपुष्पतोयं च फलबीजोदके त्वथ ।
गन्धोदकं च तदनु हेमरत्नजले तथा ॥ ८९ ॥

पुण्यतीर्थसरित्तोयं, मध्ये शुद्धोदकम् न्यसेत् ।
द्रव्यन्यासक्रमेणैव तदुद्धार उदाहृतः ॥ ९० ॥

एवं क्रमाद् द्रव्ययुक्तकलशैर्द्विजसत्तम ! ।
स्नपनं पञ्चविंशद्भि रेतत् [1]सूक्ष्मपरं स्मृतम् ॥ ९१ ॥

पञ्चविंशतिकोष्ठानि कल्पयित्वा तु पूर्ववत् ।
मध्ये शुद्धोदकं न्यस्य बहिरिन्द्रादियोगतः ॥ ९२ ॥

पूर्वं क्षीराम्भसा पूर्णं परं शुद्धेन वारिणा ।
तृतीयं रत्नतोयेन हेमतोयेन चापरम् ॥ ९३ ॥

गन्धसंमिश्रितं चान्यत् फलपुष्पोदकान्वितम् ।
शालिबीजाम्भसा पूर्णमष्टमं परिकीर्तितम् ॥ ९४ ॥

कुम्भाष्टकं तु तद्बाह्यदिगष्टकसमाश्रितम् ।
धात्रीफलोदकं पूर्वं पथ्यातोयं ततोऽपरे ॥ ९५ ॥

गल्चीक्षोदमन्यस्मिन् विभीतकजलं परे ।
कुमारीकथितं तोयं व्याघ्रीसलिलमेव च ॥ ९६ ॥

नागरोदकमन्यस्मिन् तथान्यस्मिन् मधूदकम् ।
विहितोऽत्र समुद्धारो द्रव्यन्यासक्रमेण तु ॥ ९७ ॥

सत्याद्यैः पञ्चभिर्मन्त्रैस्त्रिभिः सिद्धादिभिः क्रमात् ।
अन्तरावरणस्थानां कलशानां महामते ! ॥ ९८ ॥

एकैकं सप्तधामन्त्र्य प्रागादौ, तद्बहिः स्थितान् ।
कलशांश्चक्रमन्त्रेण हृदाद्येनाभिमन्त्रयेत् ॥ ९९ ॥

गायत्र्यान्तर्गतैर्विप्र ! कलशैः स्नापयेत् क्रमात् ।
द्वितीयावरणस्थैस्तु उपचारा "हृदा" मुने ! ॥

केवलेनोदकेनाथ बाह्यजलेन सेचयेत् ।
यद्वा प्रागुदितेनैव वर्त्मना सर्वमाचरेत् ॥ १०१ ॥

दशभिः सप्तभिः कुम्भैः [6]सूक्ष्मसूक्ष्ममिदं स्मृतम् ।
[7]चतुर्हस्तं त्रिहस्तं वा क्षेत्रं सार्धद्विहस्तकम् ॥

त्रिहस्तं वा समापाद्य तदूर्ध्वं तु द्विधा भवेत् ।
एकेन कर्णिकां कुर्याद्द्वितयेन द्विरष्टकम् ॥ १०३ ॥

दलानां तु, ततो ब्रह्मन् ! कर्णिकोपरि विन्यसेत् ।
कलशानां चतुष्कं तु दिक्चतुष्कसमाश्रितम् ॥ १०४ ॥

पूर्वं तु पुष्पतोयेन गन्धोदेन ततः परम् ।
स्वर्णोदेनापरं चान्यत् सर्वरत्नजलेन तु ॥ १०५ ॥

पूर्वपत्रात् समारभ्य यावदीशानगोचरम्।
षोडशान्यान् प्रतिष्ठाप्य तत्रैव कलशान्मुने! ॥ १०६ ॥

प्रथमं पञ्चगव्येन केवलेन तु पूरयेत्।
गोमूत्रेण द्वितीयं तु तृतीयं गोमयाम्बुना ॥ १०७ ॥

त्रेताग्निभूतिना विप्र! चतुर्थं सोदकेन तु।
गजगोवृषभशृङ्गवल्मीकाख्यमृदा परम् ॥१०८॥

शालिक्षेत्रान्नदीमध्यात् पद्मषण्डाच्च पर्वतात्।
मृद्भिःषष्ठं तु कलशं पूरणीयं ततो द्विज! ॥ १०९ ॥

सप्तमं सर्षपाम्भोभिः सर्वौषधिभिरष्टमम्।
क्षीरेण नवमं विद्धि दध्ना दशममुच्यते ॥ ११० ॥

घृतेन चैकादशमं मधुना द्वादशं द्विज!।
सर्वैस्त्रयोदशं बीजैः फलैःसर्वैश्चतुर्दशम् ॥ १११ ॥

समस्तधान्यैरपरं सर्वगन्धैस्तु षोडशम्।
दलस्थान् पूर्वमुद्धृत्य द्रव्यन्यासक्रमेण तु ॥ ११२ ॥

पश्चात्तु कर्णिकासंस्थांस्तथैव तु समुद्धरेत्।
हृदाभिमन्त्रितं कृत्वा एकैकं कलशं पुरा ॥ ११३ ॥

स्नापयेन्मूलमन्त्रेण एकैकेन ततः क्रमात्।
इति विंशतिभिः कुम्भैरन्वितं द्विजसत्तम! ॥ ११४ ॥

सूक्ष्मस्थूलमिदं प्रोक्तं ततोऽन्यच्छृणु विस्तृतम्।
प्राक्प्रत्यगायतं सूत्रपञ्चकं विनिवेश्य च ॥ ११५ ॥

दक्षिणोत्तरसूत्राणामेकादश विनिक्षिपेत्।
एवं कृते तु कोष्ठानि चत्वारिंशद्भवन्ति हि ॥११६॥

तत्र पश्चिमदिक्पङ्क्तेरारभ्य क्रमयोगतः।
दक्षिणादुत्तरान्तं च कलशानां चतुश्चतुः ॥ ११७॥

विन्यस्य पूरयेत्तांस्तु क्रमाद्द्रव्यैर्निबोध तत्।
पाद्यार्घ्याचमनीयार्थद्रव्यैः पूर्वोदितैस्त्रयम् ॥ ११८ ॥

नगाद्याद्यन्तमध्येभ्यो नदीमृत्तीरसंभवा।
हृदाद्वल्मीकशिखराद्गजदन्तक्षतीकृतात् ॥ ११९ ॥

हलोत्था गोवृषशृङ्गशालीनां तु समुद्भवा।
तथा च पद्मषण्डोत्था त्वेकस्मिन् गोमयं परे ॥१२०॥

वनदाहसमुद्भूतं तथैव च महानसात्।
त्रेताग्निभस्म त्वपरे विनिवेश्य घटान्तरे ॥ १२१ ॥

अन्यस्मिन् पञ्चगव्यं तु कुशोदकसमन्वितम्।
सघृतं तैलकुम्भं तु चमसीवारिपूरितम् ॥ १२२ ॥

पलाशखदिराश्वत्थशमीलोहितचन्दनम्।
कषायोदकमन्यस्मिन् परे तु त्रिफलोदकम् ॥ १२३ ॥

वचा शतावरी 'कन्या' 'व्याघ्री' 'सिंही' 'कृताञ्जलिः'
गोलोमी सिंहलोमी च कुष्ठं भूम्यञ्जनं तथा ॥ १२४ ॥

महागरुडवेगा च कलशेऽन्यत्र सत्तम!।
महानीला गडूची च सहदेवी शतावरी ॥१२५॥

विष्णुक्रान्ता च कार्कोटा सांद्रा वह्निशिखापरे।
यष्टी वराहकर्णी चाप्यन्यस्मिन् गजपिप्पली ॥

श्रीफलाद्यानि चान्यस्मिन् पावनानि फलानि च।
दधिक्षीराज्यकुम्भांश्च द्वौ मधिक्षुरसान्वितौ ॥

मूलान्यम्भोरुहाणां च तान्यन्यस्मिन् घटे न्यसेत्।
द्रुमाणां पावनानां तु सक्षीराणां विशेषतः ॥ १२८ ॥

पत्रपुष्पफलोपेतमेकस्मिन् मञ्जरीगणम्।
जात्यादिकमथैकस्मिन् कौसुमीयं लताचयम् ॥१२९॥

रोचनारजनीयुग्मं वालमोटाथ पद्मकम्।
इति पञ्चकमन्यस्मिन् दर्भदूर्वाङ्कुराणि च ॥ १३० ॥

सास्यं शाल्यङ्कुरचयं कलशे ह्यपरे तु वै।
सिद्धार्थकान् सितांद्यास्तु प्रियङ्गुं गन्धसंज्ञकम् ॥

अपरस्मिन् न्यसेत् कुम्भे सह वै नागकेसरैः।
ग्राम्याश्चौषधयः सप्त सप्तारण्या घटद्वये ॥ १३२ ॥

वाह्लीकं चन्दनं चैव रसं कर्पूरमेव च।
चतुष्कमेतदपरे त्वन्यस्मिन् धातवः शुभाः ॥ १३३ ॥

ताम्रजाम्बूनदाद्यास्तु परे रत्नचयं महत्।
न्यसेद्विद्रुमजालं च द्वये मुक्ताफलानि च ॥ १३४ ॥

अर्घ्योदकमकमथैकस्मिन्नदीनार्थोदकं द्वये।
सर्वौषधिघटं चैव सुशीताम्भोघटं ततः ॥ १३५ ॥

सुगन्धपुष्पकलशं चत्वारिंशत् त्वमी स्मृताः ।
द्रव्यन्यासक्रमोद्धार इदं [1]स्थूलं परं स्मृतम् ॥ १३६ ॥
[2]शीताम्बुपूरितानां च घटानां केवलं द्विज ! ।
चत्वारिंशत् समायुक्तं [3]स्थूलसूक्ष्मं प्रकाशितम् ॥
[1][0]गन्धोदकेन पूर्णानां चत्वारिंशद्भिरेव च ।
समन्वितं घटानां तु स्थूलस्थूलं प्रकीर्तितम् ॥ १३८ ॥
सूत्रपातविधानं च कुम्भन्यासक्रमं ततः ।
उद्धारं चानयोः कुर्यात् स्थूलायसदृशं द्विज ! ॥१३९॥
भक्तिश्रद्धावशाच्चापि विभवानुगुणं तु वा ।
त्रिविधं स्थूलभेदं तु द्विगुणं तु समाचरेत् ॥ १४० ॥
अनुकल्पे तदर्धं वा पादमष्टांशमेव वा ।
चतुष्टयं वा कुम्भानां प्रत्येकं वा द्वयं द्वयम् ॥ १४१ ॥
एकैकं वापि विप्रेन्द्र ! सर्वद्रव्यमयं घटम् ।
नवानां परिपूर्णानामुक्तादन्यदपेक्षितम् ॥ १४२ ॥
कुर्यादभ्यूह्य तत् सर्वं प्रधानोदितवर्त्मना ।
एवं तु दशधा विप्र ! परभेदाः प्रकाशिताः ॥ १४३ ॥
अपरस्य विभेदांस्तु क्रमेण शृणु सत्तम ! ।
[1]चतुरश्रीकृते क्षेत्रे लोकत्रिंशद्भिर्भाजिते ॥ १४४ ॥
कोष्ठकानां नवशतमेकत्रिंशत्तथैव च ।
मध्ये पङ्क्तित्रयं स्थाप्य मार्जयेत्तद्बहिर्द्वयम् ॥ १४५ ॥
वीथ्यर्थं तद्बहिर्भूयः स्थाप्य पङ्क्तित्रयं पुनः ।
द्वयं विसृज्य वीथ्यर्थं स्थापयेत् सप्तकं पुनः ॥ १४६ ॥
विभज्य वा त्रिणवधा लोकैकं विसृजेद्द्विज ! ।
वीथ्यर्थं संकटे देशे कलशानां तु पूर्ववत् ॥ १४७ ॥
क्रमेण तेषु कोष्ठेषु कलशान् पूर्ववन्न्यसेत् ।
घृतमुष्णोदकं चैव रत्नवारि फलोदकम् ॥ १४८ ॥
लोहाम्भो मार्जनाम्भश्च गन्धाम्भोऽक्षतवारि च ।
यवोदकमथेशान्तं मध्यादारभ्य मध्यमे ॥ १४९ ॥
पाद्यमर्घ्यं तथाचामं पञ्चगव्यं क्रमेण तु ।
द्विचतुष्केण संवीतनवकानां तु मध्यमे ॥ १५० ॥
ऐन्द्राद्युत्तरपर्यन्तं विदिक्स्थानां तु मध्यमे ।
दधि क्षीरं मधु तथा कषायं वह्निदिक्क्रमात् ॥ १५१ ॥
एवं सप्तदश प्रोक्ताः प्रधानद्रव्यसंयुताः ।
शेषाश्चान्ये चतुष्षष्टिः शुद्धोदकसमन्विताः ॥ १५२ ॥
इत्येकाशीतिकलशा मध्यतः संस्थिता द्विज ! ।
ततस्त्वेकोनपञ्चाशत्कलशास्तद्विगष्टके ॥ १५३ ॥
तत्र मध्यमकुम्भेषु दिक्स्थितानां च सेचयेत् ।
गुलोदकं चेक्षुरसं नालिकेररसं तथा ॥ १५४ ॥
'शान्तिवारि' मुनिश्रेष्ठ ! पूर्वदिक्क्रमयोगतः ।
विदिक्स्थब्रह्मकुम्भेषु सेचयेन्मङ्गलोदकम् ॥ १५५ ॥
आग्नेयादीशपर्यन्तं शिष्टमन्यच्छतत्रयम् ।
अशीतियुक्तं कुम्भानां तथैव चतुरुत्तरम् ॥ १५६ ॥
सुगन्धैः शीतलैस्तोयैः संपूर्णं द्विजसत्तम ! ।
पश्चान्मध्यस्थनवके मध्यादीशानपश्चिमम् ॥ १५७ ॥
वासुदेवाद्वराहान्तं मूर्तीनां नवकं यजेत् ।
अर्घ्यालभनमाल्यैश्च धूपेन च यथाक्रमम् ॥ १५८ ॥
तद्बहिर्नवकानां तु ब्रह्मकुम्भेषु पूजयेत् ।
केशवाद्वामनान्तं च द्विचतुः पूर्वदिक्क्रमात् ॥ १५९ ॥
तत एकोनपञ्चाशत् कलशानां महामते ! ।
पूजयेद्ब्रह्मकुम्भेषु श्रीधराद्यं चतुष्टयम् ॥ १६० ॥
पूर्वाद्युत्तरपर्यन्तं वह्न्यादीशानपश्चिमम् ।
नराद्यं कृष्णपर्यन्तं चतुष्कं पूजयेद्द्विज ! ॥
प्राग्वत् कूर्चानि संन्यस्य चक्रिकाभिः पिधाय च ।
तत आच्छादयेद्वस्त्रैर्नूतनैस्तु पृथक् पृथक् ॥ १६२ ॥
तत ऊर्ध्वं यजेद्देवं वासुदेवं जगत्पतिम् ।
पाद्यमर्घ्यं तथाचामं पञ्चगव्यं, घृतं, दधि ॥ १६३ ॥
पयो, मधु, कषायं च, उष्णाम्भः फलवारि च ।
मार्जनाम्भो, ऽक्षताम्भश्च, रत्नाम्भो, लोहवारि च ॥
गन्धाम्भश्च, यवाम्भश्च, गुलोदेक्षुरसौ, तथा ।
नालिकेररसं, चापि शान्तितोयं, च मङ्गलम् ॥ १६५॥

क्रमेणानेन विप्रेन्द्र! ह्याचरेत् स्नपनं विभोः।
मूलमन्त्रेण सर्वेषां स्नपनं विहितं द्विज! ॥ १६६ ॥

अथवा पाद्यपूर्वं तु गन्धतोयाद्यस्नानकम्।
ऋग्भिः पुरुषसूक्तस्य, तथेदं विष्णुरित्यृचा ॥ १६७ ॥

यवाम्भो, गुलतोयाद्यं चतुष्कं शान्तिपश्चिमम्।
त्वं विष्णुरिति मन्त्रेण, विष्णोर्नुकमिति द्विज! ॥१६८॥

स्नापयेन्मङ्गलाद्येन तोयेन मुनिपुङ्गव!।
येनाभिषिञ्चेद्देवेशं प्रधानकलशेन तु ॥ १६९ ॥

तच्छुद्धवारिकलशैस्तन्मन्त्रेणाभिषेचयेत्।
प्रतिद्रव्यं तु वस्त्रेण ह्यर्घ्यालभनमाल्यकैः ॥ १७० ॥

धूपेन च समभ्यर्च्य ततस्तेनाभिषेचयेत्।
यद्वार्घ्यं पाद्यमाचामं गन्धस्रग्धूपदीपकम् ॥ १७१ ॥

दद्याद्यथाक्रमं सर्वं, केवलं चार्घ्यमेव वा।
युक्तं शतचतुष्केण सप्तत्या च त्रयेण च ॥ १७२ ॥

कुम्भानां स्नपनं ह्येतदुत्तमोत्तममुच्यते।
[2]हीनमष्टाष्टसंख्यातैरन्तश्शुद्धोदवारिभिः ॥ १७३ ॥

कलशैः स्नपनं यत्तु तत् स्यादुत्तममध्यमम्।
[3]तथा पङ्क्तिचतुष्कं तु हीनं स्यात् पूर्वनिश्चितात् ॥

यदेतत् स्नपनं युक्तमेकाशीत्या च मध्यतः।
दिक्षु चैकोनपञ्चाशच्चतुष्केन विदिक्षु च ॥ १७५ ॥

ब्राह्मदैविकभागस्थैः कलशैरन्वितं द्विज!।
शेषैःषष्ट्युत्तरशतसंख्यातैः शुद्धवारिभिः ॥ १७६ ॥

विहीनं कलशैर्विप्र! तद्भवेदुत्तमाधमम्।
[4]शतद्वयेन कुम्भानां चतुर्दिक्संस्थितेन च ॥ १७७ ॥

चतुर्हीनेन वै विप्र! ह्येकाशीत्या च मध्यतः।
संयुक्तं स्नपनं प्राग्वत् तद्भवेन्[1]मध्यमोत्तमम् ॥ १७८ ॥

[5]अष्टाष्टपरिसङ्ख्यातैरन्तः शुद्धोदवारिभिः।
कलशैर्यद् भवेद्धीनं तत् स्यान्[2]मध्यममध्यमम् ॥ १७९ ॥

एकाशीत्या च कुम्भानां मध्यतस्तु समन्वितम्।
[6]दिक्षु चैकोनपञ्चाशन्मध्यस्थनवसंयुतम् ॥ १८० ॥

शेषैः शुद्धोदकलशैर्विहीनं [1]मध्यमाधमम्।
[2]पङ्क्तीनामष्टकेनात्र हीनं क्षेत्रं तु कल्पयेत् ॥ १८१ ॥

एकाशीत्या च कुम्भानां केवलं पूर्ववद् द्विज!।
[7]अधमोत्तममेतत्तु स्नपनं परिकीर्तितम् ॥ १८२ ॥

[8]द्वात्रिंशद्भिस्तु कलशैः कोणस्थैः शुद्धवारिभिः।
विहीनं स्नपनं यत्तद् भवेद[9]धममध्यमम् ॥ १८३ ॥

यच्चतुष्पष्टिकलशैर्विहीनं सर्वदिक्स्थितैः।
शुद्धोदकैर्द्विजश्रेष्ठ! तद्भवेद[9]धमाधमम् ॥ १८४ ॥

नवधा सप्तधा चात्र क्षेत्रं कृत्वा तु पीडयेत्।
द्वयं चतुष्कं वा शिष्टं, कुम्भानां स्थापनार्थतः ॥१८५॥

इत्युक्तमाद्यं नवधा, द्वितीयं शृणु सत्तम!।
चतुरश्रीकृते क्षेत्रे ह्यष्टादशविभाजिते ॥ १८६ ॥

यद्वा षोडशधा विप्र! पङ्क्तिषट्कं तु मध्यतः।
संस्थाप्य तद्बहिर्वीथ्यै मार्जयेद्द्वितयं द्विज!॥

एकैकं वापि तद्बाह्ये स्थापयेत्तु चतुष्टयम्।
पूर्ववत्तेषु कलशान् न्यस्य द्रव्याणि निक्षिपेत् ॥

मध्ये कुम्भचतुष्के तु सर्वरत्नजलं ततः।
द्वितये मौक्तिकं प्राच्यामेकस्मिन् वह्निदिग्गते ॥ १८९॥

वज्रं याम्यद्वये विप्र! गोमेदकमनन्तरे।
एकस्मिन्निन्द्रनीलं तु पुष्परागं ततो द्वये ॥ १९० ॥

पश्चिमस्थे तु वायव्ये ह्येकस्मिन् महारागकम्।
चन्द्रकान्तं द्वये सौम्ये ह्येकस्मिन् विद्रुमं परे ॥१९१॥

द्वितीयावरणे प्राच्यामाज्यं कुम्भद्वये द्विज!।
कुम्भ आग्नेयकोणस्थे ह्येकस्मिन्नौपमानिकम् ॥ १९२ ॥

क्षीरं द्वये दक्षिणस्थे नैर्ऋत्यां मार्जनं तथा।
दधि द्वये पश्चिमस्थे गन्धो वायव्यकोणगे ॥ १९३ ॥

सौम्यद्वये माक्षिकं स्यात् कषायं चेशकोणगे।
गन्धोदकेन संपूर्णं कुम्भानां शिष्टमष्टकम् ॥ १९४ ॥

एवं मध्यस्थिताः कुम्भाः षट्त्रिंशत्संख्यया द्विज!।
चतुर्विंशत्तु कलशाः प्रतिदिक्कं तु तद्बहिः ॥ १९५ ॥

विदिक्स्थितास्तु प्रत्येकं कलशाः षोडश द्विज!।
पूर्वदिक्संस्थितानां तु कुम्भानां मध्यमे स्थिते ॥
चतुष्केऽर्घ्यं, तथा पाद्यं दक्षिणे पश्चिमे तथा।
आचामं, सौम्यमध्यस्थचतुष्के पञ्चगव्यकम् ॥ १९७ ॥
बहिर्दिक्कलशानां तु चतुष्के मध्यसंस्थिते।
तैलं, गुलोदं निर्ऋतौ, वायुसंस्थे तिलोदकम् ॥१९८॥
अक्षतं त्वीशदिक्संस्थे, द्वाविंशोत्तरं शतम्।
अवशिष्टं तु कुम्भानां पूर्णं गन्धोदकेन तु ॥ १९९ ॥
अर्घ्यादिसर्वरत्नान्तमुद्धारक्रम इष्यते।
अर्घ्यं पाद्यं तथाचामं पञ्चगव्यं ततः परम् ॥ २०० ॥
तैलं गुलोदकं चैव तिलोदं चाक्षतोदकम्।
आज्यं तथा चौषमान्यं क्षीरं मार्जनमेव च ॥ २०१ ॥
दधि गन्धं माक्षिकानि कषायं मौक्तिकं तथा।
वज्रादिसर्वरत्नान्तमष्टकं क्रमशो द्विज! ॥ २०२ ॥
शतद्वयेन कुम्भानां चतुर्न्यूनेन संयुतम्।
एतत् स्नपनमाख्यातमुत्तमोत्तमसंज्ञितम् ॥ २०३ ॥
चतुरश्रीकृते क्षेत्रे चतुर्दशविभाजिते।
कोष्ठकानां भवत्यत्र चतुर्न्यूनं शतद्वयम् ॥ २०४ ॥
मध्ये पङ्क्तिचतुष्कं तु संस्थाप्य परिमार्जयेत्।
एकैकं वीथये बाह्ये स्थापयेच्च चतुष्टयम् ॥ २०५ ॥
तत्रापि कोष्ठकानां तु कलशस्थापनार्थतः।
संस्थाप्याष्टोत्तरशतं शेषाणि परिमार्जयेत् ॥ २०६ ॥
पूर्ववत्तेषु कलशान् न्यस्य द्रव्याणि निक्षिपेत्।
विन्यसेद्रत्ननिचयं मध्ये कुम्भचतुष्टयम् ॥ २०७ ॥
प्राङ्मध्यसूत्राद्दक्षिणतः कलशे मौक्तिकं द्विज!।
एतद्दक्षिणतः संस्थे वज्रगोमेदके क्रमात् ॥ २१८ ॥
इन्द्रनीलं पुष्परागं पश्चिमस्थे द्वये तथा।
ब्रह्मरागं चन्द्रकान्तं सोमदिक्स्थे द्वये द्विज! ॥२०९॥
'प्राङ्मध्यसूत्रोत्तरतो विद्रुमं कलशे द्विज!।
एवं द्विषट्कं कुम्भानां मध्यतः; तद्दिगष्टके ॥ २१० ॥

प्रतिदिक्कलशानां तु द्विषट्कं द्विजसत्तम!।
तेषां मध्यस्थिते कुम्भे चतुष्के प्रागिदगादितः ॥
अर्घ्यं तैलं तथा पाद्यं गुलाम्ब्वाचमनीयकम्।
तिलोदकं पञ्चगव्यमक्षतं त्वीशपश्चिमम् ॥ २१२ ॥
शेषाः कुम्भाश्चतुष्षष्टिः पूर्णा गन्धोदकेन तु।
अर्घ्यादिसर्वरत्नान्तमुद्धारक्रम इष्यते ॥ २१३ ॥
एवमष्टोत्तरशतैः कुम्भैरुत्तममध्यमम्।
चतुरश्रीकृते क्षेत्रे त्रयोदशविभाजिते ॥ २१४ ॥
पङ्क्तीनां पञ्चमं मध्ये संस्थाप्य परिमार्जयेत्।
एकैकं वीथये बाह्यं स्थापयेत् त्रितयं पुनः ॥ २१५ ॥
मध्यमे रत्नकुम्भं तत् प्रागादीशावसानकम्।
मुक्ताफलं तथा वज्रं गोमेदकेन्द्रनीलकौ ॥ २१६ ॥
पुष्परागो ब्रह्मरागश्चन्द्रकान्तश्च विद्रुमः।
तद्बहिः प्राक्क्रमेणैव घृतं चैवोपमानिकम् ॥ २१७ ॥
क्षीरं मार्जनतोयं च दधि गन्धं च माक्षिकम्।
कषायमष्टौ शिष्टाश्च गन्धाम्भः परिपूरिताः ॥ २१८ ॥
एवं मध्यस्थिता विप्र! कलशाः पञ्चविंशतिः।
अष्टकं नवकानां तु तद्बहिस्तु दिगष्टके ॥ २१९ ॥
तेषां मध्ये क्रमादर्घ्यं तैलं पाद्यं गुलोदकम्।
आचामं तिलतोयं च पञ्चगव्यं तथाक्षतम् ॥ २२० ॥
प्रागाद्यादीशदिङ्निष्ठं शिष्टमष्टाष्टकं द्विज!।
पूरितं गन्धतोयेन ह्येवं कुम्भसमन्वितम् ॥ २२१ ॥
नवत्या सताधिकया तद्भवेदुत्तमाधमम्।
त्रिपञ्चधा कृते क्षेत्रे भागानां तु भवन्ति हि ॥ २२२ ॥
शतद्वयं तथा पञ्चविंशतिर्मुनिपुङ्गव!।
पङ्क्तीनां पञ्चकं मध्ये तद्बहिर्विसृजेद्द्वयम् ॥ २२३ ॥
वीथ्यर्थं तद्बहिर्भूयः स्थापयेत् त्रितयं द्विज!।
तन्मध्ये रत्नकलशं दिक्स्थिते तु चतुष्टये ॥ २२४ ॥
रत्नाष्टकं मौक्तिकादि द्वन्द्वशः पूर्वदिक्क्रमात्।
प्रागादीशानपर्यन्तं तद्बहिः कलशाष्टके ॥ २२५ ॥

घृतपूर्वकषायान्तद्रव्याणामष्टकं द्विज!।
ऐन्द्रादिनवकानां तु स्थानां द्विज! मध्यमे ॥ २२६ ॥
अर्घ्याद्यक्षतपर्यन्तं क्रमादीशानपश्चिमम्।
शेषाः कुम्भाश्चतुष्पष्टिर्गन्धोदकसमन्विताः ॥ २२७ ॥
पञ्चाशीतिघटोपेतमेतत् स्यान्मध्यमोत्तमम्।
मध्यमे रत्नतोयं तु तद्बहिः कलशाष्टकम् ॥ २२८ ॥
मुक्तादिद्रव्यसंयुक्तं पूर्ववन्नवकाद्बहिः।
इत्येकाशीतिकलशैर्भवेन्मध्यममध्यमम् ॥ २२९ ॥
सप्तधा भाजिते क्षेत्रे चत्वारिंशद्यथोत्तरम्।
कोष्ठकानि भवन्त्यत्र कलशान् विन्यसेत्ततः ॥ २३० ॥
पूर्ववद्द्रव्यसंयुक्ताः कलशाः पञ्चविंशतिः।
चतुर्विंशतिशेषास्तु शुद्धोदकसमन्विताः ॥ २३१ ॥
एवमेकोनपञ्चाशत्कलशैर्मध्यमाधमम्।
रत्नादिककषायान्ता युक्ताः सप्तोत्तरा दश ॥ २३२ ॥
अष्टौ गन्धोदसंयुक्ता एतत् स्यादधमोत्तमम्।
शुद्धोदाष्टकहीनं तद्भवेदधममध्यमम् ॥ २३३ ॥
रत्नादिचिह्नमान्तेन द्रव्यसङ्घेन संयुतम्।
नवकं कलशानां यत् तद्भवेदधमाधमम् ॥ २३४ ॥
एवं द्वितीयभेदास्तु कीर्तिताः; तृतीयं शृणु।
क्षेत्रं तु सप्तधा कृत्वा प्राग्वदापाद्य संस्थितम् ॥
उदङ्मुखस्थितो भूत्वा प्रणवं बन्धयेत्ततः।
तन्मुद्रां विन्यसेत् कुम्भे जितन्ताख्येन मध्यतः ॥
दैविकेऽष्टाक्षरैः कुम्भान् प्राङ्मुखः प्राग्दिगादितः।
मानुषांस्तु द्विषट्केन षोडशप्रागुदङ्मुखः ॥ २३७ ॥
फट्कारैः पैतृकान् विप्र! न्यसेत् प्रत्यगुदङ्मुखः।
तन्मुद्रां बन्धयित्वा तु मध्यादुत्तरपश्चिमम् ॥ २३८ ॥
कुम्भानां पञ्चके विप्र! पाद्यार्घ्याचमनान्यपि।
पञ्चगव्यं घृतं चापि पञ्चोपनिषदैः क्रमात् ॥ २३९ ॥
विदिक्कुम्भचतुष्के तु वह्न्यादीशानपश्चिमम्।
दधि क्षीरं मधु तथा ह्युष्णाम्भोमूर्तिवाचकैः ॥ २४० ॥

चतुर्भिः कलशैर्विप्र! तद्बहिर्दिक्चतुष्टये।
कषायं मार्जनाम्भश्च फलाम्भः परिमार्जनम् ॥ २४१ ॥
आग्नेयादीशपर्यन्तं कलशानां चतुष्टये।
रत्नोदं सर्वलोहाम्भः कुशाम्भः सकुचारि च ॥ २४२ ॥
क्षिपेत् क्रमेण विप्रेन्द्र! वर्णैरष्टाक्षरोदितैः।
शुद्धाम्भसान्तरालस्थं पूरितं कलशाष्टकम् ॥ २४३ ॥
प्रागग्निमध्यादारभ्य ईशप्राङ्मध्यपश्चिमम्।
प्रणवाख्येन मन्त्रेण केवलेन ततो बहिः ॥ २४४ ॥
दिक्कुम्भानां चतुष्के तु गन्धाम्भः पुष्पवारि च।
औपमानिकसंज्ञं च तथा चामलकोदकम् ॥ २४५ ॥
आग्नेयादिक्रमेणैव कलशानां चतुष्टये।
अक्षताम्भस्तिलाम्भश्च यवाम्भस्तण्डुलोदकम् ॥ २४६ ॥
द्विषट्कमन्त्रेण ततो विष्णुगायत्रिया द्विज!।
शेषाः षोडश शुद्धाम्भः परिपूर्णाः क्रमेण तु ॥ २४७ ॥
एवं संपूरयित्वा तु प्रणम्याञ्जलिमुद्रया।
वासुदेवादियागाद्यं सर्वं कृत्वा तु पूर्ववत् ॥ २४८ ॥
द्रव्यन्यासक्रमेणैव समुद्धारः प्रकीर्तितः।
मूलमन्त्रेण वै दद्यात् सर्वं यद्वा द्विजोत्तम! ॥ २४९ ॥
इदं विष्णुर्व्यचक्रमे पाद्यमर्घ्यमापो वहन्त्विति।
आपः पुनन्त्वित्याचामं गायत्र्या पञ्चगव्यकम् ॥ २५० ॥
घृतं दद्यात्ततो विप्र! घृतं शुक्रमसीति च।
दधिक्रा इति मन्त्रेण दधि दद्यात्ततः परम् ॥ २५१ ॥
क्षीरमाप्यायस्वेति मधुवातेति वै मधु।
आदित्यः शुक्रमित्येवमुष्णाम्भो मुनिपुङ्गव! ॥ २५२ ॥
ततः कषायतोयं तु सदसस्पतिमित्यृचा।
शन्नोदेवीरिमानेन दद्याद्वै मार्जनं ततः ॥ २५३ ॥
गणानामिति मन्त्रेण दद्याद्वैव फलोदकम्।
इदं विष्णुरिति मन्त्रेण दद्यात्तु परिमार्जनम् ॥ २५४ ॥
अग्न आयाहि वीतये इति रत्नोदकं ततः।
इषेत्वेति च लोहाम्भस्त्वग्निर्मीळे कुशोदकम् ॥ २५५ ॥

किमित्त इति मन्त्रेण दद्यात् सकृदकं ततः ।
दद्याच्छुद्धोदकान्यष्टावापो अस्मानिति क्रमात् ॥२५६॥
अष्टौ गन्धोदकादीनि मानस्तोक्या निवेदयेत् ।
शेषान् पुरुषसूक्तेन षोडश प्रत्यृचं क्रमात् ॥ २५७ ॥
एवमेकोनपञ्चाशत्कलशैरुत्तमोत्तमम् ।
बहिःषोडश शुद्धोदैर्हीनमुत्तममध्यमम् ॥ २५८ ॥
तत्रस्थैः कोणकलशैर्हीनं स्यादुत्तमाधमम् ।
अन्तः शुद्धोदकस्थाने स्थितं गन्धोदकाष्टकम् ॥२५९॥
विहीनं सर्वकलशैर्बहिरावरणस्थितैः ।
तदन्तः पञ्चविंशद्भिरन्वितं मध्यमोत्तमम् ॥ २६० ॥
मानुषे दिक्चतुष्केन हीनं मध्यममध्यमम् ।
तत्रस्थैः सर्वकलशैर्हीनं स्यान्मध्यमाधमम् ॥ २६१ ॥
नवकं कलशानां यत्तद्भवेदधमोत्तमम् ।
तद्विदिक्कलशैर्हीनं भवेदधममध्यमम् ॥ २६२ ॥
मध्यस्थितैककुम्भेन तद्भवेदधमाधमम् ।
तृतीयमेवं कथितं चतुर्थं शृणु सत्तम ! ॥ २६३ ॥
सप्तभक्ते स्थिता भागाश्चत्वारिंशन्नवोत्तरम् ।
घृतमुष्णोदकं चैव रत्नवारि फलोदकम् ॥ २६४ ॥
लोहाम्भो मार्जनाम्भश्च गन्धाम्भोऽक्षतवारि च ।
यवोदकमथैशान्तं मध्यादारभ्य मध्यमे ॥ २६५ ॥
पाद्यमर्घ्यं तथाऽऽचामं पञ्चगव्यं तथा दधि ।
पयो मधु कषायं च दिग्विदिक्षु च तद्बहिः ॥ २६६ ॥
गुलोदकं चेक्षुरसं नालिकेररसं तथा ।
शान्तिवारि चतुर्दिक्षु पूर्वादिक्रमयोगतः ॥ २६७ ॥
विदिक्कुम्भचतुष्केषु विन्यसेन्मङ्गलोदकम् ।
शेषा भागाश्चतुर्विंशच्छून्याः स्युर्द्विजसत्तम ! ॥
मन्त्रार्चनं तथोद्धारो यथा चाद्योत्तमोत्तमे ।
उत्तमोत्तममेतद्धि स्नपनं परिकीर्तितम् ॥ २६९ ॥
'पञ्चभागीकृते स्थाने कलशाः पञ्चविंशतिः ।
मूलमन्त्रेण कलशान् विन्यस्य प्रोक्षयेत्ततः ॥ २७० ॥

द्रव्याणि निक्षिपेत्तेन प्राङ्मुखः प्रयतो वशी ।
ब्राह्मं तु मध्यमं कुम्भं स्नानतोयेन पूरयेत् ॥ २७१ ॥
ततस्तु मानुषे भागे प्रागाद्ये दिक्चतुष्टये ।
पाद्यमर्घ्यं तथाऽऽचामं पञ्चगव्यं तथैव च ॥ २७२ ॥
घृतं दधि तथा क्षीरं मधु चाग्नेयपूर्वकम् ।
इन्द्राग्निमध्यादारभ्य तदीशान्तरपश्चिमम् ॥ २७३ ॥
उष्णोदकं कषायं च मार्जनं च फलोदकम् ।
तिलाम्बु रत्नतोयं च लोहतोयं कुशोदकम् ॥ २७४ ॥
ततस्तु दैविके भागे पूर्ववद्दिक्चतुष्टये ।
गन्धोदकं च पुष्पाम्भ औपमान्यामलोदके ॥ २७५ ॥
आग्नेयादीशपर्यन्तमक्षताम्भस्तथैव च ।
नालिकेररसं चेक्षुरसं वै तण्डुलोदकम् ॥ २७६ ॥
एवं च पञ्चविंशद्भिः कुम्भैरुत्तममध्यमम् ।
पाद्यं च मध्यमे भागे प्रागादीशानपश्चिमम् ॥ २७७ ॥
अर्घ्यमाचमनं चापि पञ्चगव्यं घृतं दधि ।
क्षीरं मधूष्णतोयं च अन्तरालेषु वै क्रमात् ॥ २७८ ॥
कषायं मार्जनाम्भश्च फलाम्भः परिमार्जनम् ।
रत्नाम्भो लोहतोयं च कुशाम्भश्चोष्णतोयकम् ॥
ततस्तु दैविके भागे प्रागादीशानपश्चिमम् ।
गन्धाम्भः पुष्पतोयं च औपमान्यामलाम्बुनी ॥ २८० ॥
अक्षताम्भस्तिलोदं च यवोदं तण्डुलोदकम् ।
विहितश्च समुद्धारः पाद्यात्तण्डुलपश्चिमाः ॥ २८१ ॥
एवं तु पञ्चविंशद्भिः स्नपनं चोत्तमाधमम् ।
सप्तभक्ते स्थले प्रारवङ्कृताच्छान्त्यम्बु पश्चिमम् ॥२८२॥
कलशैरेकविंशद्भिः स्नपनं मध्यमोत्तमम् ।
त्रिधा विभक्ते कोष्ठानां नवकं तत्र सत्तम ! ॥ २८३ ॥
मध्यादीशानपर्यन्तं घृतं दधि पयो मधु ।
तथोद्वर्तनचूर्णं च ततः कोणचतुष्टये ॥ २८४ ॥
उष्णोदकं च गन्धाम्भः पुष्पाम्भो मङ्गलोदकम् ।
द्रव्यन्यासक्रमेणैव समुद्धारः प्रकीर्तितः ॥ २८५ ॥

एवं तु नवभिः कुम्भैर्भवेन्मध्यममध्यमम् ।
घृतं पयो दधि मधु गन्धहेमाम्बुनी तथा ॥ २८६ ॥

रत्नाम्भश्चोषधीवारि शालिचूर्णानि च क्रमात् ।
मध्यमादीशदिङ्निष्ठमेतत् स्यान्मध्यमाधमम् ॥

मध्यमे दिक्चतुष्के तु पञ्चगव्यैस्तु पञ्चकम् ।
आग्नेयादीशपर्यन्तं कलशानां चतुष्टयम् ॥ २८८ ॥

शुद्धाम्भसा तु संपूर्णमेतत् स्यादधमोत्तमम् ।
मध्ये रत्नजलं दिक्षु कुम्भानां तु चतुष्टयम् ॥ २८९ ॥

मुक्तादिरत्नसंयुक्तं छन्दयोगेन सत्तम! ।
एवं तु पञ्चभिः कुम्भैर्भवेदधममध्यम् ॥ २९० ॥

सर्वरत्नजलं मध्ये दिग्द्वये पूर्वपश्चिमे ।
द्वौ कुम्भौ तत्र पूर्वस्मिन् मौक्तिकादिचतुष्टयम् ॥

चतुष्कं पुष्परागादि ह्यन्यस्मिन् द्विजसत्तम! ।
एवं कुम्भत्रयेणैव स्नपनं त्वधमाधमम् ॥ २९२ ॥

एवं द्वापरभेदास्तु षट्त्रिंशत् संप्रकाशिताः ।
कुम्भाधिवासपूर्वं तु सर्वं पूर्ववदाचरेत् ॥ २९३ ॥

आज्यस्य दैवतं देवो वासुदेवः परः स्मृतः ।
उष्णाम्भसः सङ्कर्षणः प्रद्युम्नो रत्नवारिणः ॥ २९४ ॥

फलाम्भसोऽनिरुद्धस्तु भगवान् दैवतं द्विज! ।
नारायणस्तु मन्त्रात्मा लोहतोयस्य दैवतम् ॥ २९५ ॥

मार्जनस्य हयग्रीवो विष्णुः स्याद्गन्धवारिणः ।
नृसिंहोऽक्षततोयस्य वराहो यववारिणः ॥ २९६ ॥

पाद्यस्य केशवो देवोऽर्घ्यस्य नारायणः स्मृतः ।
देव आचमनीयस्य माधवस्त्वधिदेवता ॥ २९७ ॥

गोविन्दः पञ्चगव्यस्य विष्णुस्तु दधिदैवतम् ।
मधुसूदनसंज्ञस्तु पयसो देवता स्मृता ॥ २९८ ॥

त्रिविक्रमाख्यो मधुनः कषायस्य च वामनः ।
भगवान् श्रीधराख्यस्तु गुलतोयस्य देवता ॥ २९९ ॥

देवदेवो हृषीकेश इक्षुसारस्य दैवतम् ।
दामोदरोऽधिदैवं तु नालिकेराम्भसो द्विज! ॥ ३०० ॥

पद्मनाभस्तु भगवान् शान्तितोयस्य देवता ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥ ३०१ ॥

आग्नेयादीशपर्यन्तं देवता मङ्गलाम्भसः ।
परिमार्जनसंज्ञे तु शङ्खः स्यादधिदैवतम् ॥ ३०२ ॥

कुशोदकस्य पद्मं स्याद्गदा स्यात् सक्तुनो द्विज! ।
वनमाला पुष्पतोये चक्रं स्याद्दीपमानिके ॥ ३०३ ॥

किरीटमधिदैवं तु भवेदामलकाम्भसः ।
कौस्तुभस्तिलतोयस्य श्रीवत्सस्तण्डुलाम्भसः ॥ ३०४ ॥

एकाशीतिस्थितानां तु शुद्धोदानां तु देवता ।
कान्त्याद्युन्नतिपर्यन्तमष्टकं प्रतिदिक्क्रमात् ॥ ३०५ ॥

वह्निरेकोनपञ्चाशच्छुद्धतोयेषु च क्रमात् ।
स्वधादिगायत्र्यन्तास्तु शक्तयो ह्यधिदेवताः ॥ ३०६ ॥

अष्टावष्टौ तु पूर्वादिदिक्ष्वग्न्यादिविदिक्षु च ।
अन्येषां स्नपनानां तु सर्वेषां द्विजसत्तम! ॥ ३०७ ॥

मर्यादा चैव हृष्टिश्च शुद्धोदेष्वधिदेवता ।
कलशानां तु गरुडः शेषः सूत्रस्य दैवतम् ॥ ३०८ ॥

कूर्चानां तु परं ब्रह्म, चक्रिकानां तु चक्रराट् ।
वाससां वासुदेवस्तु, सर्वेषां च स एव वा ॥ ३०९ ॥

मार्जनं प्रोक्षणं चैव शक्ता चानुलेपनम् ।
सूत्रपातमलङ्कारं पिष्टचूर्णैः समन्ततः ॥ ३१० ॥

द्वादशाक्षरमन्त्रेण कारयेत् पञ्च मन्त्रवित् ।
पञ्चोपनिषदा मन्त्री कलशानधिवासयेत् ॥ ३११ ॥

विष्णुगायत्रिया तत्र कोष्ठेषु कलशान् न्यसेत् ।
तत्र द्रव्याधिदेवानां वाचकैः पूरयेत् क्रमात् ॥ ३१२ ॥

कूर्चांस्तु प्रक्षिपेत्तेषु द्विषट्कब्रह्मविद्यया ।
तत्तद्द्रव्याधिदेवांस्तु तत्तद्द्रव्येषु पूजयेत् ॥ ३१३ ॥

चक्रिकाः स्थापयेत् पश्चाच्चक्रमन्त्रेण साधकः ।
वासोभिश्छादयेत् पश्चाद्द्विषट्कार्णेन मन्त्रवित् ॥

वस्त्रापनयनं कुर्यान्मूलमन्त्रेण मन्त्रवित् ।
प्रणवेन तु सूत्राणि छित्त्वा तेनाभिमन्त्र्य च ॥ ३१५ ॥

उद्धृत्य, विष्णुगायत्र्या दद्याद्धस्ते गुरोस्तथा।
यस्मिन् यस्मिन्न मन्त्रोऽत्र विहितः कर्मणि द्विज!॥
द्वादशाक्षरमन्त्रेण तत्तत् कुर्याद्विचक्षणः।
अथवा सर्वकर्माणि द्वादशाक्षरविद्यया॥ ३१७॥
पूर्वोक्तः परभेदानां स्नपनानां महामते!।
अर्घ्यादिद्रव्यनिचयः, इतरेषां तु कथ्यते॥ ३१८॥
विष्णुपर्णी च दूर्वा च पद्मं श्यामाकमेव च।
एतानि पाद्यस्याङ्गानि चत्वारि द्विजपुङ्गव!॥ ३१९॥
गन्धपुष्पेऽक्षतफले यवसिद्धार्थकं तिलम्।
कुशाग्रमर्घ्यस्याङ्गानि ह्येतान्यष्टौ भवन्ति हि॥ ३२०॥
लवङ्गजातितक्कोलमङ्गमाचमनीयके।
शकृद्रसं च गोमूत्रं क्षीरं दधि घृतं तथा॥ ३२१॥
अङ्गानि पञ्चगव्यस्य पञ्चैतानि च सर्वतः।
शम्योदुम्बरबिल्वानां पलाशवटयोस्तथा॥ ३२२॥
खदिराश्वत्थयोश्चापि विकङ्कततरोस्तथा।
त्वक्सारं तु कषायं स्यात् सर्वपापापनोदनम्॥ ३२३॥
कुष्ठं मांसी हरिद्रे द्वे मुराशैलेयचम्पकाः।
वचाकचोरमुस्ताश्च 'सर्वौषध्यः' प्रकीर्तिताः॥ ३२४॥
पलाशबिल्वबकुलकदम्बाम्रशिरीषजाः।
न्यग्रोधाश्वत्थजाश्चापि पल्लवाः 'पत्रवारिणः'॥ ३२५॥
केतकीमल्लिकाजातिनन्द्यावर्तोत्पलोद्भवाः।
पद्मचम्पककुन्दोत्थाः कुसुमाः 'पुष्पवारिणः'॥ ३२६॥
कदलीबिल्वचूताश्च पनसं मातुलङ्गकम्।
नालिकेरं चामलकं बीजपूरं 'फलाम्भसः'॥ ३२७॥
अङ्गान्येतानि विप्राष्टौ फलानि कथितानि वै।
यवगोधूमकव्रीहिशालिमुद्गप्रियङ्गुकाः॥ ३२८॥
माषनीवारकौ चाङ्गं कथितं 'बीजवारिणः'।
बाह्लीकं चन्दनं चैव कर्पूरमगरुं तथा॥ ३२९॥
गन्धाङ्गानि च चत्वारि, त्वथवा मुनिपुङ्गव!।
चन्दनं कुङ्कुमं मांसी हरिबेरं मुरं तथा॥ ३३०॥
उशीरं कुष्ठमगरु 'गन्धाम्भो'ऽङ्गं तु चाष्टकम्।
सूर्यकान्तं पद्मरागमिन्द्रकान्तं तथैव च॥ ३३१॥
वैडूर्यं चाप्ययस्कान्तमिन्द्रनीलप्रवालकौ।
गरुडं पुष्यरागं च स्फटिकब्रह्मरागकौ॥ ३३२॥
वज्रं मौक्तिकमङ्गानि 'रत्नोदस्य', अथवा द्विज!।
मणिमुक्ताफलं वज्रं प्रवालं पुष्यकं तथा॥ ३३३॥
रत्नोदकाङ्गान्येतानि पञ्च वै कथितानि ते।
अपरस्नपनानां तु द्वितीयं नवकं विना॥ ३३४॥
तत्र मुक्ताफलं वज्रं गोमेदकेन्द्रनीलकौ।
पुष्यरागं ब्रह्मरागं चन्द्रकान्तं च विद्रुमम्॥ ३३५॥
रत्नाम्भसोऽष्टावङ्गानि ह्यमूनि यदितानि वै।
सहदेवी शिरीषं च रजनी सूर्यवर्तिनी॥ ३३६॥
सदाभद्रा कुशाग्राणि मार्जनाङ्गानि षड् द्विज!।
रुक्मं रूप्यं च ताम्रं चाप्ययस्त्रपुकमेव च॥ ३३७॥
अङ्गानि कथितान्येव पञ्च वै 'लोहवारिणः'।
तिलसिद्धार्थनीवारयववेणुयवानि च॥ ३३८॥
तुलसीपत्रयुक्तानि 'शान्त्यम्भो'ऽङ्गानि चैव षट्।
इन्द्रवल्ल्यङ्कुरं पद्ममश्वत्थाङ्कुरमेव च। ३३९॥
एकपद्मं च चत्वार्यङ्गानि 'मङ्गलवारिणः'।
नद्यां तटाके वल्मीके पर्वते चैव मृत्तिका॥ ३४०॥
'परिमार्जनवस्तूनि' कथितानि द्विजोत्तम!।
शङ्खं चक्रं च कूर्मं च वैनतेयं तथैव च॥ ३४१॥
कुर्यात् प्रतिकृतिं लोहैरौपमानिकमुच्यते।
शुद्धोदकलशाः सर्वे चन्दनैकाङ्गसंयुताः॥ ३४२॥
अथयानन्तकलशं नाम्ना सकलपूरकम्।
यदेतस्य विधानं त्वं क्रमेण शृणु विस्तृतम्॥ ३४३॥
पूर्ववन्मण्डपं कुर्याच्चत्वारिंशत्करायतम्।
द्वात्रिंशत्करविस्तारं चतुर्द्वारादिसंयुतम्॥ ३४४॥
ध्वजाद्यैरप्यलंकारैः पूर्ववत् सुविभूषितम्।
आपाद्य वा प्रपामात्रं यथाभिमतदेशगम्॥ ३४५॥

यागार्थमण्डपं प्राग्वत् कल्पयेत् तत्समीपतः।
उक्ते दिनेऽङ्कुरारोपं कृत्वा कर्मदिनात् पुरा ॥

तदर्थान् सर्वसंभारान् संभृत्य सुसमाहितः।
देशिकेन्द्रस्तु पूर्वेद्युः सुस्नातश्च कृताह्निकः ॥ ३४७ ॥

भूषणैर्विविधैर्वस्त्रैर्नूतनैश्च विभूषितः।
सितोष्णीषोत्तरीयश्च चित्रैर्माल्यैरलंकृतः ॥ ३४८ ॥

चतुर्भिरष्टभिर्वा( चा ! )र्यैस्ताद्दशैरपि साधकैः।
तत्संख्यैः शास्त्रकुशलैः कञ्चुकादिविभूषितैः ॥

अन्यैश्च सुसितैर्वस्त्रैः स्थगिताननासिकैः।
तत्तत्प्रयोगकुशलैरनेकैः परिचारकैः ॥ ३५० ॥

प्राप्तेऽपराह्णसमये कृत्वा द्वार्स्थार्चनं विशेत्।
यागार्थमण्डपं तत्र देवं कुम्भादिके यजेत् ॥ ३५१ ॥

तत्रैव वा यजेद्विम्बं वह्नौ सन्तर्प्य पूर्ववत्।
ततोऽनुज्ञां समादाय क्रमेण मुनिपुङ्गव ! ॥ ३५२ ॥

अनुकल्पविधाने तु प्रासादं संप्रविश्य च।
मूलबिम्बं तु संपूज्य अर्घ्यालभनमाल्यकैः ॥ ३५३ ॥

धूपेन च ततोऽनुज्ञां समादायारभेत् ततः।
द्वार्स्थाभ्यर्चनपूर्वं तु विशेत् स्नपनमण्डपम् ॥ ३५४ ॥

प्रोक्षयेत् पञ्चगव्येन द्विपट्टकाणि सर्वतः।
नानाविधानि पुष्पाणि विकिरेत् सर्वदिक् तथा ॥

सिद्धार्थकांश्च बीजानि ततो मण्डपमध्यतः।
सार्धद्वाविंशतिकरं भजेत् क्षेत्रं तु पञ्चधा ॥ ३५६ ॥

एकैकं नवधा भूयश्चत्वारिंशच्च पञ्च च।
पङ्क्तयश्चापि कोष्ठानां पञ्चविंशोत्तरं भवेत् ॥ ३५७ ॥

द्विसहस्रं, ततो मध्ये कलशस्थापनार्थतः।
एकाशीतिं च कोष्ठानि संस्थाप्य परिमार्जयेत् ॥

परितो वीथये पङ्क्तिद्वितयं, तद्बहिः पुनः।
पूर्वादिदिक्चतुष्के तु एकाशीतिपदानि च ॥ ३५९ ॥

कल्पयेत् पार्श्वतो वीथ्यै पुनः पङ्क्तिद्वयं भवेत्।
चतुर्षु कोणेष्वेकोनपञ्चाशत्कोष्ठकानि तु ॥ ३६० ॥

कल्पयेत्तत्र चाप्येकाशीतिमध्यानुसारतः।
मध्यतो नवकं स्थाप्य पङ्क्त्यैकां लोपयेत् परि ॥

बहिः पङ्क्तिद्वये दिक्षु षट्कं षट्कं विदिक्षु च।
चतुश्चतुश्च संस्थाप्य शेषाणि परिमार्जयेत् ॥ ३६२ ॥

तद्बहिः परितो वीथ्यै लुम्पेत् पङ्क्तिद्वयं ततः।
कोणानि कल्पयेद्यत्नात् पदषोडशकानि तु ॥ ३६३ ॥

तत्पार्श्वे लोपयेत् पङ्क्तिमेकैकां दिक्चतुष्टये।
पङ्क्तिद्वयेन द्वाराणामन्तर्भागास्त्रयो बहिः ॥ ३६४ ॥

पञ्चपार्श्वे तु शोभार्थं चतुरस्रवेदिद्वयम्।
तदन्तः पङ्क्तित्रितये त्रयस्त्रिंशत्पदानि तु ॥ ३६५ ॥

वीथ्या सहैकतां नीत्वा ह्येकैकं स्थापयेद्बहिः।
द्वाराणामपि कोणानां मध्ये षोडशसंख्यया ॥ ३६६ ॥

पञ्चविंशतिकोष्ठानि स्थापयित्वा तु पार्श्वतः।
अन्योन्यं लोपयेत् पङ्क्तिमेकैकां तु महामुने ! ॥

एवमापाद्य कुम्भानां पदानि स्थापनार्थतः।
ततः सुगन्धरजसा सितेन सुसमा द्विज ! ॥ ३६८ ॥

अङ्गुष्ठविस्तरोत्सेधा ऋज्वी रेखास्तु कल्पयेत्।
विकीर्य कोष्ठेषु रजः पश्चाद्द्वाराणि पूरयेत् ॥ ३६९ ॥

तेनैव शोभां पीतेन विचित्रैः कुसुमान्वितैः।
लतावृन्दैर्मुनिश्रेष्ठ ! वीथीः सर्वत्र भूषयेत् ॥ ३७० ॥

ततः संगृह्य कलशान् पूर्वलक्षणलक्षितान्।
अष्टोत्तरशतं कृत्वा मूलमन्त्रेण वै घृतम् ॥ ३७१ ॥

गायत्र्या वा ततो द्वारा चतुष्के पूर्वदिक्क्रमात्।
द्वौ द्वौ संस्थाप्य कलशौ कुमुदादीन् प्रपूज्य च ॥

पुष्पैरभ्यर्च्य कोष्ठानि विचित्रैर्मन्त्रमन्त्रितैः।
सर्वधान्यैः प्रयत्नेन कल्पयित्वा तु पीठिकाः ॥ ३७३ ॥

तासु द्वौ द्वौ कुशाग्रौ च निक्षिपेन्मूलमन्त्रतः।
सूत्रेण वेष्टितान् कृत्वा कलशान् पूर्ववद्द्विज ! ॥

गायत्र्या क्षालयित्वा तान्, कोष्ठेषु न्यस्य 'तारतः'।
अधोमुखान् न्यसेत् पृष्ठे परमेष्ठ्यात्मना कुशान् ॥

ततः संप्रोक्षयेत् ‘पुंसा’ पञ्चगव्येन तान् कुशैः ।
‘विद्वेन’ विकिरेत् सर्वानक्षतांश्च तदूर्ध्वतः ॥ ३७६ ॥

उत्तानये ‘त्रिवृत्या’ तान् क्रमाद्यत्नेन वै ततः ।
गालितेन तु तोयेन सुगन्धैश्चन्दनादिकैः ॥ ३७७ ॥

वासितेन तु तान् विप्र! सर्वैणापूरयेत् क्रमात् ।
मध्यैकाशीतिमध्यस्थनवके मध्यकुम्भके ॥ ३७८ ॥

सूर्यकान्तं पद्मरागं वैडूर्यं चन्द्रकान्तकम् ।
अयस्कान्तमिन्द्रनीलं प्रवालं गारुडं तथा ॥ ३७९ ॥

पुष्यरागं स्फाटिकं च ब्रह्मरागं च मेचकम् ।
वज्रं च रजतं चैव मौक्तिकं ताम्रमेव च ॥ ३८० ॥

सर्वाण्येतानि निक्षिप्य तद्वहिर्नवकाष्टके ।
पूर्वादीशानपर्यन्तं मध्यकुम्भेषु वै क्रमात् ॥ ३८१ ॥

द्रव्याणि षोडशैतानि द्वन्द्वयोगेन विन्यसेत् ।
द्विसप्तति च (क) संख्येषु न्यसेच्छेषेषु मौक्तिकम् ॥

पूर्वैकाशीतिमध्यस्थनवके मध्यगोचरे ।
कदलीपनसाम्राणां क्षीरिकाबदराख्ययोः ॥ ३८३ ॥

मातुलङ्गकेसरयोः ह (भ) व्यजम्बीरयोरपि ।
फलानि निक्षिपेत् पश्चात्तद्बहिर्नवकाष्टके ॥ ३८४ ॥

प्रागादीशानपर्यन्तं मातुलङ्गं च दाडिमम् ।
नारङ्गं चापि जम्बीरं तक्कोलं बदरीं तथा ॥ ३८५ ॥

क्षीरिकामलके चैव द्राक्षाखर्जूरके फले ।
आम्रं च सहकारं च पनसस्य फलं तथा ॥ ३८६ ॥

क्षुद्रपूर्वं च पनसं कदलीमोचके तथा ।
क्रमाद्द्वन्द्वप्रयोगेण मध्यकुम्भेषु विन्यसेत् ॥ ३८७ ॥

नवकाष्टककुम्भेषु बदराणि विनिक्षिपेत् ।
उशीरं कुङ्कुमं चैव मांसी मलयजं तथा ॥ ३८८ ॥

मुरं च हरिबेरं च कुष्ठं चागरुमेव च ।
एकाशीतिपदे याम्ये विश्वान्येतानि निक्षिपेत् ॥ ३८९ ॥

मध्ये मध्यस्थकलशे पूर्वादिक्रमयोगतः ।
शेषेषु मध्यकुम्भेषु न्यसेदेकैकजं फलम् ॥ ३९० ॥

विनिक्षिपेन्मलयजमेतेषामष्टकेषु च ।
समुद्रवापीकूपानां तटाकानां ह्रदस्य च ॥ ३९१ ॥

वृष्टीनदीहिमानां च तोयानि प्रतिपादयेत् ।
वारुणे मध्यमे कुम्भे एकैकं शेषमध्यमे ॥ ३९२ ॥

शेषेषु चाष्टवर्गेषु शुद्धोदानि विनिक्षिपेत् ।
यवगोधूमकव्रीहिशालिमुद्गप्रियङ्गुकान् ॥ ३९३ ॥

मापनीवारकौ वापि नवके मध्यमे घटे ।
शेषेषु धान्यमेकैकं मध्यकुम्भेषु च क्रमात् ॥ ३९४ ॥

अष्टकेषु च सिद्धानि तोयानि प्रतिपादयेत् ।
आग्नेयैकोनपञ्चाशन्नवके पूरयेद्घृतम् ॥ ३९५ ॥

पट्केष्वैन्द्रादियोगेन गोमूत्रं गोमयं तथा ।
क्षीरं दधि विनिक्षिप्य कोणेषूष्णोदकं न्यसेत् ॥ ३९६॥

नैर्ऋते मध्यनवके तैलं विन्यस्य तद्बहिः ।
शेषेषु चत्वारिंशत्सु कलशेषु गुलोदकम् ॥ ३९७ ॥

वायव्यनवके मध्ये न्यसेत् तैलं तु सार्षपम् ।
कलशेषु च शेषेषु विन्यसेदैक्षवं रसम् ॥ ३९८ ॥

ईशानैकोनपञ्चाशन्नवके मधु विन्यसेत् ।
शेषेषु नालिकेराम्भः तत्क्षीरं वापि विन्यसेत् ॥

ऐन्द्रादिपञ्चविंशत्सु प्रथमे मध्यमे घटे ।
क्षेत्रतीर्थाब्धिशैलेभ्यः सूकराख्यबिलाद्गजात् ॥

वल्मीकाद्वृषश्रृङ्गाच्च मृदमादाय पूरयेत् ।
शेषेष्वष्टसु चैकैकं, षोडशे गन्धवारि च ॥ ४०१ ॥

सहदेवी वचा चैव शतमूली शतावरी ।
कुमारी च गलूची च सिंही व्याघ्री तथैव च ॥ ४०२॥

द्वितीये मध्यमे कुम्भे विन्यस्य, बहिरष्टके ।
एकैकं प्राक्क्रमेणैव, षोडशे पूर्ववद्भवेत् ॥ ४०३ ॥

न्यग्रोधोदुम्बराश्वत्थजम्बूबिल्वपलाशजैः ।
शिरीषमधुकोत्थैश्च त्वग्भिर्मध्यमं घटम् ॥ ४०४ ॥

तृतीये पूरयित्वाष्टौ व्यस्तैः षोडशपूर्ववत् ।
पलाशबिल्वबकुलकदम्बाम्रशिरीषजान् ॥ ४०५ ॥

न्यग्रोधाश्वत्थजान् क्षिप्त्वा चतुर्थे पल्लवान् घटे ।
मध्यमेऽष्टासु च व्यस्तान् प्राग्वत् षोडश विन्यसेत् ॥
मल्लिकाजातिबकुलनन्द्यावर्तप्रियङ्गुजैः ।
पद्मचम्पककुन्दैश्च पुष्पैरापूर्य मध्यमम् ॥ ४०७ ॥
कलशं पञ्चमव्यस्तैरष्टौ शेषांस्तु पूर्ववत् ।
सिद्धार्थं सर्षपं माषं रोचनां गोसमुद्भवाम् ॥ ४०८ ॥
इन्द्रयवं वेणुयवं शमीश्यामाकबीजके ।
षष्ठे मध्यस्थिते कुम्भे न्यसेदष्टासु च क्रमात् ॥ ४०९ ॥
व्यस्तानि तानि द्रव्याणि प्राग्वत् शेषांस्तु षोडश ।
तिलं वनतिलं चैव जीरकं कृष्णजीरकम् ॥ ४१० ॥
अतसीं शतपुष्पां च कुठारच्छिन्नमेव च ।
कृषिबीजं च विन्यस्य मध्यकुम्भे तु सप्तमे ॥ ४११ ॥
एकैकं वहिरष्टासु प्राग्वत् षोडशसु द्विज ! ।
षष्टिश्यामाकशालीनां नीवारस्य च तण्डुलम् ॥ ४१२ ॥
दूर्वाकुशेन्द्रवल्लीनामङ्कुरान् पिप्पलस्य च ।
न्यसेन्मध्येऽष्टमेऽष्टासु व्यस्तानन्येषु पूर्ववत् ॥ ४१३ ॥
कुशोदीच्येक्षुकाशानामुशीरशरपुङ्खयोः ।
अगर्यपामार्गयोश्च मूलानि नवमे न्यसेत् ॥ ४१४ ॥
कुम्भे मध्यस्थिते, ऽष्टासु व्यस्तानन्येषु पूर्ववत् ।
तुलस्याः कृष्णतुलस्याश्च ग्रन्थिवेणोरपिच्छदाः ॥ ४१५ ॥
भृङ्गराजस्य विल्वस्य शम्याः केतकि, जातयोः ।
दशमे मध्यमेऽष्टासु व्यस्तान् शेषेषु पूर्ववत् ॥ ४१६ ॥
मुस्तानगरमुस्ताख्यकन्दे कुवलयस्य च ।
कुमुदोत्पलयोश्चापि शीतलीयककन्दकम् ॥ ४१७ ॥
कह्लारस्य कशेरोश्च कन्दे एकादशे क्षिपेत् ।
मध्ये कुम्भेषु चैतानि क्रमादन्येषु पूर्ववत् ॥ ४१८ ॥
मुद्गमाषकनिष्पावशिम्बव्रीहियवाङ्कुरान् ।
आढकानां कुलुत्थानामङ्कुरान् द्वादशे क्षिपेत् ॥
मध्यकुम्भेऽष्टके व्यस्तान् प्राग्वत् षोडशसु द्विज ! ।
शङ्खपुष्पी सदाभद्रा विष्णुक्रान्त्येकपत्रयोः ॥ ४२० ॥

बलायाः खरमञ्जर्याः सहायाश्च तथैव च ।
अङ्कुरान् सहदेव्याश्च मध्ये कुम्भे त्रयोदशे ॥ ४२१ ॥
विन्यस्याष्टासु च व्यस्तानन्येषु प्राग्वदाचरेत् ।
श्वेतार्कं ब्रह्मदण्डीं च तथा ब्रह्मसुवर्चलाम् ॥ ४२२ ॥
सरक्तां च विरक्तां च पृश्निपर्णीं स्थिरां तथा ।
एरण्डं चापि विन्यस्य मध्ये कुम्भे चतुर्दशे ॥ ४२३ ॥
अष्टासु तानि व्यस्तानि प्राग्वदन्येषु विन्यसेत् ।
सुरभीं पद्मकिञ्जल्कं नागकेसरमेव च ॥ ४२४ ॥
पत्रमेलात्वचं चैव लतां कस्तूरिकां तथा ।
जातीफलं च वै पञ्च दशमे मध्यसंस्थिते ॥ ४२५ ॥
कुम्भे न्यस्याष्टके व्यस्तं शेषं पूर्ववदाचरेत् ।
सुवर्णं रजतं ताम्रमायसं त्रपु सीसकम् ॥ ४२६ ॥
आरं कांस्यं च विन्यस्य षोडशे मध्यसंस्थिते ।
कलशेऽष्टासु च व्यस्तं प्राग्वत् षोडशसु द्विज ! ॥
एवं द्रव्याणि विन्यस्य क्रमेण सुसमाहितः ।
तत आग्नेयकोणे तु देवस्याराधनार्थतः ॥ ४२८ ॥
अर्घ्यादिद्रव्यनिचयं मधुपर्कं च विन्यसेत् ।
ततो निर्ऋतिकोणे तु सरिद्राशालिपिष्टके ॥ ४२९ ॥
दूर्वामश्वत्थपत्रं च सिद्धार्थं च तथाक्षतम् ।
माल्यानि पूर्णकुम्भं च न्यसेन्नीराजनार्थतः ॥ ४३० ॥
तथाचोद्वर्तनार्थं च चूर्णं गोधूमशालिजम् ।
रजनीचूर्णसंमिश्रमीषत् पद्मकभावितम् ॥ ४३१ ॥
चमरीं च खलिं चैव तथा च मुनिपुङ्गव ! ।
चन्दनं मुखलेपार्थं घृष्टकर्पूरभावितम् ॥ ४३२ ॥
चम्पकैर्मुरमांसीभ्यां हरिबेरैः समन्वितम् ।
पिष्टमामलकं चैव शिरः स्नानार्थकं न्यसेत् ॥ ४३३ ॥
पृथक् पृथक् च पात्रेषु ततो वायव्यकोणके ।
धौतवस्त्रं करण्डं च पुष्पमाल्यादिभाजनम् ॥ ४३४ ॥
तत ईशानकोणे तु शलाकान्यायसानि तु ।
आयसा गुलिकाश्चैव तथा सन्दंशनं द्विज ! ॥ ४३५ ॥

अन्यथद्रुपयोगि स्यात् स्थापयेत् तद्यथारुचि ।
एतदुक्तं समस्तं वा यथाभिमतकोणगम् ॥ ४३६ ॥

मध्यैकाशीतिमध्यस्थनवके मध्यसंस्थिते ।
कुम्भे यजेद्वासुदेवं ततः प्रागादियोगतः ॥ ४३७ ॥

दिक्स्थानां नवकानां तु मध्येषु प्रभवक्रमात् ।
चतुरो वासुदेवादीन् विदिक्स्थानां तु मध्यतः ॥

ईशादिवह्निपर्यन्तं तानेवाप्ययययोगतः ।
मध्ये शुद्धोदकुम्भेषु सत्यं सर्वेषु पूजयेत् ॥ ३३९ ॥

बहिर्दिङ्नवकानां तु शुद्धोदेषु च दिक्क्रमात् ।
सुपर्णं गरुडं चैव तार्क्ष्यं तु विहगेश्वरम् ॥ ४४० ॥

वह्न्यादीशानपर्यन्तं नवकानां चतुष्टये ।
शुद्धोदेषु च तानेव क्रमेण परिपूजयेत् ॥ ४४१ ॥

एकाशीतिषु दिक्स्थेषु पूर्वादिक्रमयोगतः ।
मध्यकुम्भेषु षट्त्रिंशत्संख्यातेषु यथाक्रमम् ॥ ४४२ ॥

पद्मनाभादयो विप्र ! देवा वेदविदन्तिमाः ।
पूज्या नवकयुक्त्या तु मध्यादिशानपश्चिमम् ॥ ४४३ ॥

मध्ये शुद्धोदकुम्भेषु यजेत् कल्किस्वरूपिणम् ।
बहिर्नवकशुद्धोदकलशेषु यजेत् प्रभुम् ॥ ४४४ ॥

पातालशयनाख्यं तु, पश्चादग्निदिगादितः ।
चतुर्षु कोणेष्वेकोनपञ्चाशन्नवकेषु च ॥ ४४५ ॥

मध्येषु केशवादीनां क्रमात् त्रिकचतुष्टये ।
आद्यान्, दिक्स्थेषु कुम्भेषु द्वितीयांस्तु चतुर्ष्वपि ॥

विदिक्स्थेषु तृतीयांश्च षट्कं षोडशके क्रमात् ।
चक्रादिवज्रपर्यन्तमस्त्रषोडशकं यजेत् ॥ ४४७ ॥

कोणस्थेषु चतुष्केषु न्यसेच्छक्तिं ततः परम् ।
ऐन्द्री दक्षिणतः पञ्चविंशतौ प्रथमे यजेत् ॥ ४४८ ॥

सर्वसम्पत्प्रदां लक्ष्मीं मध्यकुम्भेषु तद्बहिः ।
अष्टासु पुष्टिं तद्बाह्ये कान्तिं षोडशके द्विज ! ॥ ४४९ ॥

एवमाद्येषु चान्येषु पञ्चविंशतिषु क्रमात् ।
प्रभादीनां च शक्तीनां त्रितयं त्रितयं यजेत् ॥ ४५० ॥

तत्रापि पञ्चदशमे बहिः षोडशके न्यसेत् ।
किरीटं, मन्ति मे पञ्चविंशतौ त्रितयं यजेत् ॥४५१॥

श्रीवत्सकौस्तुभं चापि वनमालां तथैव च ।
वासुदेवादिमन्त्रैस्तु वनमालान्तिमैः क्रमात् ॥ ४५२ ॥

अष्टाविंशतिसंख्यं तु हुत्वाज्यं तु (चा) यथारुचि ।
पूर्णान् दत्वा ततः कुम्भान् संपातविधिना स्त्रवेत् ॥

पिधाय चक्रिकाभिस्तु सर्वानुक्तक्रमेण तु ।
वासोभिश्छादयेत् पश्चान्नूतनैस्तु पृथक् पृथक् ॥

भूयः पूर्णाहुतिं दत्वा दिक्षु भूतबलिं हरेत् ।
मृदादिसर्वरत्नान्तमुद्धारक्रम इष्यते ॥ ४५५ ॥

पूर्वं विष्णोर्नुकमिति मन्त्रेण च महामते ! ।
पूर्वादीशानपर्यन्तं मृत्कुम्भैरभिषिच्य च ॥ ४५६ ॥

सर्वमृत्कलशेनैव मध्यस्थेन ततो बहिः ।
कुम्भैःषोडशभिर्विप्र ! प्रागादिक्रमयोगतः ॥ ४५७ ॥

एवमेव क्रमः सर्वपञ्चविंशतिषु द्विज ! ।
"प्रतद्विष्णुरि"त्यनेन मूलाद्भिरभिषेचयेत् ॥ ४५८ ॥

"प्रतत्ते विष्णुवास" इति कषायैरन्विताम्बुभिः ।
यस्य "त्रिपूर्ण" त्येतेन कलशैः पल्लवान्वितैः ॥

"तदस्ये" ति च मन्त्रेण पुष्पैरापूरितैर्घटैः ।
"तावा"मिति च मन्त्रेण सिद्धार्थादिसमन्वितैः ॥

"प्रचः पान्तमि" त्येतेन तिलाद्यन्वितवारिभिः ।
"परो मात्रे" तिमन्त्रेण पद्म्यादिद्रव्यवारिभिः ॥

"न ते विष्णो" रित्यनेन कुशमूलान्विताम्बुभिः ।
"इरावती" ति मन्त्रेण तुलस्यादिजलैस्ततः ॥ ४६२ ॥

"अतो देवे"ति मन्त्रेण मुस्ताकन्दादिसंयुतैः ।
"इदं विष्णुरि"त्यनेन मुद्गाद्यङ्कुरपूरितैः ॥ ४६३ ॥

"त्रीणि पदे" ति मन्त्रेण शङ्खपुष्पादिवारिभिः ।
"विष्णोः कर्माणी"त्यनेन श्वेतार्काद्यम्बुभिस्ततः ॥

"तद्विष्णो" रिति मन्त्रेण सुरभ्यादिजलैस्ततः ।
"तद्विप्रास" इत्यनेन स्नापयेल्लोहवारिभिः ४६५ ॥

प्रागेकाशीतिकलशैः स्नापयेत् क्रमयोगतः।
पूर्वादिमध्यपर्यन्तनवके स्नपनक्रमः ॥ ४६६ ॥

ऐन्द्रेण नवकेनादावुरुयज्ञाय इत्यृचा।
"इन्द्राविष्णू दृंहिते" ति वह्निदिक्संस्थितेन च ॥

"इयं मनीषे" ति याम्येन नवकेनाभिषेचयेत्।
"वषट् ते विष्णुवासे" ति नैर्ऋतेन ततः परम् ॥

"तिस्रोवाच" इत्यनेन वारुणेन महामते!।
"योवर्ध ओषधि" मन्त्रेण वायव्यनवकेन तु ॥४६९॥

"स्तरीरत्वद्भवती" ति सौम्येन नवकेन तु।
ईशानदिक्स्थितेनैव यस्मिन् विश्वंति चेत्यृचा ॥

"इदं वचः पर्जन्याये"ति स्नापयेन्मध्यमेन तु।
याम्यैकाशीतिकलशैस्ततः संस्नापयेद्विभुम् ॥ ४७१ ॥

"सहस्रशीर्षं देव "मिति मन्त्रपुरस्सरैः।
"सन्ततं सिराभि "रितिपर्यन्तैश्च क्रमेण तु ॥ ४७२ ॥

अष्टमन्त्रैर्मुनिश्रेष्ठ! प्रागादिनवकाष्टकैः।
एतैरेव समस्तैस्तु स्नापयेन्मध्यमेन तु ॥ ४७३ ॥

एकाशीत्या तु वारुण्या कलशैरभिषेचयेत्।
"समुद्रज्येष्ठा" इत्यनेन पूर्वादिनवकेन तु ॥ ४७४ ॥

वापीकूपतटाकाब्धिर्हृदवृष्टिसमुद्भवैः।
"या आपो दिव्या" इति मन्त्रेणैवाभिषेचयेत् ॥

नवस्मभसा स्नापनीत "यासां राजे" त्यृचा ततः।
"यासु राजे "ति मन्त्रेण हिमतोयेन वै ततः ॥

समुद्रज्येष्ठपूर्वैस्तु चतुर्भिर्मध्यमेन तु।
ततोऽभिषिञ्चेत् सौम्यैकाशीतिकुम्भैः क्रमेण तु ॥

"यदिमा" इति मन्त्रेण शाक्रेण नवकेन तु।
"यस्यौषधि" रित्येतेन वह्निदिक्संस्थितेन तु ॥

"साकं यक्ष्मे" ति याम्येन "अन्यावो" इति नैर्ऋते।
"याः फलिनी "ति मन्त्रेण वारुण्यां नवकेन तु ॥

"मुञ्चतु मा शपथ्या "दिति वायुदिङ्नवकेन तु।
"आपः पुनन्त्वित्य "नेन सोमदिक्संस्थितेन तु ॥

"ओषधीः सोमराज्ञी" ति मन्त्रैणैशानकेन तु।
"या ओषधीस्सोमराज्ञी विष्ठिता" इति मध्यतः ॥

ततोऽन्यैकोनपञ्चाशत्कलशैरभिषेचयेत्।
गायत्र्या चैन्द्रषट्केन "गन्धद्वारे" ति याम्यतः ॥

"पयस्वतीरोषधय" इति षट्केन पश्चिमे।
"दधिक्राव्ण" इत्यृचा सौम्यषट्केन तत्परम् ॥

सम्यक स्रवन्ति सरितः सूक्तेनैव घृतेन च।
नैर्ऋतैकोनपञ्चाशत्कलशैरभिषेचयेत् ॥ ४८४ ॥

"तेजोसी "त्यादियजुषा तैलेन स्नापयेत्ततः।
द्वादशाक्षरमन्त्रेण प्राक्क्रमेण गुडोदकैः ॥ ४८५ ॥

"तेजसीत्यादि" मन्त्रेण वायौ तैलैस्तु सार्षपैः।
द्वादशार्णाख्यमन्त्रेण सर्वैरिक्षुरसैस्ततः ॥ ४८६ ॥

मधुवातादिभिर्मन्त्रैः कलशैर्मधुपूरितैः।
पूर्वोदितेन मन्त्रेण नालिकेरजलैः क्रमात् ॥ ४८७ ॥

तेनैवोष्णजलैः पश्चाद्वह्न्यादीशानपश्चिमम्।
सुतप्तायोगुडक्षेपात् सञ्जातोष्णैस्तदैव तु ॥ ४८८ ॥

उद्वर्तयेत्ततो देवं "द्रुपदा "दीति मन्त्रतः।
शिरस्यामलकं दद्या"न्मानस्तोके "ति मन्त्रतः ॥४८९॥

प्रक्षाल्य शुद्धतोयैश्च बहुभिश्च सुगन्धिभिः।
मध्यैकाशीतिकलशैस्ततः संस्नापयेत् क्रमात् ॥

"सहस्रशीर्षं" त्यनया ऋचैन्द्रीनवकैर्घटैः।
अष्टाभिरष्टदिक्संस्थैर्मध्यमेन द्वितीयया ॥ ४९१ ॥

द्वाभ्यां द्वाभ्यां तथा ऋग्भ्यां क्रमान्नवकसप्तकैः।
पौरुषेण तु सूक्तेन समस्तेन शनैः शनैः ॥ ४९२ ॥

स्नापयेद्देवदेवेशं मध्यस्थनवकेन तु।
यद्वा "सर्वस्य वशिन" मित्याद्यैर्मनुभिः क्रमात् ॥

महोपनिषदन्तस्थैः दिक्स्थितैः कलशाष्टकैः।
"एक एव नारायण" इति मध्यगतेन तु ॥ ४९४ ॥

यद्वा द्विषट्कमन्त्रेण सर्वकुम्भैः क्रमेण तु।
मृदादि सर्वरत्नान्तं स्नापयेद्द्विजसत्तम! ॥ ४९५ ॥

उद्धार एवं कथितः शृणु कर्मक्रमं द्विज ! ।
प्रभाते तु कृतस्नानः कृतकौतुकमङ्गलः ॥ ४९६ ॥

देशिकेन्द्रस्तथाऽन्यैश्च देशिकैश्च समन्वितः ।
प्रासादं संप्रविश्याथ नित्यं निर्वर्त्य पूर्ववत् ॥ ४९७ ॥

यागमण्डपमासाद्य रजोभिः पूर्य मण्डलम् ।
कुम्भमण्डलयोरिष्ट्वा प्रासादं संप्रविश्य च ॥ ४९८ ॥

ततस्त्वर्घ्यादिभिर्भोगैः मूलबिम्बं तु पूजयेत् ।
तस्मात् स्नपनबिम्बे तु समावाह्य तथैव च ॥ ४९९ ॥

इष्ट्वालंकृत्य विविधैर्वस्त्रैर्माल्यैश्च भूषणैः ।
शिबिकादौ समारोप्य सर्वालङ्कारसंयुतम् ॥ ५०० ॥

पूर्वोक्तवर्त्मना विप्र ! निनयेत् स्नानमण्डपम् ।
स्नानपीठे समारोप्य पूर्वोदितविधानतः ॥ ५०१ ॥

यथाक्रमं समभ्यर्च्य यावदात्मनिवेदनम् ।
ततस्तु देवदेवस्य कुर्यात् कौतुकबन्धनम् ॥ ५०२ ॥

देवस्य पुरतः कुर्याच्छकृता मण्डलं शुभम् ।
पिष्टचूर्णैरलंकृत्य न्यसेत् कोणेषु पालिकाः ॥ ५०३ ॥

व्रीहिभिः पीठिकां कृत्वा तदूर्ध्वं विनिवेशयेत् ।
हैमं वा राजतं पात्रं पूरितं शालितण्डुलैः ॥ ५०४ ॥

खारिमानैस्तदर्धैर्वा ताम्बूलैश्च विभूषितम् ।
तदूर्ध्वं विन्यसेत् सूत्रं पट्टजं तु चतुर्गुणम् ॥ ५०५ ॥

मन्त्रयित्वास्त्रमन्त्रेण संपूज्य कुसुमैरपि ।
तत् पात्रं शिरसि स्थाप्य परिचर्यापरस्य च ॥ ५०६ ॥

शिष्यस्य मण्डपं पश्चाच्चतुष्कुर्यात् प्रदक्षिणम् ।
सर्वमङ्गलसंयुक्तं प्रासादाभ्यन्तरे यदि ॥ ५०७ ॥

प्रथमावरणे वापि द्वितीयावरणेऽथवा ।
प्रदक्षिणचतुष्कं तु कुर्याद्वा संकटे द्वयम् ॥ ५०८ ॥

देवस्याग्रे तु तत्पात्रमाधारस्योपरि न्यसेत् ।
कृत्वा पुण्याहघोषं तु देवमर्घ्यादिभिर्यजेत् ॥ ५०९ ॥

ततः प्रतिसरं चेष्ट्वा गन्धधूपाधिवासितम् ।
कौतुकं देवदेवस्य बन्धयेद्दक्षिणे करे ॥ ५१० ॥

संपूज्यार्घ्यादिभिर्भूयस्ताम्बूलैस्तोषयेद्द्विजान् ।
दीक्षितान् वैष्णवांश्चापि देशिकेन्द्रपुरस्सरान् ॥

आचार्यः स्वयमादद्यात्तदर्धं तण्डुलादिकम् ।
एवं सर्वेषु यागेषु कार्यं कौतुकबन्धनम् ॥ ५१२ ॥

कुम्भानां विहितं कर्म न कृतं यदि च पुरा ।
कथा त्वनुपपत्त्या तु तदा तत् सर्वमाचरेत् ॥ ५१३ ॥

स्नानासनोदितैर्भोगैः मुखलेपान्तिमैः क्रमात् ।
पूजयित्वा ततः कुम्भैः स्नापयेदुक्तवर्त्मना ॥ ५१४ ॥

सर्वेषामपि कुम्भानां स्नानशेषं तु पूरयेत् ।
घटान्तरं तु द्रव्याणामन्तरान्तरयोगतः ॥ ५१५ ॥

शुद्धाम्भसा स्नापयित्वा वस्त्रेणार्घ्यादिभिर्यजेत् ।
एवं सुस्नाप्य विधिवद्रजनीचूर्णपूरितैः ॥ ५१६ ॥

कौतुकोक्तेन मार्गेण पुरस्तादधिवासितैः ।
पञ्चविंशतिभिः कुम्भैर्नवभिः पञ्चभिस्तु वा ॥ ५१७ ॥

एकेन वापि तच्चूर्णं द्विषट्कब्रह्मविद्यया ।
प्रदद्यान्मूर्ध्नि देवस्य भूयश्चार्घ्यादिभिर्यजेत् ॥ ५१८ ॥

सर्वाङ्गं परिमृज्याथ भक्तानां मूर्ध्नि दापयेत् ।
विष्वक्सेनस्य दत्वा तु तन्मन्त्रेण ततो द्विज ! ॥

सहस्रधारास्नपनमाचरेच्छुद्धवारिभिः ।
सचन्दनादिकं दत्वा ततः पीठात्ततः प्रभुम् ॥ ५२० ॥

अलङ्कारासनं नीत्वा आसनादिक्रमाद्यजेत् ।
भोगैः सांस्पर्शिकैः प्राग्वद्विविधैरौपचारिकैः ॥

हृदयङ्गमसंज्ञैश्च विचित्रैश्च मनोहरैः ।
एवं द्विजप्रदानान्तं होमान्तं वा प्रपूज्य च ॥ ५२२ ॥

शिबिकादौ समारोप्य पूर्ववत् संप्रवेशयेत् ।
प्रदक्षिणक्रमेणैव प्रासादाभ्यन्तरं ततः ॥ ५२३ ॥

तत्रावरोप्य तद्बिम्बं स्वस्थाने सन्निवेश्य च ।
इष्ट्वाचार्घ्यादिभिर्भोगैः मूलबिम्बं तथैव च ॥ ५२४ ॥

समार्प्य च कृतं कर्म कुर्याच्चैव विसर्जनम् ।
ततश्चोत्सवबिम्बं तद्विचित्रैर्वसनैस्तथा ॥ ५२५ ॥

ततश्चोत्सवबिम्बं तद्विचित्रैर्वसनैस्तथा ।
अनेकैर्भूषणै रम्यैर्माल्यैश्च सुसुगन्धिभिः ॥ ५२७ ॥
अलंकृत्य समारोप्य शिबिकां संप्रवेशयेत् ।
आस्थानमण्डपं सम्यगुत्सवोदितवर्त्मना ॥ ५२८ ॥
तत्रावरोप्य यानाद्य सौवर्णे वितते शुभे ।
भद्रासनेऽथवा विप्र! विचित्रास्तरणान्विते ॥ ५२९ ॥
यथाक्रमोदितेनैव वर्त्मना संप्रपूजयेत् ।
सांस्पर्शादिकैर्भोगैर्विविधैस्तु विशेषतः ॥ ५३० ॥
महाहविर्निवेद्याथ कृत्वा सर्वं क्रमेण तु ।
द्विजप्रदानपर्यन्तमग्नौ सन्तर्पयेत् क्रमात् ॥ ५३१ ॥
समर्पणादिकं सर्वं कृत्वा देवं जगत्पतिम् ।
समारोप्य च यानादौ सर्वमङ्गलसंयुतम् ॥ ५३२ ॥
प्रवेशयेत्तु प्रासादं यानादेरवरोप्य च ।
स्वस्थाने सन्निवेश्याथ अर्घ्यगन्धादिभिर्यजेत् ॥ ५३३ ॥
मूलबिम्बं तथाभ्यर्च्य कृतं कर्म समर्पयेत् ।
स्नानशेषेण तोयेन कुम्भस्थेन क्रमेण तु ॥ ५३४ ॥
द्वारस्थान् सकलान् देवांस्तथा चावरणस्थितान् ।
बलिदानक्रमेणैव संप्रोक्ष्य परिपूज्य च ॥ ५३५ ॥
बलिं च दत्वा शेषेण गणेशमभिषिच्य च ।
पूजयेदर्घ्यगन्धाद्यैरथवा ह्यनुकल्पके ॥ ५३६ ॥
पूजावसाने देवस्य स्नपनव्यक्तिगस्य तु ।
प्रोक्षणं देवतानां च गणेशस्याभिषेचनम् ॥ ५३७ ॥
आचरेत् क्रमयोगेन, यजमानस्ततो द्विज ! ।
आचार्यान् साधकांश्चैव तोषयेद्विविधैर्धनैः ॥ ५३८ ॥

अन्यांश्च वैष्णवान् सर्वान् यथाशक्ति च तोषयेत् ।
अनिवारितमन्नाद्यं सार्वजन्यं तु कारयेत् ॥ ५३९ ॥
एवमेव हि सर्वेषु स्नपनेषु क्रियाक्रमः ।
प्रोक्षणं परिवाराणां बलिदानं च वर्जयेत् ॥ ५४० ॥
महाहविर्विधानं च विभवे सति कल्पयेत् ।
प्रधानादिक्रमेणैव स्नपनानां तु पञ्चकम् ॥ ५४१ ॥
कुर्यान्नित्यविधौ विप्र ! तथा नैमित्तिकेऽपि च ।
ततस्तु सूक्ष्मसूक्ष्मादिस्थूलस्थूलान्तपञ्चकम् ॥ ५४२ ॥
चातुरात्म्यादिदेवानां कार्यं स्थापनकर्मणि ।
अयने विषुवे चैव ग्रहणे सोमसूर्ययोः ॥ ५४३ ॥
स्नपनं मुख्यकल्पे तु कुर्याद्वाचोत्तमोत्तमम् ।
अनुकल्पे तु तन्मध्यं, तन्न्यूनादि चतुष्टयम् ॥ ५४४ ॥
अयनद्वयमध्यस्थसंक्रान्तिद्विचतुष्टये ।
आवृत्तिक्रमयोगेन कल्पयेन्मुनिपुङ्गव ! ॥ ५४५ ॥
उत्सवारम्भदिवसे तदन्ते च समारभेत् ।
अधमोत्तमसंज्ञं तु तन्मध्यं वानुकल्पके ॥ ५४६ ॥
महाहविर्विधाने तु तन्न्यूनं तु समाचरेत् ।
देशकालानुरूपेण द्वितीयं नवकं तु वा ॥ ५४७ ॥
तृतीयं वा चतुर्थं वा कल्पयेत्तु यथाक्रमम् ।
प्रायश्चित्तेषु कार्येषु सर्वाण्येतानि कल्पयेत् ॥ ५४८ ॥
तेषु स्नपनभेदं तु वक्ष्याम्युपरि विस्तृतम् ।
स्नपनानां विधानं तु दिव्यशास्त्रोक्तवर्त्मना ।
यथावत् कथितं सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥ ५४९ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे स्नपनविधानं नाम चतुर्दशोऽध्यायः ॥

श्रीः

# पञ्चदशोऽध्यायः ॥

सनक :—

स्वयं व्यक्तविमानस्य प्रादुर्भावप्रसङ्गतः ।
प्रतिष्ठा सूचिता ब्रह्मन्! विस्तरेणाद्य मे वद ॥ १ ॥

शाण्डिल्य : —

श्रूयतामभिधास्यामि यदर्थं चोदितस्त्वया ।
पौष्कराख्ये महाशास्त्रे प्रोक्ता भगवता स्वयम् ॥ २ ॥

प्रतिष्ठा वासुदेवेन पौष्करस्य महात्मना ।
सुविस्तरेण सर्वत्र प्रकीर्णा बहुधा स्थिता ॥ ३ ॥

सर्वत्र सारमुद्धृत्य तत्प्रसादाद्वदामि ते ।
[1]आद्यवेदोद्भवैर्दिव्यैः साक्षात् सद्ब्रह्मवाचकैः ॥ ४ ॥

मन्त्रैर्बलादिकैर्योक्ता प्रतिष्ठा तत्पदप्रदा ।
[2]सिद्धान्तोक्तेन मन्त्रेण साङ्गेनैव बलादिकैः ॥ ५ ॥

स्थापना या तु सा प्रोक्ता भोगमोक्षफलप्रदा ।
[3]साङ्गेन मूलमन्त्रेण ज्ञानध्यानान्वितेन च ॥ ६ ॥

प्रतिष्ठा विहिता ब्रह्मन्! मन्त्रसिद्धिफलप्रदा ।
[4]एकायनाख्यवेदोक्तैर्मन्त्रैरन्यैस्त्रयीमयैः ॥ ७ ॥

सिद्धान्तोक्तेन मन्त्रेण, साङ्गेन क्रियते च या ।
[5]सा सार्धमैहिकैर्भोगै, रणिमादिफलप्रदा ॥ ८ ॥

दिव्यैर्बलादिकैर्मन्त्रैः सह चान्यैस्त्रयीमयैः ।
स तु षाड्गुण्यफलदा सह यज्ञफलैर्भवेत् ॥ ९ ॥

सह ऋक्सामपूर्वैस्तु मन्त्रैः स्वव्याप्तिसंयुतैः ।
साङ्गेन मूलमन्त्रेण स्थापना या महामते ! ॥ १० ॥

सा सर्वभोगदा चान्ते तथा मन्त्रफलप्रदा ।
केवलैः श्रुतिमन्त्रैस्तु यथावसरलक्षणैः ॥ ११ ॥

धारणा भगवद्ध्यानमन्त्रन्यासेन वै सह ।
देशिकेन्द्रेण या कार्या भक्तानां परमेश्वरे ॥ १२ ॥

सामान्या सा परिज्ञेया यज्ञवत् सर्व(स्वर्ग)भोगदा ।
कालक्रमादकामानां सर्वाः परफलप्रदाः ॥ १३ ॥

इति मन्त्रविभेदेन सप्तधा परिकीर्तिता ।
द्विजेन्द्रो भगवद्याजी तद्भक्तस्तन्मनाः सदा ॥ १४ ॥

निर्द्वन्द्वो नित्यसत्त्वस्थो द्विषट्काध्यात्मचिन्तकः ।
वेत्ता यो व्यूहपूर्वस्य व्यक्तस्य परमात्मनः ॥ १५ ॥

बलादिदिव्यमन्त्रेषु यस्य निष्ठा परा स्थिता ।
सन्न्यासं कर्मणां यस्तु करोत्यध्यक्षतः क्रमात् ॥ १६ ॥

नित्यसिद्धे तदाकारे तत्परत्वे च सर्वदा ।
यस्यास्ति सक्तिर्हृदये तस्यासौ सन्निधिं भजेत् ॥१७॥

मन्त्ररूपी जगन्नाथः परमात्माच्युतः प्रभुः ।
अतस्तेन प्रतिष्ठानं कृतं मुख्याधिकारिणा ॥ १८ ॥

विद्धि तन्मुख्यकल्पं तु प्रतिष्ठोक्तफलप्रदम् ।
प्राक् त्रयीधर्मनिष्ठो यः प्राप्तदीक्षो जितेन्द्रियः ॥ १९ ॥

मन्त्रज्ञः कर्मकुशलः पञ्चरात्रार्थतत्त्ववित् ।
स्थापनं यत् कृतं तेन ह्यनुकल्पं च विद्धि तत् ॥ २० ॥

परात्परस्वरूपस्य परस्य चतुरात्मनः ।
शान्तोदितादिव्यूहानां केशवाद्यखिलस्य च २१ ॥

तथा विभवमूर्तीनामेकाकारस्वरूपिणः ।
तथा च सर्वजगतामेकबीजात्मकस्य च ॥ २२ ॥

सदोदितस्वरूपस्य वासुदेवस्य वै विभोः ।
त्रयाणामच्युतादीनां तद्भेदानां तथैव च ॥ २३ ॥

शान्तोदितस्वरूपस्य परस्य चतुरात्मनः ।
या तु सन्धानरूपा सा "प्रतिष्ठेति" प्रकीर्तिता ॥२४॥
पीठब्रह्मशिलाज्ञानस्तम्भस्य चतुरात्मनः ।
चतुर्दिग्वीक्षमाणस्य या तु सन्धानलक्षणा ॥ २५ ॥
बोद्धव्या "सुप्रतिष्ठा" च दिग्व्यूहपरिपूरिका ।
धृतिशक्तिः स्वरूपेण त्वमूर्तेनाव्ययात्मना ॥ २६ ॥
स्थितये प्रक्रियार्थं च "ब्रह्मपाषाणतां" गता ।
सर्वब्रह्मशिलानिष्ठमाक्षितेर्द्विजसत्तम ! ॥ २७ ॥
व्याप्तमामूलतश्चैव तेनामूर्तेन वै पुरा ।
द्रव्यमूर्तिरमूर्ता च गृहीता स्तम्भलक्षणा ॥ २८ ॥
अनुग्रहार्थं वर्णानां स्थित्यर्थं दिक्क्रमस्य च ।
अधोर्ध्वाभ्यां विभागार्थं सिद्धये पुनरेव हि ॥ २९ ॥
तात्वस्य विम्बपीठस्य जडत्वविनिवृत्तये ।
सम्यक् संवित्तिलाभार्थं तत्वानां भिन्नरूपिणाम् ॥३०॥
युक्तिः परिगृहीता च चातुरात्म्यैकलक्षणा ।
एकस्याच्युतवीजस्य भिन्नेषु प्रतिवस्तुषु ॥ ३१ ॥
संस्थिा स्थितिरच्छिन्ना सा "प्रतिष्ठान्त" एव हि ।
ज्ञानस्तम्भाविभक्तानामेतेषां चतुरात्मनाम् ॥ ३२ ॥
चतुर्दिग्वीक्षमाणानां स्थापना या समीरिता ।
एकदिग्वीक्षितानां च स्थापितानां च पङ्क्तितः ॥३३॥
सा त्र "प्रतिष्ठा" विज्ञेया पूर्ववद्द्विजसत्तम ! ।
भिन्नानां व्यूहमूर्तीनां केशवाद्यखिलस्य च ॥ ३४ ॥
प्रादुर्भावसमूहस्य ह्यथादिकस्य च यद्द्विज ! ।
एकस्मिन् विम्बपीठे तु स्थितिरेकस्य चेच्छया ॥ ३५ ॥
प्रतिष्ठाख्यं "विशेषं तु स्थापनं" समुदाहृतम् ।
चिच्छक्तेरनुविद्धं च अव्यक्तं तत्वविग्रहम् ॥ ३६ ॥
दिव्यमूर्तौ चलाख्ये तु नित्यमेकात्मताधिया ।
विम्बसंस्कारकाले तु अधिवासाभिधे द्विज ! ॥ ३७ ॥
अचलत्वेन सन्मन्त्रैश्चलभावेन वा पुनः ।
साङ्गं सलाञ्छनं चैव कामाद्याभिमतास्तु वै ॥ ३८ ॥

आराधनार्थं हृदयान्न्यस्तं तद्धृदये पुनः ।
समाहरेत् कृतार्थत्वान्नित्यं कालान्तरेण वा ॥ ३९ ॥
सुबोधपरिणामेन सत्वेनाऽऽनिर्मलेन च ।
कालसत्ता इयत्ताख्या परिच्छेदवशात् स्मृता ॥४०॥
तमा "स्थापनसंस्थं च विशेषं" समुदीरितम् ।
संपन्ने ब्रह्मपाषाणसंस्कारे पैठिकेऽपि च ॥ ४१ ॥
उद्वर्तनाभ्यञ्जनेन मृद्भूतीर्गोमयादिना ।
शिल्पिदोषोपशमने स्नानमात्रे कृते सति ॥ ४२
निष्पन्ने नेत्रदाने तु स्नाने संपादिते परे ।
उत्थाप्य मूर्तिपार्थैस्तु गुरुणा बहुभिर्बलात् ॥ ४३ ॥
निवेशनममन्त्रं यद्विधिवत् साम्प्रतं कृतम् ।
तृतीयं वज्रलेपेन नित्यमेकात्मना द्विज ! ॥ ४४ ॥
प्राप्ते लग्नोदये मन्त्रन्यासमाचरणात्तु वै ।
चिच्छक्तेरनुसन्धानात् तत् "स्थितस्थापनं" तथा ॥
प्रासादान्तरभित्तीनां लिखितं चाम्बरादिके ।
सिद्ध्यर्थं साधकेन्द्रैस्तु सिद्धिकालावधिं तु वै ॥ ४६ ॥
चलविम्बस्य यन्मन्त्रन्यासं वै सासनस्य च ।
नित्यमाराधनार्थं तु कर्मार्चायामपि द्विज ! ॥ ४७ ॥
तदपि प्रचलाख्यं तु स्थितस्थापनमेव च ।
क्ष्माभङ्गैर्जलपूर्वैस्तु दोषैर्या चातिदूषिता ॥ ४८ ॥
उद्धृत्य योजितान्यत्र स्थाने तु शुभलक्षणे ।
सम्यक् संस्थापनाद्भूयः "संस्थापन"मुदाहृतम् ॥
विद्युत्प्रपातपूर्वैस्तु दोषैर्या चातिदूषिता ।
तदुत्थाने कृते शश्वन्निर्दोषे चासने सति ॥ ५० ॥
तत्समा लक्षणाढ्या च प्रतिमाद्या महामते ! ।
अन्यस्मिन् वा नवे पीठे विधिवत् परियोजिता ॥ ५१ ॥
बोद्धव्यं तद्विशेषं च "स्थापनोत्थापनं" तु वै ।
आदिमूर्त्यादिभेदेन चलाचलविभागतः ॥ ५२ ॥
प्रतिष्ठादिविशेषास्तु अष्टधा परिकीर्तिताः ।
आदिमूर्त्यादिमूर्तीनां भोगपर्यङ्कशायिनाम् ॥ ५३ ॥

या तु पीठे मुनिश्रेष्ठ! विधिवत् परियोजना।
"संस्थापना" च विज्ञेया, तथा "चाऽऽस्थापना"
आसीनानां स्थितानां तु स्थापना समुदीरिता।[भवेत्॥
"प्रस्थापना" सुपर्णस्थमूर्तीनां परिकीर्तिता ॥ ५५ ॥

शयनादिविभेदेन चतुर्धा परिकीर्तिता।
भूयश्च द्विविधं विद्धि बेरैकत्वबहुत्वतः ॥ ५६ ॥

शिलया मणिना वापि लोहैर्वापि कृता तु या।
नित्यादिसकलस्नानविषया, रहिता सदा ॥ ५७ ॥

कर्मार्चयापि देवीभिः स्थिताप्यासीनतां गता।
स्थाप्यते केवला मूर्तिः "एकबेरं" तु विद्धि तत् ॥

मृद्दारुजं तु यद्बिम्बं कर्मार्चादिसमन्वितम्।
नित्यादिसर्वस्नानार्थं शक्तिभिः सहितं न वा ॥ ५९ ॥

मणिवज्रादिशैलोत्थं निमित्तस्नपनक्षमम्।
सदा तु नित्यस्नानार्थं कर्मार्चासहितं तु यत् ॥ ६० ॥

बृहद्बिम्बं तु लक्ष्म्यादिसहितं रहितं तु वा।
नित्यनैमित्तिकाद्युक्तसकलस्नपनक्षमम् ॥ ६१ ॥

लक्ष्म्यादिभिः समोपेतं यद्बिम्बं शक्तिभिः सदा।
तदेतत्त्रिविधं विद्धि "बहुबेरं" महामते! ॥ ३२ ॥

यत्तु चित्रमयं बिम्बं भित्तिकाष्ठाम्बराश्रयम्।
कर्मबिम्बसमोपेतं नित्यादिस्नानकर्मणि ॥ ६३ ॥

यच्चापि मृण्मयं बिम्बं द्विविधं चापि चित्रजम्।
नित्यनैमित्तिकस्नाने दर्पणादिसमन्वितम् ॥ ६४ ॥

कर्मबिम्बान्वये योऽयं विभवेच्छानुसारतः।
एतच्चतुर्विधं विद्धि "बहुबेरविशेषकम्" ॥ ६५ ॥

बहुबेरं यथायोगं स्थितमासीनमेव वा।
शयानं यानगं वापि भवेदिच्छानुरूपतः ॥ ६६ ॥

बहुबेरादिभेदास्तु पञ्चधा परिकीर्तिताः।
अन्यानि कर्मबिम्बानि यात्राबिम्बपुरस्सरम् ॥ ६७ ॥

तत्तत्कर्मविशेषार्थं बहुबेरैकबेरयोः।
द्वयोश्च कल्पनीयानि विभवस्यानुरूपतः ॥ ६८ ॥

साधारं सर्वमूर्तीनां प्रति (अधि)ष्ठानक्रमं शृणु।
यथोक्तलक्षणोपेतं प्रासाद बिम्बसंयुतम् ॥ ६९ ॥

यथाभिमतदिग्वक्त्रं निश्चयीकृत्य वै पुरा।
भूभागे सति वै कुर्यात्तदग्रे यागमण्डपम् ॥ ७० ॥

दिक्त्रये तदभावात्तु तदभावाद्विदिक्षु वा।
यथाभिमतदेशेषु सौम्ययाम्यदिगायतम् ॥ ७१ ॥

आनुगुण्य, ऽऽयशुद्धं च शुभं निर्बाधमुच्छ्रितम्।
त्रिपञ्चाशत्करायामं षोडशाङ्गुलसंमितम् ॥ ७२ ॥

द्विसप्तकरविस्तारं विभवेच्छानुसारतः।
हस्तद्वादशविस्तीर्णं षट्चत्वारिंशदायतम् ॥ ७३ ॥

द्विचतुष्काङ्गुलैर्युक्तमष्टत्रिंशत्करायतम्।
विस्तृतं दशभिर्हस्तैरथवा द्विजसत्तम! ॥ ७४ ॥

चतुस्त्रिंशत्करं सार्धमायामं नवविस्तृतम्।
द्विरष्टाङ्गुलसंयुक्तं त्रिंशत्करसमायतम् ॥ ७५ ॥

विस्तृतं चाष्टभिर्हस्तैरेवं पञ्चविधं भवेत्।
सप्तषट्पञ्चहस्तं च तथा सार्धं चतुष्करम् ॥ ७६ ॥

चतुर्हस्तं भवेत् पीठं क्रमान्मण्डपपञ्चके।
मण्डपे मण्डपे कुर्यात् पार्थिवं पीठपञ्चकम् ॥ ७७ ॥

स्वविस्तृतेः षडंशेन सर्वेषां परिवर्ज्य च।
अन्तरालानि विप्रेन्द्र! तदुच्छ्रायमथाचरेत् ॥ ७८ ॥

चतुर्विंशतिमांशेन स्वेन स्वेन महामते!।
शिष्टं च परितो वीथिः स्यादेवं पीठकल्पना ॥ ७९ ॥

तद्विस्तारोच्छ्रितांस्तम्भान् स्थापयेत् कोणदेशतः।
तन्मानेन समारोप्याः स्तम्भानां शिरसोपरि ॥ ८० ॥

रचनारहिताश्चान्ये दण्डास्तिर्यक्प्रसारिताः।
सर्वं स्थलांगणं ब्रह्मन्! चतुर्दिक्तोरणान्वितम् ॥ ८१ ॥

पीठात् तृतीयभागेन विस्तृतं तोरणं भवेत्।
विस्तारात् त्रिगुणेनैव सर्वेषामुन्नतिः स्मृता ॥ ८२ ॥

सचक्रगरुडाः सर्वे त्रिचतुःपञ्चसंख्यया।
सान्तरालप्रमाणेन सस्तम्भास्तोरणाखिलाः। ८३ ॥

विनिवेद्याः क्षितौ खात्वा सर्वं चैव सुलक्षणाः।
चतुरश्रास्त्वधोभागे त्वष्टाश्रा मध्यभागतः ॥ ८४ ॥

वर्तुलाश्चोर्ध्वभागाश्च समांशेन विभाजिताः।
कृत्वैवं भगवद्यागमण्डपं सर्वकर्मणाम् ॥ ८५ ॥

उदग्दिक्पीठतश्चोर्ध्वं धिष्ण्यं कुर्यात् कजाङ्कितम्।
वर्तुलं चतुरश्रं तु प्रकाशाख्यं सुलक्षणम् ॥ ८६ ॥

शङ्खचक्रगदापद्मैरङ्कितं मेखलावनौ।
द्रव्याणामधिवासार्थं तत्समीपस्थितं तु यत् ॥ ८७ ॥

मध्यमे मण्डलं पीठे मन्त्राब्जकलशार्चनम्।
चतुर्थं स्नानकुम्भानां सोषधीनां निवेशने ॥ ८८ ॥

तस्मिन्नन्यत्र शयनं, पञ्चमं स्नपनासनम्।
भद्रपीठसमायुक्तं स्नानद्रव्यसमन्वितम् ॥ ८९ ॥

पूरितं वालुकाभिश्च कर्तव्यं तु द्विजाऽथवा।
सद्वारं सगवाक्षं च सकवाटं हि सार्गलम् ॥ ९० ॥

कृत्वैवमधिवासार्थं प्राकारं सालयं महत्।
प्रासादक्षेत्रमानं तु सन्त्यज्य परितस्ततः ॥ ९१ ॥

समेखलं सपीठं तु दिक्षु कुण्डाष्टकं लिखेत्।
अनुकल्पे तु वा कुर्यात् प्राच्यां दिङ्मण्डपाद्बहिः ॥९२॥

तत्पाश्चात्ये तु वा भागे सपीठाः सहतोरणाः।
सस्तंभा वा पृथक्पीठा विविक्ताश्च परस्परम् ॥९३॥

चातुरात्म्यादिदेवानां ब्रह्मन्! स्थापनकर्मणि।
संस्थितिं शृणु कुण्डानां विविधां दिग्विदिक्षु च ॥

महाविभवसौभाग्य आयुरारोग्यवृद्धये।
सिद्धये सर्वकर्माणां (!) विघ्नानां विनिवृत्तये ॥ ९५ ॥

व्यत्ययादफलं विद्धि मुक्तये समतानघ!।
गदाङ्कन्द्वयोपेतं प्राग्दिक्तुर्याश्रमेव वा ॥ ९६ ॥

चक्रं दक्षिणदिग्विप्र! शङ्खं प्रत्यक्प्रदेशतः।
पद्ममुत्तरदिग्भागे यथाभिमतपल्लवम् ॥ ९७ ॥

आग्नेय्यां तु समापाद्य कुण्डमश्वत्थपत्रवत्।
विमुक्तकमलं कुर्यात् त्रिकोणं पूर्ववत्ततः ॥ ९८ ॥

होमार्थं या तु दिक्कुण्डमष्टाश्रं वायवे पदे।
धिष्ण्यं श्रीवत्ससंज्ञं तत्, अर्धेन्दुसदृशाकृति ॥ ९९ ॥

ऐशान्यां तु समालिख्य लक्षणेनोपलक्षितम्।
अतोऽपरं सन्निवेशमेकाग्रमवधारय ॥ १०० ॥

धिष्ण्यं पूर्वपदे वृत्तमाग्नेय्यां कौस्तुभाकृति।
चक्रं दक्षिणदिग्भागे शार्ङ्गाकारं तु यातुदिक् ॥

आप्यां गदाकृतिं प्राग्वन्मालाख्यं वायवे पदे।
उदग्दिक्कमलाकारं श्रीवत्साकारमीशदिक् ॥ १०२ ॥

विस्तारं शम (य) मानं तु सर्वेषां विहितं तु वै।
द्वादशांशं परित्यज्य ओष्ठार्थं च ततो बहिः ॥ १०३ ॥

सुसमं मेखलाबन्धं कुर्यात् तद्विस्तृतेः समम्।
शम(य?)द्वयं भवेत् सर्वं यथा मेखलया सह ॥ १०४ ॥

मध्यदेशे तु वृत्तं च तुर्याश्रं वा सुलक्षणम्।
प्रासादक्षेत्रभूमेर्वै तमेवैशपदे बहिः ॥ १०५ ॥

संपाद्यमानं युक्तं वा तर्पणे सर्वकर्मणाम्।
वास्त्वङ्गविबुधानां च लोकेशानां महामते! ॥ १०६ ॥

विघ्नेशद्वारपालानां क्षेत्रेशस्य तथा क्षितेः।
कृत्वैवं भूषयेत् प्राग्वत् सकुण्डं यागमण्डपम् ॥१०७॥

चतुरश्रं चतुर्द्वारं दर्भमालान्तरीकृतम्।
अन्यत्र तदलाभे तु यथाभिमतदिङ्मुखम् ॥ १०८ ॥

चतुर्दशकराच्चैव यावत्त्रिंशत्करावधि।
पट्करान्तं पुनस्तस्माद्बिम्बमानव्यपेक्षया ॥ १०९ ॥

कार्या मध्ये स्थला तेषां द्विसप्तांशैस्ततोऽष्टभिः।
समन्तभद्रा सुसंलक्ष्णा चिता पक्वेष्टकादिभिः ॥

तालोन्नतैः समारभ्य सामान्येऽस्मिन् हि कर्मणि।
उन्नताङ्गुलवृद्ध्या तु, नीचा तद्ध्रासतः क्रमात् ॥

द्विविंशांशकैर्मध्ये सर्वासां मण्डलं भवेत्।
चतुरश्रं चतुर्द्वारं चक्राम्बुरुहभूषितम् ॥ ॥ ११२ ॥

दक्षिणे शयनं, सौम्ये कुण्डं, अग्नेस्तु पूर्ववत्।
समेखलं द्विहस्तं च चक्रपद्माङ्कितं शुभम् ॥ ११३ ॥

तदधश्चतुरश्रं प्राक् गदामेखलिकान्वितम् ।
तथा दक्षिणदिग्भागे कुर्याद्वै चक्रचिह्नितम् ॥ ११४ ॥

वर्तुलं पश्चिमे सौम्ये कमलाङ्कं मनोहरम् ।
शङ्खाङ्कं सर्वकोणेषु मानमेषां यथोर्ध्वगे ॥ ११५ ॥

सर्वं दशान्तहस्तानां चतुर्णामेकमेखला ।
मण्डपानां तु किन्त्वत्र ऊर्ध्वगं सर्वमेखलम् ॥ ११६ ॥

ततोऽधः संस्थिताः सर्वे एककुण्डास्तु मण्डपाः ।
तेषां समेखलं चाद्ये द्वात्रिंशत्यङ्गुलं भवेत् ॥ ११७ ॥

ह्रासादङ्गुलयुग्मस्य यावद्वै षोडशाङ्गुलम् ।
स्यात् षट्करे गृहे कुण्डं कुर्याद्वि वा मेखलाधिका ॥

अष्टहस्तोच्छ्रितं पूर्वं ततोर्धकरवर्धितम् ।
त्रयोदशकरादीनां चतुर्णां ह्रासयेत् ततः ॥ ११९ ॥

अष्टकं त्वङ्गुलानां तु सप्तपञ्चचतुःक्रमात् ।
न ह्रासः षट्करान्तानां न्यूनानामुच्छ्रितेर्भवेत् ॥

एवं स्नानगृहाणां तु विस्तारश्चोन्नतैः सह ।
किन्तु वै वालुकापीठैर्मध्यतश्चोपशोभितः ॥ १२१ ॥

द्विचतुर्भिर्द्विहस्तांशैर्विस्तृताः प्रागुदुन्नताः ।
स्नानीया अग्रगेहाद्वा दिक्कूर्येऽभिमते शुभे ॥ १२२ ॥

अर्धमानसमं मुख्यात् सुपीठं शयनान्वितम् ।
दद्दानभवनं कुर्यान्मङ्गल्यकलशैः सह ॥ १२३ ॥

सर्वेषां कर्मभूभागं कोणस्तम्भैर्विभूषितम् ।
सुनेत्रैर्वेष्टितं कुर्याच्चकाद्यैः पूर्ववद्युतम् ॥ १२४ ॥

सुस्थिरं दृढपादं च स्नानाम्भोग्रहणक्षमम् ।
अर्धेन वालुकापीठाद्दीर्घमाद्यक्रमेण तु ॥ १२५ ॥

वर्धितं चार्धहस्तेन ह्रासितं चतुरङ्गुलैः ।
स्वदैर्घ्यादर्धविस्तीर्णं कृत्वैवं सप्रणालकम् ॥ १२६ ॥

तेन तद्वालुकापीठं भूषयेन्मध्यगेन तु ।
यागागारस्य वै दिक्षु द्वारार्थं तत्र चान्तरे ॥ १२७ ॥

शमार्धं वृद्धियोगेन ह्रासोऽन्यत्र कलादिकः ।
तोरणानि बहिः कुर्याद्दृढैः काष्ठैः सुपूजितैः ॥१२८॥

पञ्चहस्तानि चार्धेन वर्धितानि करेण तु ।
न ह्रासमाचरेत्तेषामन्यत्र करणे सति ॥ १२९ ॥

दशमात् पञ्चहस्तानामृते भूमौ प्रवेशयेत् ।
शमार्धं वर्धितानां च द्वे द्वे संवर्धयेत् कले ॥ १३० ॥

दैर्घ्यात् प्रवेशशिष्टात्तु त्रिभागेन तदन्तरम् ।
सर्वं चक्रध्वजं कार्यं वस्त्रस्रक्चक्षरीयुतम् ॥ १३१ ॥

सुधाद्यैर्वर्णकैः पीतैश्चन्दनाद्यैस्तु लेपितम् ।
भिन्नाङ्गमेतदखिलं यथैकस्मिन् हि युज्यते ॥ १३२ ॥

कर्म, यागगृहे शश्वद्विभूतेर्भावनेर्विना ।
पञ्चत्रिंशत्करं क्षेत्रं स्वतुर्यांशेन विस्तृतम् ॥ १३३ ॥

तन्मध्ये तु चतुर्हस्तं चाऽऽपाद्यं स्थलसप्तकम् ।
स्थलानां व्यवधानं तु कुर्याद्वै तालसंमितम् ॥१३४॥

एकापायेन वै कुर्याद्विहस्तान्तस्थलाङ्गणम् ।
क्रमेणाष्टाङ्गुलान्मानाद्व्यङ्गुलं द्व्यङ्गुलं विना ॥

स्थलानां संकटानां च व्यवधानं द्विगोलकम् ।
एवमेव समुच्छ्रायः सर्वासां परिकीर्तितः ॥ १३६ ॥

परितो विहितं वीथेर्मानमत्र स्वपीठजम् ।
एवं वा सङ्कटे कुर्याद्यथोक्तान्मण्डपद्वयात् ॥ १३७ ॥

मध्ये मण्डलपीठं तु, तस्य दक्षिणदिग्भवेत् ।
समीपे शयनं, स्थानकुम्भानां स्थापनायनम् ॥ १३८ ॥

एवं हि याम निकटे भोगानां मन्त्रतर्पणम् ।
ऋग्यजुः सामपूर्वाणां श्रुतीनां हवनं परे ॥ १३९ ॥

दद्दानशयनं स्थाने ह्यन्यस्मिन् शयने हितम् ।
व्यवसायार्थसम्पत्ती देशकालौ तु तज्ज्ञताम् ॥ १४० ॥

ज्ञात्वा समाचरेत् सर्वं न न्यूनं नाधिकं तु वा ।
यद्युक्तमविरुद्धं च व्यापकं सम्प्रयोजनम् ॥ १४१ ॥

तत्तदभ्यूह्य सर्वत्र कुर्याल्लोभधिया विना ।
यतो यथोक्तं देवानां निष्पद्यति हि वा न वा ॥ १४२॥

अतो यथोक्तेन विना नावसीदति बुद्धिमान् ।
यथोक्तकरणे च्छिद्रपूरणं परमं स्मृतम् ॥ १४३ ॥

भावभक्तिसमेतं च श्रद्धापूतं पुरोदितम्।
प्रासादस्याष्टदिग्व्योम मूर्तिपानां यथोदितम् ॥ १४४ ॥

स्थण्डिलेष्वथ कुण्डेषु, तादर्थ्येनाथवा स्वयम्।
स्वकुण्डे हवनं कुर्याच्चतुर्वेदमथोऽपरे ॥ १४५ ॥

समस्तं मूर्तिपीयं वा स्वयमेव समाचरेत्।
सामग्रीविरहाद्योग्यमूर्तिपानामभावतः ॥ १४६ ॥

एवं त्वभिनवं कृत्वा यागार्थं मण्डपं द्विज!।
पूर्वोदितैरलङ्कारैरलंकृत्य पृथग्विधैः ॥ १४७ ॥

सितरक्तादिभेदेन प्रागादौ तु ध्वजाष्टकम्।
निवेश्य मध्ये वेद्यां तु पुनरप्यथवत्तथा ॥ १४८ ॥

यागमण्डपनिर्माणे भूयो विध्यन्तरं शृणु।
प्राग्वा ह्युदग्वा प्रासादात् त्रिंशद्धस्तैर्द्विजायतम् ॥

द्यधिकैर्मण्डपं कुर्यादन्यद् द्वादशभिः करैः।
स्यात् तुर्यश्चायतं मध्ये वेदीनां तत्र पञ्चकम् ॥ १५० ॥

परितः पञ्चहस्तं च हस्ते हस्तेऽन्तरीकृतम्।
प्रदक्षिणगणोपेतं वितानाद्यैर्विभूषितम् ॥ १५१ ॥

वेद्यामुत्तरदिक्स्थायां कुर्यात् कुण्डं सलक्षणम्।
होमोपकरणं सर्वं तत्रोपरि निवेश्य च ॥ १५२ ॥

तत्रोपरायां वेद्यां तु नेत्रे उन्मीलयेद्द्विज!।
मण्डलं मध्यमायां तु वेद्यामष्टैकपङ्कजम् ॥ १५३ ॥

प्रस्तार्य चित्रं शयनं चतुर्थ्यां मुनिसत्तम!।
स्नानकर्म ततः कुर्यात् पञ्चमायां तु दक्षिणे ॥ १५४ ॥

मण्डपस्य चतुर्दिक्षु कुर्यात् कुण्डचतुष्टयम्।
प्रासादस्यापि परितः कुर्यात् कुण्डचतुष्टयम् ॥ १५५ ॥

तदर्थान् सर्वसंभारान् संभृत्य सुसमाहितः।
दिने कर्मदिनात् पूर्वं सप्तमे पञ्चमेऽपि वा ॥ १५६ ॥

अङ्कुरानर्पयित्वा तु ततः कर्म समारभेत्।
प्रधानदिवसात् पूर्वदिने देशिकसत्तमः ॥ १५७ ॥

स्नातः शुक्लाम्बरः स्रग्वी कृतन्यासः सुशान्तधीः।
कृताह्निकोऽधिवासार्थं सर्वालङ्कारभूषितः ॥ १५८ ॥

सर्वसाधनसंयुक्तं स्वर्घ्यपाद्यसमन्वितम्।
मङ्गल्यकुम्भमादाय ध्यायमानोऽच्युतं हृदि ॥ १५९ ॥

सह चैकायनैर्विप्रैः सदागमपरायणैः।
तथा ऋग्यजुःपूर्वैस्तु आमूलाङ्गगतन्मयैः ॥ १६० ॥

भेरीपटहवादित्रशङ्खशब्दादिकैः सह।
ऋग्यजुस्सामपूर्वैश्च प्रशस्ताः संपठन् श्रुतीः ॥ १६१ ॥

द्वारपालार्चनं कृत्वा यागागारं प्रविश्य च।
संस्मृत्य स्वासने व्याप्तिमर्चयित्वोपविश्य च ॥ १६२ ॥

मध्यपीठसमीपे तु प्राङ्मुखः पश्चिमे पदे।
अग्रे मङ्गल्यकलशमाधारस्योपरि न्यसेत् ॥ १६३ ॥

विप्रान् ऋग्यजुःपूर्वांश्च उपवेश्य च पूर्ववत्।
पूर्वोक्तस्वधिकैर्युक्तो द्रव्यैर्द्रव्यगणः शुभः ॥ १६४ ॥

यश्च यत्रोपयोग्यस्तु तत्र तं संप्रवेशयेत्।
मन्त्राणामुपदेष्टा चाप्यनुकूलो महामतिः ॥ १६५ ॥

योक्तव्यः कर्मदक्षस्तु सर्वेष्ववसरेषु च।
दक्षिणे ह्यात्मनो विप्र! एकचित्तः समाहितः ॥ १६६ ॥

स्वयं यस्त्वनुसन्धाय हवनार्चनकर्मणाम्।
आस्ते ह्युत्पत्तिपूर्वाणां न्यासान्तानामनन्यधीः ॥

करशुद्ध्यादि सर्वं तु चक्रादिन्यासपश्चिमम्।
सर्वं क्रमेण कृत्वा तु पुण्याहं वाचयेत् ततः ॥ १६८ ॥

ओङ्काराद्यं पवित्रान्तं मन्त्राणां प्राक्चतुष्टयम्।
पाठयेच्च सपुण्याहं गायत्रीत्रितयान्वितम् ॥ १६९ ॥

ततश्चात्मानुवाकं च आत्मव्यूहं तथैव च।
विष्णुसूक्तं शाकुनं च शिवसंकल्पमेव च ॥ १७० ॥

श्रीसूक्तं चापि शंसूक्तं भद्रसूक्तं तथैव च।
अङ्गिरित्यादिकं यच्च प्रीतिमन्त्रावसानकम् ॥ १७१ ॥

पुण्याहं स्वस्तिं ऋद्धिं च संवाच्य सह मूर्तिपैः।
प्रोक्षयेच्छतधारेण "स्थानानी"त्यादिकेन च ॥

एवं सर्वेषु यागेषु भवेत् पुण्याहवाचनम्।
यागं पुरोक्तविधिना त्रिस्थानस्य क्रमाद्यजेत् ॥ १७३ ॥

भगवन्तं जगद्योनिं बिम्बमध्ये द्विजोत्तम ! ।
कुर्यात् सतोरणानां च ध्वजानां स्थापनं ततः ॥१७४॥

सत्यादिकं चतुष्कं तु, मध्ये वेद्या ध्वजाष्टकम् ।
प्रभवाप्ययथोगेन यजेत् प्रागादियोगतः ॥ १७५ ॥

"उत देवा अवहिता" ऋक्त्रयान् पाठयेत्ततः ।
प्रागादिदिक्चतुष्केषु तोरणानां चतुष्टये ॥ १७६ ॥

सुशोभनं सुभद्रं च सुगन्धं च यजेत् क्रमात् ।
सुहोत्रं च ततश्चक्रं विहगेश्वरसंयुतम् ॥ १७७ ॥

उपरिष्टान्मुनिश्रेष्ठ ! पूजयेत् प्रतितोरणम् ।
एतेषामथवा पूर्वं भवेद् द्वास्थैः सहार्चनम् ॥ १७८ ॥

पाठयेद्द्वारपालीयं साम सामविदस्ततः ।
अथोर्घ्यपुष्पभृन्मूर्तिधरैर्यायात् सामवृतः ॥ १७९ ॥

यत्र तिष्ठति विश्वेशः पीठब्रह्मशिलान्वितः ।
तत्रावलोकनं तेषां कुर्यात् सन्ताडनादिकम् ॥ १८० ॥

चक्रास्त्रमन्त्रितैः स्नानकलशैः स्नपयेत्ततः ।
सिद्धार्थकैस्तथा पञ्चगव्यमृद्भूतिवारिणा ॥ १८१ ॥

वल्मीकमृज्जलेनाथ चक्राङ्कौषधिवारिणा ।
संक्षोभ्याभ्यर्च्य चोद्धर्त्य क्षालयेदस्त्रवारिणा ॥ १८२ ॥

तमर्घ्येणार्चयित्वा च ततस्तन्मन्त्रितान् करे ।
सिद्धार्थकान् दक्षिणे तु बध्वाग्रे पाठयेदृचम् ॥ १८३ ॥

"रक्षोहणं" तथा सर्वाश्रयेत् प्रतिसरे मणीन् ।
सर्वत्र वेष्टितं कृत्वा समारोप्य रथोत्तमे ॥ १८४ ॥

कर्मारम्भं च पठतः तस्य दक्षिणदिङ्न्यसेत् ।
ऋक्सामपूर्वान् वामे तु ब्राह्मणांश्च चतुश्चतुः ॥ १८५ ॥

पुरतोऽस्त्रं स्मरन् यायात् स्वयं विघ्नांस्तु सूदयन् ।
सनृत्तगीतवादित्रस्तुतिमङ्गलपाठकैः ॥ १८६ ॥

इदं विष्णुर्विचक्रम इति ऋक्त्रयैः सह पाठकैः ।
एकायनांस्तदन्ते तु "ओं नमो ब्रह्मणे" तु यत् ॥१८७॥

तथैव शाकुनं सूक्तं श्रीसूक्तेन समन्वितम् ।
स्वर्णादिनार्थिनः शक्त्या तर्पयंस्तान्निवेशयेत् ॥

यागभूमिं ततो बिम्बमवरोप्य रथादिकात् ।
निषण्णं दृढकाष्ठोत्थतोरणे सन्निवेश्य च ॥ १८९ ॥

स्नानभूमौ ततः कुर्यादस्त्रेणाज्यतिलाहुतीः ।
यद्वा पूर्वं समानीय पीठं ब्रह्मशिलान्वितम् ॥ १९० ॥

भूमिष्ठे भद्रपीठे तु वेदिकायां निवेश्य च ।
ततो बिम्बं समानीय स्थापयेत् पिण्डिकोपरि ॥१९१॥

स्थाप्यमाने बृहद्बिम्बे विशेषः कथ्यते शृणु ।
पूर्ववत् कर्मशालायां संस्थाप्याकारशुद्धये ॥ १९२ ॥

संस्नाप्य विधिना कृत्वा नयनोन्मीलनं ततः ।
स्नपनं वृद्धादापाद्य केवलं वा बहूदकैः ॥ १९३ ॥

स्नानकर्मशिलादीनामीषत् कृत्वा तु सार्चनम् ।
उत्थाप्य मूर्तिपार्थैस्तु बहुभिस्तु रथस्थितम् ॥ १९४ ॥

समानीय ततो यत्नात् प्रासादाभ्यन्तरं तु वै ।
यथावद्रत्नविन्यासपूर्वं पीठे निवेश्य च ॥ १९५ ॥

बृहद्बिम्बं, ततः कुर्यात् कर्म बिम्बेऽखिलं तु वै ।
सन्निरोधस्तु मन्त्राणां तत्र लग्नोदये स्मृतः ॥ १९६ ॥

आबृहत्स्नपनात्पूर्वं यत्किञ्चिदपि तत्र तत् ।
निर्वर्तनीयं पूर्णान्तं बुद्ध्वैवं प्राज्ञसत्तम ! ॥ १९७ ॥

तथा कार्यं शुभो येन मूहूर्तो नावसीदति ।
एवं हि चित्रपूर्वाणामन्येषां मुनि (द्विज) सत्तम ! ॥

सरत्नब्रह्मपाषाणवर्जितानां समापयेत् ।
स्नानाद्यं कर्मबिम्बे तु तत्समीपेऽथ दर्पणे ॥ १९९॥

कर्मबिम्बं विना तेषां प्रस्थापाद्यपि विष्टरे ।
कुर्यात् प्रवेशपूर्वं तु सर्वमुत्सवपश्चिमम् ॥ २०० ॥

शक्तिभिः कर्मबिम्बैश्च गरुडाद्यैर्यदा सह ।
समाचरेत् प्रतिष्ठानं मूलबिम्बेन वै सह ॥ २०१ ॥

तदानीं तानि बिम्बानि यागभूमौ प्रवेशयेत् ।
एवं प्रवेश्य तद्बिम्बं देशिकः सुसमाहितः ॥ २०२ ॥

मण्डलाग्रमथासाद्य तत्र बिम्बं निवेदयेत् ।
"भगवन् भूतभव्येश ! त्वय्येवाराधनाय च ॥ २०३ ॥

इदं बिम्बं करिष्यामि संस्कृत्य रजनीक्षये।
एवं निवेद्य स्नानार्थं कलशान् स्थापयेत् पृथक्॥

अथवा कर्मदिवसात् तृतीये वासरे पुरा।
कर्मभूमेः समानीय ब्रह्म (बिम्ब) पीठशिलान्वितम्॥

यागभूमौ तु संस्थाप्य कलशे मण्डलक्षितौ।
यद्वा च देवदेवेशमिष्ट्वा पूर्वोक्तवर्त्मना॥ २०६॥

बिम्बादिसर्वद्रव्याणामधिवासं यथास्थितम्।
कल्पयित्वा तु देवस्य कृत्वा बिम्बनिवेदनम्॥ २०७॥

अपरेऽहनि संप्राप्ते स्नपनं प्रारभेद्गुरुः।
यद्वा तृतीयदिवसे प्राग्वदिष्ट्वा क्रमेण तु॥ २०८॥

त्रिस्थानस्थं जगन्नाथं कर्मशालां प्रविश्य च।
प्राप्तेऽपराह्णसमये बिम्बमाकारशुद्धये॥ २०९॥

संस्नाप्य विधिना पश्चाद्बिम्बं तोयेऽधिवास्य च।
अपरस्मिन् दिने प्राप्ते देशिकस्तु कृताह्निकः॥ २१०॥

जलादुत्थाप्य तद्बिम्बं यागभूमौ प्रवेशयेत्।
मनकः —
जलाधिवासनं कर्म यथावद्वदतांवर!॥ २११॥

श्रोतुकामस्य मे सम्यक् समाख्याहि सुविस्तरम्।
शाण्डिल्यः —
वक्ष्ये जलाधिवासीयं विधानमवधारय॥ २१२॥

प्रासादस्य विशुद्ध्यर्थं बिम्बशुद्ध्यर्थमेव च।
मानोन्माणप्रमाणानामूनाधिक्योपशान्तये॥ २१३॥

जगदाप्यायनार्थं च सर्वसम्पूर्णसिद्धये।
प्रतिष्ठार्थक्रियारम्भात् पूर्वमेव शुभे दिने॥ २१४॥

पञ्चगव्यादिना स्नानं पूजाहोमौ तथा जपम्।
समाचरेत् स्वमन्त्रस्य यद्येवं न कृतं पुरा॥ २१५॥

हेतुना केनचित्तत्र जलवासं समाचरेत्।
नदीषु दीर्घिकायां वा तटाके निर्झरे ह्रदे॥ २१६॥

संभवे सति कुर्वीत जलवासं यथाविधि।
असंभवे जलद्रोण्यां कटाहे धातुनिर्मिते॥ २१७॥

यथासंभवमन्यस्मिन् पात्रे वा मृण्मयादिके।
अल्पतोये श्मशानान्ते लवणोदपरिप्लुते॥ २१८॥

कटुके च कषाये च तिक्ते फेनैश्च दूषिते।
चैत्यवृक्षसमीपे च नीचावाससमीपके॥ २१९॥

वर्णान्तरे युते स्वल्पे ऊषरे शैवलान्विते।
पद्मादिषु दुष्टेषु जलवासं न कारयेत्॥ २२०॥

एकत्रिपञ्चरात्रं वा जलमध्येऽधिवासयेत्।
देशकालानुरूपेण सद्यो वा जलवासनम्॥ २२१॥

प्रतिष्ठादिवसात् पूर्वं तृतीये पञ्चसप्तमे।
दिनेऽपराह्णसमये कर्मशालां प्रविश्य च॥ २२२॥

अस्त्रमन्त्रेण संप्रोक्ष्य बिम्बं सन्ताडयेत्ततः।
सिद्धार्थकस्तिलैर्दीर्घैरस्त्रमन्त्राभिमन्त्रितैः॥ २२३॥

संस्नाप्याकारशुद्ध्यर्थं पङ्क्तिभिः सिद्धार्थकादिकैः।
वस्त्राभरणपुष्पाद्यैरलंकृत्य च भूषणैः॥ २२४॥

पूर्ववत् कौतुकं बद्ध्वा समारोप्य रथादिके।
पूर्ववच्छ्रुतिघोषैश्च शङ्खभेर्यादिकैः सह॥ २२५॥

विविधैर्नृत्तगेयैश्च तथान्यैर्मङ्गलैः सह।
ग्रामं वा नगरं वापि प्रासादं च प्रदक्षिणम्॥ २२६॥

भ्रामयित्वा जलोद्देशमानयेन्मूर्तिपैः सह।
प्रपायां तु जलाभ्यर्णे अवरोप्य रथादिकात्॥ २२७॥

विष्टरे विनिवेश्याथ प्राङ्मुखं वाप्युदङ्मुखम्।
मण्डपं जलमध्ये तु वातवृष्टिक्षमं शुभम्॥ २२८॥

चतुःस्तम्भसमायुक्तं चतुस्तोरणभूषितम्।
वितानध्वजसंयुक्तं वेष्टितं दर्भमालया॥ २२९॥

विचित्रैश्च फलैर्युक्तं द्रुमाङ्गैः पावनैस्तथा।
मुक्तादामसमायुक्तं स्रग्दामभिरलंकृतम्॥ २३०॥

कोणप्रदीपसंयुक्तं चामरैरुपशोभितम्।
पुरैव कारयित्वा तु कुर्यात् पुण्याहघोषणम्॥ २३१॥

प्राग्वच्छुद्धिमपां कृत्वा तन्मध्ये विन्यसेत्ततः।
प्रतिमानुगुणं भद्रपीठमास्तरणान्वितम्॥ २३२॥

सोपधानं तदूर्ध्वं तु कल्पयेन्मान्त्रमासनम् ।
अनन्तं कल्पयित्वोर्ध्वं अर्घ्यगन्धादिनार्चयेत् ॥ २३३ ॥

द्विपट्‌कार्णेन बिम्बस्य अर्घ्यं पाद्यं तथैव च ।
आचामं वासितं गन्धमुपवीतोत्तरीयके ॥ २३४ ॥

भूषणानि च माल्यानि दीपं धूपं यथाक्रमम् ।
दत्वा कृत्वा घृतारोपं संस्मरेत् संहृतिक्रमम् ॥ २३५ ॥

संहारस्य क्रमं वक्ष्ये समाकर्णय सांप्रतम् ।
आत्मानं सर्वगं ध्यात्वा सर्वदं विष्णुमव्ययम् ॥ २३६ ॥

कुर्याद्भावान्वितो विष्णोरधिवासनमुत्तमम् ।
प्रणवेन समारोप्य जीवमर्चाभिमानिनम् ॥ २३७ ॥

उत्क्रम्यात्मैक्यतां कृत्वा स्वस्मिन् सर्वेश्वरे हरौ ।
संशोष्य मरुता पृथ्वीं दग्ध्वा बीजान्विताग्निना ॥

अद्भिः संप्लाव्य तां वायुशुष्कां वह्नौ विलाप्य च ।
संहृत्य वायुना वह्निं वायुमाकाशतां नयेत् ॥ २३९ ॥

आध्यात्मिकाधिदैवैस्तु करणैर्विषयैः सह ।
तन्मात्रासंस्थितान्येवं क्रमात् संहृत्य देशिकः ॥२४०॥

नभो मनसि संहृत्य मनोऽहङ्कृति तत्पुनः ।
महत्यात्मनि तं चापि नयेदव्याकृतैकताम् ॥ २४१ ॥

शान्तानन्ते परे व्योम्नि निष्कले ज्ञानविग्रहे ।
तं ध्यायेत् परमानन्दे संस्थितं शान्तविग्रहम् ॥२४२॥

यस्मिन्नव्याकृतं लीनं स्वस्थं यत् स्वस्वरूपकम् ।
वासुदेवोऽपि विज्ञेयः सर्वात्मा सर्वकृत् प्रभुः ॥२४३॥

तस्मिन्नेव तु संहृत्य पृथिव्यादीनि देशिकः ।
एवं ध्यात्वा यथान्यायं बिम्बं वस्त्रेण वेष्टयेत् ॥ २४४ ॥

स्थगयित्वांशुकैर्दिव्यैर्दर्भैः सर्वैः स्रगादिभिः ।
आचार्यो मूर्तिपैर्मन्त्रान् व्यापकांश्चतुरोपि च ॥ २४५ ॥

पठद्भिः शाकुनं सूक्तं तथा चान्यैस्त्रयीमयैः ।
आम्नायोद्घोषणपरैः सार्धमादाय तीरतः ॥ २४६ ॥

तद्बिम्बं जलमध्ये तु पीठोर्ध्वे शाययेत् स्वयम् ।
अप्सरसेति च मन्त्रेण प्राङ्मूर्धानमुदङ्मुखम् ॥२४७॥

दुन्दुभीर्विविधाकारा नादयित्वा दिशो दश ।
जयशब्दैश्च गीताद्यैः सपुण्याहपुरस्सरम् ॥ २४८ ॥

आत्मन्यासं क्रमात् कृत्वा दिशोऽस्त्रेणावबध्य यात् ।
अवलोक्य च नेत्रेण कवचेनावकुण्ठयेत् ॥ २४९ ॥

लोकपालान् बहिर्ध्यात्वा स्थानादस्मात् समन्ततः ।
तीरदेशमथ प्राप्य कुम्भं सूत्रेण वेष्टयेत् ॥ २५० ॥

वेष्टितं नववस्त्राभ्यां सापिधानं सपल्लवम् ।
संस्थाप्य तद्दक्षिणतः करकं च तथैव हि ॥ २५१ ॥

इन्द्रादीशानपर्यन्तं कलशान् परितो न्यसेत् ।
सवस्त्रान् सापिधानांश्च सहिरण्यान् सकूर्चकान् ॥

कुम्भे विशाखयूपं तु करके च सुदर्शनम् ।
आवाह्यार्घ्यादिनाभ्यर्च्य इन्द्रादीन् कलशाष्टके ॥२५३॥

बिम्बस्य शिरसोद्देशे कुम्भं च करकं न्यसेत् ।
अर्चितं परितश्चाष्टौ कलशान् विन्यसेत् क्रमात् ॥

कोणेषु पालिका न्यस्त्वा (!) अनिर्वाणैश्च दीपकैः ।
दर्शयेच्चक्रमुद्रां च रक्षामुद्रां तथैव च ॥ २५५ ॥

अत ऊर्ध्वं न वै कुर्याद्ग्राम्यधर्मं तु तज्जले ।
दारुलोहशिलोत्थानां बिम्बानां जलवासनम् ॥ २५६ ॥

साक्षाद्भवेत्तदन्यत्र भवेच्छायाधिवासनम् ।
विधानं तत्र वक्ष्यामि यथा तदवधारय ॥ २५७ ॥

स्नानमाकारशुद्ध्यर्थं दर्पणे तु समाचरेत् ।
अन्यच्च सकलं विप्र ! प्राग्वद्बिम्बे समाचरेत् ॥ २५८ ॥

अग्रतो देवबिम्बस्य छायाधिवसनार्थतः ।
जलद्रोणीं कटाहं वा स्थापयेल्लोहनिर्मितम् ॥ २५९ ॥

मृण्मयं दारुजं वापि भाजनं धान्यसंश्रयं ॥
पूरयेद्गन्धतोयेन शुद्धस्फटिकवर्चसा ॥ २६० ॥

पूर्ववद्विष्टरं कृत्वा दर्भमञ्जरिजं शुभम् ।
अष्टाविंशतिदर्भोत्थं कूर्चं कृत्वा द्विजोत्तम ! ॥ २६१ ॥

देशिकेन्द्रो विधानेन तत्रावाह्य जगद्गुरुम् ।
अर्घ्यगन्धादिनाभ्यर्च्य स्मृत्वा वै संहृतिक्रमम् ॥२६२॥

विष्टरं जलमध्ये तु प्राङ्मूर्धानं तु शाययेत्।
चक्रमुद्रां प्रदर्श्याथ कुम्भादीन् पूर्ववन्न्यसेत् ॥ २६३ ॥

शक्तीनामपि विप्रेन्द्र ! पूर्ववद्विष्टरं भवेत्।
अथवा तु त्रिभिर्दर्भैः कूर्चं कुर्याद्विधानतः ॥ २६४ ॥

छायाधिवासमात्रं तु तासामपि पृथक् पृथक्।
सर्वाङ्गं नववस्त्रेण प्रतिमायाः समन्ततः ॥ २६५ ॥

छादयित्वा समन्ताच्च सिद्धार्थान् विकिरेत् क्षितौ।
रक्षोहणेति मन्त्रेण रक्षां कुर्यात् समन्ततः ॥ २६६ ॥

अनुक्तमत्र यत् किञ्चित् प्राग्वत्तत् सर्वमाचरेत्।
मृण्मये भित्तिसंस्थे च बिम्बे छायाधिवासनम् ॥२६७॥

अन्तः प्रविश्य प्रासादे देशिकेन्द्रः समाचरेत्।
अन्येषां यागगेहस्य प्राग्वत् कृत्वा तु मण्टपम् ॥२६८॥

कुटीं वा तत्र कुर्वीत छायाधिवसनं गुरुः।
दारुलोहशिलोत्थानां बिम्बानां विभवे तदा ॥ २६९ ॥

जलद्रोण्यादिके पात्रे तोयाधिवसनं चरेत्।
तदापि जलवासं तु आचरेन्मण्टपान्तरे ॥ २७० ॥

यद्वा स्नानार्थकं कलशमण्डपे वा समाचरेत्।
अथवा यागसदने स्नानभूमौ तु तद्भवेत् ॥ २७१ ॥

एवं जलवाधिवासं तु कृत्वा वै देशिकोत्तमः।
उपयोग्यं प्रतिष्ठाया यद्यद्द्रव्यमुपार्जितम् ॥ २७२ ॥

तत् सर्वं समुपाहृत्य प्रासादं शोधयेत्ततः।
मर्जनालेपनाद्यैश्च ततो यागनिकेतने ॥ २७३ ॥

अकृतं यदलङ्कारं कारयेत् सकलं तु तत्।
नास्तिकान् भिन्नमर्यादान् देवब्राह्मणनिन्दकान् ॥

पापरोगयुतानन्यान् निन्दितान् पिशुनांस्तथा।
पाषण्डिनो हीनवृत्तीन् प्रतिलोमान् समत्सरान् ॥

लुब्धान् मूर्खानविदुषो बलान्निर्वासयेत्ततः।
कर्माहाद्वासरे विप्र ! अपराह्णे गुरुः स्वयम् ॥ २७६ ॥

जलाधिवासदेशं तु संप्राप्य सह मूर्तिपैः।
उत्थाप्य बिम्बमुदकात् कुम्भं च कलशानपि ॥ २७७ ॥

उद्वास्य देवतास्तत्स्थास्तद्बिम्बं तीरविष्टरे।
प्राङ्मुखं समवस्थाप्य वारिभिः क्षालयेत्ततः ॥ २७८ ॥

लोहजं चेद्विशुद्ध्यर्थं तिन्त्रिणीफलवारिणा।
प्राग्वत् सृष्टिक्रमं कृत्वा विधानेन महामते ! ॥ २७९ ॥

वस्त्राभरणपुष्पाद्यैरलङ्कृत्य मनोहरैः।
यानमारोप्य तद्बिम्बं शङ्खभेर्यादिसंयुतम् ॥ २८० ॥

ग्रामं प्रदक्षिणीकृत्य ह्यालयं वा समानयेत्।
यागगेहं तु यानादेरवरोप्य निवेशयेत् ॥ २८१ ॥

स्थाने पूर्वोदिते पश्चादारभेत् स्नपनं गुरुः।
लेख्यादौ संप्रविश्याथ प्रासादं मूर्तिपैः सह ॥ २८२ ॥

प्राक् चाधिवासितं कूर्चं जलात्तस्मात् समुद्धरेत्।
बिम्बाच्च वस्त्राभरणमाल्यान्यपनयेत् ततः ॥ २८३ ॥

पीठे तु स्नानकुम्भानां स्थापनार्थं तु कल्पिते।
पूर्वोदितं स्थूलपरं स्नपनं स्थापयेद्द्विज ! ॥ २८४ ॥

पूर्वादिपश्चिमाशान्तं पृथक् स्नपनमण्डपम्।
विहितं यत्र, तत्रैव देवदेवस्य वामतः ॥ २८५ ॥

यातुधानपदं यावदग्निकोणादितो न्यसेत्।
स्नपनं स्थूलपराख्यं, स्थूलसूक्ष्मं तु पृष्ठतः ॥ २८६ ॥

ईशकोणात् समारभ्य यावदाग्नेयगोचरम्।
देवस्य दक्षिणे पार्श्वे ईशानाद्वायुपश्चिमम् ॥ २८७ ॥

स्थूलस्थूलाभिधं स्नानं स्थापयेत् क्रमयोगतः।
अधिवासदिने कुर्यात् स्नानं स्थूलपराभिधम् ॥२८८॥

प्रतिष्ठादिवसे कुर्यात् स्नपनं स्थूलसूक्ष्मकम्।
चतुर्थे दिवसे स्नपनं स्थूलस्थूलाभिधं भवेत् ॥ २८९ ॥

तदा तत्तद्दिने तत्तत् स्नपनं स्नापयेद्गुरुः।
एवं हि स्नानकलशान् क्रमात् संस्थाप्य पूर्ववत् ॥

तदर्पणावसानेऽथ शयनं कल्पयेद्द्विधा।
नयनोन्मीलनार्थं तु शयनं कल्पयेत् पुरा ॥ २९१ ॥

द्वादशाक्षरमन्त्रेण पीठं संप्रोक्षयेत्ततः।
प्रागग्रानुदगग्रान् वा दर्भानास्तीर्य पुष्कलान् ॥२९२॥

पञ्चभारमितान् शालीनथवा चार्धसंमितान् ।
वृत्तं वा चतुरश्रं वा कम्बलानुपरि न्यसेत् ॥ २९३ ॥
उपधानानि चित्राणि शयनाङ्गानि कल्पयेत् ।
मङ्गल्यकुम्भान् संस्थाप्य दिगष्टकसमाश्रितान् ॥
ततो बिम्बाधिवासार्थं शयनं परिकल्पयेत् ।
तदर्धं वेदिकोर्ध्वं तु कुर्यात् स्वस्तिकमण्डलम् ॥
रजसा कुसुमैर्वाथ चतुर्वर्णैर्महोज्वलैः ।
प्रागग्रानुदगग्रांश्च दर्भान् संस्तीर्य तत्परम् ॥ २९६ ॥
पञ्चभारप्रमाणेन शालींस्तत्र विनिक्षिपेत् ।
तदर्धं तण्डुलं शुद्धं तदर्धं तु तिलं तथा ॥ २९७ ॥
उपर्युपरि निक्षिप्य लाजानूर्ध्वं तु विन्यसेत् ।
काष्ठजं सुदृढं स्निग्धं चतुर्गात्रसमन्वितम् ॥ २९८ ॥
चतुष्पादसमायुक्तं चतुरश्रायतं ततम् ।
पट्टचार्सञ्छितपर्यङ्कं तदूर्ध्वं स्थापयेत्ततः ॥ २९९ ॥
दुकूलं मृदुतरं च विन्यसेत् सोत्तरच्छदम् ।
केवलं तल्पमात्रं वा विन्यसेदथवा द्विज ! ॥ ३०० ॥
खट्वातूले विवर्ज्याथ लाजोर्ध्वं रत्नकम्बले ।
न्यसेदभिनवं पश्चाद्वस्त्रं कार्पासजं नवम् ॥ ३०१ ॥
क्षौमवस्त्रं न्यसेन्मध्ये चित्रवस्त्रं ततोपरि ।
शिरोपधानसंयुक्तं पादगण्डूकसंयुतम् ॥ ३०२ ॥
सर्वानभिनवान् शुभ्रान् सकपोलोपधानकान् ।
सुगन्धधूपितान् वस्त्रान् कुङ्कुमामोदसंमितान् ॥३०३॥
इन्द्रादीशानपर्यन्तं कलशान् सूत्रवेष्टितान् ।
तोयपूर्णान् समान् स्निग्धान् सापिधानान् सवस्त्रकान्॥
सुरत्नपल्लवैर्युक्तान् धान्यराशिषु निक्षिपेत् ।
शङ्खचक्रगदापद्मध्वजांश्चेन्द्रादिषु क्रमात् ॥ ३०५ ॥
श्रीवत्सं गरुडं कूर्मं सौवर्णं तेषु निक्षिपेत् ।
मध्ये मध्ये च कुम्भानां धान्योर्ध्वं मङ्गलान् न्यसेत् ॥
वस्त्रैराच्छादितास्तद्वन्न्यसेत् कोणेषु पालिकाः ।
एवं शयनयुग्मं तु प्रकल्प्य तदधो यजेत् ॥ ३०७ ॥

सर्वाधारमनन्तं तु तदूर्ध्वं सर्वगं प्रभुम् ।
प्रभवाप्यययोगेन यजेत् प्रागादियोगतः ॥ ३०८ ॥
पाठयेत् सर्पसामादिसंज्ञां ज्ञानबलात्मिकाम् ।
हुत्वा शताष्टसंख्यं तु मूलं तदनुकल्पयेत् ॥ ३०९ ॥
मण्डलं पावनै रागैः सिताद्यैर्माङ्गलीयकैः ।
तदूनाधिकशान्त्यर्थं हुत्वा कुण्डगणं ततः ॥ ३१० ॥
संस्कुर्यात् प्रतिकुण्डस्य निकटे कुम्भमध्यगम् ।
प्रभवाप्यययोगेन चातुरात्म्यं तु संयजेत् ॥ ३११ ॥
इन्द्रादि यद्वा दिक्स्थेषु विदिक्स्थेषु तदस्त्रपम् ।
दत्त्वा तदर्थं पूर्णां तु "पूर्णात्पूर्णं" च पाठयेत् ॥ ३१२ ॥
एकायनान् यजुर्मयानाश्रावितमनन्तरम् ।
एवं सर्वं समापाद्य प्रयायाद्बिम्बसन्निधिम् ॥ ३१३ ॥
बिम्बमर्घ्यादिनाभ्यर्च्य गुरुः स्नपनमारभेत् ।
अथास्त्रमन्त्रेण पुरा मङ्गल्यकलशाम्भसा ॥ ३१४ ॥
संसेच्य बिम्बं तदनु स्नापयेत्तन्मृदम्भसा ।
पाठयेत्तत्र "कूश्माण्डान्" बलमन्त्राननन्तरम् ॥
ततो गोमयकुम्भेन "इह गावः" प्रपाठयेत् ।
भूतस्तनति मन्त्रेण पाठ्यतानेन भूतिना ॥ ३१६ ॥
पञ्चगव्येन तदनु पाठ्ये "श्लाकरं" ततः ।
पूर्ववच्च ततोऽभ्यर्च्य विधिवच्चमसाम्बुना ॥ ३१७ ॥
क्षालयित्वा जलैः शुद्धैरभिषिच्य ततोऽर्चयेत् ।
शिल्पिदोषविनाशार्थं स्नानमेतदुदाहृतम् ॥ ३१८ ॥
परिधाय ततो विप्र ! वाससी अधरोत्तरे ।
नयनोन्मीलनार्थं तु शयनं यत् प्रकल्पितम् ॥ ३१९ ॥
तत्र पूर्वशिरस्कं च बिम्बं प्रस्वापयेद्द्विज ! ।
ततः समन्ताद्बिम्बं तु छादयेत् कम्बलादिभिः ॥३२०॥
सौवर्णं राजतं चैव पात्रमाढकपूरणम् ।
धान्यराशौ निधायाग्रे पूरयेत यथाक्रमम् ॥ ३२१ ॥
मधुना सर्पिषा चैव ततस्तु मधुपात्रके ।
अर्कमण्डलमध्यस्थं मार्ताण्डायुतसन्निभम् ॥ ३२२ ॥

ध्यात्वा मन्त्रेशमभ्यर्च्य तदन्यस्मिन् महामते!।
चन्द्रमण्डलमध्यस्थं धेनुमुद्रासमन्वितम् ॥ ३२३ ॥
मन्त्रं वै सौरभीयं च स्फुरदिन्दुशतप्रभम्।
तदन्तरस्थं मन्त्रेशं हिमाचलनिभं स्मरेत् ॥ ३२४ ॥
तत्स्रुतैरमृतौघैश्च शशिजैर्धेनुजैरपि।
सुभावितं स्मरेद्बिम्बं मधुवातेति मन्त्रतः ॥ ३२५ ॥
घृतादि मन्त्रयेत् पश्चाद्वस्त्रेणाच्छादयेत्तु तत्।
अष्टाङ्गुला च सौवर्णी शलाका राजती तथा ॥३२६॥
केवला वापि सौवर्णी शलाका स्याद्द्विजोत्तम!।
अष्टधान्यानि परितः पात्रेषु विनिवेशयेत् ॥ ३२७ ॥
गाः कन्यकाः शुभाकारा भूषणैश्चापि भूषिताः।
आनीय स्थापयेत् पार्श्वे ब्रह्मघोषेण घोषयेत् ॥ ३२८ ॥
स्वयं शलाकां सौवर्णीं कृत्वा नेत्राभिमन्त्रिताम्।
मध्वक्तां च तया नेत्रं दक्षिणं त्वीषदुल्लिखेत् ॥ ३२९ ॥
संस्मरन् परमं ज्योतिर्नेत्रमन्त्रेण देशिकः।
आज्याक्तया तया चापि राजत्या वाममुल्लिखेत् ॥
तन्मन्त्रितेन शस्त्रेण शिल्पी स्नातोऽवलोकितः।
यथावत् प्रकटीकुर्याद्विधिदृष्टेन वर्त्मना ॥ ३३१ ॥
वारुणं पाठयेत् साम सह "चान्द्रेण" सामगान्।
पूरयेन्मधुसर्पिर्भ्यां नेत्रयुग्मं क्रमेण तु ॥ ३३२ ॥
वौषडन्तेन मूलेन तेनैव जुहुयात्ततः।
तन्मूर्ध्नि शशिबिम्बं तु ध्येयं तापादिशान्तयं ॥ ३३३ ॥
सिञ्चन्तममृतौघं तु "हृदा" यन्तेन सेचयेत्।
व्यपोह्याच्छादनपटं दर्शयेन्मधुसर्पिषी ॥ ३३४ ॥
अष्टधान्यानि गाश्चैव कन्यकाः पुरतः स्थिताः।
मध्वाज्ये च शलाके च प्रदद्याच्छिल्पिने द्विज!॥
अष्टधान्यानि गाश्चैव शय्योपकरणं तथा।
प्रदद्याद्देशिकेन्द्राय साधकः सिद्धिलालसः ॥ ३३६ ॥
यद्वा मध्वादिसकलमाचार्याय निवेदयेत्।
यथाशक्ति तथान्येषां मूर्तिपानां च दक्षिणाः ॥ ३३७ ॥

मृण्मये मूलबिम्बे तु भित्तिस्थेऽथ प्रविश्य तु।
प्रासादं तत्र कुर्वीत नयनोन्मीलनक्रियाम् ॥ ३३८ ॥
एवं श्रियादिशक्तीनां नयनोन्मीलनं भवेत्।
एवं नेत्रं समुन्मील्य बिम्बस्य तु ततः परम् ॥ ३३९ ॥
दद्यादाप्यायने कुर्याद् "अस्त्रेण, हृदयेन" च।
आमूर्ध्नो द्वादशार्णं तु मूर्त्यर्थं पूर्ववन्न्यसेत् ३४० ॥
स्नानार्थतः पुरा क्लृप्ते पीठे बिम्बं नयेत्ततः।
व्याप्तिसत्तासमायुक्ते संस्कृते प्रोक्षणादिना ॥ ३४१ ॥
आधारादिक्रमोपेते समालब्धे सुपूजिते।
पीठेऽवतार्य संवेष्ट्य वाससी ह्यधरोत्तरे ॥ ३४२ ॥
अथ क्रमोद्धृतैः कुम्भैः छिद्रदृकावर्तितैर्हृदा।
स्नापयेत् पाठयंश्छिन्नो पर्धीनामिति श्रुतिम् ॥
"या ओषधय" इत्यादि ऋग्वेदांस्तदनन्तरम्।
एवं दशावशिष्टान्तैः सेचिते कलशैः सति ॥ ३४४ ॥
ततः कुम्भचतुष्के तु चतुर्भिर्मूर्तिधारकैः।
ऋक्सामपूर्वैर्विधिवत् स्नपनीयं तु पाठयेत् ॥ ३४५ ॥
"उदुत्तमं" हि ऋग्वेदान् पाठयेद्द्रविणं यजुः।
ततस्तु वारुणं साम सामगोऽथर्वणस्ततः ॥ ३४६ ॥
अयं ते वरुणश्चेति, पवित्रं ते—ततो ऋचम्।
वसोः पवित्रं—हि यजुः पाठयेत् सुमहांस्ततः ॥ ३४७ ॥
पवित्रं ते—हि यत् साम संयोज्यैकायनांस्ततः।
मूर्तिपान् समुदायेन पावमानीश्चतुष्टयम् ॥ ३४८ ॥
तदन्ते परमं मन्त्रं व्यूहीयं भगवानिति।
पवित्रमन्त्रं तदनु—इदं विष्णुर्विचक्रमे ॥ ३४९ ॥
ततो विभवमन्त्रैस्तु सर्वैः संमन्त्रितेन च।
कुम्भेन सेचयित्वा तु, व्यूहमन्त्रैः परेण तु ॥ ३५० ॥
स्नापयित्वार्चयित्वा च जुहुयात् साधिकं शतम्।
यथावत् प्रणवेनाथ व्याप्तिं कृत्वा च पाठयेत् ॥ ३५१ ॥
"मानस्तोके" ति ऋग्वेदान्, अग्ने नायुर्यजुर्मयान्।
प्राणापानं हि यत् साम ततः प्राणाय वै नमः ॥३५२॥

यातव्येति परं मन्त्रं विप्रानेकायनांस्ततः ।
ध्यानयुक्तो धिया सम्यक् पठेदाराधकस्ततः ॥ ३५३ ॥

"आवाहयाम्यमरवृन्दनताङ्घ्रियुग्मं
लक्ष्मीपतिं भुवनकारणमप्रमेयम् ।
आद्यं सनातनतनुं प्रणवासनस्थं
पूर्णेन्दुभास्करहुताशसहस्रदीप्तिम् ॥ ३५४ ॥

"ध्येयं परं सकलतत्त्वविदां च वेद्यं
वाराहकापिलनृकेसरिसौम्यमूर्तिम् ।
श्रीवत्सकौस्तुभमहामणिभूषिताङ्गं
कौमोदकीकमलशङ्खरथाङ्गहस्तम् ॥ ३५५ ॥

"सर्वत्रगोऽसि भगवन्! किल यद्यपि त्वां
आवाहयामि हि यथा व्यजनेन वायुम् ।
गूढो यथैव दहनो मथनादुपैति
आवाहितोऽपि हि तथा त्वमुपैपि चार्चाम् ॥

"मालाधराच्युत! विभो! परमार्थमूर्ते!
सर्वज्ञनाथ! परमेश्वर! सर्वशक्ते! ।
आगच्छ मे कुरु दयां प्रतिमां भजस्व
पूजां गृहाण मदनुग्रहकाम्यया च" ॥ ३५७ ॥

ततो विसृज्य चक्रेण भोगैः पूर्वोदितैर्यजेत् ।
अर्घ्याद्यैर्दक्षिणान्तैस्तु पाठयेद्ब्राह्मणांस्ततः ॥ ३५८ ॥

अर्चामि तेति मन्त्रं वै सामगांश्चार्चत त्विति ।
(ओं)भगवानिति तज्ज्ञांस्तु अग्नौ सन्तर्पयेत्ततः ॥

स्वकुण्डे देशिकेन्द्रस्तु समिधां सप्तकं हुनेत् ।
पश्चाच्छताष्टसंख्यं च साज्यैस्तु तिलतण्डुलैः ॥ ३६० ॥

तर्पयित्वा तु पूर्णान्तमुद्धृत्याग्निकणं ततः ।
दिक्कुण्डेषु विनिक्षिप्य संस्कृतेषु पुरैव हि ॥ ३६१ ॥

तथैव च विदिक्कुण्डेषु उद्धृत्याभ्यर्च्य वै क्रमात् ।
ततः प्रभवयोगेन चतुर्दिक्षु निवेशयेत् ॥ ३६२ ॥

चतुरो वासुदेवादिनाम्ना एकायनान् द्विजान् ।
ताभिः स्वाभिरसंख्यं च तैः कार्यमभिधादिभिः ॥

समित्सप्तकपूर्वैस्तु साज्यैस्तु तिलतण्डुलैः ।
एवमप्ययययोगेन वाय्वादीशावसानकम् ॥ ३६४ ॥

ऋग्वेदाद्यांस्तु चतुरः संस्कृत्यादौ तथा न्यसेत् ।
अथवा विन्यसेत्तांस्तु ईशाद्वायुपदावधि ॥ ३६५ ॥

तैरप्यच्युतलिङ्गैस्तु स्वशास्त्रोक्तैश्च पावनैः ।
हवनं विधिवत् कार्यं भक्तियुक्तेन चेतसा ॥ ३६६ ॥

एवं क्रमेण कुण्डांस्तु सर्वान् हुत्वा ततो गुरुः ।
द्वास्थादीनां पुरोक्तानां दिक्पतीनां समाचरेत् ॥३६७॥

हवनं विधिवत् कुण्डे तदर्थं पूर्वनिर्मिते ।
स्तुत्वा जितंत्वामन्त्रेण सामज्ञान् पाठयेत् पुनः ॥

सह गायत्रिसाम्ना तु यद्रथन्तरसंज्ञकम् ।
प्रजप्य द्वादशार्णं तु मुद्रां बध्वा प्रणम्य च ॥ ३६९ ॥

अष्टाङ्गेनाथ विज्ञाप्यो भगवान् भूतभावनः ।
"मूर्तिभेदेन रूपेण अनेनैव हि साम्प्रतम् ॥ ३७० ॥

लोकानज्ञाततत्त्वांस्तु समाहूयाद्य नागरान् ।
येनान्तः संप्रविष्टेन ईषत्कालवशात्तु वै ॥ ३७१ ॥

जन्मान्तरसहस्रोत्थान्मोक्षमायान्ति किल्बिषात्" ।
एवमर्थ्यो हि भगवान् लोकानुग्रहकृत् प्रभुः ॥ ३७२ ॥

दत्त्वार्घ्यगन्धस्रग्धूपदीपनैवेद्यमेव च ।
निवेद्याचमनं चार्घ्यं कुर्यान्नीराजनं ततः ॥ ३७३ ॥

पुण्याहजयघोषेण वेदध्वनियुतेन च ।
शङ्खवादित्रनिर्घोषपटहैर्गीतिभिः सह ॥ ३७४ ॥

करावङ्घ्रिगतौ कृत्वा देवदेवस्य देशिकः ।
पाठयेद्ब्राह्मणं मन्त्रं "उत्तिष्ठेति" ततः सह ॥ ३७५ ॥

यात्रोपकरणैर्मन्त्रं कृत्वा ब्रह्मरथे स्थिरे ।
सुयन्त्रितेति क्षीराज्यदध्योदनसमन्विते ॥ ३७६ ॥

सुभिक्षक्षेमशान्त्यर्थं परमान्नफलैर्युते ।
पाठयेदस्य यामीयमृग्ब्राह्मणं तदनन्तरम् ॥ ३७७ ॥

तन्मयान् चलमन्त्रं तु "दशार्धं"ति महामते! ।
स्वयमाद्यन्तसंरुद्धं हृदा तु कवचं जपेत् ॥ ३७८ ॥

भ्रामयेद्बलिदानं च क्रियमाणं तु सर्वदिक् ।
(रत्न) पद्मकाञ्चनवज्राणां पूर्ववत् क्षेपमाचरेत् ॥
दिव्याद्यायतनानां च कार्या पूजा यथोचिता ।
पञ्चरात्रविदां चैव यतीनां ब्रह्मचारिणाम् ॥ ३८० ॥
षट्कर्मनिरतानां च दानं दीनजनेष्वपि ।
रथस्थे मन्त्रबिम्बे तु यावत्पदशतं व्रजेत् ॥ ३८१ ॥
तद्रथं तूर्यघोषेण तावत् क्रतुशतं फलम् ।
आप्नोत्याराधकः शश्वत् सकामो नियतव्रतः ॥
ततस्तोरणदेशस्थं रथं कृत्वाऽर्चयेत् प्रभुम् ।
पाद्यार्घ्यपुष्पधूपैश्च नमस्कृत्य च पाठयेत् ॥ ३८३ ॥
उत्तिष्ठेति द्विपट्कार्णं सजितंतं—तु चाखिलम् ।
संपठन् पौरुषं सूक्तं यागवेश्म प्रवेशयेत् ॥ ३८४ ॥
शय्यायां प्राक्शिरोबिम्बं शाययेद्धृदयेन तु ।
देशिको मूर्तिपैः सार्धं यात्राहोमं समा यत् ॥ ३८५ ॥
ततस्तच्छिरसोद्देशे चक्राकारस्थिते घटे ।
पूर्वोक्तलक्षणे नेत्रमस्त्रसंपुटितं यजेत् ॥ ३८६ ॥
पूजयेन्मङ्गलान्यष्टौ प्रागादौ तु स्वनामभिः ।
अष्टासु तत्र कुम्भेषु पुरैव स्थापितेषु च ॥ ३८७ ॥
वासुदेवादयः पूज्याः प्रभावाप्ययोगतः ।
हृदादि यद्वा दिक्स्थेषु विदिक्स्थेषु तदस्त्रपम् ॥३८८॥
यद्वा प्राच्यां तु वाराहो नारसिंहस्तु दक्षिणे ।
प्रतीच्यां श्रीधरो देवो हयवक्त्रस्तथोत्तरे ॥ ३८९ ॥
आग्नेय्यां भार्गवो रामो नैर्ऋते राम एव च ।
वायव्ये वामनश्चापि विष्णुरीशानगोचरे ॥ ३९० ॥
स्वनाम्ना पूजयित्वैतानर्घ्यगन्धादिभिस्ततः ।
पूजयित्वार्घ्यपुष्पाद्यैः शयनस्थं विभुं ततः ॥ ३९१ ॥
चर्मणाच्छादनपटं दत्वा धूपाधिवासितम् ।
मूलेन शयनस्थस्य कुर्यादाप्यायनं ततः ॥ ३९२ ॥
देवाङ्घ्रिनिकटोद्देशे उपविष्टस्तु देशिकः ।
मन्त्रविद्देवबिम्बस्य मन्त्रन्यासं समाचरेत् ॥ ३९३ ॥

लेख्यादौ मन्त्रबिम्बे तु प्रासादस्थे द्विजोत्तम ! ।
उत्सवं कर्मबिम्बे तु विष्टरे वा प्रकल्प्य तु ॥ ३९४ ॥
प्रस्थाप्य शयने प्राग्वत् प्रासादं संप्रविश्य च ।
मन्त्रन्यासादिकं कुर्याद्वक्ष्यमाणविधानतः ॥ ३९५ ॥
सुविस्तृतं तद्विधानमिदानीवधारय ।
पीठे पुष्पाञ्जलिं कृत्वा गन्धयुक्तं च साक्षतम् ॥३९६॥
आमूर्ध्नश्चरणान्तं तु द्वादशार्णं तु विन्यसेत् ।
अङ्गोपाङ्गस्थितिं कुर्यात् स्थानेषु हृदयादिषु ॥ ३९७ ॥
हृदि मूर्ध्नि शिखायां तु स्कन्धयोः करमध्यतः ।
नेत्रयोरुदरे पृष्ठदेशे बाहुद्वये ततः ॥ ३९८ ॥
ऊरुभ्यां जानुयुग्मेऽथ पादयोस्तदनन्तरम् ।
देवस्य दक्षिणे हस्ते चक्रं शङ्खं तु वामतः ॥ ३९९ ॥
वामहस्ते गदाखड्गौ ह्यथवा दक्षवामयोः ।
क्रमाल्लाञ्छनमन्त्रांस्तु चक्रादीन् लाञ्छनान् न्यसेत् ॥
किरीटं शिरसोद्देशे श्रीवत्सं च गलादधः ।
वक्षसोऽवामभागे तु विन्यसेत्तदनन्तरम् ॥ ४०१ ॥
कौस्तुभं हृदये न्यस्य वनमालां च कण्ठतः ।
श्रियं दक्षिणभागे तु पुष्टिमुत्तरतो न्यसेत् ॥ ४०२ ॥
ऊरुमूले वैनतेयमथेदानीं निबोध मे ।
चतुर्भुजस्य देवस्य चक्रादेर्विनिवेशनम् ॥ ४०३ ॥
मुख्यदक्षिणहस्तेऽब्जं गदां वामकरे न्यसेत् ।
अपरे दक्षिणे चक्रं शङ्खं वामकरे परे ॥ ४०४ ॥
अन्यान् लाञ्छनमन्त्रांस्तु यथायोगं तु विन्यसेत् ।
अन्येषु षड्भुजाद्येषु मुख्यदक्षादितः क्रमात् ॥ ४०५ ॥
सर्वान् लाञ्छनमन्त्रांस्तु यथास्थानगतान् न्यसेत् ।
संस्थाप्य भगवन्मूर्तिर्धत्ते चक्रादिलाञ्छनम् ॥ ४०६ ॥
हस्ते येन क्रमेणैव लाञ्छनानि न्यसेत्तथा ।
मन्त्रान् किरीटपूर्वांश्च प्राग्वत् सर्वत्र विन्यसेत् ॥
पादादिद्वादशाङ्गेषु ततो दामोदरादिकान् ।
तच्छक्तिकांस्तथा मन्त्रान् प्राग्वद्व्यापकलक्षणान् ॥

ईश्वरेणाथ बीजेन यथावस्थेन भावयेत् ।
पादादितन्मयेनैव तद्वन्मन्त्रवरेण तु ॥ ४०९ ॥
प्राग्वद्‌व्यययुक्त्या तु ह्यन्तर्ज्योतिर्मयात्मना ।
विभुना चाकुस्वरूपेण तदेवाथ परं पदम् ॥ ४१० ॥
सुशान्तं सर्वगं बुद्‌ध्वा निस्तरङ्गमिवोदधिम् ।
विद्याङ्गदामित्याद्यं यत् पाठयेत् पाञ्चरात्रिकान् ॥
देहसान्यासिकं मन्त्रं धारणाख्यमनन्तरम् ।
जीमूतस्येति ऋग्वेदान् नासदासीति पाठयेत् ॥४१२॥
क्रमेणानेन हुत्वा तु पादार्धशतसंख्यया ।
तिलानां च तथा मन्त्रैराज्यस्यैभिर्महामते ! ॥ ४१३ ॥
दत्वा पूर्णाहुतिं प्राग्वदुपसंहारलक्षणाम् ।
ततस्तत् परमं ब्रह्म ह्युदितं पूर्ववत् स्मरेत् ॥ ४१४ ॥
सर्वशक्तिमयेनैव स्वभावेन स्वकेन तु ।
ओजोबलात्मना यद्वद्‌गन्धो द्रव्यात्मना तु वै ॥ ४१५ ॥
बीजं तरुस्वरूपेण समुद्रो बुद्बुदात्मना ।
एवमव्यपदेश्या या शक्तिः स्वे शक्तिदर्पणे ॥ ४१६ ॥
स्थितमादाय विश्वेशः स्वातन्त्र्याच्च महामते ! ।
मन्त्ररूपां तनुं धत्ते सम्यगाराधनाय च ॥ ४१७ ॥
नानात्वमुपयातस्य प्रसरं तस्य च स्वयम् ।
निष्प्रभत्वं प्रयातस्य चिद्बीजनिचयस्य च ॥ ४१८ ॥
आविष्कृतस्य भेदेनाप्यसूतेन बलीयसा ।
अज्ञानगहनेनैव नित्यानित्यामलात्मना ॥ ४१९ ॥
स्मृत्वैवं मूलमन्त्रं तु बिम्बहृत्पद्मगं स्मरेत् ।
षड्‌शक्तिकिरणोपेतं तैस्तद्‌द्रव्यमयीं तनुम् ॥ ४२० ॥
संस्मरेत् संहरन्तं च प्रागुक्तेनैव वर्त्मना ।
स्वरूपममलं भूयः स्मरेन्मूर्त्यात्मना तु तत् ॥ ४२१ ॥
नयन्तं पूर्वविधिनाप्येवं स परमेश्वरः ।
मन्त्रात्मना स्वतन्त्रत्वमुपयातो यदा तदा ॥ ४२२ ॥
"सहस्रशिरसं देव"मिति सर्वांस्तु चोदयेत् ।
पाठयेद्ब्राह्मणान्—धातर्यध्यक्षेति च मन्त्रपम् ॥४२३॥

यो विश्वतश्चक्षुरिति, यातव्यो भवतीति च ।
द्वासुपर्णेति तदनु, अतो देवेति वै ततः ॥ ४२४ ॥
ऋङ्मयान् पौरुषं सूक्तं ततः परतमां त्विति ।
शाश्वता च ततः कालकलेति समुदाहरेत् ॥ ४२५ ॥
एषा बुद्धिः सप्तधेति "अवेदानीं"च पाठयेत् ।
एवं मन्त्रानुसन्धानं कथितं च पराभिधम् ॥ ४२६ ॥
सूक्ष्मसंज्ञं मुनिश्रेष्ठ ! विध्यन्तरमथोच्यते ।
वैभवं देवताचक्रं व्यूहाख्यं तदनन्तरम् ॥ ४२७ ॥
सूक्ष्मं चापि मुनिश्रेष्ठ ! पादयोर्हृदि मूर्धनि ।
प्रपूज्य पुष्पधूपाद्यैर्मुद्राभिः प्रणमेदथ ॥ ४२८ ॥
गत्वा कुण्डसमीपं तु व्यापारेष्वखिलेषु च ।
होमं कुर्याद्यथाशक्ति तिलाद्यैः शतपूर्वकम् ॥ ४२९ ॥
स्मृत्वैकैकं तु वै कर्म कर्ता मन्त्रोदितेन च ।
हृन्मन्त्रेण समूलेन दत्वा पूर्णाहुतिं ततः ॥ ४३० ॥
आप्रभाताच्च तत् कालं कर्मणां पूरणाय च ।
ततः शान्त्युदकं मूर्ध्नि होमान्ते चात्मनो द्विज ! ॥
दत्वा तु बिम्बशिरसि मूलेनोदकमेव तत् ।
जपं च कर्ममन्त्राणां यथाशक्ति समाचरेत् ॥ ४३२ ॥
भूतानां बलिदाने च कृते कुण्डेषु मूर्तिपाः ।
स्वैः स्वैर्मन्त्रैः सहस्रं वा शतं वाष्ट तु होमयेत् ॥४३३॥
तैश्च शान्त्युदकं मूर्ध्नि बिम्बे वै दापयेद्‌गुरुः ।
अथाधिवासनं कुर्याद्विधिदृष्टेन कर्मणा ॥ ४३४ ॥
ध्यानाख्यं निष्कलं शुद्धं येन सन्निहितः सदा ।
मन्त्रो ह्यर्चागतो विप्र ! स्यात् पटस्थोऽथवा मुने ! ॥
न चोपसंहृतो यावद्‌गुरुणा तत्ववेदिना ।
प्राक्सर्वमुपसंहृत्य संहारक्रमयोगतः ॥ ४३६ ॥
स्वरूपे विकृते शुद्धे गुरुरास्ते द्विजोत्तम ! ।
स्वहृद्रश्मिमये पद्मे स्थितिं कृत्वा पुरात्मनः ॥ ४३७ ॥
एवमेवाविनाशं च निरस्तावयवं यथा ।
बोधविज्ञानदेहं च बिम्बं संभाव्य वै तथा ॥ ४३८ ॥

द्वौ सुषुम्नात्मकौ मार्गौ प्रज्वलद्भास्कराकृती ।
हृत्पद्मगोलकाच्चैव एकदेशसमुत्थितौ ॥ ४३९ ॥

मणिप्रभेव चोर्ध्वाधो व्यापकत्वेन संस्थितौ ।
यथात्मनि तथा देवे तथाऽऽत्मनि विभाव्य च ॥

ततो यायाद्दक्षिणेन घ्राणान्वयपथा मुने ! ।
स्वदेहाद्धृदयं देवं वाममार्गेण संविशेत् ॥ ४४१ ॥

यथात्मनाऽऽत्मा हृदये ह्यनुभूतो ह्यनूपमः ।
तथा तद्धृदयान्तस्थं स्मरेद्विज्ञानगोलकम् ॥ ४४२ ॥

दृष्ट्वा स्वरश्मिखचितमानन्दापूरितं महत् ।
गमागमैकनिष्ठं तु शक्तो ब्रह्मण्यथात्मनि ॥ ४४३ ॥

देवदेहस्थितेनैव विज्ञानेन सहैकता ।
निष्पाद्या यावदस्पन्दकालमानं स्वदेहकम् ॥ ४४४ ॥

परं यदात्मना विप्र ! केवलेनानुभूयते ।
स्पन्दप्रवर्तितेनाथ कालेनैकात्मना द्विधा ॥ ४४५ ॥

यथाऽऽत्मनि तथा देवे निष्कामेदथ साधकः ।
देवं दक्षिणमार्गेण विशेद्वामेन चात्मनः ॥ ४४६ ॥

हृदयं भासुराकारं ज्ञानामृतपरिप्लुतम् ।
योगोऽयं मुनिशार्दूल ! विम्बस्य द्रव्यजस्य च ॥ ४४७ ॥

आपादान्मूर्धपर्यन्तं नाडीवृन्दस्य व्यञ्जकः ।
येन सर्वेशिता विप्र ! विम्बस्यास्य प्रजायते ॥ ४४८ ॥

तं योगमधुना वच्मि एकाग्रमवधारय ।
हृत्पुण्डरीकमध्यस्थः साधको वृत्तिवर्जितः ॥ ४४९ ॥

मन्त्रोच्चारप्रयोगेण प्राग्वत् पदमनामयम् ।
यायादूर्ध्वप्रवाहेण, तस्माज्ज्ञेयः प्रवर्तते ॥ ४५० ॥

अव्युच्छिन्नोऽव्ययेऽक्षुब्धो स्वेच्छया क्षोभमेति च ।
यथा सन्नतरो दीपो ह्यकम्पः कम्पमेति च ॥ ४५१ ॥

कोशकारो यथा तन्तुं गृहीत्वा संप्रवर्तते ।
विज्ञानशक्तिमालम्ब्य एवम्भूतो हृदम्बुजम् ॥ ४५२ ॥

स्वकीयमायया, ऽऽचार्यः पूर्ववत् संविशेत्ततः ! ।
देवस्य हृदयाम्भोजं विलोक्य सह तेन वै ॥ ४५३ ॥

भावयित्वाथ विज्ञानं बोधशक्त्या ततो व्रजेत् ।
तद्द्वादशान्तमागत्य ज्ञेयाख्यं न च नासिकम् ॥

तत्पादात् पूर्वयुक्त्या तु देवं हृदयमाश्रयेत् ।
ततो वै देवहृदयात् प्रविश्य हृदयं स्वकम् ॥ ४५५ ॥

मध्यमार्गेण हृदयादेत्य स्वं नेत्रगोलकम् ।
एवं देवेऽनुसन्धाय निरीक्ष्य च परस्परम् ॥ ४५६ ॥

देवालोकेन चात्मानमनुविद्धं च संस्मरेत् ।
आत्मालोकेन देवेशं भिन्नं सर्वत्र भावयेत् ॥ ४५७ ॥

एतदीश्वरसन्धानं भिन्नमेकात्मलक्षणम् ।
सर्वैश्वर्यप्रदं विद्धि सर्वदा प्रतिमासु वै ॥ ४५८ ॥

अथ शब्दानुसन्धानमेकैकात्मनदर्शनम् ।
वक्ष्यामि येन वै मन्त्रो विम्बेनैकात्मतां व्रजेत् ॥

निष्कम्पबोधसामान्यरूपो भूत्वा पुनः स्वयम् ।
ये शब्दजनिता भावाः सूक्ष्मैः सूक्ष्मतराऽखिलाः ॥

सामान्यबोधशब्देन तान् पश्यवेकतां गतान् ।
सङ्कल्पपूर्वं सर्वोत्थशब्दमात्रेण वर्जितान् ॥ ४६१ ॥

स चाभिमुखमायाति सङ्कल्पादुत्थितस्य च ।
शब्दरूपपदार्थस्य शब्दस्य परमौजसः ॥ ४६२ ॥

सङ्कल्पपदवीरूढः स्फुरत्यन्तःस्थितः स्फुटम् ।
पदार्थोपरि यः शब्दो मध्यमं विद्धि तन्मुने ! ॥४६३॥

हृत्पद्मकर्णिकासंस्थः प्रयत्नपदवीषु च ।
विद्यासु करणोत्थासु यश्चाभिव्यक्तिमेति च ॥ ४६४ ॥

वाच्यवाचकरूपेण स शब्दः स्थूल उच्यते ।
अतिस्थूलपरत्वेन स च वागिन्द्रिये पुनः ॥ ४६५ ॥

हृदयाद्धृदयेषु भावेषु अभिव्यक्तिं प्रयाति च ।
स हि स्थूलतरः शब्दो व्यवहारेऽखिले स्थितः ॥

तस्माच्छब्दमयो देह इति चेतसि वै पुरा ।
निष्कम्पं साधकः कृत्वा विम्बं भाव्यं तदात्मकम् ॥

शब्दसंहारयोगेन सविम्बं ब्रह्मसंयुतम् ।
निष्कम्पयोगयुक्तात्मा यो गुरुः संप्रविश्यति ॥ ४६८ ॥

पूर्वोक्तक्रमयोगेन शब्दब्रह्म ह्यनागतम् ।
पश्येत् परिणतं विप्र ! क्रमाद्बिम्बात्मना तु वै ॥४६९॥
तेन संस्थापितं बिम्बं भुक्तिमुक्तिफलप्रदम् ।
एवं शब्दानुसन्धानं कृत्वा बिम्बस्य सत्तम ! ॥ ४७० ॥
ततो वै मन्त्रसन्धानमारभेत प्रयत्नतः ।
अशब्ददेहः शब्दात्मा नित्योदितमनामयम् ॥ ४७१ ॥
स्वहृत्पद्मस्थितं मन्त्रमुदितं नालसूत्रवत् ।
निस्सृतं मध्यमार्गेण बिम्बान्तं संविशन् स्मरेत् ॥४७२॥
स्फुरत्तारकरूपं च मन्त्रैर्व्याप्तं तथाखिलैः ।
मन्त्रात्मानं जगन्नाथं बिम्बहृत्पद्ममध्यगम् ॥ ४७३ ॥
संस्मरेत् सृष्टिसंहारौ कुर्वन्तं साधकोत्तमः ।
परः स एव बोद्धव्यः सुसूक्ष्मः स च निष्कलः ॥ ४७४ ॥
सकलं चैव बोद्धव्यमुभयात्मकमित्यपि ।
विज्ञानरजनीमध्ये ज्ञेयं निद्रारसास्थितम् ॥ ४७५ ॥
तत्वग्रामप्रभातेऽथ संभोगमिव सोद्ये ।
प्रबुद्धं संस्मरेद्देवमवतीर्णं परात् पदात् ॥ ४७६ ॥
सर्वाख्यभोगपीठं तत्तेनाक्रान्तं च भावयेत् ।
भोगभूसंस्थितं देवं स्थितिमन्तं विभाव्य च ॥ ४७७ ॥
स्थितिराधारशक्तिर्वै विभोर्मन्त्रात्मकस्य च ।
तस्माद्ब्रह्मशिलापीठं बिम्बमेकीकृतं स्मरेत् ॥ ४७८ ॥
नानाधिवासयोगेन पूजयेत्तदनन्तरम् ।
मन्त्रन्यासं पुरा कृत्वा त्रिधा पूर्वक्रमेण तु ॥ ४७९ ॥
हस्तन्यासं विना विप्र ! लययुक्त्यानु चाखिलम् ।
कथितं सूक्ष्मसन्धानं स्थूलं विध्यन्तरं शृणु ॥ ४८० ॥
संस्कृतं देवदेवस्य त्वर्चादेहं सुलक्षणम् ।
संस्मरेच्च सुसंपूर्णं मणिरत्नमयैर्विना ॥ ४८१ ॥
स्वदेहवदुपादेयैर्नाडीव्यूहैः सवायवैः ।
धातुभिः सोमसूर्याग्निसहज्ञानादिकैर्गुणैः ॥ ४८२ ॥
गुणकारणतः क्ष्मान्तं यदन्यत्तत्वसंग्रहम् ।
द्रव्यमाश्रित्य वै बिम्बं वर्तते यदसन्महत् ॥ ४८३ ॥
तत्र हृत्कमलाकाशे मन्त्रं रत्नप्रभोज्ज्वलम् ।
ब्रह्मभावनया न्यस्तं यच्छति प्रातिमं फलम् ॥ ४८४ ॥
श्रद्धापराणां कर्तॄणां फलतोऽभ्येति च स्थिराम् ।
प्रतिपत्तिं परां ब्राह्मीमाकारं प्रति सर्वदा ॥ ४८५ ॥
प्राप्नोति यद्वशादन्ते ज्ञानमात्मप्रकाशकम् ।
उक्तमेतत्तु सकलमाकर्णय सुविस्तृतम् ॥ ४८६ ॥
पूर्ववद्धारणाभिस्तु संहारक्रमयोगतः ।
तद्बिम्बमुपसंहृत्य स्वरूपेऽविकृते परे ॥ ४८७ ॥
ततः क्रमेण वै सृष्ट्वा बिम्बं ज्योतिर्मयं स्मरेत् ।
एवं पूर्वोदितं ध्यात्वा नाडीवृन्दस्य व्यञ्जकम् ॥ ४८८ ॥
ततस्तासां तु नाडीनां ध्यायेद्व्यक्तिं सुविस्तृताम् ।
द्वासप्ततिसहस्रं तु नाड्यः परिकीर्तिताः ॥ ४८९ ॥
दशप्रधानास्तासां तु वायवश्च तथा दश ।
इडा च पिङ्गला चैव सुषुम्ना च तथा परा ॥ ४९० ॥
गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी ।
अलम्बुसा कुहूश्चैव कौशिकी दशमा स्मृता ॥ ४९१ ॥
प्राणापानसमानाश्च व्यानोदानौ तथैव च ।
नागः कूर्मश्च कृकरः देवदत्तो धनंजयः ॥ ४९२ ॥
आनीय त्रितयं कुर्याद्द्वे पूरककुम्भकौ ।
पूरके नाडिकाः सर्वाः पूर्यन्ते नात्र संशयः ॥ ४९३ ॥
ततो हृदयपद्मं च विकासमुपयास्यति ।
कुम्भकेन निरुद्धं तद्भवेदूर्ध्वमुखं द्विज ! ॥ ४९४ ॥
सवायूनां च नाडीनां स्थितिं स्मृत्वा ततः परम् ।
रसलोहितमांसानां मेदोमज्जास्थिनां तथा ॥ ४९५ ॥
धातूनां शुक्रधात्वन्तं स्मृत्वान्तः संस्थितिं क्रमात् ।
स्मृत्वा हृदयपद्मे तु सोमसूर्याग्निमण्डलान् ॥ ४९६ ॥
आपादात् ब्रह्मरन्ध्रान्तं सर्वाङ्गेषु सत्तम ! ।
प्रकृतीनां च तत्वानां कुर्यात् सम्यङ्निवेशनम् ॥
आपादाद्ब्रह्मरन्ध्रान्तमव्यक्तान्तं क्रमेण तु ।
क्षित्यादिकानां पादान्तमव्यक्तं वा धरान्तिकम् ॥

मूर्ध्नि भ्रूमध्यपर्यन्तं प्रधानं भावयेद्द्विज!।
सिन्दूरपुञ्जसंकाशां तालुमध्ये धियं स्मरेत् ॥ ४९९ ॥

सितेन्दुरश्मिवर्णाभं खद्योतमिव खेचरम्।
तालुमूले त्वहंकारं कुसुम्भरससन्निभम् ॥ ५०० ॥

संस्मरेन्मानसं तत्त्वं तालुकण्ठान्तरे द्विज!।
राजोपलद्युतिमुपं कदम्बकुसुमोपमम् ॥ ५०१ ॥

कण्ठाद्धृत्पद्मपर्यन्तं स्मरेत् पञ्चपदे समे।
श्रोत्रादीनथ वै पञ्च प्रस्फुरत्तारकोज्ज्वलान् ॥ ५०२ ॥

पद्मस्थानाच्च नाभ्यन्तं प्राग्वत् पञ्चपदान्तरे।
वागादीन् वै स्थितान् पञ्च क्रमेण विनिवेशयेत् ॥

आनाभेर्वस्तिशीर्षान्तं सुसमे पदपञ्चके।
शब्दतन्मात्रपूर्वाणि गन्धमात्रावसानतः ॥ ५०४ ॥

स्वैः स्वैर्गुणैश्च युक्तानि भास्वज्ज्योतिःप्रभाणि तु।
ऊरुमूले तथा मध्ये सन्धिदेशे ततस्त्वधः ॥ ५०५ ॥

दण्डे मर्मावसाने तु सर्वसिंश्चरणे क्रमात्।
खं वाय्वग्न्युदकक्ष्मान्तं चिन्तयेद्भूतपञ्चकम् ॥५०६॥

नीरूपाञ्जनवर्णं तु संस्मरेद्व्योमगोलकम्।
वायव्यं नीलपीतं च तैजसं मधुपिङ्गलम् ॥ ५०७ ॥

मुक्ताफलनिभं चाप्यं रक्तपीतं तु पार्थिवम्।
अथवा तत्त्वविन्यासमेवमेव समाचरेत् ॥ ५०८ ॥

प्रकृतिं हृदये न्यस्त्वा धीमनोममतां तथा।
कण्ठहृन्नाभिषु न्यस्त्वा तन्मात्रं शब्दसंज्ञितम् ॥५०९॥

स्वमतयुक्तं शिरसि तालोः कण्ठान्तकं तथा।
स्पर्शाख्यं वायुना सार्धं रूपाख्यं वह्निना सह ॥ ५१० ॥

कण्ठात् प्रभृति नाभ्यन्तं रसाख्येन जलं सह।
'नाभेर्जान्वन्तरं यावज्जानोः पादान्तकं न्यसेत् ॥ ५११ ॥

धरां गन्धेन तत्पश्चात् स्वे स्वे स्थाने तु विन्यसेत्।
बुद्ध्यक्षाणि क्रमेणैव तथा कर्मेन्द्रियाण्यपि ॥ ५१२ ॥

यद्वा प्रधानमामूर्ध्नो यावद्वक्षःस्थलं न्यसेत्।
नाभौ बुद्धिमहङ्कारं कटिमूलाश्रितं स्मरेत् ॥ ५१३ ॥

ऊरुभ्यां शब्दतन्मात्रं स्पर्शाख्यं सन्धिदेशगम्।
जङ्घाभ्यां रूपतन्मात्रं गुल्फयो रससंज्ञितम् ॥५१४॥

पादाभ्यां गन्धसंज्ञं तु स्वबीजध्यानसंयुतम्।
अथवा सप्तधा तत्त्वक्लृप्तौ स्थानक्रमं शृणु ॥ ५१५ ॥

गुल्फजानुकटीवक्षःकण्ठभ्रूकावटावधि।
बुद्ध्यन्तानां धरादीनां क्रमाद्ध्वनिसप्तकम् ॥ ५१६ ॥

आपादनाभिदेशं वा महाभूतैर्धरादिकैः।
व्याप्तं चतुर्भिर्वाय्वन्तैस्तदूर्ध्वं नभसा पुनः ॥ ५१७ ॥

पूरितं हृदयान्तं च तदुद्देशाच्छिखावधि।
विभाव्यं मनसा व्याप्तं तदूर्ध्वं द्वादशान्तकम् ॥ ५१८ ॥

प्रधानापरपर्यायं बुद्धितत्त्वं तु विन्यसेत्।
अथ द्वेधा तत्त्वक्लृप्तौ विधानमवधारय ॥ ५१९ ॥

आमूर्ध्नो नाभिपर्यन्तं प्रधानं परिभावयेत्।
आनाभेः पादपर्यन्तं स्मरेत्तन्मात्रकं गणम् ॥ ५२० ॥

यद्वा व्यक्तौ प्रधानं तु व्यापकं देवरूपधृक्।
सर्वतत्त्वमयं मन्त्रं तस्य वा केवलं हृदि ॥ ५२१ ॥

प्राधानिकं योजनीयमभिन्नं तत्त्वकारणम्।
एवमिच्छानुरूपेण तत्त्वविन्यासमाचरेत् ॥ ५२२ ॥

ज्ञानादिगुणषट्कं च हृदयादिषु विन्यसेत्।
प्राग्वदीश्वरसन्धानमाचरेन्मुनिपुङ्गव! ॥ ५२३ ॥

ततः शब्दानुसन्धानं प्रागुक्तं तु समाचरेत्।
तथैव वर्णभेदेन स्थानभेदं च विन्यसेत् ॥ ५२४ ॥

कदम्बकुसुमाकार मकारं विन्यसेद्द्विज!।
शिखायां, शिखारोद्देशे आकारं कुङ्कमप्रभम् ॥ ५२५ ॥

तप्तचामीकराकारमिकारं मुखमण्डले।
ईकारं कण्ठदेशे तु कुन्देन्दुसदृशप्रभम् ॥ ५२६ ॥

उकारं जत्रुभागे तु शुद्धस्फटिकवर्चसम्।
ऊकारं वक्षसि तथा सिन्दूरसदृशाकृतिम् ॥ ५२७ ॥

ऋकारं हृदये न्यस्येच्छुक्लवर्णं महाप्रभम्।
ॠकारं जाठरे भागे लाक्षारससमद्युतिम् ॥ ५२८ ॥

ऌकारं नाभिभागे तु तप्तकाञ्चनसन्निभम् ।
ॡकारं लिङ्गदेशस्थं चिन्त्यसेदसितप्रभम् ॥ ५२९ ॥
एकारं द्रुतहेमाभमूरुयुग्मं समाश्रितम् ।
ऐकारं जानुयुग्मे तु सन्ध्याजलदसन्निभम् ॥ ५३० ॥
ओकारं जङ्घयोस्तद्वच्चकुङ्कुमवर्णं द्विजोत्तम ! ।
औकारं रक्तवर्णं च गुल्फद्वयगतं तथा ॥ ५३१ ॥
अङ्कारं पादयोर्ब्रह्मन्नयस्कान्तसमप्रभम् ।
अः कारं चरणाङ्गुष्ठे पद्मरागसमप्रभम् ॥ ५३२ ॥
ककारं तु ललाटस्थं रक्तवर्णं तु चिन्त्यसेत् ।
खकारं पीतलनिभं भ्रुवोर्मध्यमदेशगम् ॥ ५३३ ॥
गकारं नासिकायां तु तुषारसदृशाकृतिम् ।
घकारं सितवर्णं तु दशनस्थानसंश्रितम् ॥ ५३४ ॥
ङकारं चिबुकोद्देशे शरद्गगनसन्निभम् ।
चकारं रक्तवर्णं च कृकाटीगोचरे न्यसेत् ॥ ५३५ ॥
छकारं पृष्ठभागे तु ज्वलितानलसन्निभम् ।
जकारं कटिदेशस्थं काञ्चनाद्रिसमप्रभम् ॥ ५३६ ॥
झकारमूरुमूले तु शुद्धस्फटिकसन्निभम् ।
ञकारं पादगुल्फाग्रे पद्मरागसमप्रभम् ॥ ५३७ ॥
टकारं भ्रूयुगगतं तुषारसदृशाकृतिम् ।
ठकारं नेत्रयोर्ब्रह्मन् ! रक्तवर्णं महाप्रभम् ॥ ५३८ ॥
डकारं गण्डयोश्चैव पीतवर्णं महाद्युतिम् ।
ढकारं हनुयुग्मस्थमिन्द्रनीलसमप्रभम् ॥ ५३९ ॥
णकारं कुचयुग्मे तु हरितालसमद्युतिम् ।
तकारं श्रवसोर्युग्मे प्रवालोपलसन्निभम् ॥ ५४० ॥
थकारं स्कन्धयुगले चम्पकप्रसवाकृतिम् ।
दकारं भुजयोर्मध्ये ज्वलितानलसन्निभम् ॥ ५४१ ॥
धकारं तु प्रकोष्ठस्थं खद्योतचयदीधितिम् ।
नकारं करयोर्न्यस्य पद्मपत्रसमद्युतिम् ॥ ५४२ ॥
पकारं रोमकूपस्थं पलाशदलसन्निभम् ।
फकारं कक्षभागस्थं सन्ध्याभ्रसदृशप्रभम् ॥ ५४३ ॥

बकारं पार्श्वयुग्मे तु पूर्णचन्द्रसमप्रभम् ।
भकारं सक्थिदेशस्थं नीलाञ्जनचयोपमम् ॥ ५४४ ॥
मकारं पिण्डिकासंस्थं शरद्गगनसन्निभम् ।
यकारं पाञ्चजन्ये तु धूम्रवर्णं च चिन्त्यसेत् ॥ ५४५ ॥
रकारं च सहस्रारे रक्तपङ्कजसन्निभम् ।
लकारं च गदायां वै सौदामिनिसमप्रभम् ॥ ५४६ ॥
वकारमरविन्दे तु शारदाभ्रसमप्रभम् ।
शकारं शोणिते न्यस्य अमृताभासविग्रहम् ॥ ५४७ ॥
षकारमस्थिनिचये शशशोणितसन्निभम् ।
सकारं मांसदेशे तु हिमकुन्दसमप्रभम् ॥ ५४८ ॥
हकारं प्राणदेशस्थं शुद्धस्फटिकविग्रहम् ।
क्षकारं सर्वतोव्याप्तं सूर्यवैश्वानरप्रभम् ॥ ५४९ ॥
अथवा मातृकान्यासमेवमेव समाचरेत् ।
अकारं तालौ चिन्यस्य मुखे चाकारमेव च ॥ ५५० ॥
इई लोचनयोर्न्यस्य उऊ श्रवणयोस्तथा ।
ऋॠ नासापुटे चैव ऌॡ गण्डद्वये तथा ॥ ५५१ ॥
एऐ दशनपङ्क्तौ च ओ औ ओष्ठगतौ स्मरेत् ।
अं इत्येव ललाटे तु विसर्गं रसने तथा ॥ ५५२ ॥
यकारं त्वग्गतं न्यस्य रेफं चक्षुषि चिन्त्यसेत् ।
लकारं नासिकायां तु वकारं दशनाग्रतः ॥ ५५३ ॥
श्रोत्रे शकारं चिन्यस्य षकारमुदरे तथा ।
सकारं कटिदेशे तु हकारं हृदये तथा ॥ ५५४ ॥
क्षकारं नाभिदेशे तु चिन्त्यसेद्द्विजसत्तम ! ।
पवर्गो बाहुरेकस्तु तवर्गस्तु द्वितीयकः ॥ ५५५ ॥
टवर्गश्च चवर्गश्च जङ्घाद्वयमुदाहृतम् ।
कवर्गाङ्गुलयः सर्वा विज्ञातव्या द्विजोत्तम ! ॥ ५५६ ॥
एवं हि वर्णसन्धानं कृत्वा चैव ततः परम् ।
आमूर्धश्चरणान्तं च चिन्त्यसेद्द्वादशाक्षरम् ॥ ५५७ ॥
अङ्गोपाङ्गस्थितिं कुर्यात् स्थानेषु हृदयादिषु ।
चक्रादिवैनतेयान्तं प्राग्वन्न्यस्त्वा क्रमेण तु ॥ ५५८ ॥

सर्वान् लाञ्छनमन्त्रांस्तु ततो दामोदरादिकान् ।
तच्छक्तिकांस्तथा मन्त्रान् पूर्ववद्विनिवेशयेत् ॥ ५५९ ॥

उपसंहृतिपूर्वान्तं सर्वं कृत्वा क्रमेण तु ।
ततस्तत्परमं ब्रह्म हृदिस्थं पूर्ववत् स्मरेत् ॥ ५६० ॥

ततस्तु मन्त्रसन्धानं कृत्वा पूर्वोक्तवर्त्मना ।
सहस्रशिरसं देवमित्यादीन् पाठयेत् क्रमात् ॥५६१॥

एवं स्थूलानुसन्धानमेतत्ते कथितं मया ।
एषु प्रोक्तेषु विप्रेन्द्र ! सन्धानेषु परादिषु ॥ ५६२ ॥

सन्धानमेकं कृत्वा तु गुरुरिच्छानुरूपतः ।
ततोऽर्चयित्वा देवेशं शयने बिम्बवृत्तिकम् ॥ ५६३ ॥

सांस्पर्शिकैरासनाद्यैर्विविधैरौपचारिकैः ।
हृदयङ्गमसंशैश्च मधुपर्कादिभिर्द्विज ! ॥ ५६४ ॥

परमान्नादिभिश्चान्नैः पवित्रैः पानकैस्तथा ।
अन्यैश्च विविधैर्भोगैर्यथा चानुक्रमेण तु ॥ ५६५ ॥

सर्वं तु संप्रदानान्तं कृत्वा पश्चात्तु मण्डले ।
सन्निधीकृत्य संपूज्य महता विभवेन तु ॥ ५६६ ॥

अग्नौ सन्तर्पयेत् साङ्गं समित्सप्तकपूर्वकम् ।
जुहुयुर्मूर्तिपाश्चापि स्वे स्वे कुण्डे यथाक्रमम् ॥५६७॥

प्रागादिदिक्षु कुण्डेषु क्रमेण समिधः स्मृताः ।
पलाशवृक्षखदिरबिल्वोदुम्बरभूरुहाम् ॥ ५६८ ॥

आग्नेयादिविदिक्षु स्युः पिप्पलप्लक्षसंभवाः ।
न्यग्रोधप्रभवाश्चैव काश्मर्यप्रभवास्तथा ॥ ५६९ ॥

[illegible]शुसमिधोऽन्यत्र भूयसां परिकल्पने ।
उक्ताभावे तु सर्वत्र पालाश्यः समिधो मताः ॥ ५७० ॥

चतस्रो धेनवः स्थाप्या दक्षिणस्यामुदङ्मुखाः ।
गङ्गासरस्वतीगोदायमुनारूपधारिणी ॥ ५७१ ॥

दुग्धैस्तदीयैः श्रपणं चरूणामाहुतीस्तथा ।
श्रपयेत् पयसा पूर्वं शालितण्डुलमाढकम् ॥ ५७२ ॥

कृसरैर्दक्षिणाग्नौ तु पाश्चात्ये गुलमिश्रितम् ।
उदीच्याग्नौ हरिद्रान्नं शुद्धान्नमितराग्निषु ॥ ५७३ ॥

प्रत्येकं शतमष्टौ च होमाः स्युः समिदादिभिः ।
तदर्धं वाथ पादं वा देशकालानुरूपतः ॥ ५७४ ॥

तिलशालियवावेणुर्होमबीजान्यनुक्रमात् ।
तिलैरितरकुण्डेषु तैर्वा सर्वत्र कल्पयेत् ॥ ५७५ ॥

स्वमूर्तिकुम्भान्मन्त्रेण जलमुद्धृत्य भाजने ।
बिम्बमूर्ध्नि क्रमाद्देयं सर्वैरेकायनादिकैः ॥ ५७६ ॥

चतुर्दर्भकृतेनैव कूर्चेन तु ततो द्विज ! ।
पलाशखदिराश्वत्थबिल्वशाखाभिरम्बुभिः ॥ ५७७ ॥

सिञ्चेयुर्मूर्तिपाः सम्यग्वेदिकाकलशैः स्थितैः ।
आचार्यः कोणदेशस्थैस्तोयैर्वेतसशाखया ॥ ५७८ ॥

सन्तर्पयित्वा तदनु मन्त्रं सपरिवारकम् ।
आज्यादिना प्रभूतेन दत्वा पूर्णाहुतिं ततः ॥ ५७९ ॥

दीक्षाविधिक्रमेणैवं सकलां तत्त्वपद्धतिम् ।
संशोध्य परभागस्थस्त्वाचार्यः सुसमाहितः ॥ ५८० ॥

भगवन्तं कृते त्वेवं बिम्बस्थं श्रावयेत् क्रमात् ।
मनसा सुविशुद्धेन इदं मन्त्रमुपस्थितः ॥ ५८१ ॥

"त्वया सन्निहितेनात्र भवितव्यमधोक्षज ! ।
मत्पूर्वाणां हि भक्तानां सिद्धिहेतोर्निरञ्जन ! " ॥५८२॥

ततः स भगवान्मन्त्रः प्रबुद्धः कमलेक्षणः ।
बिम्बमुत्थापयन् ध्यायेदाचार्येण तु संमुखम् ॥ ५८३ ॥

कृत्वा तु पादपतनं अष्टाङ्गेन तु साधकः ।
बिम्बात्मना प्रयातानां क्ष्मादीनामङ्गरूपिणाम् ॥५८४॥

आपादनेऽपि पूर्णार्थं पिण्डीभूतार्थमेव च ।
आरम्भादेव जातानां छिद्राणां शमने तु वै ॥ ५८५ ॥

आप्यायनार्थं मन्त्राणां द्रव्यैर्होमं समाचरेत् ।
द्विषट्केनाहुतीनां च एकैकेन चतुर्दश ॥ ५८६ ॥

आचाङ्घ्रेर्जानुपर्यन्तं स्पृष्ट्वाज्यं होमयेत् पुरा ।
आनाभिजानुदेशाच्च तथैव जुहुयाद्दधि ॥ ५८७ ॥

नाभेराकण्ठतः क्षीरमामूर्ध्नः कण्ठतो मधु ।
संमिश्रय जुहुयात् सर्वं स्पृष्ट्वा देहं तु चाखिलम् ॥

दत्त्वा घृतेन वै पश्चात् पूर्णां मूलेन तत्परम् ।
संस्कृत्य बिम्बवत् पीठं भिन्नं ब्रह्मशिलां तथा ॥ ५८९ ॥
प्राणाभिमानदेवं वा यस्य यो विहितस्तु वै ।
वेष्टयित्वास्वरैश्चित्रैश्चक्रमन्त्रेण वै ततः ॥ ५९० ॥
कार्यो ब्रह्मशिलाहोमः शताष्टाधिकसंख्यया ।
[2]गायत्रीभिस्तदर्धं च बह्वृचाद्यैः पृथक् पृथक् ॥
[1]अजस्य नाभावित्यादिमन्त्रैरेकायनैस्ततः ।
[3]अब्धादि भूतमूर्तिं तु भोग्यं वाप्यपृथक् स्थितम् ॥
देवतानां त्वधिष्ठानं पीठं कृत्वा तु बुद्धिगम् ।
होतव्यं प्रणवेनैव स्वयं व्याहृतिभिस्ततः ॥ ५९३ ॥
अपरैर्बलमन्त्रेण प्रणवान्तेन "लाङ्गलिन्" ।
ततो हवनमन्त्रेण तर्पणीयं तदेव हि ॥ ५९४ ॥
स्वनाम्ना प्रणवेनैव स्वाहान्तेनापरैस्तथा ।
संरोधस्तर्पितानां च कार्यः पूर्णान्तमेव हि ॥ ५९५ ॥
साम्भसा विष्टरेणैव भावेन सजपेन तु ।
सर्वैः स्वकस्य देवस्य स्वकीयासु च मूर्तिषु ॥ ५९६ ॥
शब्दात्मिकासु मूर्तीसु तद्वच्छ्रुतिमयस्य च ।
प्रासादस्याथ परितः कुण्डेष्वष्टासु च क्रमात् ॥५९७॥
कुण्डसंस्कारपूर्वं तु सर्वं कृत्वा तु मूर्तिपैः ।
हवनं विधिवत् कुर्याद्द्रव्यैः पूर्वोदितैः क्रमात् ॥
कृत्वैवं च तदा दिक्षु मूर्तिपान् विनिवेद्य च ।
पार्श्वदेशे तु कुण्डानां तर्पयेत् पायसेन तु ॥ ५९९ ॥
दक्षिणां च यथाशक्ति दद्याद्धेमादिकीं ततः ।
गृहीत्वा दक्षिणां, मन्त्रः प्रीणनीयस्तु तैस्ततः ॥
बिम्बस्य निकटे स्थित्वा इमं मन्त्रमुदीरयेत् ।
प्राप्ते लग्नोदये विप्र ! सन्निरीक्ष्य जगद्गुरुम् ॥
"क्षणं क्षमस्व भगवन् ! सर्वज्ञ ! करुणात्मक !
निवेशयामि ते यावत् प्रासादे ब्रह्मपीठिकाम्" ॥
अथ निद्रायमाणं तु देवं स्तुत्वावकुण्ठ्य च ।
अर्चयित्वा नमस्कृत्य तत्र सर्वान् प्रवेशयेत् ॥ ६०३ ॥

विप्रानेकायनान् वापि तथा वै बह्वृचादिकान् ।
स्वस्वशाखोत्थितान् मन्त्रान् पाठयेत् क्रमयोगतः ॥
स्तुतिपाठकपूर्वांश्च नृत्तगीतपरायणान् ।
वीणावेणुमृदङ्गादीनितरांश्च प्रवेशयेत् ॥ ६०५ ॥
विदिक्स्थान् प्रणवे जापे मूर्तिपांस्तु निवेदयेत् ।
दिक्स्थितान् मूर्तिपान् विप्र ! द्वादशार्णे निवेदयेत् ॥
रक्षामुद्रां ततः कृत्वा दर्शयेत् सर्वदिक्ष्वथ ।
शाययेद्दर्भशय्यायां यजमानमुपोषितम् ॥ ६०७ ॥
स्थण्डिले स्वप्नसिद्ध्यर्थं प्राक्शिरस्कं ततो द्विज ! ।
एवं कृत्वाधिवासं तु जागरेण नयेद्गुरुः ॥ ६०८ ॥
प्रभातायां तु शर्वर्यां कृत्वा स्नानादिकाः क्रियाः ।
प्रतिष्ठामारभेत् पश्चाद्देशिकः शास्त्रवित्तमः ॥ ६०९ ॥
प्रबुद्धं यजमानं तु स्वप्नं पृच्छेच्छुभाशुभम् ।
तत्राशुभोपशान्त्यर्थं तदानीं जुहुयाद्गुरुः ॥ ६१० ॥
शतं सहस्रं साग्रं वा यथाशक्त्यथवा द्विज ! ।
मध्वाज्यक्षीरसंमिश्रान् सफलांश्च तिलानपि ॥ ६११ ॥
अस्त्रसंपुटितेनैव नाम्ना स्वाहान्वितेन च ।
दोषं जहि जहीत्येवं पदं नामावसानकम् ॥ ६१२ ॥
केवलेनाथवाज्येन सिंहमन्त्रेण होमयेत् ।
एवं दुःस्वप्नशान्तिं तु कृत्वा स्थापनमाचरेत् ॥६१३॥
प्रासादं दर्भशाखाभिर्बहिरन्तश्च मार्जयेत् ।
विकीर्य साक्षतं पुष्पं गुग्गुलुं धूपयेत् पुनः ॥ ६१४॥
सहमूर्तिधरैर्विप्र ! शिल्पिभिश्चाथ देशिकः ।
सार्घ्यपुष्पाक्षतकरः प्रासादान्तं व्रजेत्ततः ॥ ६१५ ॥
हन्यात् सिद्धार्थकैस्तत्स्थान् विघ्नानस्त्राभिमन्त्रितैः ।
प्राङ्मध्ये विधिनानेन श्वभ्रं वा साम्प्रतं खनेत् ॥६१६॥
तदर्थं गर्भगेहं तु सूत्रपातैर्विभाजयेत् ।
तद्विधानं मुनिश्रेष्ठ ! यथावदवधारय ॥ ६१७ ॥
प्रासाद एकद्वारे तु गर्भमानं विनिश्चितम् ।
द्वारात् पश्चिमभित्त्यन्तं दक्षिणोत्तरमायतम् ॥ ६१८ ॥

सप्तधा विभजेत् सम्यक्, पैशाचः प्रथमः स्मृतः।
द्वितीयो मानुषो भागस्तृतीयो दैवसंज्ञितः॥ ६१९॥

ब्राह्मश्चतुर्थो विज्ञेयः क्रमादन्ये त्रयस्तथा।
दैवमानुषपैशाचा विज्ञेया द्विजसत्तम!॥ ६२०॥

अथवा नवधा कुर्याद्दक्षिणोत्तरमायतम्।
पैशाचः प्रथमो भागो द्वितीयो मानुषः स्मृतः॥६२१॥

तृतीयश्च चतुर्थश्च भागौ दैविकसंज्ञकौ।
ब्राह्मस्तु पञ्चमो भागो वेदितव्यस्ततः परम्॥ ६२२॥

दैवमानुषपैशाचाश्चत्वारोऽन्ये क्रमेण तु।
प्रासादे तु चतुर्द्वारे चतुर्दिक्षु समैः पदैः॥ ६२३॥

विभजेत् सप्तधा मध्ये भागः स्याद्ब्राह्मसंज्ञितः।
दिव्यमानुषपैशाचाः क्रमात् पङ्क्तिक्रमेण तु॥ ६२४॥

अथवा चाष्टधा कृत्वा मध्ये ब्राह्मं चतुष्पदम्।
दिव्यादिसंज्ञितं विप्र! क्रमात् पङ्क्तित्रयं भवेत्॥

अथवा नवधा गर्भं विभजेत् सर्वदिक्पदैः।
मध्यमं तु भवेद्ब्राह्मं दिव्यं पङ्क्तिद्वयेन वा॥ ६२६॥

दिव्यब्राह्मं भवेत् पङ्क्त्या पङ्क्त्या दैविकसंज्ञितम्।
मानुषं तद्बहिः पङ्क्त्या पैशाचं तद्बहिर्भवेत्॥६२७॥

यद्वा द्विरष्टधा भङ्क्त्वा ब्राह्ममध्ये चतुष्पदम्।
दिव्यब्राह्मं बहिः पङ्क्त्या दिव्यं पङ्क्तित्रयेण च॥

पङ्क्तिद्वयं मानुषं स्यात् पैशाचं पङ्क्तिजं भवेत्।
एकद्वारेऽपि भवने एवं वा परितो स्रजेत्॥ ६२९॥

चतुर्द्वारेऽपि भवने ब्राह्माख्ये मध्यमे पदे।
चतुर्दिग्वीक्षमाणस्य स्थापनं चतुरात्मनः॥ ६३०॥

प्रासाद एकद्वारे तु एकबेरं द्विजोत्तम!।
ब्राह्मदैविकभागाभ्यां दैवमानुषयोस्तु वा॥ ६३१॥

ब्राह्मे वा दैविके वाथ तस्मिन् दिव्याश्रिते तु वा।
मानुषाश्रितदैवे वा स्थापयेत् फलभेदतः॥ ६३२॥

चतुर्द्वारे तु भवने बहुबेरं निवेशयेत्।
विबुधब्रह्मभागाभ्यां दिव्यमानुषयोस्तु वा॥ ६३३॥

ब्राह्मादिमानुषान्तेषु त्रिषु भागेषु वा द्विज!।
ब्राह्माश्रिते तु दिव्ये वा तस्मिन् वा मानुषाश्रिते॥

सपीठबिम्बमानानां बृहत्त्वस्यानुरूपतः।
चतुर्द्वारे तु भवने ब्राह्म एव भवेत् सदा॥ ६३५॥

ब्राह्मादिमानुषान्तेषु त्रिषु भागेषु चोत्तमम्।
शयनं, ब्राह्मदिव्याभ्यां मध्यमं, त्वधमं स्मृतम्॥

दिव्यमानुषभागाभ्यामेवं विद्धि त्रिधा स्थितम्।
ब्राह्मं वा ब्राह्मदिव्ये वा दिव्ये वा ब्रह्मसंश्रिते॥६३७॥

दिव्यमानुषयोर्वापि दिव्ये वा मानुषाश्रिते।
आसनं विहितं विप्र! स्थानेऽप्येवं विधीयते॥ ६३८॥

यानगं स्थापयेद्ब्राह्मे दिव्यमानुषयोस्तु वा।
एकबेरविधाने तु तदग्रे भागयोर्द्वयोः॥ ६३९॥

आराधनार्थतो वेदिं स्थापयेन्मुनिपुङ्गव!।
यदा चोत्सवबिम्बादिबिम्बानां संस्थितिस्तदा॥

अग्रपीठोपगं भागं तृतीयं वा समैः पदैः।
सप्ताष्टनवधा वापि भजेद्भित्तिद्वयान्तरे॥ ६४१॥

द्विरष्टधा वा, मध्ये तु क्रमाद्भागत्रयं त्यजेत्।
चतुष्कं त्रितयं षट्कं ततः शेषेषु दक्षिणे॥ ६४२॥

स्थापयेदुत्सवं बिम्बं देवीयुक्तं तु वामतः।
भागेषु क्रमशो विप्र! तीर्थबिम्बसमन्वितम्॥ ६४३॥

बिम्बं नित्योत्सवार्थं च तथा शयनकौतुकम्।
निमित्तस्नपनार्थं च बिम्ब तरुणकौतुकम्॥ ६४४॥

आराधनार्थं देवस्य मध्ये भागद्वयोरपि।
स्नपने मूलबिम्बस्य क्रियमाणे बहूदकैः॥ ६४५॥

यथा चोत्सवबिम्बाद्याः स्नानीयजलबिन्दुभिः।
न स्पृश्यते तथा तेषां स्थापनं तु समाचरेत्॥ ६४६॥

संकटे सति तद्देशे बाह्ये तु मुखमण्डपे।
स्थापयेत् सर्वबिम्बानि तत्रापि सति संकटे॥ ६४७॥

प्रथमावरणे वापि द्वितीयावरणेऽपि वा।
स्थानं सुविस्तृतं कृत्वा प्रासादाग्रं च वर्ज्यदिक्॥

दिक्त्रयेऽभिमते कुर्याद् विदिक्ष्वभिमतेषु वा ।
वल्लूरिकाप्रदेशे वा सुदेशे सुपरीक्षिते ॥ ६४९ ॥

स्थापयेद्विधिना यात्राबिम्बं देवीसमन्वितम् ।
अन्यानि सर्वबिम्बानि बहि(र्वै)र्न स्थापयेत् क्वचित् ॥

शास्त्रज्ञो देशिकेन्द्रस्तु बहुबेरविधावपि ।
निमित्तस्नपनादौ तु योग्ये गृह्णाति सत्तम ! ॥ ६५१ ॥

स्थापिते मूलबिम्बे तु एवमेव समाचरेत् ।
विना वै कर्मबिम्बं च बिम्बं नित्योत्सवार्थतः ॥६५२॥

उभयं स्थापयेन्नित्यं प्रासादाभ्यन्तरे क्वचित् ।
अयोग्ये मूलबिम्बे तु सदा स्नपनकर्मणि ॥ ६५३ ॥

यात्राबिम्बादिबिम्बानि सदा गर्भगृहान्तरे ।
सर्वाणि स्थापनीयानि न बाह्ये तु कदाचन ॥ ६५४ ॥

बहुबेरविधौ भागे तदग्रे सप्तभाजिते ।
भागमेकं परित्यज्य दक्षिणेऽथ पदद्वये ॥ ६५५ ॥

स्थापयेदुत्सवं बिम्बं चतुर्थं स्नपनास्पदम् ।
कर्मबिम्बं च तद्वामे तीर्थबिम्बादियोजनम् ॥ ६५६ ॥

वेदिः स्थाप्या तदन्यस्मिन् भागे भागद्वयोऽपि वा ।
पैशाचमथवाप्यग्रे त्यक्त्वा भागद्वयोरपि ॥ ६५७ ॥

स्थाप्य बिम्बं तदूर्ध्वं तु कर्मबिम्बस्य चास्पदम् ।
तस्य दक्षिणपार्श्वे तु यात्रा(मू)र्तिं तु विन्यसेत् ॥ ६५८ ॥

वामपार्श्वे ततोऽन्येषां स्थापनं विहितं भवेत् ।
अष्टधा नवधा भाक्ते स्थापयेत् पञ्चमे पदे ॥ ६५९ ॥

कर्मबिम्बं तु नवमे पदे षोडशभाजिते ।
अन्येषां सर्वबिम्बानां प्राग्वत् स्थापनमाचरेत् ॥६६०॥

मूलबिम्बे शयाने तु विशेषः कथ्यते शृणु ।
सप्तभाक्तेऽग्रभागे तु प्राग्वद्भित्तिद्वयान्तरे ॥ ६६१ ॥

दत्त्वा दक्षिणभागे तु भागानां तु चतुष्टयम् ।
स्थापयेत् पञ्चमे वापि चतुर्थे कर्मकौतुकम् ॥ ६६२ ॥

अष्टधा नवधा भाक्ते षष्ठे वा पञ्चमेऽपि वा ।
अग्रे द्विरष्टधा भाक्ते द्वादशैकादशे तु वा ॥ ६६३ ॥

दशमे नवमे वापि स्थापयेत् कर्मकौतुकम् ।
दक्षिणोत्तरयोः प्राग्वदन्येषां न्यसनं भवेत् ॥ ६६४ ॥

आराधनार्थंतो वेदिः स्थापनीया तु पूर्ववत् ।
परितः सप्तधा भक्ते नवधाष्टद्विरष्टधा ॥ ६६५ ॥

मूलबिम्बाग्रतः पङ्क्त्या द्वितीयायामथापि वा ।
सर्वेषां कर्मबिम्बानां प्राग्वत् स्थापनमाचरेत् ॥ ६६६ ॥

स्थापनीया च विप्रेन्द्र ! प्राग्वदर्चनवेदिका ।
पीठोपर्यपि वा देवं यं त्वाराधयते सदा ॥ ६६७ ॥

मध्ये रत्नोपलं पीठे न्यस्त्वोर्ध्वे स्थापयेत्तु ताम् ।
देवीसमन्वितं यत्र स्थापनं भवति द्विज ! ॥ ६६८ ॥

मूलबिम्बस्य पार्श्वे तु पीठदेशं विसृज्य च ।
सपीठानां तु देवीनां स्थापनं तु समाचरेत् ॥ ६६९ ॥

एका सव्ये दक्षिणे वा, स्थाप्या द्वे दक्षवामयोः ।
चतस्रस्तु क्रमेणैव स्थाप्या दक्षिणवामयोः ॥ ६७० ॥

प्रासादे चलबिम्बं तु स्थाप्यते यत्र सत्तम ! ।
मध्ये वेदिं तु संस्थाप्य तदूर्ध्वे स्थापयेत्तु तत् ॥६७१॥

यद्वा दिव्ये मानुषे वा पीठं स्थाप्य तदूर्ध्वतः ।
सन्निवेश्य च तद्बिम्बं पूजाकाले ह्युपस्थिते ॥ ६७२ ॥

मध्ये भद्रासनं न्यस्त्वा तदूर्ध्वे विनिवेश्य च ।
तत् पूजयित्वानुदिनं भूयः पीठोपरि न्यसेत् ॥ ६७३ ॥

स्वयंव्यक्ते विमानादौ स्थाने सिद्धप्रतिष्ठिते ।
मुनिमुख्यैस्तु तत्रैवं विशेषं शृणु सत्तम ! ॥ ६७४ ॥

सपीठं भगवद्बिम्बं मूलाख्यं स्थापितं पुरा ।
देशे यावति, तद्देशद्वारयोरन्तरं तु यत् ॥ ६७५ ॥

तत् त्रिधा सुसमं कृत्वा आरभ्य द्वारपार्श्वतः ।
पैशाचं मानुषं दिव्यं क्रमाद्भागत्रयं भवेत् ॥ ६७६ ॥

दक्षभित्तेः समारभ्य दिव्यभागं भजेत् समम् ।
सप्तधा वामभित्त्यन्तं ततो वै दक्षिणादितः ॥ ६७७ ॥

पञ्चमे वा चतुर्थे वा स्थापयेत् कर्मकौतुकम् ।
तस्य दक्षिणपार्श्वे तु लक्ष्मीपुष्टिसमन्वितम् ॥ ६७८ ॥

स्थापयेदौत्सवं विम्बं वामपार्श्वे नियोजयेत्।
अन्यानि सर्वविम्बानि यथावत् क्रमयोगतः॥ ६७९॥

द्वारात् पश्चिमभित्त्यन्तं यद्वा कृत्वा तु सप्तधा।
सन्त्यज्य द्वारपार्श्वं तु भाजयेद् द्वितयं पुनः॥ ६८०॥

तृतीयं दैविकं सप्त कृत्वा भित्तिद्वयान्तरे।
कर्मविम्बादिविम्बानां पूर्ववत् स्थापनास्पदम्॥ ६८१॥

तत्रापि शयने विप्र! विधानमवधारय।
पञ्चमे षष्ठभागे वा कर्मविम्बं नियोजयेत्॥ ६८२॥

अन्येषां सर्वविम्बानां पूर्ववत् स्थापनं भवेत्।
स्वयंव्यक्ते चतुर्द्वारे परितः सप्तधा भजे(वे)त्॥ ६८३॥

पैशाचं मानुषं त्यक्त्वा तृतीये दैविके पदे।
अग्रभागे तु सौम्ये वा ईश्वरप्रारवशेन तु॥ ६८४॥

ईशानदिव्यभागे वा कर्मविम्बं नियोजयेत्।
यत्र प्रासादगर्भे तु एकस्मिन् न्यस्य पीठके॥ ६८५॥

चतुरो वासुदेवाद्यानथवा केशवादिकान्।
प्रादुर्भावसमूहं वा पङ्क्तिरूपेण योजयेत्॥ ६८६॥

दिव्यक्रमेण तत्रायं विशेषः कथ्यते शृणु।
द्वारादिभित्तिपर्यन्तं दक्षिणोत्तरमायते॥ ६८७॥

विभक्ते सप्तधा गर्भे ब्राह्मादिषु पदेषु च।
स्थापयेत् पङ्क्तिरूपेण पूर्वोक्तेनैव वर्त्मना॥ ६८८॥

तत्रापि दक्षिणाशादिस्थापयेदुत्तरान्तिमम्।
यत्रव्यावृतिरूपेण स्थापयेत्तत्र सप्तधा॥ ६८९॥

विभक्ते परितो गर्भे मध्ये ब्राह्मे नियोजयेत्।
प्रधानमूर्तिं परितो दिव्ये वा मानुषे द्वयोः॥ ६९०॥

अन्याश्च सकला मूर्तीः स्थापयेदावृतिक्रमात्।
चतुर्व्यूहप्रतिष्ठायां वासुदेवं तु मध्यमे॥ ६९१॥

तद्बहिर्दिव्यपङ्क्तौ तु संकर्षणं तु दक्षिणे।
प्रद्युम्नं पश्चिमे भागे अनिरुद्धं तथोत्तरे॥ ६९२॥

सत्त्वकारणसंयुक्तं मूर्त्यन्तरगतस्य च।
चातुरात्म्यचतुष्कस्य एवमेव नियोजयेत्॥ ६९३॥

चातुरात्म्येषु नवसु नवमूर्तिमयेषु च।
आद्ये मध्ये वासुदेवं प्रागाद्ये दिक्चतुष्टये॥ ६९४॥

वासुदेवादिचत्वारः स्थापनीयाः क्रमेण तु।
पञ्चमूर्तिप्रतिष्ठाख्ये द्वितये मध्यमे पदे॥ ६९५॥

वासुदेवं ततो दिव्ये संस्थाप्या दिक्चतुष्टये।
नारायणान्ताश्चत्वारः संकर्षणपुरस्सराः ६९६॥

एवं क्रमात् प्रतिष्ठानमाचरेत् सप्तकेऽपि च।
नवमूर्तिप्रतिष्ठायां वासुदेवं तु मध्यमे॥ ६९७॥

तद्बहिर्दिव्यभागस्थपदेष्वष्टासु च क्रमात्।
अष्टौ संकर्षणाद्याश्च वराहान्ताश्च मूर्तयः॥ ६९८॥

केशवादिप्रतिष्ठायां वासुदेवं तु मध्यमे।
विभज्य दिव्यभागं तु द्वादशारोक्तवर्त्मना॥ ६९९॥

प्रागादि स्थापयेद्देवान् केशवाद्यांस्तु द्वादश।
यद्वा मानुषपङ्क्तौ तु कोणभागचतुष्टयम्॥ ७००॥

संत्यक्त्वाऽन्येषु भागेषु प्रागादि स्थापयेत् क्रमात्।
संकटे सति वै कुर्याद्दिव्यमानुषयोरपि॥ ७०१॥

एकवेरे समुदितस्थानभेदात् फलं शृणु।
ब्राह्मभागे तु मोक्षः स्याद्दिव्ये स्थानाभिवृद्धिकृत्॥

भोगमोक्षफलावाप्तिर्ब्राह्मे दिव्यसमाश्रिते।
दिव्यभागफलावाप्तिर्मानुषाश्रितदैविके॥ ७०३॥

दैवमानुषभागाच्च त्वैहिकामुष्मिकं फलम्।
विबुधब्रह्मभागाच्च सैहिकं तु गुणाष्टकम्॥ ७०४॥

बहुबेरविधाने तु फलभेदं शृणु द्विज!।
ज्ञानादिगुणषट्कस्य प्राप्तिर्ब्रह्मपदे भवेत्॥ ७०५॥

सर्वकामफलप्राप्तिर्दैविके ब्रह्मसंश्रिते।
विबुधब्रह्मभागे च दिव्यमानुषयोरपि॥ ७०६॥

मानुषाश्रितदिव्ये च पूर्वमेवोदितं फलम्।
ब्राह्मादिमानुषान्तेषु भागेषु स्थापने सति॥ ७०७॥

स्थानस्य यजमानस्य वृद्धिः स्याद्राजराष्ट्रयोः।
कर्मार्चास्थापने विप्र! फलभेदस्तु कथ्यते॥ ७०८॥

ब्राह्मे सप्तविभक्ते तु चतुर्थे स्थापनं भवेत्।
मोक्षदं पञ्चमे भागे तत्सामीप्यफलप्रदम् ॥ ७०९ ॥

अष्टधा प्रविभक्ते तु पञ्चमे तु गुणाष्टकम्।
स्थापनं षष्ठभागे तु तत्सालोक्यफलप्रदम् ॥ ७१० ॥

नवधा प्रविभक्ते तु एवमेव भवेत् फलम्।
तस्मिन् षोडशधा भक्ते नवमे गुणषट्कदम् ॥ ७११ ॥

दशमे स्थापनं विप्र! द्वादशैकादशेऽपि च।
विष्णुलोकपदावासमचिरात् संप्रयच्छति ॥ ७१२ ॥

दैविके सप्तभक्ते तु चतुर्थे स्थापनं द्विज!।
सद्विवेकं च धर्मं च सौमनस्यं प्रयच्छति ॥ ७१३ ॥

स्थापनं षष्ठभागे तु पुष्टिसौभाग्यवर्धनम्।
अपमृत्युजयं दद्याद्बलोत्साहसमृद्धिकृत् ॥ ७१४ ॥

विभक्ते नवधा तस्मिन्नेवमेव भवेत् फलम्।
द्विरष्टधा विभक्ते तु नवमे स्थापनं द्विज! ॥ ७१५ ॥

दिव्यभोगफलावाप्तिं प्रयच्छत्यचिरेण तु।
दशमैकादशे भागे द्वादशे च नियोजनम् ॥ ७१६ ॥

धनधान्यसमृद्धिं च भूमिप्राप्तिं ददाति च।
एवं तु परितो भक्ते ब्राह्मभागे नियोजनम् ॥ ७१७ ॥

शश्वत् कैवल्यफलदं अग्रदिव्यपदे तु तत्।
भोगप्रदं तथा चैव बलोत्साहसमृद्धिकृत् ॥ ७१८ ॥

ईशानदिव्यभागे तु स्थापनं संप्रयच्छति।
आयुरारोग्यमैश्वर्यं राज्ञां विजयमेव च ॥ ७१९ ॥

स्थानस्य महतीं वृद्धिं तथा जनपदस्य च।
स्थापनं सौम्यदिव्ये तु भोगमोक्षफलप्रदम् ॥ ७२० ॥

दिव्यब्राह्मयपङ्क्तौ तु दिव्यवत् स्थापनं भवेत्।
यत्र यत्र पदे प्रोक्तं बिम्बानां सन्निवेशनम् ॥ ७२१ ॥

तत्तत्समं द्विधाकृत्वा स्थापने ह्यमृतांशके।
फलान्युक्तानि सिध्यन्ति आग्नेये विपरीतकृत् ॥

प्रासादस्यान्तरे विप्र! यात्राबिम्बस्य योजनम्।
स्थानस्य यजमानस्य राज्ञो जनपदस्य च ॥ ७२३ ॥

ददाति महतीं लक्ष्मीं तेजश्चापि दिने दिने।
एतदेव फलं विप्र! मध्यमं मुखमण्डपे ॥ ७२४ ॥

प्रथमावरणादौ च स्थाने मन्दफलं भवेत्।
एवमेव फलं विप्र! अन्येषां स्थापनेऽपि च ॥ ७२५ ॥

मूलबिम्बादिबिम्बानां सर्वेषां च महामते!।
प्रमादाद्बुद्धिपूर्वाद्वा स्वं स्वं स्थानं यथोदितम् ॥

परित्यज्य तदन्यस्मिन् स्थाने संस्थापिते सति।
स्थानं च यजमानश्च राजा राष्ट्रं विनश्यति ॥ ७२७ ॥

तद्देशवासिनः सर्वे जना व्याध्यादिपीडिताः।
भवेयुः स्यादनावृष्टिर्दुर्भिक्षं शत्रुपीडनम् ॥ ७२८ ॥

तस्माद्धितैषी राष्ट्रस्य स्वस्य राज्ञस्तथैव च।
तथा यथोदितस्थानव्यत्ययं न समाचरेत् ॥ ७२९ ॥

प्रमादालस्यपूर्वेण दोषेण स्थापनेऽपि च।
व्यत्ययादचलं बिम्बं वर्जयित्वा तु जङ्गमम् ॥ ७३० ॥

स्वे स्वे यथोदिते स्थाने संस्थाप्य परिपूजयेत्।
विशेषेण स्वयंव्यक्ते सिद्धाद्यैश्च प्रतिष्ठिते ॥ ७३१ ॥

प्रासादे चलबिम्बं तु स्वे स्वे स्थाने निवेशयेत्।
भित्तेः प्रेक्षावशान्मध्ये सति भूयः समाचरेत् ॥ ७३२ ॥

क्षालितेऽश्माम्बुना, लिप्ते हृदा वै चन्दनादिना।
श्वभ्रेऽधोघटरुद्धानां मन्त्राणां च निरोधनम् ॥ ७३३ ॥

पूर्वोक्तेन विधानेन धिया स्वे स्वेऽयने तथा।
कृत्वार्चनं यथोद्दिष्टं पूर्णान्तं तत्र विन्यसेत् ॥ ७३४ ॥

बाहुल्येन तु षट्पञ्चचतुर्गोलकसंमिताम्।
पीठाद्विनिर्गतां किञ्चिद्भूतले सुस्थिरां शिलाम् ॥

प्रस्तां पीठेन मुक्त्यर्थं नवरन्ध्रकृतां पुरा।
स्वमन्त्रेण तु तत्रापि प्रतिष्ठासीति पाठयेत् ॥ ७३६ ॥

प्रागादौ प्राग्भवेनाथ पञ्चकं पञ्चकं न्यसेत्।
शिलावटेषु द्रव्याणां तत्र वज्रं च हाटकम् ॥ ७३७ ॥

हरितालमुशीरं च व्रीहयो दक्षिणे त्वथ।
इन्द्रनीलमयश्चैव कासीसं चन्दनं तिलाः ॥ ७३८ ॥

मुक्ताफलं च रजतं पारदं चाप्यदिक् तथा ।
सहोशीराश्च ये मुद्गाः पद्मरागमथोत्तरे ॥ ७३९ ॥

कांस्यं च राजपाषाणं राजेन्द्रं चणकैः सह ।
विंशकं विन्यसेन्मध्ये पूर्वमेव ततो बहिः ॥ ७४० ॥

विदिक्ष्वप्ययययोगेन त्वेवमन्यत् पृथक् पृथक् ।
लोहं वैडूर्यपूर्वं तु चक्राङ्कं चाभ्रकं तथा ॥ ७४१ ॥

प्राप्रिकं त्वीशदिग्वायोः पुष्यरागो हरीतका ।
गैरिकं शारिकाश्चैव मसूराण्यथ यातुदिक् ॥ ७४२ ॥

महानीलं च वज्रं च तथा पाषाणमाक्षिकम् ।
यवाः सागरुकाश्चैव आग्नेय्यां स्फटिकं तथा ॥

ताम्रं मनःशिला चैव गोधूमाः शङ्खपुष्पिकाः ।
मध्ये सर्वाणि तद्वत्तु ततो गर्तगणं तु तत् ॥ ७४४ ॥

लेपैराच्छादितं कृत्वा साङ्गं मन्त्रं पदे पदे ।
पूजयित्वा यजुर्वेदांश्चमपट्टकांश्च पाठयेत् ॥ ७४५ ॥

तदूर्ध्वे विन्यसेत् पीठं तच्छ्वभ्रे विनिवेश्य च ।
अष्टलोहमयं चक्रं तदूर्ध्वे तु महामते ! ॥ ७४६ ।

द्वादशाख्याविशेषोक्त आधारो यस्य यः स्वकः ।
हैमं तदूर्ध्वे कमलं तज्जं वा ताम्रमेव वा ॥ ७४७ ॥

यथाक्रमस्थितं ह्येतत् पञ्चकं चतुरात्मनि ।
न्यसेदनन्तं चक्रस्य मीनकूर्मौ तु तस्य वै ॥ ७४८ ॥

कूर्मानन्तौ तु मीनस्य मीनानन्तौ तु तस्य च ।
सर्वस्य विहितं पद्मं तस्यानन्तं तु विन्यसेत् ॥ ७४९ ॥

लक्ष्म्यादीनां च शक्तीनां चक्रं स्थापनकर्मणि ।
न्यस्य पूर्णान्तिकं कृत्वा कर्मण्यत्र च तर्पणम् ॥ ७५० ॥

मण्डपे तु खगेशस्य एवमेव समाचरेत् ।
सह मूर्तिधरैः प्राग्वत् कार्या दर्भादिकक्रिया ॥ ७५१ ॥

अथ विध्यन्तरं वक्ष्ये समाकर्णय साम्प्रतम् ।
पुरैव संस्कृतां विप्र ! न्यसेद्ब्रह्मशिलां ततः ॥ ७५२ ॥

किञ्चित्पीठतलान्न्यूनां समां श्लक्ष्णां दृढां द्विज ! ।
कृत्वा न्यपदां पूर्वं पद्मं तस्याः पदे पदे ॥ ७५३ ॥

विलिख्य रेखया सम्यक् खनेत् सर्वेषु कर्णिकाम् ।
गर्भमध्ये शिलामानयाङ्गुल्यायामयोः खनेत् ॥ ७५४ ॥

तत्पूर्वसूत्रमार्गेण संचाल्योत्तरदिङ्नयेत् ।
श्वभ्रं तत्रापि मध्ये तु शुभं कुर्यात् षडङ्गुलम् ॥ ७५५ ॥

तस्मिंस्तु रत्नसंपूर्णं हैमजं वाथ ताम्रजम् ।
चतुरङ्गुलमात्रं तु कलशं कम्बुरूपिणम् ॥ ७५६ ॥

हृन्मन्त्रेण तु संमन्त्र्य गायत्र्या विनिवेश्य च ।
सापिधानं तु तं कृत्वा सुधालेपं तथोपरि ॥ ७५७ ॥

दत्वा ब्रह्मशिलां न्यस्येत् प्राङ्मन्त्रपरिभाविताम् ।
व्यापकत्वं समालम्ब्य स्वयमेव तथा गुरुः ॥ ७५८ ॥

तां शिलां व्यापिकां ध्यायेदाधाराधेयविग्रहाम् ।
तत्र सर्वाध्वगन्यासं मूलमन्त्रेण भावयेत् ॥ ७५९ ॥

एवं तत्त्वविधिं कृत्वा पश्चात्तदुपरि द्विज ! ।
न्यासं रत्नादिकं कुर्याद्यथा तदवधारय ॥ ७६० ॥

हैममग्निं, तथानन्तं राजतं, हैमजां धराम् ।
अष्टलोहमयं पद्मं मध्ये ब्रह्मशिलोपरि ॥ ७६१ ॥

प्राच्यादौ पद्मगर्भेषु क्रमादीशानगोचरम् ।
वज्रं च सूर्यकान्तं च इन्द्रनीलं तथैव च ॥ ७६२ ॥

महानीलं मुनिश्रेष्ठ ! मुक्ताफलमतः परम् ।
पुष्यरागं ततश्चैव पद्मरागमतः परम् ॥ ७६३ ॥

ऐशान्ये न्यस्य वैडूर्यं मध्यतः स्फटिकम् न्यसेत् ।
प्रागादौ रजतं ताम्रं त्रपु वङ्गं च रीतिकम् ॥ ७६४ ॥

लोहं तथायसं कांस्यं मध्ये हैमं निवेश्य च ।
तालं मनःशिलां, छिन्नपिष्टकं कुष्ठमेव च ॥ ७६५ ॥

स्रोतोञ्जनं तु दरदं सौराष्ट्रीं हेमगैरिके ।
मध्ये तु राजपाषाणं पारदं चापि सर्वतः ॥ ७६६ ॥

गोधूमांश्च यवान् वन्यान् मुद्गमाषांस्तथैव च ।
चणकान् मुनिशार्दूल ! कुलुत्थं च मसूरकम् ॥ ७६७ ॥

क्रमादष्टासु विन्यस्य मध्ये सिद्धार्थकांस्तिलान् ।
ह्रीबेरं रजनीं मांसीं सहदेवीं वचां तथा ॥ ७६८ ॥

विष्णुक्रान्तां बलां मोटां श्यामाकं शङ्खपुष्पिकाम् ।
प्रागादौ मध्यपर्यन्तं विन्यसेन्मूलसन्ततिम् ॥ ७६९ ॥

रत्नानामप्यलाभे तु शस्तं मुक्ताफलं भवेत् ।
लोहानामप्यभावे तु सुवर्णं शस्यते परम् ॥ ७७० ॥

धातूनामप्यलाभे तु हरितालं विशिष्यते ।
अलाभे सर्वबीजानां शालिबीजं प्रशस्यते ॥ ७७१ ॥

अलाभे सर्ववस्तूनां हेमं सर्वत्र विन्यसेत् ।
तदभावे तु रजतं न्यसेन्मुक्ताफलानि वा ॥ ७७२ ॥

घृतेन पयसा चाथ भावितेन पुरैव तु ।
प्रद्द्यालेपनं विप्र ! सर्वगर्तेषु चैव हि ॥ ७७३ ॥

अहतं सुसितं पश्चात्तत्रोपरि दुकूलकम् ।
अन्तः श्लक्ष्णं सुधालेपं दत्वा, पीठं तु विन्यसेत् ॥

सन्धाय पूर्ववत्तच्च शिलया ब्रह्मसत्तम ! ।
पीठश्वभ्रेऽथ विन्यस्य सौवर्णं गारुडं महत् ॥ ७७५ ॥

क्षीरं दधिघृतं लाजान्मधुपुष्पफलानि च ।
सर्वगन्धानि विप्रेन्द्र ! सर्वौषधियुतानि च ॥ ७७६ ॥

भावयेत् पूर्ववत् पीठं धर्माद्यैरखिलैर्युतम् ।
चिदासनमयीं व्याप्तिं पुनस्तत्रोपरि न्यसेत् ॥ ७७७ ॥

हृदा तु विष्णुगायत्र्या एकैकमभिमन्त्र्य च ।
विन्यस्य कुर्याद्धवनं यस्मिन् यस्मिंस्तु कर्मणि ॥

पीठन्यासावधि यावत्ततः पूर्णां जुहेद्गुरुः ।
चतुर्गुणितसूत्रेण वेष्टयेद्देवमन्दिरम् ॥ ७७९ ॥

च्छादयेत्तन्यवस्त्रेण तथा वै दर्भमालया ।
ततस्तु मूर्तिपैः सार्धं प्रविशेद्यागमण्डपम् ॥ ७८० ॥

प्रतीक्षेल्लग्नकालं तु यावत् कालं न याति च ।
तावद्विनोदैर्होमैश्च हास्यैः पाठैश्च संक्षिपेत् ॥ ७८१ ॥

प्राप्ते लग्नोदये विप्र ! शयनस्थं प्रबोधयेत् ।
अर्घ्यालभनमाल्याद्यैरर्चयित्वा त्विमं पठेत् ॥ ७८२ ॥

" मन्त्रात्मन् ! रूपमात्मीयमाग्नेयमुपसंहर ।
समाश्रयस्व सौम्यत्वं स्थित्यर्थं परमेश्वर ! ॥ ७८३ ॥

नमस्तेऽस्तु हृषीकेश ! उत्तिष्ठ परमेश्वर ! ।
मदनुग्रहहेत्वर्थं पीठभूमिं समाक्रम ! " ॥ ७८४ ॥

उद्धृत्य हृदयेनाथ त्यक्तनिद्रं च मन्त्रपम् ।
उत्थाप्य मूर्तिमन्त्रेण सहमूर्तिधरैर्बलात् ॥ ७८५ ॥

कुम्भं समुद्धरेत् साग्रं स्वकुण्डनिकटे स्थितम् ।
उद्धरेयुर्दिशाहोमकर्तारो मङ्गलैः सह ॥ ७८६ ॥

अष्टौ विद्येश्वरान् कुम्भानाचार्यः पुरतो व्रजेत् ।
शलाकामात्रयाऽच्छिन्नधारया कुम्भमुद्वहन् ॥ ७८७ ॥

यद्वा प्रक्षिपमाणस्तु रत्नांश्च विविधान् बहून् ।
नानाविधैस्तु कुसुमैर्लाजाद्यान् मिश्रितान् बहून् ॥

प्रतिमामुद्वहन्तो ये मूर्तिधारास्त्वनन्तरम् ।
अन्ये यथा न गच्छेयुरन्तराचार्यबिम्बयोः ॥ ७८९ ॥

अष्टकुम्भधराश्चान्ये ये च मङ्गलधारकाः ।
परितस्तेऽपि गच्छेयुः पठन्तः " शाकुनं " तथा ॥

वाग्यतो यजमानस्तु कुशपाणिः प्रणामवान् ।
तेषां वै पृष्ठतस्त्वन्ये गच्छेयुः परिचारकाः ॥ ७९१ ॥

तोरणेन च निष्क्रम्य प्रदक्षिणचतुष्टयम् ।
कुर्यात् प्रासादपीठस्य द्वाराग्रे सन्निरोध्य च ॥ ७९२ ॥

पाद्यार्घ्याचमनं दत्वा हृन्मन्त्रेण प्रवेशयेत् ।
शाखाचमसपृशान्तं च पाठयेत्तद्विदस्ततः ॥ ७९३ ॥

चतुश्चक्रेति तदनु पुरमेकादशेति यत् ।
वर्माभिमन्त्रितेनाथ दुकूलेन सितेन च ॥ ७९४ ॥

पादाम्बुरुहनालं प्राक् शिखामन्त्रेण वेष्टयेत् ।
अग्नीषोमौ समीकृत्य प्रणवाद्यन्तकेन तु ॥ ७९५ ॥

मूलमन्त्रेण पीठोर्ध्वे बिम्बं संस्थापयेत् स्थिरम् ।
द्वारमध्यं न सन्त्याज्यं देवस्थापनकर्मणि ॥ ७९६ ॥

न ततश्चाग्रतः स्थाप्यं न पार्श्वे न च पृष्ठतः ।
वामतो मारुतं पश्चात् सन्त्यजेद्देशिकोत्तमः ॥ ७९७ ॥

प्रतिष्ठालिङ्गशब्दौ च द्वौ मन्त्रौ पाठयेत् क्रमात् ।
शान्तं ब्रह्ममयं रूपं स्वकं समवलम्ब्य च ॥ ७९८ ॥

यत्रापि केवले ब्राह्मे स्थापनं समुदीरितम्।
तत्रापि वामतः किञ्चिद्दिव्यभागं समाश्रयेत्॥ ७९९॥

यतो हितार्थं सर्वेषां निर्गतः षड्गुणात्मना।
अतो ब्रह्मपदादीषत् देवभागे समानयेत्॥ ८००॥

मोक्षादिफलसिद्धीनां प्राप्तये ह्यविचारतः।
करस्थमथ मोक्तव्यं कौतुकं हृदयेन तु॥ ८०१॥

सर्वाङ्गमर्घ्यं मन्त्रेण दत्वा मूलमनुस्मरेत्।
हृदास्त्रपरिजप्तेन वज्रालेपेन वै ततः॥ ८०२॥

बिम्बपीठशिलानां चाप्येकत्वेनाऽचरेत् स्थितिम्।
ओङ्कारं पूर्वमुच्चार्य गुरुः प्रणतमस्तकः॥ ८०३॥

"आराधितोऽसि भगवन्! साधकानां हिताय च।
त्वयाप्यनुग्रहार्थं च वस्तव्यमिह सर्वदा॥ ८०४॥

त्वं तिष्ठसि प्रभो! यत्र तत्र सिद्धिर्न दूरतः।
भवेद्धि साधकेन्द्राणामित्युक्तं च पुरा त्वया॥ ८०५॥

तस्माद्ध्रुवः सदा तुष्टः सानुकम्पः परो महान्।
सदाप्यनुग्रहपरस्तिष्ठस्वाचन्द्रतारकम्"॥ ८०६॥

एवमुक्त्वा ततो दद्यादर्घ्यं शिरसि पादयोः।
मूलबिम्बे मुनिश्रेष्ठ! मृदादिद्रव्यनिर्मिते॥ ८०७॥

कर्मार्चायां विष्टरे वा दर्भमञ्जरिजे द्विज!
प्रबोधनं च वै कर्म तथा प्रादक्षिणक्रियाम्॥ ८०८॥

प्रासादे सम्प्रवेशं च कृत्वान्यत् सर्वमाचरेत्।
मूलबिम्बे क्रमेणैव देशिकेन्द्रः समाहितः॥ ८०९॥

कुर्यात्ततोऽनुवेधं च आधाराच्च शिखावधि।
सामर्थ्यशक्तिसूत्रेण ऐश्वरेण क्रमेण तु॥ ८१०॥

सति येन विलुप्तेऽपि बिम्बाधैरयनस्य च।
न जहाति च मन्त्रौघस्तस्य कालान्तरेण च॥ ८११॥

अप्रबुद्धः प्रबुद्धो वा तस्मिन्नायतने पुमान्।
निवेशयति यो बिम्बमपरद्रव्यजं तु वै॥ ८१२॥

तद्विज्ञानानुविद्धं च जायते समनन्तरम्।
एवं विधस्य स्थानस्य त्रैलोक्येऽस्मिन् महामते!॥

प्रतीत्यायतनत्वेन भवत्याचन्द्रतारकी।
मूलमन्त्रं तु वै ध्यात्वा संशान्तब्रह्मलक्षणम्॥ ८१४॥

आधारादिध्वजाग्रान्तं व्याप्तं तेनाखिलं स्मरेत्।
इति सामान्यसन्धानं कृत्वाऽध्वव्याप्तिमाचरेत्॥

भुवनाध्वमयीं व्याप्तिं कुर्यात् प्रासादपीठगाम्।
अनुविद्धां पदाध्वाद्यैरन्यैः सत्तास्वरूपकैः॥ ८१६॥

परस्परं हि सर्वत्र व्यापकैः परलक्षणैः।
भूलोकांशं विना ब्रह्मन्! तथान्यैरुज्झितं हि तत्॥

रजस्तमोमहत्वाच्च ईषत् सत्वगुणात्तु वै।
सत्वैकगुणरूपाणामन्येषामत एव हि॥ ८१८॥

भूर्लोकश्च पृथक्संस्थः पदाद्यध्वगणस्य च।
कूर्मे ब्रह्मादिसंज्ञायां शिलायां च पदत्रयम्॥ ८१९॥

न्यस्तव्यं जाग्रदाद्यन्यद्रत्नन्यासे कृते सति।
तुर्यब्रह्मसमोपेतं मन्त्राध्वा प्रतिमासने॥ ८२०॥

नाभ्यन्तं पादतो न्यस्य तत्वाध्वा द्विजसत्तम!।
आनाभेर्मूर्धपर्यन्तं कलाध्वा भावयेत्ततः॥ ८२१॥

तद्ब्रह्मरन्ध्रकमले वर्णब्रह्मपदस्थितौ।
कर्णिकायां परं ब्रह्म सामान्यं शाश्वतं विभुम्॥ ८२२॥

एवं कृत्वाध्वकीं व्याप्तिं मूलमन्त्रं तु भावयेत्।
स्थूलसूक्ष्मपरत्वेन स्थूलं षोढा शिलान्तगम्॥ ८२३॥

पिंण्डिकायांतथा सूक्ष्मं तत्परं बिंबविग्रहे।
विन्यासं पीठमूलेऽथ देवतानां समाचरेत्॥ ८२४॥

भवोपकरणीयानां एतासां तु महामते!।
विन्यासं मन्त्रबिम्बे तु न कदाचित् समाचरेत्॥

पीठोर्ध्वं तु मुनिश्रेष्ठ! प्रतिष्ठेयं विनय तु।
न्यसेद्विभवदेवांस्तु ह्युपर्युपरि पूर्ववत्॥ ८२६॥

घटोद्देशात् समारभ्य परमर्चागतं ततः।
एवं हि सर्वदेवानां विनिवेशवशात्तु वै॥ ८२७॥

चिन्तामणिमयो न्यासः कृतो भवति सिद्धिदः।
तत्वसंस्थापनं कुर्यात् प्रकृतिस्थापनादनु॥ ८२८॥

विज्ञानानन्दकल्लोलैर्द्वयभासा यथा रवेः ।
अनेकाह्लादजनितैराधारात्तच्छिरोवधि ॥ ८२९ ॥

पश्येन्मन्त्रमयं बिम्बमनेकाद्भुतविग्रहम् ।
एवं सर्वसमुत्पत्तिस्थानं संकल्पसिद्धिदम् ॥ ८३० ॥

बिम्बं मन्त्रमयं सूक्ष्मं प्रतिष्ठाप्यामलात्मना ।
तद्विज्ञानमयीं शाखां प्रवरा यतिनोन्नताम् ॥ ८३१ ॥

अनन्तगगनाक्रान्तां भावयेत् साधको द्विज! ।
प्रस्रुतेन तु वै तस्मादनौपम्यामृतेन तु ॥ ८३२ ॥

मन्त्रबिम्बमयं सूक्ष्मं सरसं भावयेत् सदा ।
यथा भौमेन तोयेन गगनोत्थेन नारद! ॥ ८३३ ॥

मन्दारपुष्पविटपस्तद्वदेव हि नान्यथा ।
मन्त्रन्यासं ततः कुर्याद्बिम्बस्य च यथाविधि ॥ ८३४ ॥

सृष्टिसंस्थितिसंहारन्यासं कुर्यात् त्रयं विभोः ।
स्थितेऽपि च तथासीने शयाने यानगेऽपि च ॥ ८३५ ॥

एतेष्वपि च सर्वेषु कुर्यान्न्यासत्रयं द्विज! ।
यद्वा स्थिते स्थितिन्यासमासीने सृष्टिसंज्ञितम् ॥

शयाने संहृतिन्यासमाचरेद् द्विजसत्तम! ।
अङ्गोपाङ्गस्थितिं कुर्यात् स्थानेषु हृदयादिषु ॥ ८३७ ॥

अन्यानि लाञ्छनादीनि संस्थाप्या गरुडान्तिमम् ।
ततः संपूजयेत्तत्र लययागेन चाखिलम् ॥ ८३८ ॥

पीठस्थं भोगयागेन मन्त्रचक्रं यजेत् पुनः ।
पीठीयं मन्त्रसंघं च विलोमेनाथ पूजयेत् ॥ ८३९ ॥

आधारशक्तिपर्यन्तं सृष्टिन्यासेन सत्तम!
स्वनाम्नि स्वामिशब्दं तु समारोप्य परं तु वा ॥ ८४० ॥

हरिकेशवपूर्वं तु ततस्तारसमन्वितम् ।
प्रब्रूयुर्मूर्तिपाद्या यैः सुप्रतिष्ठितमस्त्विति ॥ ८४१ ॥

पुष्पाक्षताञ्जलिं पूर्णं क्षिपमाणाश्च सर्वतः ।
सर्वे वदेयुस्तत्रस्थाः सुप्रतिष्ठितमस्त्विति ॥ ८४२ ॥

"आत्वा हार्षं"ति सहवै प्रतिष्ठासीति पाठयेत् ।
विश्वस्य मित्रमित्यादि मन्त्रमेकायनान् द्विज! ॥

ओं नमोऽस्तु नमश्चातो ऋग्वेदाद्यैस्तु तैः सह ।
ओं नमो ब्रह्मणेऽभीक्ष्णं जितं ते त्वेवमेव हि ॥ ८४४ ॥

जयशब्दसमोपेतं स्तोत्रं श्रोत्रमनोहरम् ।
देशिकः सह सर्वैस्तु वाग्भिरुच्चाभिरुच्चरेत् ॥ ८४५ ॥

जीवभूतेन चैतेन विभुना मन्त्रमूर्तिना ।
प्रतिष्ठितेन विप्रेन्द्र! विद्धि सर्वं प्रतिष्ठितम् ॥ ८४६ ॥

पूर्वं कृत्वाधिवासादि मूलबिम्बेन वै सह ।
स्थापयेत् कर्मबिम्बादीन् स्वे स्वे स्थाने यथोदिते ॥

लक्ष्म्यादीश्च तथा शक्तीः स्थापयेत्तु विधानतः ।
प्रासादेऽपि च पूर्वोक्तं लोकाद्यं स्थापयेत् क्रमात् ॥

स्थितेऽपि तन्मुहूर्तांशे स्थापनीयश्च पक्षिराट् ।
स्नातोऽनुलिप्तो मन्त्रेण स्वेन यः संस्कृतः पुरा ॥

अशक्तथा सह बिम्बेन यस्माद्बिम्बेषु वस्तुषु ।
बिम्बसन्निकटस्थेषु अथवान्यत्र सत्तम! ॥ ८५० ॥

तत्कालमङ्गभावत्वं व्रजमानेषु सर्वदा ।
हवनान्तं च निःशेषं ध्यानार्चनपुरस्सरम् ॥ ८५१ ॥

स्वयमेवानुरूपेण कर्मसामान्यतां व्रजेत् ।
तस्मात्तद्यागभवनादुत्थाप्यादाय बिम्बवत् ॥ ८५२ ॥

देवं प्रदक्षिणीकृत्य प्राग्वत् संस्थापनापदे! ।
एकस्मिन् मध्यरन्ध्रे तु वज्राद्यं पञ्चकं न्यसेत् ॥ ८५३ ॥

एकमेव तदूर्ध्वेऽथाप्याधारो य उदीरितः ।
प्राग्वन्निवेशनीयश्च तत्पीठेऽध्वा च भौवनः ॥ ८५४ ॥

भावनीयं शरीरे च विशेषं विद्यानिलक्षणम् ।
पाठयेद्ब्राह्मणांस्तद्वत् सुपर्णोसीतिमन्त्रराट् ॥ ८५५ ॥

तमेवाभ्यर्चितं कृत्वा त्वथ प्राक् शाङ्करे ततः ।
सोमेशानान्तरे वापि अङ्गणे वापि तत्पदे ॥ ८५६ ॥

अथवा मूर्तिपीठस्थं भवनाभ्यन्तरेऽपि च ।
स्वगोक्तेन विधानेन विष्वक्सेनं निवेश्य च ॥ ८५७ ॥

द्वारस्थानखिलान् देवांस्तथा चावरणस्थितान् ।
पूर्वोदितान् क्रमेणैव स्थापयेद्देशिकोत्तमः ॥ ८५८ ॥

संप्रोक्ष्य कुम्भतोयेन यायाद्देवनिकेतनम् ।
कलशैः पृष्ठभागस्थैः स्नापनीयस्ततो विभुः ॥ ८५९ ॥

सहमूर्तिधरैः सर्वैर्यथा चानुक्रमेण तु ।
सहार्घमर्पणेनैव गायत्र्यावर्तितेन तु ॥ ८६० ॥

प्राग्ऋग्ज्ञयस्तु, तदनु चतुर्धावर्तितैः स्वयम् ।
हृदाद्यावर्तितैः षड्भिः यजुर्ज्ञस्तेन सेचयेत् ॥ ८६१ ॥

भूयः स्वयं तथा कुम्भैः सामवित् स्नपयेत्ततः ।
षड्भिरन्यैः स्वयं पश्चात्तेनैवाथर्वणस्ततः ॥ ८६२ ॥

पवित्रावर्तितैरेवं कलशैरन्तरान्तरा ।
सह वैकायनीयैस्तु स्नपनीयमनन्तरम् ॥ ८६३ ॥

चतुर्मूर्तिमयैर्मन्त्रैर्बहुशः परिभावितैः ।
स्नापयेत् कलशेनाथ शेषमादाय वै घटम् ॥ ८६४ ॥

तच्छतावर्तितं कृत्वा समूलेनाद्य मूर्तिना ।
सार्घ्यं वै देवदेवस्य मूर्ध्नि चोत्कीर्य पाठयेत् ॥ ८६५ ॥

जितन्त इति वै सर्वांस्ततश्चास्त्रोदकेन तु ।
प्रासादं शोधयित्वा तु गत्वा वै कुम्भसन्निधिम् ॥

तत्र संपूज्य देवेशं पूर्वोक्तेन क्रमेण तु ।
मण्डले पूजयित्वाथ प्रयायाद्बिम्बसन्निधिम् ॥ ८६७ ॥

तत्र संपूज्येद्देवं स्नानवर्जं विशेषतः ।
सांस्पर्शिकैरासनाद्यैर्विविधैरौपचारिकैः ॥ ८६८ ॥

हृदयङ्गमसंबन्धैः पायसाद्यैश्चतुर्विधैः ।
अन्नैश्चभूतैरन्यैस्तु भक्ष्यभोज्यादिभिस्तथा ॥ ८६९ ॥

संप्रदानावसानान्तं क्रमात् कृत्वा द्विजोत्तम ! ।
सदक्षिणं विशेषेण गुरौ मूर्तिधरेषु च ॥ ८७० ॥

समित्सप्तकपूर्वं तु वह्नौ सन्तर्प्य वै क्रमात् ।
देवं प्रणम्य विज्ञाप्य कर्मणा मनसा गिरा ॥ ८७१ ॥

"त्वमर्चान्तर्गतो देव ! मया यद्यानलादिषु ।
नीतोऽसि चाभिमुख्यं तु क्षन्तव्यं तन्ममाच्युत ! ॥"

एवं प्रणम्य विज्ञाप्य क्षान्त्या निष्क्रम्य संमुखम् ।
आमूलाद् ध्वजपर्यन्तं प्रासादो यः पुरा कृतः ॥ ८७३ ॥

देवं प्रदक्षिणीकृत्य अष्टाङ्गेन प्रणम्य च ।
गृहीत्वा चार्घ्यपात्रं तु यायाद्देवगृहाद्बहिः ॥ ८७४ ॥

स्नानादिना समभ्यर्च्य वाहनं भगवन्मयम् ।
पूर्वोदितानां द्वास्थानां दिक्पतीनां तथैव च ॥ ८७५ ॥

पूर्ववत्तु बलिं दद्यात् क्रमेण च ततःपरम् ।
प्रभूतानां च भूतानां बलिदानं समा(चरे)रभेत् ॥

गृह्णन्तु भगवद्भक्ता भूताः प्रासादयागगाः ।
बलीरत्र पवित्राश्च, तेषामनुचराश्च ये ॥ ८७७ ॥

एवं क्रमाद्बलिं दत्त्वा सर्वेषां पाठयेत्ततः ।
ऋग्विद्धिरण्यगर्भेति यादेवास्त्विति वै क्रमात् ॥

सामज्ञश्चात्रसामानि सह धेनुमयेन च ।
सर्वेष्वाचरणेष्वेवं बल्यर्थं तु प्रदक्षिणम् ॥ ८७९ ॥

कृत्वा तु देशिकः पश्चादाचम्य भवनं विशेत् ।
न्यूनातिरिक्तशान्त्यर्थं पूर्णान्तं जुहुयाच्छतम् ॥ ८८० ॥

हृन्मन्त्रेण तु सास्त्रेण दत्त्वा पूर्णाहुतिं ततः ।
जपेदाद्यन्तसंरुद्धं चक्रमन्त्रेण तद्बहिः ॥ ८८१ ॥

मण्डले चाग्रतोर्चायाः सर्वच्छिद्रप्रपूरणे ।
ततः संश्रावयेद्देवं कृताञ्जलिपुटः स्थितः ॥ ८८२ ॥

प्रासादद्वारदेशस्थो भूमौ कृत्वा तु जानुनी ।
"त्वच्छक्त्या प्रेरितेनाद्य यदिदं वै मया कृतम् ॥"

तेन चैवाभिषेक्तव्यः कर्ता कलशवारिणा ।
दद्याद्दिनचतुष्कं तु होमदानपुरस्सरम् ॥ ८८४ ॥

प्रारम्भदिनदानेन हवनेनार्चितेन तु ।
लोकत्रयं तु भूराद्यं तृप्तिमभ्येति चाखिलम् ॥ ८८५ ॥

चतुर्भिर्महदाद्यं तु अतो दिनचतुष्टयम् ।
कलशे मण्डलेऽग्नौ च प्राग्वत् कुर्यात् समर्चनम् ॥

भूराद्यं सत्यलोकान्तं सप्तकं तृप्तिमेति च ।
सप्तकेन दिनानां तु दानहोमार्चनादिना ॥ ८८७ ॥

प्राप्तेऽहनि चतुर्थे तु अपनीय स्रगादिकम् ।
कलशान्मण्डलाद्बिम्बात् ततो यागगृहेऽर्चनम् ॥

होमावसानं मन्त्रस्य कृत्वा पूर्वं यथा पुरा ।
आचम्य च बलिं दत्वा यायाद्देवगृहं ततः ॥ ८८९ ॥

तत्रासनादिकैरिष्ट्वा स्नानान्तैः पूर्ववत् प्रभुम् ।
अपनीताम्बरैः कुम्भैर्धान्यपीठोपरि स्थितैः ॥ ८९० ॥

हृन्मन्त्रपूजितैर्भूयः सलिलेन प्रपूरितैः ।
सहमूर्तिधरैः प्राग्वदन्तरान्तरयोगतः ॥ ८९१ ॥

कार्यं वै स्नानकर्मादि विधिदृष्टेन कर्मणा ।
निरोदकेऽथ प्रासादे पुनराराध्य पूर्ववत् ॥ ८९२ ॥

भोगैरासनपूर्वैस्तु संप्रदानान्तमच्युतम् ।
मुद्रां बध्वा जपेन्मन्त्रं स्तुत्वा क्षान्त्वा बहिर्व्रजेत् ॥

शतं सहस्रं सार्धं वा जुहुयान्मन्त्रराट् स्वयम् ।
साङ्गं सपरिवारं च संहितोच्चारयुक्तितः ॥ ८९४ ॥

मूर्तिपैः प्रणवाद्याभिर्गायत्रीभिः शतं शतम् ।
एकायनैरभिज्ञाभिः स्वकीयाभिश्च तत्समम् ॥ ८९५ ॥

प्रदापयेत्ततः पूर्णामृग्वेदाद्यांस्तु मूर्तिपान् ।
एकायनांस्तदन्ते तु क्रमात्तान् पाठयेत्ततः ॥ ८९६ ॥

पूर्णात्पूर्णेति वा मन्त्रमाद्यात् पूर्णमसीति यत् ।
सनमस्केन मन्त्रेण स्वयं साङ्गेन निक्षिपेत् ॥ ८९७ ॥

बलिभिस्तु ततःसर्वान् भूतपूर्वां तु तर्पयेत् ।
प्रविश्याचम्य तदनु क्षान्त्वा देवं तु कुम्भगम् ॥८९८॥

पूर्ववन्मण्डलस्थं तु कुण्डस्थं तदनन्तरम् ।
विष्वक्सेनं यजेत् प्राग्वदिष्टशिष्टैः क्रमेण तु ॥ ८९९ ॥

भूषयेद्गुरुपूर्वांस्तु मूर्तिपान् कटकादिकैः ।
गुरोर्वा गुरुपुत्रस्य यागद्रव्यं निवेदयेत् ॥ ९०० ॥

स्वयं वाथ प्रतिष्ठानमाचार्यस्त्वाचरेद् द्विज ! ।
ततो विभजनीयं तन्मूर्तिपाद्विष्वनुक्रमात् ॥ ९०१ ॥

एवं सर्वेषु यागेषु कर्तव्यं देशिकेन तु ।
सिद्धेरभीप्सितार्थं च न्यायाद्वचभृथेन च ॥ ९०२ ॥

इत्येतत् साधकस्योक्तं मन्त्राराधनकाङ्क्षिणः ।
मन्त्रमूर्तिप्रतिष्ठानं यत्रस्थः सिद्धिमाप्नुयात् ॥ ९०३ ॥

स्थापने यजमानस्य फलं वक्ष्ये समासतः ।
आदेवालयभूभागाद् ध्वजान्ताच्चापि मण्डपात् ॥

सर्वोपकरणोपेताम् सर्वेष्वावरणेषु च ।
समन्तात् परमाणूनां सर्वेषां द्विजसत्तम ! ॥ ९०५ ॥

यावती जायते संख्या तावत् कर्ता समावसेत् ।
भोगभुग्विष्णुलोके च यात्यन्ते परमं पदम् ॥ ९०६ ॥

कर्ता वै ब्राह्मणो विप्र ! सर्वविद्याधिपो भवेत् ।
क्षत्रियो यजमानस्तु सर्वदेशाधिपो भवेत् ॥ ९०७ ॥

वैश्यस्तु यजमानः स्याद्धनधान्यसमृद्धिमान् ।
शूद्रस्तु यजमानः स्यान्मोदते बन्धुभिः सह ॥ ९०८ ॥

स जन्मना च ज्ञानेन एवमेव भवेत् स्त्रियः ।
पुत्रार्थी पुत्रमाप्नोति राज्यार्थी राज्यमाप्नुयात् ॥

यद्यत् कामयते कर्ता तत्तत् सर्वं समाप्नुयात् ।
अकामानां तु भक्तानां भक्तिरव्यभिचारिणी ॥ ९१० ॥

यच्चापि शाश्वतं ज्ञानं भवेत्तद्धर्मणा सह ।
स्वयं कृतानां बिम्बानां स्थापनं संप्रकीर्तितम् ॥

एवं बिम्बं प्रतिष्ठाप्य प्रासादे स्वगृहे तु वा ।
ततःप्रभृति तामर्चां पूजयेत् प्रतिवासरम् ॥ ९१२ ॥

जीर्णोद्धाराद्यवधिर्यावत्तावत्कालं विधानतः ।
प्रमादाद्बुद्धिपूर्वाद्वा पूजालोपं न कारयेत् ॥ ९१३ ॥

तत्तद्बिम्बस्य विहितं कर्म वापि न लोपयेत् ।
कर्मणां स्नपनादीनां यत् कर्म विहितं द्विज ! ॥ ९१४ ॥

यस्मिन् वै कर्मबिम्बे तु तत्रैव तु समाचरेत् ।
तत्तत्कर्मार्थबिम्बे तु विभवे सहिते सति ॥ ९१५ ॥

तत्तत्कर्मविशेषाणां व्यत्ययं न समाचरेत् ।
असन्निधाने तेषां तु राष्ट्रभङ्गादिदोषतः ॥ ९१६ ॥

तद्देशकालानुगुणं तत्र सन्निहितं भवेत् ।
यद्यत्कर्मार्थबिम्बं तु तत्र सर्वं समाचरेत् ॥ ९१७ ॥

स्नपनद्वितयं चैव नित्यनैमित्तिकात्मकम् ।
नित्योत्सवविधानं च तथा नैमित्तिकोत्सवम् ॥ ९१८ ॥

तीर्थयात्राविधानं च एवं कर्माणि पञ्च वै ।
शयनोत्थापनं कर्म तदा कूर्चं समाचरेत् ॥ ९.१९ ॥

यद्वा शोभार्थबिम्बे तु पूज्यमाने प्रतिष्ठिते ।
एवं कथितमेकस्मिन् बिम्बे सन्निहिते सति ॥ ९.२० ॥

बिम्बद्वये सन्निहिते तत्तत्कर्मविभेदतः ।
कृत्वा तदन्यत् सकलं यथायोगं समाचरेत् ॥ ९.२१ ॥

एवमभ्यूह्य कर्तव्यं तत्तद्बिम्बे प्रकाशिते ।
सर्वेषु कर्मबिम्बेषु तत्र सन्निहितेषु वै ॥ ९.२२ ॥

तदा तेषां तु बिम्बानां व्यत्ययं न समाचरेत् ।
तदा शोभार्थबिम्बे तु प्राप्त उत्कृष्टलोहजे ॥ ९.२३ ॥

वर्णैर्मूर्तस्थापिते तत्र स्वकुलोद्धारणाय च ।
अन्नबिम्बोदितं कर्म न कदाचित् समाचरेत् ॥ ९.२४ ॥

यद्याचरेत् प्रमादेन राजा राष्ट्रं विनश्यति ।
विशेषेण स्वयंव्यक्ते दिव्ये सैद्धेऽपि चार्षके ॥ ९.२५ ॥

स्थाने तु कर्मबिम्बानां व्यत्ययं न समाचरेत् ।
तानि बिम्बानि विप्रेन्द्र ! यादृशानि भवन्ति हि ॥

लक्षणैश्च प्रमाणैश्च युक्तानि रहितानि वा ।
उत्कृष्टलोहजातानि अपकृष्टोत्थितानि वा ॥ ९.२७ ॥

तादृशानि भवन्त्येव न कुर्यादन्यथा बुधः ।
न लक्षणान्तरं कुर्यान्न प्रमाणान्तरं तथा ॥ ९.२८ ॥

न तु द्रव्यान्तरं चैव न तु कुर्यात् क्रियान्तरम् ।
मन्त्रान्तरं न युञ्जीत सर्वं कुर्याद्यथापुरम् ॥ ९.२९ ॥

कुर्याच्चेल्लक्षणादीनां विपर्यासं महामते ! ।
राज्ञो राष्ट्रस्य नाशः स्यात् तथापि सहसन्ततेः ॥

न कुर्यान्मूलबिम्बेऽपि लक्षणादिविपर्ययम् ।
तस्मात् पौराणिके स्थाने न विपर्यासमाचरेत् ॥९.३१॥

एवं स्थाने मानुषेऽपि लक्षणादिविपर्ययम् ।
जीर्णाख्यस्य विधेः पूर्वं न कदाचित् समाचरेत् ॥

स्वयंव्यक्तादिके वापि स्थाने मनुजनिर्मिते ।
अजीर्णे नाङ्गहीने वा धाम्नि बिम्बेऽथवा द्विज ! ॥

प्राक्स्थितस्योपमर्दंन कुर्याद्धामान्तरं न च ।
न तु बिम्बान्तरं कुर्याद्व्यामोहाद्यदि कल्पयेत् ॥९.३४॥

आत्महीनो भवेत् कर्ता राजा च सहसन्ततिः ।
महद्भयं भवेत्तस्य राष्ट्रस्य सनृपस्य च ॥ ९.३५ ॥

अथ जीर्णविधानं तु समासात् कथ्यतेऽधुना ।
मनुष्यनिर्मिते स्थाने तावज्जीर्णविधिं शृणु ॥ ९.३६ ॥

धातुमृच्छैलदारूत्थो वस्त्रादिष्ववतारितः ।
यो यो भगवदाकारस्तस्य तस्य महामुने ! ॥ ९.३७ ॥

जीर्णत्वे वाङ्गभङ्गे वा क्षते वा तत्र तत्र च ।
सन्धानयोग्यं सन्धेयमयोग्यं तु परित्यजेत् ॥ ९.३८ ॥

परित्यक्तं तु तद्बिम्बं धातुद्रव्योद्भवं विना ।
जलाशये ह्यगाधे वा समुद्रे विधिना क्षिपेत् ॥ ९.३९ ॥

भूमौ वा निखनेद्विप्र ! देशकालानुरूपतः ।
विधिवत् प्रतिपत्तौ तु जातायामादितोन्त्यतः ॥

अङ्गभङ्गादिदोषेषु सम्यग्भूतेषु सत्स्वपि ।
सति सन्धानयोग्यत्वे न कदाचित् परित्यजेत् ॥

तस्य त्यागो विनाशश्च ह्युपर्युपरि बाधकृत् ।
बिम्बादीनां तु वृद्धानां परित्यागो न युज्यते ॥ ९.४२ ॥

उत्कृष्टानां हेम तारताम्रजानां विशेषतः ।
नोचितः स्यात् परित्यागस्तस्मात् सन्धानमाचरेत् ॥

प्रयत्नेनाप्ययोग्यत्वे परित्यागं समाचरेत् ।
द्रव्येण तज्जातीयेन कुर्याद्बिम्बान्तरं ततः ॥ ९.४४ ॥

धातुद्रव्यमयोद्भूतैः पूर्वलोहैर्द्विजोत्तम ! ।
तैस्तैरमूर्ततां नीतैस्तत्तज्जातीयलोहजैः ॥ ९.४५ ॥

तत्तज्जातीयलोहैर्वा समुत्कृष्टैर्महामते ! ।
अथवा राजतं बिम्बं हैमं चोत्कृष्टताम्रजम् ॥ ९.४६ ॥

संदध्यात्तु प्रयत्नेन न कदाचित् परित्यजेत् ।
हीनताम्रमयं यत्तदारकूटमयं तु तत् ॥ ९.४७ ॥

सन्धानकरणायोग्यं तद्द्वयं तु परित्यजेत् ।
परित्यक्तं तु तद्बिम्बं क्षिपेत् पूर्वेण वर्त्मना ॥ ९.४८ ॥

ततो बिम्बान्तरं कुर्याद्राजतं वा सुवर्णजम् ।
उत्कृष्टतत्तज्जातीयद्रव्यजं वा महामते ! ॥ ९४९ ॥

कर्मबिम्बेषु सर्वेषु ह्येवमेव तु कारयेत् ।
मृत्काष्ठोपलजे बिम्बे तथा रत्नमयेऽपि च ॥ ९५० ॥

केनापि हेतुना भग्ने कृत्वा बालगृहादि तत् ।
त्यक्त्वा तदन्यत् संपाद्य बिम्बसंस्थापनं चरेत् ॥ ९५१ ॥

दिव्यसिद्धादिके स्थाने विशेषमवधारय ।
मृण्मये मूलबिम्बे तु जीर्णे वाथ जलादिभिः ॥

हीनाङ्गे वा तदा कुर्यात् संधानं तु प्रयत्नतः ।
एवं वर्णविहीनेऽपि सन्धानं तु समाचरेत् ॥ ९५३ ॥

मृत्तिकाशूलरज्ज्वादीन कदाचित् परित्यजेत् ।
बिम्बे धातुमये जीर्णे सन्दध्यात् स्वर्णपूर्वकैः ॥ ९५४ ॥

जीर्णे लोहमये बिम्बे सन्दध्यात् काञ्चनेन तु ।
एवं रत्नमये बिम्बे सन्धानं च समाचरेत् ॥ ९५५ ॥

जीर्णं तु यद्यत् त्याज्यं स्यात् तत्तत् त्यक्त्वा ततः परम् ।
सन्दध्यात्तु ततो विप्र ! न कुर्यादन्यथा पुनः ॥

न बालगेहं तद्बिम्बं तत् कर्मापि समाचरेत् ।
नित्यनैमित्तिकाद्येषु वर्तमानेषु कर्मसु ॥ ९५७ ॥

प्रागुक्तं सकलं कुर्याद्यथावित्तानुसारतः ।
लक्षणादिष्वपि तथा न कुर्यादन्यथा पुनः ॥ ९५८ ॥

येषु व्यक्तेषु चिह्नानि नाभिव्यक्तानि सत्तम ! ।
तान्यपि स्थानि चिह्नानि ललाटे वांसपट्टके ॥ ९५९ ॥

पृष्ठे वाप्यङ्गपट्टे वा पाणिपादतलेषु वा ।
मूर्ध्नि वा दधते तस्मात् तत्र तत्र निरीक्षयेत् ॥ ९६० ॥

तस्मादलक्षणा व्यक्तिर्विद्यते न कदाचन ।
एवं तदीया विप्राश्च क्षत्रिया वैश्यजातयः ॥ ९६१ ॥

मौद्गल्याद्यास्तथान्ये च न तच्चिह्नविवर्जिताः ।
भवेयुः सर्वथा तस्माच्चक्रशङ्खगदाम्बुजैः ॥ ९६२ ॥

लोहैरनलसन्तप्तैस्तत्तन्मन्त्राधिवासितैः ।
पूजितैरर्घ्यगन्धाद्यैरङ्कितव्याः क्षणेन तु ॥ ९६३ ॥

त्रैविद्या ज्ञानसम्पन्ना यथोक्ताचारनिष्ठिताः ।
विप्राद्यास्तेऽपि शूद्राश्च यद्येवं कृतलक्षणाः ॥ ९६४ ॥

तदा तु योग्या विज्ञेयाः समयश्रवणादिषु ।
शास्त्रोदितासु सर्वासु सामग्रीषु महामते ! ॥ ९६५ ॥

यागोपकरणान्येवमर्घ्यपात्रादिकान्यपि ।
संयोज्यानि यथायोगं शङ्खचक्रादिलक्षणैः ॥ ९६६ ॥

तथा यानासनादीनि विभोः सर्वाणि यत्नतः ।
स्वात्मोपकरणं सर्वमासनादिविवर्जितम् ॥ ९६७ ॥

अङ्गुलीयकपर्यन्तं भूषणं कटकादिकम् ।
उत्तमाङ्गसमुद्धार्यं सर्वमुष्णीषपूर्वकम् ॥ ९६८ ॥

चक्रादिलाञ्छितं कुर्यात् तदीयाश्च गवादयः ।
विप्रादिवल्लाञ्छितव्यास्तदीया भूरुहादयः ॥ ९६९ ॥

लाञ्छितव्या यथायोगं चक्रशङ्खादिलक्षणैः ।
आराधकाद्याः कर्मण्या एवं चक्रादिलाञ्छिताः ॥

दैवतान्तरचिह्नैस्तैरकर्मण्यास्तु लाञ्छिताः ।
यत्र वा भगवन्मूर्तौ लाञ्छनं न प्रदृश्यते ॥ ९७१ ॥

तत्रापि लक्षणन्यासं न कुर्यात् स्वेच्छया द्विज ! ।
यथास्थितैव सा व्यक्तिः पूज्या व्यापकमन्त्रतः ॥

तदन्ये लाञ्छितव्याः स्युः सर्वे पूर्वमलाञ्छिताः ।
इति सम्यक् प्रतिष्ठानं देवस्य परिकीर्तितम् ॥ ९७३ ॥

स्थानसंरक्षणार्थं तु तस्मिन् कालेऽन्यदा तु वा ।
प्रासादाग्रेऽथवा विप्र ! प्राङ्गणे यत्र कुत्रचित् ॥ ९७४ ॥

चक्रं संस्थापयेत्तत्र अमूर्तं शिखरोपरि ।
मूर्तमङ्गणदेशे तु षोडशाष्टभुजं तु वा ॥ ९७५ ॥

अमूर्तं द्वादशारं तु अष्टारं षडरं तु वा ।
शङ्खादीन्यायुधान्येवं विदध्यादङ्गणादिके ॥ ९७६ ॥

द्वितीयावरणे वापि तृतीयावरणेऽपि वा ।
चक्रादिबिम्बनिर्माणमुत्तरत्र प्रवक्ष्यते ॥ ९७७ ॥

सह संस्थापने प्राग्वत् कर्मभेदो न विद्यते ।
पृथक् संस्थापने कुर्यात् सर्वकर्म यथाविधि ॥ ९७८ ॥

तत्तत्स्थापनकाले तु तत्तत्संज्ञामनुं जपेत्।
विद्यां गदामित्याद्यं यत् पाठयेत्तद्विदो जनान् ॥९७९॥

चमूपच्छ्रयेन इति च प्रविष्णो इति त्वृचौ।
पाठयेद्बह्वृचान् पश्चाच्छाकुनं सूक्तमेव च ॥ ९८० ॥

धृतोर्ध्वपुण्ड्रः कृतचक्रे इति मन्त्रं कठान् परम्।
पवित्रं ते विततमित्येतान् मन्त्रान् यजुर्मयान् ॥९८१॥

आरोहेति च सामज्ञान् पवित्रं ते अग्निरित्यपि।
एभिर्वयमुरुक्रमस्येत्याथर्वणान् द्विजान् ॥ ९८२ ॥

एभिः संस्थाप्य विधिवन्नवभिः कलशैस्ततः।
स्नपयेद्ब्रह्मसूक्तस्थैर्मन्त्रैरष्टाभिरेव च ॥ ९८३ ॥

सर्वस्य वशिनं देवमिति प्राक् स्थापितेन तु।
"वहिरावरणे नास्ती"त्यग्निदिक्संस्थितेन तु ॥

यत्राभिपश्चादश्ववदिति याम्यस्थितेन तु।
धृतोर्ध्वपुण्ड्र इति च यातुधानगतेन तु ॥ ९८५ ॥

दक्षिणे तु भुजे विप्र! इति पश्चिमगेन तु।
विष्णुनाकमश्नन्तीति वायुदिक्संस्थितेन च ॥ ९८६ ॥

पुंप्रधानेश्वरो विष्णुरिति सोमगतेन वै।
इमं महोपनिषदमितीशानगतेन तु ॥ ९८७ ॥

मन्त्रैरेतैः समस्तैस्तु मध्यकुम्भेन सेचयेत्।
प्रासादाग्रस्थिते चक्रे प्रोक्षणं तु समाचरेत् ॥ ९८८ ॥

महोपनिषदन्तस्थानष्टौ मन्त्रान् पुरोदितान्।
यद्वा पुरुषसूक्तं तु सर्वशान्त्यै ततो जपेत् ॥ ९८९ ॥

अत्रानुक्तं तु सकलं पूर्वोक्तं तु समाचरेत्।
सम्यगुक्तं प्रतिष्ठानं किमन्यच्छ्रोतुमिच्छसि ॥ ९९० ॥

सनकः —

कथितं नित्यपूजादौ त्वया नीराजनं पुरा।
तद्विधानं मुनिश्रेष्ठ! प्रब्रूहि मम विस्तरात् ९९१ ॥

शाण्डिल्यः —

नीराजनविधानं तु समाकर्णय साम्प्रतम्।
नित्ये नैमित्तिके विप्र! तथा काम्येऽपि पूजने ॥

अन्ततः स्नानभोगानां कुर्यान्नीराजनं विभोः।
सर्वदोषप्रशान्त्यर्थं सर्वरक्षार्थमेव हि ॥ ९९३ ॥

अलंकारासनोकानां भोगानामन्ततोऽपि वा।
उभयत्रापि वा कुर्याद्विभवेच्छानुसारतः ॥ ९९४ ॥

यद्वा प्रदोषवेलायां तत् कुर्यात् प्रतिवासरम्।
सायं पूजासमारम्भात् पूर्वमेव द्विजोत्तम! ॥ ९९५ ॥

अथवा पूजने कुर्याद्दीपदानात् पुरैव तु।
यद्वा नैवेद्यपर्यन्ते पूजायां तत् समाचरेत् ॥ ९९६ ॥

तदपि त्रिविधं प्रोक्तं सात्त्विकादिविभेदतः।
स्नानान्ते भोगयज्ञान्ते द्वितयं सात्त्विकं भवेत् ॥९९७॥

सायंकाले प्रतिदिनं कुर्याद्राजससंज्ञितम्।
पूजायां दीपदानाग्रे नैवेद्यान्तेऽपि तामसम् ॥ ९९८ ॥

कुर्यात् प्रासाद एकस्मिंस्त्रेधा नैकं न तु क्रमम्।
स्वयंव्यक्तं तथान्यैस्तु विबुधैश्च प्रतिष्ठिते ॥ ९९९ ॥

प्रासादे मुनिमुख्यैश्च सात्त्विकाख्यं समाचरेत्।
ब्राह्मणैः क्षत्रियैर्वैश्यैः स्थापिते राजसं भवेत् ॥१०००॥

शूद्रैस्तु स्थापिते स्त्रीभिस्तामसाख्यं समाचरेत्।
एतेषां सात्त्विकादीनां शृणु सम्यग् विधिं क्रमात् ॥

स्नानावशिष्टतोयेन संपूर्णं कलशं द्विज!।
सौवर्णं राजतं वापि ताम्रजं मृण्मयं तु वा ॥ १००२ ॥

सुपिष्टै रूर्ध्वतो लिप्तं हरिद्राशालितण्डुलैः।
स्रजा वाश्वत्थपत्रेण युतं वा कण्ठदेशतः ॥ १००३ ॥

तं कृत्वा वामपाणौ तु अपरस्मिंस्तु मल्लकम्।
पुष्पप्रकरसंपूर्णं धूपपात्राग्निना युतम् ॥ १००४ ॥

धूमायमानं सिद्धार्थैर्धूपद्रव्येण वा सह।
एकधा देवदेवस्य भ्रामयित्वा तु मूर्द्धनि ॥ १००५ ॥

दीक्षितेन जनेनैव परिचर्यापरेण तु।
शुद्धया योषिता वा तद् द्वारबाह्ये विसर्जयेत् ॥

कल्पयेत् स्नानभोगान्ते एतन्नीराजनं सदा।
कृतं पूर्वोदितैर्द्रव्यैः कुम्भमापूर्य वारिभिः ॥ १००७ ॥

अर्घ्यपात्रोद्धृतैर्वा केवलैर्गालितैः पुनः ।
अन्तः सिद्धार्थकान् क्षिप्त्वा कण्ठे कुर्यादलंकृतिम् ॥
अश्वत्थपल्लवैः स्रग्भिश्चन्दनेनाक्षतैरपि ।
अन्यत्र रजनीपिष्टैर्लेपयेत् सर्वतो द्विज ! ॥ १००९ ॥
तदास्ये मल्लकं पुष्पसंपूर्णं तु नियोजयेत् ।
संस्कृताग्निसमुद्धृतान् पुरा दीपान् प्रदीप्य तु ॥
विभवेच्छानुरूपेण चतुर्विंशादिकान् द्विज ! ।
पाकस्थानात्तु वै दीपादुच्छ्रितां चतुरङ्गुलैः ॥१०११॥
प्रदीपं मल्लके कृत्वा सकुम्भं विनिवेशयेत् ।
अग्रतो देवदेवस्य सदाधारोपरिस्थितम् ॥ १०१२ ॥
तमर्घ्यगन्धस्रग्धूपैर्हृन्मन्त्रेण तु पूजयेत् ।
केवलं सार्घ्यपुष्पेण साधकस्तदनन्तरम् ॥ १०१३ ॥
दद्यादाचमनान्तेऽर्घ्यं मन्त्रेशस्याथवा द्विज ! ।
अर्घ्यालभनमाल्यानि धूपं चाप्यर्घ्यमेव वा ॥ १०१४ ॥
दीपकुम्भं तु पाणिभ्यामुद्धृतं परिचारिणा ।
देवस्य दक्षिणं पाद्मारभ्येतरपश्चिमम् ॥ १०१५ ॥
भ्रामयेत् सर्वतोऽङ्गानि एकधा वा द्विधा त्रिधा ।
जपन् वै नेत्रमन्त्रं तु हृन्मन्त्रं वा यथारुचि ॥ १०१६ ॥
एवं कुम्भं परिभ्राम्य पूर्ववत्तु विसर्जयेत् ।
ततस्तु देवदेवस्य दद्यादर्घ्यं तु मूर्द्धनि ॥ १०१७ ॥
पाकस्थानात्तदर्थं तु दीप आनीयते यदा ।
तदानीं तद्विधानं तु समाकर्णय साम्प्रतम् ॥ १०१८ ॥
दीक्षिताः सुविनीताश्च सुस्नाताः परिचारकाः ।
वदनं नासिकारन्ध्रे स्थगयित्वाम्बरेण तु ॥ १०१९ ॥
सितोष्णीषधराः सर्वे सितचन्दनरूषिताः ।
सौवर्णानि च पात्राणि विततानि यथारुचि ॥१०२०॥
राजतान्यथ ताम्राणि आरकूटमयानि वा ।
कांस्यानि वापि संपाद्य यथा वित्तानुसारतः ॥१०२१॥
एकत्रिपञ्चसप्तापि नवैकादश वा तथा ।
द्वि षट् षोडश वा यद्वा चतुर्विंशतिसंख्यया ॥

पाकालयं समासाद्य तत्राग्नेः संस्कृतात् पुरा ।
तेषां मध्ये वर्तिदीपान् पात्राणां तु महामुने ! ॥१०२३॥
चतुरङ्गुलिकोत्सेधान् सघृतान् दीपयेत् पुनः ।
उद्धृत्य तानि पात्राणि करैस्तु परिचारकाः ॥ १०२४ ॥
वहेयुः पङ्क्तिबन्धेन तदग्रे गणिकाजनाः ।
गच्छेयुर्भगवद्भक्ताः कुर्वन्तो नृत्तगीतके ॥ १०२५ ॥
तदग्रे शङ्खभेर्यादिसमुद्घोषणतत्पराः ।
तदग्रे वेत्रिणोऽस्पृश्यजनोत्सारणतत्पराः ॥ १०२६ ॥
गच्छेयुः परितस्तेषां दीपिकाधारिणो जनाः ।
एवं क्रमात् समासाद्य तिष्ठेयुर्देवसन्निधौ ॥ १०२७ ॥
अथान्यो दीक्षितो विप्रः कुम्भमापाद्य पूर्ववत् ।
समल्लकं तदूर्ध्वं तु तेष्वेकस्मात् प्रदीप्य तु ॥ १०२८ ॥
पाकस्थानादाहृतेषु प्रदीपं विनिवेश्य च ।
सदाधारस्थितं कुर्यात् ततः साधकसत्तमः ॥ १०२९ ॥
कुम्भं प्राग्वत् समभ्यर्च्य देवेशं च ततः परम् ।
भ्रामयेत् पूर्ववत् कुम्भं तस्मिन् काले द्विजोत्तम ! ॥
ऋगाद्यध्ययनं कुर्याद्द्विजाः प्रागादिदिक्स्थिताः ।
सन्निधौ देवदेवस्य नृत्यं तु गणिकास्तदा ॥ १०३१ ॥
मङ्गलानि च गीतानि सर्वे गायन्तु गायकाः ।
स्वरेणोच्चतरेणैव स्तुवन्तु स्तोत्रपाठकाः ॥ १०३२ ॥
भेरीमृदङ्गशङ्खादीन् घोषयेयुः समन्ततः ।
एवं सर्वत्र वै कुर्यादृगाद्यध्ययनादिकम् ॥ १०३३ ॥
कुम्भमेवं परिभ्राम्य दत्वा तं परिचारिणः ।
हस्तेऽथ दीपपात्राणि दर्शयेदितराणि च ॥ १०३४ ॥
दृष्ट्वा सम्यक् ततो दद्यादर्घ्यं देवस्य मूर्धनि ।
कुम्भपूर्वाणि पात्राणि वहन्तः परिचारकाः ॥१०३५॥
प्रदक्षिणक्रमात् सार्धं पूर्ववद्गणिकादिभिः ।
क्षिपेयुर्द्वारवाह्ये वा वाह्यद्वारस्य वाह्यतः ॥ १०३६ ॥
अथवा विनियुक्तानि तानि संगृह्य योषितः ।
सुस्नाता धौतवसना द्विजातिभावितात्मनः ॥ १०३७ ॥

ललाटे तिलकं दत्वा सर्वालंकारभूषिताः ।
क्षिपेयुरुदितेनैव वर्त्मना द्विजसत्तम ! ॥ १०३८ ॥

अथवा विनियोगात्तु पूर्वं पाकालयादपि ।
योषितो दीपपात्राणि गृहीत्वा प्रोक्तवर्त्मना ॥ १०३९ ॥

आनयेयुर्विभोरग्रे कर्तुरिच्छानुरूपतः ।
एवं नीराजनं कुर्यादलंकारासनान्ततः ॥ १०४० ॥

अथवा भ्रामयेत् कुम्भं दीपाष्टकसमन्वितम् ।
यद्वा तत्रापि वै कुम्भं साग्निमल्लकसंयुतम् ॥ १०४१ ॥

धूमायमानं सिद्धार्थैर्भ्रामयेद्दीपवर्जितम् ।
एवं नीराजनं प्रोक्तमेकमूर्तेर्द्विजोत्तम ! ॥ १०४२ ॥

अनेकमूर्तिपूजायां मुख्यमूर्त्यादितः क्रमात् ।
सर्वासामपि मूर्तीनां दत्वार्घ्याद्यं पृथक् पृथक् ॥

एकैकेन तु कुम्भेन प्रत्येकं अथवा द्विज ।
सर्वासामपि कुम्भेन प्राग्वन्नीराजनं चरेत् ॥ १०४४ ॥

एवं नीराजनं येन कृतं भगवतो विभोः ।
अनुतिष्ठन्ति साहाय्यं तस्मिन् कर्मणि ये जनाः ॥

रजस्तमोविनिर्मुक्ता भवेयुस्ते न संशयः ।
अघोरयजनसंस्पृष्टे कुम्भे तं परिहाय तु ॥ १०४६ ॥

कुम्भान्तरं समापाद्य तेन तत्तु समाचरेत् ।
दीपेष्वेकतमो दीपो यायादुपरतिं यदि ॥ १०४७ ॥

प्रमादाद्वातवेगाद्यैः पुरस्ताद्विनिवेदनात् ।
श्रीभङ्गो जायते पश्चाद्यदि व्याध्यादिपीडनम् ॥१०४८॥

तस्मात् प्रदीप्य सहसा मूलमष्टोत्तरं जपेत् ।
शङ्खाद्यैर्नृत्तगीताभ्यां विना नीराजनं कृतम् ॥१०४९॥

यदि स्यान्निष्फलं तत् स्यात् तस्मात्तैः सार्धमाचरेत् ।
एवं नीराजनं प्रोक्तं सात्त्विकं नाम नामतः ॥ १०५० ॥

राजसं नाम विप्रेन्द्र ! नीराजनमथोच्यते ।
प्राग्वत् पात्राणि सम्पाद्य योषितः सुविभूषिताः ॥

कञ्चुकबन्धेन संयुक्ताः परिचारकपूर्वकाः ।
पाकस्थानं समासाद्य तेषु दीपान् प्रदीप्य तु ॥१०५२॥

करैरुद्धृत्य पात्राणि निर्गताश्च महानसात् ।
श्रेणीबन्धाः समासाद्य प्राग्वद्गीतादिभिः सह ॥१०५३॥

अग्रतो देवदेवस्य विन्यसेयुर्महीतले ।
आधारेषु ततोऽर्घ्याद्यैस्तानि पात्राणि पूजयेत् ॥

मूलबिम्बादिबिम्बानां न्यासं कृत्वा विधानतः ।
अर्घ्यालभनपुष्पाद्यैरर्घ्यपाद्यादिभिस्तु वा ॥ १०५५ ॥

साधको देवदेवस्य पूजां कृत्वा क्रमेण तु ।
उद्धृत्य दीपपात्राणि पूजकः सुसमाहितः ॥ १०५६ ॥

मूलमूर्तेस्तु वै पूर्वमापादान्मूर्धपश्चिमम् ।
त्रिधा संभ्रामयेत्तेषामेकैकं वा त्रयं त्रयम् ॥ १०५७ ॥

अन्यासामपि मूर्तीनामेवमेव समाचरेत् ।
एवं नीराजनं देव्योर्लक्ष्मीपुष्ट्योः पृथक् पृथक् ॥

ऋगाद्यध्ययनाद्यं तु पूर्ववत्तु समाचरेत् ।
निवेदितानि विप्रेन्द्र ! भूयः संगृह्य योषितः ॥१०५९॥

क्षिपेयुः प्राग्विधानेन बलिपीठेषु वा द्विज ! ।
एवं नीराजनं विप्र ! सायंकाले समाचरेत् ॥ १०६० ॥

यद्वा पूर्वोदितं कुम्भं वर्तिदीपसमन्वितम् ।
समत्स्यमांसबलिभिरन्वितं भ्रामयेत् तदा ॥ १०६१ ॥

यद्वा कुम्भं परिभ्राम्य दीपमल्लकसंयुतम् ।
तत् पश्चादन्नपिण्डानां पञ्चानां भ्रमणं चरेत् ॥१०६२॥

एवं नीराजनं प्रोक्तं त्रिविधं राजसाभिधम् ।
नीराजनं तामसाख्यमिदानीमवधारय ॥ १०६३ ॥

पाकस्थानं समासाद्य योषिद्वा परिचारकः ।
पात्रमेकं समादाय पूर्वोक्तद्रव्यनिर्मितम् ॥ १०६४ ॥

अन्नपिण्डानि चत्वारि दूर्वामुष्टिचतुष्टयम् ।
तस्मिन् पात्रे चतुर्दिक्षु विनिवेद्याथवा द्विज ! ॥

पृथक् चतुर्षु पात्रेषु तानि चत्वारि विन्यसेत् ।
प्रागुक्तवर्त्मनासाद्य देवदेवस्य सन्निधिम् ॥ १०६६ ॥

आधारोपरि वै पात्रं विन्यसेत्तत्र तत्परम् ।
तत् पात्रमर्घ्यपुष्पेण हृदा संपूज्य साधकः ॥ १०६७ ॥

अर्घ्यं पाद्यं तथाऽऽचामं देवस्य विनिवेद्य च।
ततोऽन्नपिण्डमैन्द्रस्थं दूर्वामुष्टिं तथैव च ॥ १०६८ ॥

चक्रमन्त्रेण संभ्राम्य देवस्य शिरसोपरि।
तत्पुनर्देवदेवस्य प्राच्यां दिशि विनिक्षिपेत् ॥ १०६९ ॥

एवं दक्षिणदिक्संस्थं भ्राम्य दक्षिणतः क्षिपेत्।
पश्चिमस्थं परिभ्राम्य पश्चिमस्यां दिशि क्षिपेत् ॥

उत्तरस्थं परिभ्राम्य उत्तरस्यां दिशि क्षिपेत्।
देवस्य तिलकं कुर्याद्दीपपात्रोत्थभस्मना ॥ १०७१ ॥

एवं नीराजनं कुर्याद्दीपदानात् पुरैव तु।
हेमादि द्रव्यजं पात्रं षड्विंशाङ्गुलविस्तृतम् ॥१०७२॥

कृत्वा सुवृत्तं तन्मध्ये पद्मं कुर्यात् सकर्णिकम्।
पत्राष्टके कर्णिकायां दीपगर्तं प्रकल्पयेत् ॥ १०७३ ॥

दीपान् प्रज्वालयेत्तत्र षडङ्गुलसमुच्छ्रितान्।
सिद्धार्थदधिदूर्वादिधीजैश्च परिपूरितम् ॥ १०७४ ॥

पूजितं गन्धपुष्पाद्यैः पात्रमादाय साधकः।
त्रिः प्रदक्षिणमावर्त्य पाणिभ्यां देवमूर्धनि ॥ १०७५ ॥

प्राकारावरणाद्बाह्ये दिवा सोमदिशि क्षिपेत्।
प्रागन्नपिण्डभ्रमणादन्ते धूपोत्थभस्मना ॥ १०७६ ॥

रक्षया संपुटीकुर्यादेवं नीराजनं द्विज!।
एवं नीराजनं कुर्यान्निवेद्यान्ते विभोः सदा ॥ १०७७ ॥

एवं नीराजनं प्रोक्तं द्विविधं तामलालयम्।
गीतनृत्तादिकं सर्वं प्रारब्धं समाचरेत् ॥ १०७८ ॥

कुर्यात् स्नानावसानेऽपि ऋगाद्यध्ययनादिकम्।
अर्घ्यादिभोगैर्यजनं वर्जयेत् तत्र सर्वदा ॥ १०७९ ॥

सायंकालं विनान्यत्र नीराजनविधौ द्विज!।
न कुर्याद्देवदेवस्य मन्त्रन्यासं कदाचन ॥ १०८० ॥

नीराजनं सात्त्विकाख्यं प्रवृत्तं यत्र तत्र तु।
राजसं तामसं वापि न कदाचित् समाचरेत् ॥१०८१॥

राजसं तामसं वापि प्रवृत्तं यत्र तत्र वै।
नीराजनं सात्त्विकाख्यं कुर्यादिच्छानुरूपतः ॥ १०८२ ॥

संपूर्णं भगवद्यागात् फलमिच्छन् महामते!।
उक्तमार्गविपर्यासं न कदाचित् समाचरेत् ॥ १०८३ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे प्रतिष्ठाविधानं नाम पञ्चदशोऽध्यायः ॥

---

श्रीः

# षोडशोऽध्यायः ॥

सनकः —
स्थापनं मन्त्रबिम्बानां परिज्ञातं यथाविधि।
महोत्सवविधानं तु श्रोतुमिच्छामि सांप्रतम् ॥ १ ॥

शाण्डिल्यः —
महोत्सवं प्रवक्ष्यामि यथावन्मुनिपुङ्गव!।
सव इत्युच्यते दुःखं विद्वद्भिः समुदाहृतम् ॥ २ ॥

उद्गतः स सवो यस्मात् तस्मादुत्सव उच्यते।
नित्यो नैमित्तिकः काम्यस्त्रिविधः स महोत्सवः ॥ ३ ॥

वत्सरे वत्सरे यस्तु क्रियते स तु नित्यकः।
भूमिकंपे दिशां दाहे महोत्पातेषु सत्सु च ॥ ४ ॥

दुर्भिक्षे व्याधिते राष्ट्रे तथा वै शत्रुसंकटे।
अनावृष्टौ च सर्वत्र नक्षत्रपतने च स्यात् ॥ ५ ॥

हसने भगवन्मूर्तेरङ्गानां चलने सति ।
रोदने चासनाद्बिंबे परिभ्रमति सत्तम ! ॥ ६ ॥
व्यत्यासे शशि (दिशि) सूर्यस्य तथान्येष्वेवमादिषु ।
शान्त्यर्थं यत् प्रकुर्वीत स नैमित्तिक उच्यते ॥ ७ ॥
चतुर्णां पुरुषार्थानामुद्दिश्यान्यतमं फलम् ।
उत्सवोऽनुष्ठितः काम्यः संकल्पितफलप्रदः ॥ ८ ॥
एकैकमुत्सवं विद्धि त्रिविधं मुनिपुंगव ! ।
उत्तमादिविभेदेन तत्र चोत्सवकौतुके ॥ ९ ॥
क्रियते ह्युत्सवो यस्तु स उत्तम उदाहृतः ।
नित्यः स्नपनबिंबे यः स मध्यम उदीर्यते ॥ १० ॥
बिंबे नित्योत्सवार्थं तु यः स्यात् स तु कनीयसः (!) ।
कुम्भे वा विष्टरे चक्रे यः स आभाससंज्ञितः ॥ ११ ॥
अन्येनापि प्रकारेण भूयस्त्रैविध्यमुच्यते ।
परिभ्रमणकाले तु यात्राबिंबस्य पूर्वतः ॥ १२ ॥
कुमुदाद्यैस्तु भूतेशैः पटेषु लिखितैर्द्विज ! ।
सध्यानांसिद्धये यद्वा हेमादिद्रव्यनिर्मितैः ॥ १३ ॥
विभवस्यानुगुण्येन रक्षार्थं हेतिना तथा ।
सर्वसंपूरणार्थं तु गरुडेनापि वै सह ॥ १४ ॥
ग्रामादौ बलिदानं तु यत्र नित्यं समाचरेत् ।
स एष उत्सवो विप्र ! भवेदुत्तमसंज्ञितः ॥ १५ ॥
परिभ्रमसमारम्भात् पूर्वमेव महामते ! ।
नित्योत्सवार्थबिंबस्य सन्निधावग्रमूर्तिना ॥ १६ ॥
सार्धं च चक्रराजेन, अथवा केवलस्य तु ।
सन्निधौ बलिबिंबस्य बलिं दत्वा विधानतः ॥ १७ ॥
प्रासादे बलिबिंबादि प्रवेश्य तदनन्तरम् ।
यत्र यात्रार्थबिंबस्य परिभ्रमणमाचरेत् ॥ १८ ॥
ग्रामे वा नगरे वापि स तु मध्यमसंज्ञितः ।
सन्निधौ चक्रराजस्य बलिं दत्वा पुरैव तु ॥ १९ ॥
देवयात्रा भवेद्यत्र भवेत् स तु कनीयसः (!) ।
मुख्यानुकल्पभेदाच्च द्विविधः परिकीर्तितः ॥ २० ॥

कलशे मण्डले बिंबे वह्नौ च यजनं विभोः ।
नित्यशः क्रियते यत्र मुख्यकल्पः स कीर्तितः ॥ २१ ॥
बिंबे वह्नौ च यजनं यत्र स्यात् सोऽनुकल्पकः ।
परसूक्ष्मस्थूलभेदादेकैकस्त्रिविधः स्मृतः ॥ २२ ॥
एकत्रिपञ्चसप्ताहो नवाहश्च परः स्मृतः ।
द्वादशाहोऽर्धमासश्च एकविंशतिवासरः ॥ २३ ॥
सूक्ष्मः, स्थूलः सप्तविंशद्दिनो मासस्तथा ऋतुः ।
षण्मास अब्दमेवं हि उत्सवास्तु त्रयोदश ॥ २४ ॥
भूयो मुख्यादिभेदेन द्विविधः स तु कीर्तितः ।
उत्सवाहर्गणात् पूर्वं यथोक्ते वासरे द्विज ! ॥ २५ ॥
ध्वजस्यारोहणं कृत्वा तत्पश्चात् क्रियते तु यः ।
मुख्यकल्पमिदं विद्धि दैवाद्वा मानुषात्तु वा ॥ २६ ॥
कुतश्चित् कारणाद्विप्र ! पूर्वमुक्ते तु वासरे ।
न कल्पिते ध्वजारोहे तूत्सवारम्भवासरे ॥ २७ ॥
ध्वजस्यारोहणं कृत्वा तत्पश्चात् क्रियते तु यः ।
अनुकल्पमिदं विद्धि ह्येष तु त्रिविधः स्मृतः ॥ २८ ॥
ध्वजारोहणपूर्वस्तु देवताह्वानपूर्वकः ।
अङ्कुरार्पणपूर्वस्तु तथा च मुनिपुंगव ! ॥ २९ ॥
ध्वजारोहणपूर्वस्तु राजराज्यसुखप्रदः ।
देवताह्वानपूर्वस्तु स्वर्गभोगफलप्रदः ॥ ३० ॥
अङ्कुरार्पणपूर्वस्तु सर्वेषां मोक्षदो भवेत् ।
उत्सवारंभदिवसे दिवारोप्य ध्वजं निशि ॥ ३१ ॥
भेरीताडनमन्वक् च पालिकास्वंकुरान् क्षिपेत् ।
ध्वजारोहणपूर्वस्तु ह्येष उत्सव उच्यते ॥ ३२ ॥
आघोष्य भेरीं प्रथमं ध्वजारोहणमन्वतः ।
ततोंकुरार्पणं ह्येष देवताह्वानपूर्वकः ॥ ३३ ॥
अङ्कुरारोपणं विप्र ! पूर्वं तु रजनीमुखे ।
ततोऽन्वक् स्याद्ध्वजारोहो भेरीताडनमन्वतः ॥ ३४ ॥
अङ्कुरारोपपूर्वस्तु ह्येष उत्सव उच्यते ।
उत्सवं ह्युत्तमं विद्धि त्रिवारं प्रतिवत्सरम् ॥ ३५ ॥

द्विवारं मध्यमं प्रोक्तं ह्येकवारं कनीयसम्।
चतुर्वारं पञ्चवारं षड्वारं विभवे भवेत्॥ ३६॥

मन्त्रमूर्तिप्रतिष्ठानकाल एव महामते!।
प्रासादस्य शिखाग्रे तु स्थापितः खगराड्ध्वजः॥

हेतिराजसमायुक्तो यत्र तत्र सदा द्विज!।
विना त्वन्यध्वजारोहमुत्सवं परिकल्पयेत्॥ ३८॥

तत्राप्यन्यध्वजारोहं कुर्याद्वा विभवे सति।
कुर्यादुत्सवमन्यत्र ध्वजारोहणपूर्वकम्॥ ३९॥

तीर्थयात्रानुगुण्येन ध्वजारोहं प्रकल्पयेत्।
उत्सवेषु च सर्वेषु तीर्थयात्रादिनं शृणु॥ ४०॥

चैत्रादिषु च मासेषु श्रवणर्क्षेऽयनद्वये।
विषुवद्वितये वापि चन्द्रसूर्योपरागयोः॥ ४१॥

द्वादश्यां पौर्णमास्यां च दर्शे च नवमीतिथौ।
मासर्क्षेऽपि च रोहिण्यां तथा चोत्तरफल्गुने॥ ४२॥

पुनर्वस्वाख्यनक्षत्रे प्रतिष्ठादिवसे तथा।
नगरग्रामजन्मर्क्षे प्रासादारम्भवासरे॥ ४३॥

राज्ञां जन्मदिने वापि अभिषेकदिने तथा।
एकस्मिन्नेषु सर्वेषु तीर्थयात्रां समाचरेत्॥ ४४॥

एतेषु यस्मिन्नक्षत्रे तीर्थयात्रा प्रकल्पिता।
यदा तु तत् स्याद्द्विगुणं मासि ह्युत्सवकल्पिते॥

तदा कुर्यात् तीर्थयात्रां मासान्तस्थे तु तद्दिने।
फाल्गुनादिषु सर्वेषु मासेष्वेवं प्रकल्पयेत्॥ ४६॥

पश्चादहात्तु समारभ्य एकत्रिंशद्दिनान्तिमम्।
तीर्थयात्रादिनादर्वागेकविंशतिमे दिने॥ ४७॥

ध्वजस्यारोहणं कुर्यादुत्सवार्थं प्रयत्नतः।
यद्वा कल्याणदिवसं त्रिगुणीकृत्य तावताम्॥ ४८॥

आदौ दिनानां कर्तव्यो ध्वजारोहो द्विजोत्तम!।
सप्तविंशतिमे ब्रह्मन्! उत्सवारम्भवासरात्॥ ४९॥

पूर्वे दिने तु तत्संख्ये ध्वजमारोहयेत् सुधीः।
त्रिंशद्दिने तु तत्संख्ये दिने पूर्वे समाचरेत्॥ ५०॥

क्रतूत्सवादित्रितये ह्युत्सवारम्भवासरात्।
एकोनविंशतिदिने ध्वजारोहणमाचरेत्॥ ५१॥

अष्टादशदिने वापि द्वादशाहेऽथवा भवेत्।
एकविंशद्दिनाद्ये(दे)वमुत्सवानां त्रिकेऽपि च॥ ५२॥

एवमेव ध्वजारोहमाचरेद्देशिकोत्तमः।
अंकुरानर्पयित्वा हि पुण्ये पूर्वे यथोदिते॥ ५३॥

ध्वजमारोहयेत् पश्चान्मङ्गलं मङ्गले दिने।
यस्मिन् दिने ध्वजारोहं कुर्यात् तत्पूर्वमेव तु॥ ५४॥

द्वादशाहे नवाहे वा सप्ताहे पञ्चमेऽहनि।
तृतीयेऽहनि वा कुर्यादंकुरारोपणं द्विज!॥ ५५॥

तद्विधानं हि विस्तारात् समाकर्णय सांप्रतम्।
त्रिविधानि च पात्राणि मंगलांकुररोपणे॥ ५६॥

पालिका घटिकाश्चेति शरावाश्चेतिभेदतः।
पालिकानामथोच्छ्रायः पञ्चविंशांगुलो भवेत्॥ ५७॥

तदाननस्य विस्तारो भवेद्वै षोडशांगुलः।
अष्टांगुलस्तदुच्छ्रायो द्व्यं(त्र्यं)गुलं वलयं ततः॥ ५८॥

भवेत् कण्ठबिलं विप्र! ततोऽष्टांगुलविस्तृतम्।
आरभ्य वक्त्रवलयात् यावत्कण्ठबिलं द्विज!॥ ५९॥

ह्रासयेदनुपातेन, तन्नालं द्वादशांगुलम्।
उच्छ्रायादथ विस्तारान्मध्यतस्तु षडंगुलम्॥ ६०॥

अधस्तादंगुलानां तु चतुष्कं विस्तृतं भवेत्।
ततः कण्ठबिलाच्चैव ह्रासयेदनुपाततः॥ ६१॥

पादपीठमधोत्सेधाद्विज्ञेयं चतुरंगुलम्।
दशांगुलस्तद्विस्तारस्तत्संधिश्चांगुलो भवेत्॥ ६२॥

तत्सन्धेश्च भवेन्नाहं सार्धमेकांगुलं द्विज!।
उन्मत्तकुसुमाकारं वक्त्रं पद्माकृतिर्भवेत्॥ ६३॥

पालिकोत्सेधतुल्यास्तु घटिकाः समुदाहृताः।
अंगुलत्रयहीना वा तदूर्ध्वं कलशाकृतिः॥ ६४॥

घटिकाः पञ्चवक्त्राः स्युरेतासां मध्यमं मुखम्।
षडंगुलं च विस्तीर्णं चतुर्दिक्षु चतुष्टयम्॥ ६५॥

चतुरंगुलविस्तारं कलशोदरविस्तृतिः।
षोडशांगुलमानोत्था शेषं प्राग्वत् समाचरेत् ॥ ६६ ॥

यदांगुलत्रयन्यूनास्तदा सप्तांगुलोच्छ्रितम्।
तदाननं तु तन्नालं अधोत्तरदशांगुलम् ॥ ६७ ॥

सार्धत्रयांगुलं पीठं प्राग्वत् सर्वत्र विस्तरः।
शरावाः पालिकोत्सेधतुल्याः पञ्चभिरंगुलैः ॥ ६८ ॥

हीना वा, वक्त्रविस्तारात् समारभ्य महामते!।
पादपीठस्य विस्तारं यावत्तावत्क्रमेण तु ॥ ६९ ॥

पूर्वोक्तात् पादहीना तु भवेत् सर्वत्र विस्तृतिः।
भवेत् त्रिपादहीना तु पादपीठस्य विस्तृतिः ॥ ७० ॥

यदा शरावा हीनाः स्युरंगुलैः पञ्चभिस्तदा।
मुखं षडंगुलोच्छ्रायं तन्नालं तु दशांगुलम् ॥ ७१ ॥

त्र्यंगुलं पादपीठं स्यात् प्राग्वत् सर्वत्र विस्तृतिः।
तदुत्तममानं तु पात्राणां कथितं द्विज! ॥ ७२ ॥

एतदेव मुनिश्रेष्ठ! पादहीनं तु मध्यमम्।
अर्धहीनं तु तन्मानमधमं परिकीर्तितम् ॥ ७३ ॥

अतो न्यूनं न कर्तव्यं कदाचित् सिद्धिकांक्षिभिः।
हेमादिलोहजाः सर्वे मृण्मया वा यथावसु ॥ ७४ ॥

प्रत्येकं पालिकादीनां द्विपट्कं चोत्तमं भवेत्।
द्विरष्टकं वा षट्त्रिंशद्विभवे सति कल्पयेत् ॥ ७५ ॥

प्रत्यष्टकं मध्यमं स्याच्चतुष्कमधमं भवेत्।
सर्वाश्च पालिकाः प्राग्वत् षोडशाष्टौ यथाबलम् ॥

चतस्रो वा ततस्तासु मंगलांकुरकल्पनम्।
अयुग्मा मानुषे कार्ये दैवे युग्मास्तु पालिकाः ७७ ॥

महोत्सवे ध्वजारोहे ह्युत्सवावसरेऽथवा।
पवित्रारोहणे चैव तथा स्थापनकर्मणि ॥ ७८ ॥

जीर्णोद्धारविधौ चापि सहस्रकलशे तथा।
त्रिवर्गपालिका यद्वा भवेदुत्तमसंख्यया ॥ ७९ ॥

भवेन्मध्यमया वापि नान्यथा द्विजसत्तम!।
कर्मस्वन्येषु सर्वेषु यथावित्तं यथारुचि ॥ ८० ॥

अंकुरावापनस्थानमण्टपं परिकल्पयेत्।
प्रथमावरणे वापि द्वितीयावरणेऽपि वा ॥ ८१ ॥

तृतीयावरणे वापि चतुर्थावरणेऽपि वा।
शुभे विविक्तेऽभिमते देशे वै देशिकोत्तमः ॥ ८२ ॥

चतुर्दिक्षु चतुर्द्वारं चतुर्वन्दनमालिकम्।
दर्भमालापरिक्षिप्तं मुक्तादामविराजितम् ॥ ८३ ॥

विततक्षौमसंछन्नं गोमयालिप्तभूतलम्।
प्रदीपमालावितत्तमक्षतैश्चापि सर्वतः ॥ ८४ ॥

सुधाचूर्णैश्च धवलैः चित्रिताभ्यन्तरस्थलम्।
मण्टपं कल्पयित्वैवं यद्वा स्नपनमण्टपे ॥ ८५ ॥

यागाख्यमण्डपे वापि कुर्यादंकुररोपणम्।
अंकुरानर्पयेद्रात्रौ च इच्छेद्राष्ट्रवर्धनम् ॥ ८६ ॥

बीजानामधिपः सोम ओषधीशोऽमृतात्मकः।
न प्रीणाति सदा ब्रह्मन्! अंकुरार्पणमह्नि चेत् ॥ ८७ ॥

तस्मात् सर्वप्रयत्नेन रात्र्यामेवांकुरार्पणम्।
कुर्यात् सम्यग्विधानेन भगवद्भक्तिसंयुतः ॥ ८८ ॥

तस्मिन् जगत्प्रिये प्रीते शीतांशौ प्राणिजीवने।
तद्देशे सर्वसस्यानां संपत्तिर्महती भवेत् ॥ ८९ ॥

गवां च लोकमातॄणां नृणामपि च सर्वशः।
अज्ञानादह्नि कुर्याच्चेदंकुराणामथार्पणम् ॥ ९० ॥

अशोभनं भवेद्राष्ट्रं असमृद्धजनान्वितम्।
सद्यः कालीनके विप्र! कर्मणि स्याद्दिवापि च ॥ ९१ ॥

यद्यदत्रोपयोग्यं स्यात्तत् सर्वं तु समार्जयेत्।
संभृत्य सर्वसंभारानाचार्यो मूर्तिपैः सह ॥ ९२ ॥

स्नातः कृताह्निकश्चैव सोत्तरीयः स्वलंकृतः।
नूतनक्षौमवसनः सोष्णीषः सांगुलीयकः ॥ ९३ ॥

सुरभीकृतसर्वांगः स्रग्वी संमृष्टकुण्डलः।
श्वेतया मृत्स्नया सम्यक् परिक्लृप्तोर्ध्वपुण्ड्रकः ॥ ९४ ॥

पवित्रपाणिर्नियतः प्राणायामपरायणः।
कृताचामः कृतन्यासो जपन् वै द्वादशाक्षरम् ॥ ९५ ॥

तदर्थमर्थयित्वा तु यजमानसमन्वितः ।
भगवन्तं जगद्योनिं पूजयित्वा विधानतः ॥ ९६ ॥
कलशे मण्डले बिंबे वह्नौ सन्तर्प्य वै क्रमात् ।
बिंबेऽग्नौ, वथ बिंबे वा उत्तमादिव्यपेक्षया ॥ ९७ ॥
ततस्त्वभिनवे पात्रे सौवर्णे राजतेऽथवा ।
तिलसर्षपनीवारशालिमाषप्रियंगवः ॥ ९८ ॥
कुलुत्थमुद्गनिष्पावयवगोधूमवैणवः ।
बीजानि द्वादशैतानि पृथक् पात्रेषु वा द्विज ! ॥ ९९ ॥
संभृत्य तु मुनिश्रेष्ठ ! स्थापयित्वा तु मूर्धनि ।
दीक्षितस्य तु विप्रस्य, पुष्पाक्षतकरांजलिः ॥ १०० ॥
आचार्यः प्रविशेत् सार्धं साधकैर्भगवन्मयैः ।
प्रासादाभ्यन्तरं विप्र ! तत्राधारोपरि न्यसेत् ॥१०१॥
बीजपात्रं ततोऽर्घ्येण गन्धैः पुष्पैश्च धूपकैः ।
संपूज्य मूलबिंबस्थं तथा चोत्सवबिंबगम् ॥ १०२ ॥
बीजपात्रं ततोऽभ्यर्च्य देवाय विनिवेदयेत् ।
सह शंखनिनादैश्च मंगलैर्गीतनिस्वनैः ॥ १०३ ॥
तूर्यनादैश्च विविधैः श्रुतिघोषैः समन्ततः ।
ततो विज्ञापयेन्मन्त्रमिममुच्चस्थया गिरा ॥ १०४ ॥
" देवदेव ! जगन्नाथ ! यात्रोत्सवनिमित्ततः ।
ध्वजार्थमंकुरारोपं करिष्यामि प्रसीद ओम् " ॥१०५॥
इति विज्ञाप्य देवस्य तत्रानुज्ञामवाप्य च ।
स्थापयित्वा तु तत् पात्रं दीक्षितस्यैव मूर्धनि ॥१०६॥
साधकैः सहितो विप्र ! बहिर्निर्गत्य देशिकः ।
विष्वक्सेनं तु वा तार्क्ष्यं हनुमत्प्रमुखं तु वा ॥ १०७ ॥
हेतीशं वापि वस्त्राद्यैरलंकृत्य विशेषतः ।
यानादिकं समारोप्य प्रक्षाल्याङ्घ्रिः खनित्रकम् ॥
नवेन वाससाच्छाद्य भूषयित्वा तु माल्यकैः ।
देशिको वाहयेद्विप्रैः शूद्रैर्वा दीक्षितैर्द्विज ! ॥ १०९ ॥
छत्रध्वजपताकाभिः सार्धमंकुरपालकैः ।
त्रिविधैः पालिकाद्यैश्च शंखतूर्यादिभिः सह ॥ ११० ॥
आम्नायोद्घोषणपरैर्भक्तैर्भागवतैर्विभोः ।
गायकैर्गणिकाभिश्च तथान्यैर्मङ्गलैः सह ॥ १११ ॥
क्रमात् प्रदक्षिणीकृत्य सर्वेष्वावरणेषु च ।
दिशं प्राचीमुदीचीं वा अथवा प्रागुदग्दिशम् ॥११२॥
अदूरं समनुप्राप्य तत्रोद्याने मनोहरे ।
केवले वा शुचौ देशे मृदं शुद्धां समाहरेत् ॥ ११३ ॥
अस्त्रमन्त्रेण धरणीं संप्रोक्ष्य प्रथमं गुरुः ।
महीसूक्तेन संस्पृश्य ध्यायन्नेकाग्रचेतसा ॥ ११४ ॥
मूर्तिं देवस्य वाराहीमभ्यर्च्य कुसुमैर्भुवम् ।
अस्त्रांबुना प्रोक्षितेन पुष्पैरभ्यर्चितेन च ॥ ११५ ॥
खनित्रेण खनेद्भूमिं प्राङ्मुखः क्रोडमन्त्रतः ।
लोहजे भाजने मृत्स्नां वेत्रजे वा यथारुचि ॥ ११६ ॥
गृहीत्वा मूलमन्त्रेण वेष्टयित्वा च वाससा ।
प्रत्यग्रेण तथा नद्या वालुकां गोमयं तथा ॥ ११७ ॥
गोकुलात् पूर्ववत् पात्रे गृहीत्वाऽऽच्छाद्य वाससा ।
यानादिके समारोप्य यद्वा दीक्षितमूर्धनि ॥ ११८ ॥
गत्वा प्रदक्षिणं ग्रामं प्रविशेन्मण्टपं ततः ।
मण्टपं शोधयित्वा तु स्नपनोदितवर्त्मना ॥ ११९ ॥
ततो मण्टपमध्ये तु सूत्राण्यास्फालयेत् क्रमात् ।
प्रागायतानि प्रथमं क्रमात् सप्तदश क्षिपेत् ॥ १२० ॥
उदगायतसूत्राणि चतुर्दश निपातयेत् ।
सूत्रात् सूत्रादन्तरालं षोडशांगुलसम्मितम् ॥ १२१ ॥
त्रयाधिकदशैव स्युः पूर्वपश्चिमपङ्क्तयः ।
एवं षोडशसंख्याता दक्षिणोत्तरपङ्क्तयः ॥ १२२ ॥
बीजपात्रप्रतिष्ठार्थं पूर्वपश्चिमपङ्क्तिषु ।
मध्ये पङ्क्तित्रयं स्थाप्य वीथ्यर्थं द्वितयं सृजेत् ॥
भूयश्च पङ्क्तित्रितयं स्थापयेत् पार्श्वयोर्द्वयोः ।
दक्षिणोत्तरमध्ये तु स्थाप्यं पङ्क्तिचतुष्टयम् ॥ १२४ ॥
द्वितयं द्वितयं पार्श्वे वीथ्यर्थं विसृजेत् पुनः ।
चतुश्चतुश्च पङ्क्तीनां स्थापयेत् क्रमयोगतः ॥ १२५ ॥

अष्टास्वष्टासु मध्ये च शरावघटपालिकाः।
द्वादश द्वादश स्थाप्या शतमष्टोत्तरं भवेत् ॥ १२६ ॥
आग्नेये दक्षिणे भागे नैर्ऋतेपि च पालिकाः।
घटिका वारुणे ब्राह्मे तथा पौरन्दरेपि च ॥ १२७ ॥
शरावा मारुते सौम्ये त्वीशाने च यथाविधि।
प्रत्येकं पालिकादीनां षोडशत्वेन कल्पयेत् ॥ १२८ ॥
दक्षिणोत्तरगं सूत्रपञ्चकं विनिवेशयेत्।
प्रागायतानि सूत्राणि पूर्ववद्विनिवेशयेत् ॥ १२९ ॥
आचरेत् पूर्ववद्विप्र! प्राक्प्रत्यक्पङ्क्तिकल्पनम्।
तत्र दक्षिणतः पङ्क्तिचतुष्के स्थापयेत् क्रमात् ॥
पालिकाः षोडश पुरो मध्ये पङ्क्तिचतुष्टये।
घटिकाः षोडश न्यस्य उत्तरे विनिवेशयेत् ॥ १३१ ॥
शरावानपि तत्संख्यानथ द्वादशकल्पने।
दक्षिणोत्तरसूत्राणि चत्वार्यत्र विनिक्षिपेत् ॥ १३२ ॥
पूर्वापराणि सूत्राणि पूर्ववद्विनिपातयेत्।
अष्टाधिकानि कोष्ठानि चत्वारिंशद्भवन्ति हि ॥ १३३ ॥
याम्ये द्वादश कोष्ठानि स्थापयित्वा ततो सृजेत्।
वीथ्यर्थं भागषट्कं तु मध्यतः स्थापयेत् ततः ॥ १३४ ॥
भागद्वादशकं पश्चात् भागषट्कं विलोपयेत्।
भूयश्चोत्तरदिक्स्थाप्यं कोष्ठद्वादशकं क्रमात् ॥ १३५ ॥
न्यसेत्तु पालिकादीनि भागद्वादशकत्रये।
आग्नेयादीशपर्यन्तं दक्षिणाशादितः क्रमात् ॥ १३६ ॥
प्रत्येकं पालिकादीनामष्टसंख्याप्रकल्पने।
दक्षिणोत्तरसूत्राणि त्रितयं तु निपातयेत् ॥ १३७ ॥
अन्यत् सर्वं भवेत् प्राग्वत्, अथ प्रतिचतुष्टये।
दक्षिणोत्तरगं सूत्रं त्रितयं विनिपातयेत् ॥ १३८ ॥
पूर्वपश्चिमसूत्राणि ह्येकादश विनिक्षिपेत्।
सर्वांश्च पालिकानां तु षोडशानां परिग्रहे ॥ १३९ ॥
पञ्च दक्षिणसूत्राणि प्राक्सूत्राणि तथा क्षिपेत्।
प्राक्सूत्रान् पञ्च चाष्टानां दक्षसूत्रत्रयं क्षिपेत् ॥ १४० ॥

चतुर्विंशतिसंख्यानां पालिकानां परिग्रहे।
पूर्वदक्षिणसूत्राणां स्तबकं पञ्चकं क्षिपेत् ॥ १४१ ॥
चतुः परिग्रहे सूत्रत्रितयं त्रितयं क्षिपेत्।
पूर्ववत् सूत्रपातः स्याद्यः संख्यासु पञ्चसु ॥
एवमास्फाल्य सूत्राणि विभवेच्छानुसारतः।
पदेषु पालिकादीनां शालिभिर्व्रीहिभिस्तथा ॥ १४३ ॥
आढकादिमितैः प्राग्वदुत्तमादिव्यपेक्षया।
वृत्तां वा चतुरश्रां वा कल्पयेत् पीठिकां क्रमात् ॥
पालिकादीनि पात्राणि क्षालयेन्मूलमन्त्रतः।
सहदेवीं च दूर्वां च साधनश्वत्थपल्लवैः ॥ १४५ ॥
शिरीषपल्लवैश्चापि निशापत्रैस्तथैव च।
कण्ठेषु पालिकादीनां बन्धयेत्तदनन्तरम् ॥ १४६ ॥
कुशकाशतृणैस्तेषां बिलमूलानि पूरयेत्।
बिलानि प्रथमं मृद्भिर्वालुकाभिरनन्तरम् ॥ १४७ ॥
करीषचूर्णैरुपरि समृद्धं पूरयेद्बिलम्।
यद्वा मृदादिकं विप्र! सर्वं संमिश्र्य पूरयेत् ॥ १४८ ॥
कोष्ठेषु विन्यसेत्तानि पालिकादीन्यनुक्रमात्।
आग्नेयादीशपर्यन्तं प्रतिस्कन्धं द्विजोत्तम! ॥ १४९ ॥
द्वादशानां तु नवकं अष्टोत्तरशतं न्यसेत्।
ब्राह्मादीशानपर्यन्तमुदितक्रमयोगतः ॥ १५० ॥
एवं सर्वं समापाद्य दीक्षितैः परिचारकैः।
तत्तत् सर्वं समापाद्य यथा प्रागनुपार्जितम् ॥ १५१ ॥
समारभेत् ततः कर्म देशिकः प्राङ्मुखः पदे।
पश्चिमे घटिकास्थानादुपविश्यासने शुभे ॥ १५२ ॥
न्यासमुद्दिश्य विधिना प्रोक्षणार्घ्यं प्रकल्पयेत्।
देहविन्यस्तमन्त्राणां कुर्यादर्घ्यादिनार्चनम् ॥ १५३ ॥
द्वारपालार्चनं कृत्वा विभवेच्छानुरूपतः।
तोरणानि ध्वजांश्चैव द्वारकुंभांश्च पूजयेत् ॥ १५४ ॥
सौवर्णं राजतं वापि ताम्रजं मृण्मयं तु वा।
सुगन्धतोयैः संपूर्णमुपरिष्टाद्विभूषितम् ॥ १५५ ॥

स्रक्चन्दनाक्षतैः कुम्भमाधारस्योपरि न्यसेत् ।
आत्मनस्त्वग्रतः पश्चाद् वह्वृचादीन् क्रमेण तु ॥
वाचयेत् स्वस्तिपुण्याहं देशिकेन्द्रः स्वयं ततः ।
आचार्यैः साधकैश्चापि सार्धमर्घ्यादिपूजितैः ॥
पुण्याहं वाचयेद्विप्र! मङ्गलं कलशं वहन् ।
यजेदर्घ्यादिभिः पश्चात् पालिकाद्यधिदेवताः ॥१५८॥
अब्जनाभं परं चैव पद्मनाभं ध्रुवं तथा ।
पात्रस्कन्धत्रिके विप्र! क्रमेण परिपूजयेत् ॥ १५९ ॥
पालिकानां द्वादशके वह्न्यादीशानपश्चिमम् ।
अनन्तादि द्वादशकं घटिकाद्वादशे ततः ॥ १६० ॥
कूर्मादीनां द्वादशकं शरावाणां तु द्वादशे ।
द्विषट्कमेकशृंगाद्यं क्रमेण परिपूजयेत् ॥ १६१ ॥
प्रत्येकं पालिकादीनां कृते षोडशकल्पने ।
अनन्ताद्यं च षट्त्रिंशत् पातालशयनान्तिमम् ॥१६२॥
लक्ष्म्यादिमतिपर्यन्तं शान्तिद्वादशकं यजेत् ।
प्रत्येकं पालिकादीनां षट्त्रिंशत् परिकल्पने ॥ १६३ ॥
चतुष्टयं तु मूर्तीनां स्वप्नाख्यपदसंस्थितम् ।
प्रभवाप्यययोगेन जाग्रद्रूपं तथाष्टकम् ॥ १६४॥
मूर्त्यन्तराणां द्वादशकं तच्छक्तीनां चतुस्त्रयम् ।
अनन्ताद्यं च षट्त्रिंशत् पातालशयनान्तिमम् ॥
स्वधादीनां च शक्तीनां चतुस्त्रिंशच्च तत्परम् ।
चक्रशंखौ क्रमाद्भोगैरर्घ्यगन्धादिभिर्यजेत् ॥ १६६ ॥
अष्टके केशवाद्याश्च तदीयाः शक्तयो यजेत् ।
चतुष्के केशवाद्यांस्तु केवलान् द्वादशे यजेत् ॥ १६७ ॥
सर्वांश्च पालिकानां तु क्रमात् षोडशके यजेत् ।
वासुदेवादिचतुरः केशवादींश्च द्वादश ॥ १६८ ॥
अष्टके वासुदेवादीन् प्रभवाप्यययोगतः ।
चतुष्के वासुदेवादीन् प्रभवानुक्रमेण तु ॥ १६९ ॥
एवमिष्ट्वा क्रमेणैव बीजानि क्षालयेत् ततः ।
गव्येन पयसा सम्यङ्मन्त्रेण द्वादशात्मना ॥ १७० ॥

बीजानां नामधेयैस्तु चतुर्थ्यन्ते पृथक् पृथक् ।
अर्घ्याद्यैः पूजयित्वा तु वाससा परिवेष्ट्य च ॥ १७१ ॥
हुतावशिष्टमाज्यं तु तदन्यं वापि संस्कृतम् ।
आदाय लोहजे पात्रे मृण्मये वा यथारुचि ॥ १७२ ॥
उभाभ्यां चैव हस्ताभ्यां दूर्वामादाय मूलतः ।
घृते निमज्य चाग्राणि पालिकादिषु सेचयेत् ॥ १७३ ॥
हस्तव्यत्यासमार्गेण वह्न्यादीशानपश्चिमम् ।
प्रतिस्कन्धं घृतारोपे दूर्वाभेदः प्रकीर्तितः ॥ १७४ ॥
एवं कृत्वा घृतारोपं भूयः स्कन्धादिदेवताः ।
प्रपूज्य सर्वबीजानि मन्त्रयेद्द्वादशात्मना ॥ १७५ ॥
आचार्यादीननुज्ञाप्य देशिकेन्द्र उदङ्मुखः ।
प्राङ्मुखो वा मुहूर्ते तु शोभने पालिकादिषु ॥ १७६ ॥
द्वादशाक्षरमन्त्रेण सर्वबीजानि वापयेत् ।
यद्वा जितन्तामन्त्रेण ह्युभयेनाथवा द्विज! ॥ १७७ ॥
आग्नेयादीशपर्यन्तं प्रतिस्कन्धं क्रमेण तु ।
शंखदुंदुभिनिर्घोषजयनादसमन्वितम् ॥ १७८ ॥
बीजानि द्वादशोक्तानि वपेद्द्वादशसु क्रमात् ।
यद्वा सर्वाणि संमिश्र्य वपेदिच्छानुरूपतः ॥ १७९ ॥
बीजानामप्यलाभे तु मुद्गमेकं तु वापयेत् ।
आचार्यानुमताश्चान्ये देशिकाः साधका अपि ॥१८०॥
वपेयुर्ध्यानसंयुक्ताः केवलं गुरुरेव वा ।
हरिद्राचूर्णसंमिश्रैर्जलैः कुसुमवासितैः ॥ १८१ ॥
बहुभिः सेचयेद्विप्र! देशिकेन्द्रः क्रमेण तु ।
प्रतिस्कन्धोपरिष्टात्तु चन्द्रमण्डलमध्यगम् ॥ १८२ ॥
तत्कान्तिसन्निभं देवं स्वदेहोत्थैर्निरन्तरैः ।
सिंचन्तममृतौघैस्तु बीजान्युप्तानि सर्वतः ॥ १८३ ॥
ध्यात्वार्चयित्वा पात्राणि नवैस्तु सदशैः शुभैः ।
आच्छादयित्वा वसनैः प्रतिस्कन्धं क्रमेण तु ॥ १८४ ॥
वासुदेवं जगद्योनिं सर्वेषामूर्ध्वतो यजेत् ।
भूतकूरबलिं दद्यादष्टदिक्षु द्विजोत्तम! ॥ १८५ ॥

भूतानां कुमुदादीनां पूर्वादिक्रमयोगतः।
तदाप्रभृति ते सर्वे (ताः सर्वा) रक्षन्ति कुमुदादयः॥

आचार्यांश्च गुरून् सर्वान् साधकान् वैष्णवानपि।
प्रभूतैस्तु ततोद्दिष्टैस्ताम्बूलीसुमनःफलैः॥ १८७॥

गुरुं च तोषयेद्वित्तैर्यजमामानः प्रयत्नवान्।
क्रमादुत्पद्धृत्य तान् सर्वान् सुगुप्ते स्थापयेत् ततः॥

मण्टपेशानकोणे वा देशेऽन्यत्र यथारुचि।
तत्रापि पालिकादीनां परितोष्टासु दिक्षु च॥ १८९॥

भूतानां कुमुदादीनां ऐन्द्रादिक्रमयोगतः।
बलिं तु मण्टपे दद्यात् भूतकल्पविधानतः॥ १९०॥

दीपान् बहूननिर्वाणान् परितः परिदीपयेत्।
ऊनाधिक्योपशान्त्यर्थं शतमष्टोत्तरं हुनेत्॥ १९१॥

द्वादशाक्षरमन्त्रं तु जपेद्वा विबसन्निधौ।
कुम्भादिस्थानगस्याथ विभोः कुर्याद्विसर्जनम्॥

परितः पालिकादीनां प्रतिरात्रं पृथक् पृथक्।
दद्याद्दिवा रजन्यां वा बलिं कालद्वयेपि वा॥ १९३॥

प्रातः कर्मदिने दद्याद्बलिं देशिकसत्तमः।
यदा चोप्तानि बीजानि तदाप्रभृति नित्यशः॥ १९४॥

न कश्चित् प्रविशेत् तत्र न स्पृशेद्वा कथंचन।
आचार्य एव प्रविशेत् तच्छिष्यो वा समाहितः॥

उच्छिष्टादीनि सर्वाणि दूरतः परिवर्जयेत्।
अदत्वा तु बलिं कांचिन्न कुर्यात् पालिकाक्रियाम्॥

हरिद्रावारिभिः सिञ्चेदङ्कुराण्यभिवृद्धये।
अंकुरान् श्यामलान् रक्तान् कृष्णान् तिर्य्यग्गतांस्तथा॥

अप्ररूढान् मुनिश्रेष्ठ! वर्जयेत्तु प्रयत्नतः।
श्यामेषु द्रव्यनाशः स्याद्रक्तेषु कलहो भवेत्॥ १९८॥

कृष्णेषु मानसी पीडा रोगी तिर्यग्गतेषु च।
अप्ररूढेषु मरणं भवेत् तत्र न संशयः॥ १९९॥

शुभं पीतेषु शुक्लेषु ऋजुष्वूर्ध्वगतेष्वपि।
सर्वसंपत्समृद्धिश्च कर्तुः कारयितुर्भवेत्॥ २००॥

कर्मार्थमङ्कुराण्यादौ यः समारोपयेद्गुरुः।
स एव कर्म कार्त्स्न्येन कुर्यात् प्राज्ञोपि नेतरः॥ २०१॥

अनुज्ञया वा तत्पुत्रः शिष्यो वा तत् समापयेत्।
एवं सर्वेषु यागेषु अङ्कुरारोपणं भवेत्॥ २०२॥

देशं कालं यथा वित्तं ज्ञात्वा स्वाधीनतां तथा।
उक्तं सर्वं समभ्यूह्य कुर्यात् कर्म प्रधानकम्॥ २०३॥

एवं कृत्वांकुरारोपं ध्वजार्थं पटमाहरेत्।
यथावित्तानुसारेण क्रीतं वाऽभिनवं शुभं॥ २०४॥

दुकूलपट्टं देवाङ्गं चित्रक्षौममथापि वा।
अथ कार्पासिकं वापि नीलरोमादिवर्जितम्॥ २०५॥

सुलक्षणं दृढं स्निग्धं, हस्तमानमिहोच्यते।
शिष्यदेशिककर्तृस्थैर्हस्तैर्मानं प्रकल्पयेत्॥ २०६॥

आद्यं द्वादशहस्तं स्यात् दशहस्तं तु मध्यमम्।
अधमं चाष्टहस्तं स्यात् विस्तारं च चतुष्करम्॥ २०७॥

उत्तमं स्यात्, त्रिहस्तं तु मध्यमर्धाधिकं भवेत्।
त्रिहस्तमधमं विद्धि तत्राद्ये द्विजसत्तम!॥ २०८॥

द्विहस्तं शिखरार्थं तु कल्पयेद्देशिकोत्तमः।
तद्वत् पुच्छं प्रकुर्वीत अधोभागे ध्वजस्य तु॥ २०९॥

मध्यतःसप्तहस्तेन लेखयेद्विनतासुतम्।
शिरोदण्डनिवेशार्थं हस्तार्धं परिकीर्तितम्॥ २१०॥

पाददण्डनिवेशार्थं तद्वन्मानं भवेद्द्विज!।
मध्यमस्याथ वक्ष्यामि समासादवधारय॥ २११॥

हस्तमर्धाधिकं विप्र! संयुक्तं त्रिभिरंगुलैः।
कल्पयेच्छिखरार्थं तु तद्वत् पुच्छं प्रकीर्तितम्॥ २१२॥

मध्यतो हस्तपट्केण गरुडं तु समालिखेत्।
दण्डद्वयनिवेशार्थं शेषं तु परिकल्पयेत्॥ २१३॥

अधमस्याथ वक्ष्यामि पटस्य मुनिपुंगव!।
पादाधिकेन हस्तेन शिखरं स्यात् तथा भवेत्॥ २१४॥

अधः पुच्छं तु हस्तार्धं दण्डद्वयनिवेशनम्।
मध्यतः पञ्चहस्तेन वैनतेयं समालिखेत्॥ २१५॥

भूयो विध्यन्तरं वक्ष्ये विभवेच्छानुसारतः ।
आद्यं द्विपञ्चहस्तं स्यान्मध्यमं तु त्रयोदशम् ॥

एकादशकरायाममधमं परिकीर्तितम् ।
अर्धाधिकं चतुर्हस्तं विस्तारं चोत्तमं भवेत् ॥ २१७ ॥

पादाधिकं मध्यमं स्यादधमं पादहीनकम् ।
पादाधिकं द्विहस्तं तु उत्तमे शिखरार्थतः ॥ २१८ ॥

तद्वत् पुच्छं तु हस्तेन दण्डद्वयनिवेशनम् ।
मध्यतश्चाष्टभिर्हस्तैर्गरुडं तु समालिखेत् ॥ २१९ ॥

मध्यमे शिखरं हस्तयुग्मं पुच्छमधस्तथा ।
दण्डद्वयनिवेशार्थं अष्टांशोनेन हस्ततः ॥ २२० ॥

त्र्यंगुलोत्तरसप्तार्धैर्हस्तैर्गरुडमालिखेत् ।
अधमं त्वथ वक्ष्यामि पादोनात्तु करद्वयात् ॥ २२१ ॥

शिखरं स्यात्तथा पुच्छं पादोनेन करेण तु ।
दण्डद्वयनिवेशः स्यात् पादोनकरसप्तके ॥ २२२ ॥

गरुडं तु लिखेद्विद्वान्, भूयो विध्यन्तरं शृणु ।
उत्तमं नवहस्तं तु सप्तहस्तं तु मध्यमम् ॥ २२३ ॥

अधमं पञ्चहस्तं तु त्रिविधः पट उच्यते ।
तदर्धं चैव विस्तारं तदर्धं शिखरं भवेत् ॥ २२४ ॥

तत्समं पुच्छमप्युक्तं कर्णपुच्छं तथैव च ।
मूलबिंबसमायामं द्वारायाममथापि वा ॥ २२५ ॥

आयामार्धेन विस्तीर्णं पादेन कृतशेखरम् ।
शिखरेण समं पुच्छं तदर्धं कर्णपुच्छकम् ॥ २२६ ॥

पक्षद्वयेपि पूर्वोक्तं कर्णपुच्छेन कल्पयेत् ।
बालाख्यध्वजवत्वं तु पटाख्यपरिसम्मितम् ॥ २२७ ॥

विस्तारं पटतुल्यं तु पूर्ववच्छिखरं भवेत् ।
निर्णेजितं खलीयुक्तं शोषितं लक्षणान्वितम् ॥ २२८ ॥

पटं विचित्रयेद्विद्वान् शिल्पिना कुशलेन वै ।
छत्रं तु शिखरे कुर्यात् पार्श्वयोः श्वेतचामरे ॥२२९॥

अधोऽनेकदलं पद्मं तदधः पूर्णकुम्भकम् ।
कुम्भस्य पार्श्वे विलिखेत् सांकुरं पालिकागणम् ॥

दीपौ सुशोभनौ कुर्यात् पालिकानां तु पार्श्वयोः ।
ध्वजं तु गरुडाकारं एकमूर्तेस्तु सत्तम ! ॥ २३१ ॥

सत्यः सुपर्णो गरुडस्तार्क्ष्यश्च चतुरात्मनः ।
पञ्चमूर्तेस्तु चत्वारो विहगेश्वरसंयुताः ॥ २३२ ॥

सुपर्णतालमकरक्ष्या वा चतुरात्मनः ।
तत ऊर्ध्वं तु सर्वेषां व्यूहानां गरुडो ध्वजः ॥ २३३ ॥

पटमध्ये तु गरुडं द्विभुजं विधृताञ्जलिम् ।
पुष्पांजलिपुटं चाथ सुवर्णाचलसन्निभम् ॥ २३४ ॥

गगने गमनारंभपक्षविक्षेपणान्वितम् ।
कुञ्चितो वामपादस्तु दक्षिणः पृष्ठतः स्थितः ॥ २३५ ॥

किंचिदायतवृत्ताक्षं नीलदीर्घाग्रनासिकम् ।
अतीव शान्तवेषं तु तथा प्रहसिताननम् ॥ २३६ ॥

बालचन्द्रसमाकारदंष्ट्राद्वयविराजितम् ।
कुटिलभ्रुकुटीभंगं भंगुरालकशोभितम् ॥ २३७ ॥

कम्बुग्रीवं वृहद्बाहुं पीनांसं दृढवक्षसम् ।
पृथूदरं निम्ननाभिं रोमराजिविराजितम् ॥ २३८ ॥

सुवृत्तकनकस्तम्भपीवरोरुद्वयान्वितम् ।
हेमरंभासमाकारजंघाक्रान्तपदद्वयम् ॥ २३९ ॥

करण्डमकुटाक्रान्तपुष्पापीडविराजितम् ।
वृत्तवैपुल्यमानेन लोचने पद्मपत्रवत् ॥ २४० ॥

भ्रूयुग्मं नारसिंहोक्तं घ्राणाग्रं शुकतुण्डवत् ।
सिंहवन्मध्यदेशस्तु तद्वंशं गजपृष्ठवत् ॥ २४१ ॥

तदेवं दैवदैर्घ्येण विस्तृतं हंसपक्षवत् ।
स्वपक्षमानाद्द्विगुणं तत्पुच्छं शतशाखिनम् ॥ २४२ ॥

सर्वेषां विद्धि सामान्यं विशेषाख्यमथोच्यते ।
मकुटादिसपादान्तं नानारत्नेन शोभितम् ॥ २४३ ॥

हारकेयूरकटकब्रह्मसूत्रविभूषितम् ।
प्रलंबकर्णपाशान्तविश्रान्तशुभकुण्डलम् ॥ २४४ ॥

ललाटतिलकोपेतं पुष्पकर्णावतंसकम् ।
रत्नांगुलीयकोपेतं शिंजिनीरंजितांघ्रिकम् ॥ २४५ ॥

अन्यैराभरणैर्दिव्यैर्भूषितं सर्पभूषणम् ।
नीलांबरधरं नीलचारचाणविराजितम् ॥ २४६ ॥

फुल्लरक्तोत्फलदलस्रग्भिर्मण्डितकन्धरम् ।
तथाविचित्रकुसुमस्रग्भिरन्याभिरुज्ज्वलम् ॥ २४७ ॥

अनन्तो वामकटको, यज्ञसूत्रं तु वासुकिः ।
तक्षकः कटिसूत्रं तु, हारः कार्कोटकस्तथा ॥ २४८ ॥

पद्मो, दक्षिणकर्णे तु महापद्मस्तु वामतः ।
शंखः शिरः प्रदेशे तु गुलिकं च भुजान्तरे॥ २४९ ॥

एतैरष्टोरगैराद्यैर्भूषितं भुजगोत्तमैः ।
अनन्तः शुक्लवर्णाभः, रक्तवर्णस्तु वासुकिः ॥२५०॥

तक्षकः पीतवर्णाभो धूम्रः कार्कोटकस्तथा ।
शंखस्तुहिनवर्णाभो गुलिकस्त्वलितन्निभः ॥ २५१ ॥

पद्मः पद्मसमानाभो महापद्मस्तु पिंगलः ।
पञ्चवर्णैर्लिखेदेवं देवं पञ्चायुधं तथा ॥ २५२ ॥

[1]चक्रं खड्गं शरं चैव शंखं शार्ङ्गं गदां क्रमात् ।
पटोर्ध्वे ह्युभये पार्श्वे विलिखेच्च यथाविधि ॥ २५३ ॥

तदधो दक्षिणे भागे वह्निमण्डलमालिखेत् ।
तद्वल्लिखेद्वामभागे स्वस्तिकं लक्षणान्वितम् ॥ २५४ ॥

लेपयेत् पटशेषं तु श्यामलेनासितेन वा ।
विचित्रपुष्पसंयुक्तपत्रवल्लीसमन्वितम् ॥ २५५ ॥

एवं शिल्पिवरेणैव कारयेद्देशिकोत्तमः ।
शूद्रेण वा द्विजश्रेष्ठ ! दीक्षितेन यथाविधि ॥ २५६ ॥

कुलालेनाथवा मन्त्री कारयेत् कुशलेन च ।
सामान्यलक्षणं ह्येतत् कीर्तितं द्विजसत्तम ! ॥ २५७ ॥

अङ्गुलादिविभागेन विशेषमवधारय ।
अष्टाधिकशतैकांशाद्यद्भिर्येऽङ्गुलमीरितम् ॥ २५८ ॥

तत्रैव मूलबिंबोत्थैरङ्गुलैः परिकल्पयेत् ।
तद्वाहनस्य मानं तु विभागमवधारय ॥ २५९ ॥

तस्य बिंबसमुत्थेन तालेन मुखमण्डलम् ।
द्व्यंगुलं तु ललाटोर्ध्वे जटाबन्धो द्विलोचनम् ॥ २६० ॥

द्व्यंगुलेनोन्नतं कण्ठं उरः पञ्चांगुलं स्मृतम् ।
अष्टांगुलं तदुदरं कटिः पञ्चांगुलोन्नता ॥ २६१ ॥

नवांगुलोन्नतावूरू जानुनी द्व्यंगुले स्मृते ।
अष्टांगुलोच्छ्रिते जंघे द्व्यंगुले पादपिण्डिके ॥ २६२ ॥

शममेकं कलाहीनं तद्ग्रीवायाश्च वेष्टनम् ।
बिंबतुल्या परिज्ञेया सर्वदास्यांगविस्तृतिः ॥ २६३ ॥

द्विषड्भागाधिकं विद्धि वेष्टनं ह्युदरस्य वा ।
परिधिः कटिदेशस्य चतुर्णवाधिकस्तु वै ॥ २६४ ॥

बिंबोक्तलवदशं विद्धि तदूर्वोर्मूलवेष्टनम् ।
तदेव जंघामध्यस्य जंघान्तस्य तदेव हि ॥ २६५ ॥

पादः पञ्चकलायामश्चतुरंगुलविस्तृतः ।
त्र्यंगुलं पार्ष्णिदेशाच्चाप्यंगुष्ठौ च कलासमौ ॥ २६६ ॥

विज्ञेयास्त्वंघ्रिदैर्घ्यां(!)यवोनांगुलयः क्रमात् ।
नाभिरन्ध्रं सुविस्तीर्णं अर्धलोचनविस्तृतम् ॥ २६७ ॥

[2]तद्वाहुमस्तकं विद्धि उच्छ्रायेण द्विलोचनम् ।
[3]भुजोपभुजयुग्मं यत् तद्द्वितालसमं स्मृतम् ॥

[1]मध्यमांगुलिपर्यन्तं मणिबन्धान्नवांगुलम् ।
[4]त्रिकलः पाणिविस्तारस्तत्रत्या निश्चितो नताः ॥

कलार्धेनाधिकं बाहोस्तदर्धं बाहुवेष्टनम् ।
बिंबोक्तांशद्वयेनैव स्तनमूलोत्रनेन तु ॥ २७० ॥

वृत्तवैपुल्यमानेन लोचने पद्मपत्रवत् ।
भ्रूयुग्मं नारसिंहोक्तं घ्राणाग्रं शुकचञ्चुवत् ॥ २७१ ॥

कलार्धमानदीर्घं च तदंशं गजपृष्ठवत् ।
स्वायामदीर्घं तत्पक्षयुगलं कुक्षिदेशगम् ॥ २७२ ॥

तदेव दैर्घ्यार्धेन विस्तृतं हंसपक्षवत् ।
स्वपक्षमानाद्द्विगुणं तत्पुच्छं शतशाखिनः ( स्वकम् )॥

सपक्षमेवमायामं साल्यं स्ववयवान्वितम् ।
सर्वेषां विद्धि सामान्यं विशेषाख्यमथोच्यते ॥ २७४ ॥

ऊरु, द्वयाश्रयेद्धासमङ्गुलानां त्रयं तथा ।
जंघाकाण्डोच्छ्रितेः कुर्याज्जङ्घाभ्यां चाव वेष्टनम् ॥

बिंबाख्यमणिबन्धस्य समं मूलान्महामते ! ।
जंघादेशात्तदर्धेन सह चार्धाङ्गुलेन तु ॥ २७६ ॥

पादे ज्ञालं परिज्ञेयं विस्तारेण षडंगुलम् ।
शेषं सत्योदितं सर्वं सर्वेषां विद्धि सर्वदा ॥ २७७ ॥

किन्तु पादोत्थितौ पक्षौ दैर्घ्यात्तद्दलविस्तृतौ ।
एषां चोड्डीयमानानां सायामा पक्षविस्तृतिः ॥२७८॥

पक्षानां च परिज्ञेया स्थितानामर्धलक्षणा ।
पटे तु लिख्यमाने तु पक्षदैर्घ्यं तु पार्श्वयोः ॥ २७९ ॥

यावत् पटसमाप्तिः स्यात् पक्षास्त्वग्रसमन्विताः ।
संख्याताः संख्यया विप्र ! पञ्च सप्ताद्ययुग्मया ॥

यद्वा बिंबोक्तमार्गेण अष्टोत्तरशतांगुलैः ।
सत्यादीनां तु पद्मानां अंगप्रत्यंगकल्पना ॥ २८१ ॥

यद्वा मध्यांगुलैर्मध्यपर्वदैर्घ्यसमुत्थितैः ।
देशिकीयैरंगुलैस्तु शनैरष्टाभिरेव च ॥ २८२ ॥

सत्यादीनां तु पद्मानां मानं कुर्यात्तु देशिकः ।
मूलबिंबस्य वाहन्तो नाभ्यन्तो वा तदुच्छ्रयः ॥ २८३ ॥

मानमेतत्तु कथितमुन्मानमवधारय ।
गरुडस्य पटस्थस्य सत्यादीनां तथा यदा ॥ २८४ ॥

मध्यमांगुलमध्यस्थदीर्घपर्वेण कल्पयेत् ।
देशिकीयेन मानं तु अष्टोत्तरशतांगुलैः ॥ २८५ ॥

शिरःप्रभृति पादान्तं तदाचोन्मानमुच्यते ।
अंगुलत्रितयं मूर्ध्नि मुखं षड्गोलकं भवेत् ॥ २८६ ॥

कण्ठं त्र्यंगुलमानं स्यात् तदधो द्वादशांगुलम् ।
स्तनान्तरं समारभ्य नाभ्यन्तं षट्कलं भवेत् ॥ २८७ ॥

तदधः कटिपर्यन्तं भवेदंगुलपञ्चकम् ।
तदधो योनिपर्यन्तं अंगुलानां च सप्तकम् ॥ २८८ ॥

जान्वन्तं द्वादशकलं त्र्यंगुलं जानुमण्डलम् ।
तदधो गुल्फकान्तं तु भवेद्द्वादशगोलकम् ॥ २८९ ॥

त्र्यंगुलं गुल्फमानं स्यात् प्रमाणं क्रमतः शृणु ।
मुखभागेऽक्षिसूत्रान्तं उपरिष्टाद्द्विगोलकम् ॥ २९० ॥

तथा नासापुटान्तं च चिबुकान्तं तथैव च ।
षट्कलः कर्णसूत्रान्तं मध्यतो मुखविस्तरः ॥ २९१ ॥

नवांगुलो ह्यधोभागे ललाटांशे दशांगुलिः ।
केशभ्रूरेखयोर्मध्यमेकांगुलमिदं भवेत् ॥ २९२ ॥

अक्षिभ्रुवोरन्तरं स्यात् सपादांगुलिविस्तरम् ।
नेत्रायामस्तु पादोनमंगुलत्रितयं भवेत् ॥ २९३ ॥

तद्विस्तारस्तु पादोनमंगुलिद्वितयं भवेत् ।
एकांगुलं तारकं स्यान्नासाया मूलविस्तरः ॥ २९४ ॥

द्व्यंगुलं मध्यतः सांशं तत् त्र्यंगुलमधो भवेत् ।
तदग्रायाम एकः स्यात् तदर्धं विस्तृतिर्भवेत् ॥२९५॥

आस्यायामो द्विगोलः स्यात् तद्विस्तारोंऽगुलो भवेत् ।
साधरोष्ठं तदोष्ठं स्याद्व्यायामो द्व्यंगुलं भवेत् ॥

सपादो दंष्ट्रयोर्मध्ये तयोरायाम ईरितः ।
सपादमंगुलं विप्र ! विस्तारोऽथांगुलो भवेत् ॥ २९७ ॥

मूलदेशे तयोरग्रौ शितौ चन्द्रदलाग्रवत् ।
पंचांगुलं कण्ठदैर्घ्यं विस्तारो गोलकं भवेत् ॥ २९८ ॥

षडंगुलं पाददैर्घ्यं कर्णाधारश्चतुष्कलः ।
सार्धांगुलः स्यात्तदधोवक्षः पीठोर्ध्वदेशतः ॥ २९९ ॥

अष्टादशकलस्तारो बाहुव्यासावधि द्विज ! ।
तदधः कक्षपर्यन्तं तारो द्वादशगोलकः ॥ ३०० ॥

तदधोभागविस्तारः सांगुलं नवगोलकम् ।
उदरस्य तु विस्तार एकविंशांगुलो भवेत् ॥ ३०१ ॥

तत्रैकांगुलिसव्याहं नाभिवृत्तं सुशोभनम् ।
श्रोणीभागस्य विस्तारः सांगुलं नवगोलकम् ॥३०२॥

ऊरुमूलस्य विस्तारस्त्रयोदशांगुलो भवेत् ।
तन्मध्ये विस्तृतिर्विप्र ! द्वादशांगुलसम्मिता ॥ ३०३ ॥

सप्तांगुलमुपस्थं स्यात् त्रिकला जानुविस्तृतिः ।
अधः पञ्चांगुलं सार्धं पदैर्घ्यं सप्तगोलकम् ॥ ३०४ ॥

अङ्गुष्ठाग्रावधिर्यावत् पार्ष्ण्योः प्रभृति तत्र तत् ।
अङ्गुष्ठं त्र्यंगुलं सार्धं अन्या अंगुलयः क्रमात् ॥

अङ्गुलार्धांशहीनाः स्युः, अंगुष्ठस्य तु विस्तृतिः ।
सार्धांगुला तदन्यासां क्रमान्न्यूना तु पूर्ववत् ॥ ३०६ ॥

अंगुष्ठनखदैर्घ्यं तु सांशमेकाङ्गुलं भवेत् ।
तद्विस्तारस्त्रिपादः स्यात् तदन्या ह्रासयेत् क्रमात् ॥

कनीयो नखदैर्घ्यं तु यदा चार्धांगुलं भवेत् ।
तद्विस्तारस्तदर्धं स्यादंगुलीमूलदेशतः ॥ ३०८ ॥

चरणस्य तु विस्तारः सार्धपञ्चांगुलो भवेत् ।
पञ्च मध्ये पार्ष्णिभागे सार्धं तु चतुरंगुलम् ॥ ३०९ ॥

शाखापार्श्वे तदुच्छ्रायस्त्र्यंगुलं परिकीर्तितम् ।
मध्यतस्तद्भवेत् सार्धं भुजयोरथ तच्छृणु ॥ ३१० ॥

स्कन्धाग्रात् कूर्परान्तं च चतुर्विंशाङ्गुलो भवेत् ।
भुजायामोऽस्य मूलस्य विस्तारः स्यात् षडंगुलम् ॥

तदधः पञ्चकं सार्धं कूर्पराग्रघगोलकम् ।
मणिबन्धावसानं स्याद्दैर्घ्यं कूर्परविस्तृतिः ॥ ३१२ ॥

सार्धं षडङ्गुलं विप्र ! मणिबन्धादिकं भवेत् ।
अंगुलत्रयविस्तारं कराग्रं षट्कलायतम् ॥ ३१३ ॥

विस्तारो द्विकलः प्रोक्तो वामे तु द्व्यंगुलं भवेत् ।
द्वयं तिरोहितं चान्यद्द्वयं दक्षकरे तु वै ॥ ३१४ ॥

मध्यमाङ्गुलदैर्घ्यं तु पञ्चांगुलविनिर्मितम् ।
अनामितर्जनीन्यूनशाखानां तु क्रमेण तु ॥ ३१५ ॥

अर्धार्धाङ्गुलहीनं स्यादंगुलं मध्यमार्धकम् ।
मध्यमाङ्गुष्ठयोस्तारः सार्धमेकाङ्गुलं भवेत् ॥ ३१६ ॥

तर्जन्यनामयोरेकं कनीयस्यास्त्रिपादकम् ।
सार्धांगुलं नखायामं तदर्धं विस्तृतिर्भवेत् ॥ ३१७ ॥

मकुटस्योच्छ्रयो विप्र ! भवेदष्टादशांगुलः ।
तन्मूलविस्तृतिर्विप्र ! षोडशांगुलसम्मिता ॥ ३१८ ॥

षट्कला मध्यतो ज्ञेया अग्रंतस्त्रिकला भवेत् ।
शिखामणेः समुच्छ्रायं कल्पयेत् सार्धमङ्गुलम् ॥ ३१९ ॥

विस्तारः स्यात् सपादस्तत्पक्षयामं त्रितालकम् ।
यद्वा पट्यवसानं स्याद्यथाशोभानुरूपतः ॥ ३२० ॥

एकैकपक्षतिस्तारं त्र्यंगुलं त्र्यंगुलं भवेत् ।
नागानामास्यदैर्घ्यं तु सार्धमेकाङ्गुलं भवेत् ॥ ३२१ ॥

तद्विस्तारोऽङ्गुलं विप्र ! तत्सरोऽङ्गुलविस्तृतिः ।
द्व्यंगुलं तदधस्तात् स्यात् वालमर्धांगुलं तथा ॥

यथा क्रमेण हीनः स्यान्नागानां भोगविस्तरः ।
अनन्तस्य प्रधानस्य दैर्घ्यं द्व्यंगुलसम्मितम् ॥ ३२३ ॥

तत्तारः सार्धमेकं स्यादूद्वयं तद्गलविस्तरः ।
तदधो द्वितयं सार्धं शीर्षाणीतरनागवत् ॥ ३२४ ॥

वालाग्रमेकविस्तारं यथा स्यात् कल्पयेत् तथा ।
नागानां भोगदैर्घ्यस्य मानं कुर्याद्यथारुचि ॥ ३२५ ॥

दैर्घ्यं विष्टरपद्मस्य पञ्चाशच्चतुरंगुलम् ।
षड्गोलकस्तद्विस्तारः कर्णिकायाः समायतिः ॥ ३२६ ॥

एकविंशत् कलाः प्रोक्तास्तद्विस्तारस्त्रिगोलकः ।
अन्यच्च वैनतेयस्य मानं यद्यत् प्रकल्पितम् ॥ ३२७ ॥

सुसमं यद्विभक्तव्यमष्टोत्तरशतांगुलम् ।
प्राग्वत् तदंगुलं कृत्वा उन्मानार्थं प्रकल्पयेत् ॥ ३२८ ॥

तदंगुलानुसारेण नागाद्यं चापि कल्पयेत् ।
आद्यपक्षे तु नागाद्यं कुर्यादाद्यानुसारतः ॥ ३२९ ॥

पञ्चांगभूषणायुक्तं वस्त्रस्रग्गन्धवासितम् ।
एवं सर्वं समापाद्य देशिकः सुसमाहितः ॥ ३३० ॥

ध्वजारोहणनक्षत्रात् पूर्वेद्युश्च निशामुखे ।
प्रयायात् कर्मशालां च सहितो मूर्तिधारकैः ॥ ३३१ ॥

लिखितं पटमालोक्य लक्षणं सुपरीक्ष्य च ।
शंखदुन्दुभिनिर्घोषैः काहलध्वनिभिस्तथा ॥ ३३२ ॥

गीतैश्च विविधै रम्यैः श्रुतिघोषैः पृथग्विधैः ।
सह ध्वजपटं तस्मादानयेन्मुखमण्टपे ॥ ३३३ ॥

प्रविश्याभ्यन्तरं मूलबिंबस्थं परमेश्वरम् ।
अभिवाद्यार्घ्यगन्धाद्यैः पूजयेत् पुष्पधूपकैः ॥ ३३४ ॥

विसृज्य शिल्पिनं पश्चात् संप्रोक्ष्यार्घ्याम्भसा पटम् ।
सिद्धार्थकान्वितैः पुष्पैः ताडयेदस्त्रमन्त्रितैः ॥ ३३५ ॥

दर्शयेद्देवदेवस्य सम्मुखं साधकोत्तमः ।
दहनाप्यायनं कुर्यात् विधिदृष्टेन कर्मणा ॥ ३३६ ॥

भूयोर्घ्यगन्धपुष्पाद्यैः प्रपूज्य परमेश्वरम् ।
गिरोच्चया त्विमं मन्त्रं बद्धांजलिकरः पठेत् ॥ ३३७ ॥

"भगवन्! पुण्डरीकाक्ष! सर्वेश्वर! जगन्मय! ।
त्वया यथा तु कथितं तथा कर्तुं न शक्यते ॥ ३३८ ॥

अस्वातन्त्र्याद्सामर्थ्यात् श्रद्धादीनामभावतः ।
तस्मान्मानादिसर्वेषां न्यूनाधिक्योपशान्तये ॥३३९॥

समालोक्य नेत्राभ्यां शीतलाभ्यां पटस्थितम् ।
सर्वदोषापहारिभ्यां वैनतेयं प्रसीद ओम्" ॥ ३४० ॥

दीक्षितानां ततो विप्र! हस्ते दत्वा तु तं पटम् ।
चतुः प्रदक्षिणीकृत्य तेन सार्धं तु देशिकः ॥ ३४१ ॥

प्रथमावरणे वापि द्वितीयावरणेपि वा ।
प्रविशेद्यजमानेन प्रासादाग्रस्थमण्टपम् ॥ ३४२ ॥

तत्र न्यस्त्वा भद्रपीठं तदूर्ध्वं शालितण्डुलैः ।
वेदिं कृत्वा तु तत्पृष्ठे भद्राख्यं मण्डलं लिखेत् ॥३४३॥

विभवे सति वस्त्रं तु समास्तीर्य तदूर्ध्वतः ।
तिलराशिं समुत्कीर्य तन्मध्ये स्वस्तिकं लिखेत् ॥

तस्योपरिष्टात् संस्थाप्य प्रासादाभिमुखं पटम् ।
उपविश्यासने पश्चादाचार्यः सुसमाहितः ॥ ३४५ ॥

करशुद्ध्यादि पूर्वोक्तं स्वदेहार्चनपश्चिमम् ।
सर्वं खगेशमन्त्रेण सांगेन तु समाचरेत् ॥ ३४६ ॥

द्वारस्थतोरणकुंभादियजनं प्राग्वदाचरेत् ।
ततः पुण्याहघोषं तु कारयेत् पूर्ववद्द्विज! ॥ ३४७ ॥

गरुडस्याग्रतः प्राग्वत् कुम्भं करकसंयुतम् ।
भारमात्रोपक्लृप्ते तु धान्यपीठे तु विन्यसेत् ॥३४८॥

जलद्रोण्यादिकं पात्रं गन्धतोयैः सुपूरितम् ।
दक्षिणे करकस्याथ विनिवेश्य च तत्र तु ॥ ३४९ ॥

सचच्छायाधिवसनमाचरेद्गरुडस्य तु ।
स्नपनानां पुरोक्तानां पूर्वस्मिन्नवके द्विज! ॥ ३५० ॥

अधमाधममार्गेण स्नपनं तु समाचरेत् ।
अग्रतो वैनतेयस्य वेदिकोपरि संस्थिते ॥ ३५१ ॥

दर्पणे तु, ततः पश्चान्मुहूर्ते शोभने गुरुः ।
नयनोन्मीलनं कुर्यात् प्रागुक्तेनैव वर्त्मना ॥ ३५२ ॥

सर्वेषामपि सर्पाणां नेत्रोन्मीलनमाचरेत् ।
प्राग्वत् संशुद्धदेहस्तु शिल्पी प्रकटतां नयेत् ॥

सर्वं तु पूर्ववत् कुर्यात्तयोः पूरणादिकम् ।
कुम्भे च करके चैव आसनं परिकल्प्य च ॥ ३५४ ॥

कुम्भे गरुडमावाह्य करके मन्त्रमस्त्रपम् ।
पूजयित्वार्घ्यगन्धाद्यैस्ततो दिक्कलशाष्टकैः ॥ ३५५ ॥

इन्द्रादिलोकपालांस्तु प्रादक्षिण्येन पूज्य च ।
भित्तिसंसेचनं कृत्वा भूयः संस्थाप्य तत्र तु ॥ ३५६ ॥

ततो ध्वजपटे प्राग्वदासनं परिकल्प्य च ।
ततो गरुडमन्त्रं तु सहस्रादित्यभास्वरम् ॥ ३५७ ॥

सर्वरोगप्रशमनं सर्वोपद्रवनाशनम् ।
सर्वसिद्धिप्रदं नृणां सर्वदारिद्र्यनाशनम् ॥ ३५८ ॥

हृदयाद्रेच्य विप्रेन्द्र! पटस्थगरुडे न्यसेत् ।
सकलीकरणं कृत्वा सन्निधिं च समाचरेत् ॥ ३५९ ॥

सन्निरोधं च साम्मुख्यं मुद्राबन्धं तथैव च ।
लययागं भोगयागं यथावद्द्विजसत्तम! ॥ ३६० ॥

सर्वं गरुडमन्त्रेण सांगेन तु समाचरेत् ।
कुम्भे च करके चैव पटे च क्रमयोगतः ॥ ३६१ ॥

महता विभवेनैव पूजनं तु समाचरेत् ।
अलंकारासनान्तं च यथोक्तेन क्रमेण तु ॥ ३६२ ॥

कृत्वा संपूजनं विप्र! गरुडस्य, ततः परम् ।
प्रासादाभ्यन्तरे विप्र! देशिकानुमतेन तु ॥ ३६३ ॥

अन्येन गुरुणा यद्वा साधकेन विशेषवत् ।
पूजनं कारयेत् सम्यङ्मूलमूर्तिगतस्य च ॥ ३६४ ॥

यात्रामूर्तिगतस्यापि विभोर्दानान्तमेव च ।
स्नपनं गरुडस्यास्य विशेषार्चनपूर्वकम् ॥ ३६५ ॥

तत्परं वैनतेयस्य भोज्यासनपुरस्सरैः।
विविधैर्मधुपर्कान्तं हृद्यैः सकलमूलकैः ॥ ३६६ ॥

भक्ष्यैरतिप्रभूतैश्च तथान्यैर्विविधैरपि।
भोगैरिष्ट्वा जपान्तं च पूर्ववत् क्रमयोगतः ॥ ३६७ ॥

संप्रदानं पृथक् कुर्यात् कारिभ्यस्तु यथाविधि।
मन्त्रास्त्रकुम्भयोर्दत्तमाचार्येभ्यो ददेत् ततः ॥ ३६८ ॥

पटस्थस्यापि नैवेद्यं किंचिदादाय पात्रगम्।
देशिकः स्वयमादद्याद् गुर्वादिभ्योऽपि वै ददेत् ॥३६९॥

मूलबिंबस्थितस्यापि यात्राबिंबस्थितस्य च।
देवस्य मधुपर्काद्यैर्नैवेद्यं विनिवेदितम् ॥ ३७० ॥

दापयेद्देशिकादिभ्यस्ततो होमं समाचरेत्।
कुण्डं सलक्षणं कृत्वा प्राग्भागे गरुडस्य तु ॥ ३७१ ॥

तत्रानलं च संस्कृत्य आवाह्य विहगेश्वरम्।
समिधां सप्तकं हुत्वा शान्त्यर्थं तु तिलैर्घृतैः ॥ ३७२ ॥

आहुत्यष्टोत्तरशतं हुत्वा पूर्णां निवेदयेत्।
यद्वा नैमित्तिके कुण्डे होमं कुर्यात्तु देशिकः ॥ ३७३ ॥

ततस्तु यजमानाय स्नानाद्यैः प्रयतात्मने।
गरुडस्य पटस्थस्य नैवेद्यं यन्निवेदितम् ॥ ३७४ ॥

तत्र किंचित् समादाय दत्वा वै देशिकः स्वयम्।
तत्तच्छिष्टं तु नैवेद्यं कृत्वा तु कवलं पृथक् ॥ ३७५ ॥

नारीणमप्रजानां तु नराणां रोगिणामपि।
दद्याद्गरुडमन्त्रं तु ध्यायमानः समाहितः ॥ ३७६ ॥

प्राङ्मुखं प्राशयित्वान्नं तत्तीर्थं त्वथ पाययेत्।
एवं कृत्वाधिवासं तु जागरेण नयेन्निशाम् ॥ ३७७ ॥

ततः प्रभाते सुस्नातस्त्वाचान्तो देशिकोत्तमः।
नित्यार्चनं विभोः कृत्वा विशेषयजनं तथा ॥ ३७८ ॥

वैनतेयं ततोऽभ्यर्च्य कुम्भपूर्वं यथाविधि।
महाहविर्निवेद्याथ होमं कृत्वा तु पूर्ववत् ॥ ३७९ ॥

ततश्चतुर्थावरणे अन्तरा गोपुरस्य तु।
चतुर्हस्तं द्विहस्तं वा ध्वजपीठं समन्ततः ॥ ३८० ॥

सार्धहस्तोच्छ्रितं विप्र! हस्तोच्छ्रितमथापि वा।
शिलाभिरिष्टकाभिश्च पक्वाभिर्वा यथारुचि ॥ ३८१ ॥

खातं कुर्यात्तु तन्मध्ये यावद्भूमितलं द्विज!।
तृतीयावरणे वापि बलिपीठाद्बहिर्द्विज! ॥ ३८२ ॥

द्वितीयावरणे वा तद्भवेत् कालानुरूपतः।
उत्तरे ध्वजपीठस्य पूर्वस्यां दिशि वा द्विज! ॥ ३८३ ॥

शाययेत्तु ध्वजस्तंभं ध्वजयष्टिसमन्वितम्।
पूर्वाग्रमुत्तराग्रं वा लक्षणाढ्यं सुशोभनम् ॥ ३८४ ॥

अन्तस्सारो बहिस्सारो निस्सारश्च त्रिधा भवेत्।
चंपको देवदारुश्च चन्दनः खदिरस्तथा ॥ ३८५ ॥

सालवृक्षश्च बिल्वश्च ककुभालकौ यथा।
इत्येवमादयो वृक्षा अन्तस्सारा उदाहृताः ॥ ३८६ ॥

क्रमुको नालिकेरश्च हिन्तालस्ताल एव च।
वेणुश्चापि बहिस्साराः प्रशस्ता ध्वजकर्मणि ॥ ३८७ ॥

किंशुकाद्यास्तु ये विप्र! निस्साराः समुदाहृताः।
निस्सारं वर्जयेत् स्तंभं सर्वदा ध्वजकर्मणि ॥ ३८८ ॥

आर्द्रं नवं ऋजुं स्निग्धं वक्रस्फोटनवर्जितम्।
अयुग्मपर्वकं शुद्धं सत्वचं सुस्थिरं द्विज! ॥ ३८९ ॥

ग्राहयित्वा ध्वजस्तम्भं शास्त्रदृष्ट्या परीक्षयेत्।
अशीतितालं मुख्यं स्यान्मध्यमं षष्टितालकम् ॥३९०॥

पञ्चाशत्तालमधमं पञ्चतालाधिकं तु वै।
मध्यमोत्तममुद्दिष्टं पञ्चाशत्तालसम्मितम् ॥ ३९१ ॥

पञ्चतालविहीनं तद्भवेन्मध्यममध्यमम्।
मध्यमाधममुद्दिष्टं द्विंविंशत्तालसम्मितम् ॥ ३९२ ॥

सप्तत्रिंशच्च तालानां पञ्चत्रिंशत्तथैव च।
द्वात्रिंशच्च त्रयं विप्र! अधमोत्तमपूर्वकम् ॥ ३९३ ॥

मात्रांगुलवशेनात्र प्रमाणपरिकल्पनम्।
संभवे सति विप्रेन्द्र! शततालं प्रकल्पयेत् ॥ ३९४ ॥

अन्यच्च नवभेदं तु प्रमाणमधुनोच्यते।
कराणां पञ्चविंशच्च त्रयोविंशत्तथैव च ॥ ३९५ ॥

एकविंशच्च विंशच्च तदेकोनं च सत्तम !
अष्टादश ततोन्यच्च तथा षोडशकं द्विज ॥ ३९६ ॥
त्रिपक्षं च क्रमेणैव नवकं परिकीर्तितम् ।
मानांगुलेन मानं स्यात् त्रिविधेन यथाबलम् ॥ ३९७ ॥
तदभावे तु मानं स्यादत्र मात्रांगुलेन वा ।
प्रासादशिखराग्रोच्चं प्रासादोच्चमथापि वा ॥ ३९८ ॥
कण्ठोच्चं गोपुरोच्चं वा यथावित्तानुरूपतः ।
ध्वजस्तंभस्य मूलात्तु नाहं तु नवधा भवेत् ॥ ३९९ ॥
मूले द्वादशतालं तु नवतालं तु सप्तकम् ।
तन्मध्ये षष्ठतालं तु पञ्चतालं तथा भवेत् ॥ ४०० ॥
तदग्रं पञ्चतालं तु चतुस्तालं द्वितालकम् ।
द्वादशांगुलमानेन नाहमष्टांगुलं भवेत् ॥ ४०१ ॥
चतुर्विंशद्दशगुणं स्तंभनाहेन वै दृढम् ।
त्रिधा विभज्य तत् स्तंभं त्रिधा कृत्वा तृतीयकम् ॥
अधोभागे ह्यधस्ताच्च मध्यभागे तु मध्यतः ।
अग्रतो ह्यूर्ध्वभागे तु यज्ञकाष्ठविनिर्मितम् ॥ ४०३ ॥
मसूरकत्रयं कृत्वा सुषिरत्रयसंयुतम् ।
दण्डयष्टिनिवेशार्थं सुवृत्तं पार्श्वयोर्द्विज ! ॥ ४०४ ॥
गणकाहस्तमानाच्च द्विनवांगुलिविस्तृताः ।
मूलदेशप्रदेशे तु चतुरंगुलविस्तृताः ॥ ४०५ ॥
द्वितालं सार्धतालं तु एकतालं तु वा द्विज ! ।
त्यक्त्वा स्तंभाग्रतो विप्र ! न्यसेदग्रमसूरकम् ॥ ४०६ ॥
अन्यद्वयं समुद्दिष्टे स्थाने सम्यङ्निवेश्य च ।
यद्वा स्तंभाग्रतः प्राग्वन्न्यसेदूर्ध्वमसूरकम् ॥ ४०७ ॥
अधो हस्तद्वयं सार्धं त्यक्त्वा मध्यमसूरकम् ।
तदधस्तु तथा त्यक्त्वा न्यसेदन्यमसूरकम् ॥ ४०८ ॥
एवं तालत्रयं त्यक्त्वा ततस्तस्मिन्निवेशयेत् ।
ध्वजयष्टिं दृढां ऋज्वीं लोहयन्त्रसमन्विताम् ॥ ४०९ ॥
वेष्टयेद्दर्भमालाभिर्ध्वजदण्डं प्रदक्षिणम् ।
एवं कृत्वा ध्वजस्तम्भं प्रोक्षयेद्दर्भवारिणा ॥ ४१० ॥

ध्वजपीठस्थिते गर्ते रत्नधान्यानि निक्षिपेत् ।
देशिकस्तार्क्ष्यमन्त्रेण ततो ब्राह्मणसत्तमैः ॥ ४११ ॥
शूद्रैर्वा दीक्षितैर्विप्र ! देवदासैरथापि वा ।
शंखभेर्यादिनिर्घोषगीतवाद्यिसंयुतम् ॥ ४१२ ॥
स्थापयेत्तु ध्वजस्तंभं तस्मिन् गर्ते ऋजुस्थितम् ।
प्रासादाभिमुखं स्थाप्य वालुकाभिश्च पूरयेत् ॥ ४१३ ॥
हस्तिपादादिभिः कृत्वा सुदृढं च यथा भवेत् ।
यद्वा रजन्यां पूर्वस्यां कृत्वा स्तंभाधिवासनम् ॥४१४॥
अथत्वे स्थापयेत् पश्चाद् गत्वा गरुडसन्निधिम् ।
रथे वा कुंजरे याने ध्वजमारोप्य यत्नतः ॥ ४१५ ॥
प्रभया चित्रकुसुमैः कृतया भूषयेद् ध्वजम् ।
वासोविभूषणैः स्रग्भिर्विचित्राभिश्च पूजयेत् ॥
छत्रचामरपूर्वैश्च मायूरव्यजनैस्ततः ।
विचित्रैस्तालवृन्तैश्च आतपत्रैर्मनोहरैः ॥ ४१७ ॥
केतुदण्डैर्विचित्रैश्च दुकूलपटशोभितैः ।
चतुर्वेदमयोद्घोषैः स्तोत्रघोषसमन्वितैः ॥ ४१८ ॥
गीतकैर्विविधैर्वाद्यैः शंखकाहलनिःस्वनैः ।
भेरीमृदङ्गपूर्वाणां घोषैरन्यैश्च मंगलैः ॥ ४१९ ॥
ब्राह्मणैर्ध्रियमाणैश्च सांकुरैः पालिकागणैः ।
सुवेषगणिकासंघैस्तथा भक्तजनैः सह ॥ ४२० ॥
क्ष्वेलितास्फोटितैर्युक्तं जयशब्दसमन्वितम् ।
प्रथमावृतिमारभ्य रथ्यावरणपश्चिमम् ॥ ४२१ ॥
भ्रामयित्वा क्रमेणैव सर्वाण्यावरणानि च ।
ग्रामं प्रदक्षिणं नीत्वा ग्राममध्ये स्थितो ध्वजम् ॥
श्रावयेच्चतुरो वेदान् सेतिहासपुराणकान् ।
सौपर्णमपि वै सूक्तं तत्र संदर्शयेत् पुनः ॥ ४२३ ॥
गेयं नृत्तं च वाद्यं च आतोद्यं च चतुर्विधम् ।
उपहारांश्च माल्यादीन् ताम्बूलान् विनिवेद्य च ॥
ततः प्रवेशयेद्विप्र ! प्रासादं गरुडध्वजम् ।
अंकुरार्पणपूर्वं तु उत्सवे द्विजसत्तम ! ॥ ४२५ ॥

गरुडस्य पटस्थस्य पश्चाद्भागे यथाविधि।
तद्भावौ बलिसंयुक्तं यात्राबिंबं परिभ्रमेत्॥ ४२६॥

साधनादेरसंपत्तेः पृथङ्नेतुमशक्यतः।
तत्रापि सति योग्यत्वे पृथगेव परिभ्रमेत्॥ ४२७॥

अन्यत्र केवलं विप्र! ध्वजमेव नयेत् सदा।
पत्तने नगरे वापि बलिभ्रमणसंयुतः॥ ४२८॥

उत्सवो विहितो यत्र तत्र वै गरुडध्वजम्।
भ्रामयेद्द्वितये तस्मिन् यात्राबिंबसमन्वितम्॥४२९॥

तन्मात्राणां योग्यतायै पवित्रीकरणाय च।
ग्रामे तेन च वै सार्धं भ्रामयेद्विंबमौत्सवम्॥ ४३०॥

एवं प्रदक्षिणं नीत्वा धाम ग्रामादिकं तथा।
ध्वजं तु मण्डपे स्थाप्य न कृतं यदि पूर्वतः॥ ४३१॥

स्थापनं ध्वजदण्डस्य स्थापयित्वा तु तत्तदा।
प्रासादं संप्रविश्याथ यात्राबिंबं विशेषतः॥ ४३२॥

विचित्रैर्वसनै रम्यैः भूषणैर्विविधैरपि।
माल्यैश्च विविधै रम्यैरलंकृत्य ततः परम्॥ ४३३॥

शिबिकादौ समारोप्य सर्वसाधनसंयुतम्।
आस्थानमण्डपे नीत्वा ध्वजपीठस्य सम्मुखम्॥ ४३४॥

सौवर्णे विष्टरे रम्ये तल्पाद्यंगोपशोभिते।
विचित्रेण वितानेन उपरिष्टाद्विभूषिते॥ ४३५॥

सन्निवेश्य ततः पश्चादाचार्यः सुसमाहितः।
साधकाद्यैः परिवृतो ह्यादाय गरुडध्वजम्॥ ४३६॥

सह शंखनिनादाद्यैः प्रादक्षिण्येन योगतः।
ध्वजपीठे समानीय स्तंभं प्रक्षाल्य सज्जलैः॥ ४३७॥

विभवे सति वस्त्रेण संवेष्ट्य ध्वजदण्डकम्।
गरुडं पूजयित्वा तु पुष्पांजलिपुरस्सरम्॥ ४३८॥

अर्घ्यं पाद्यं तथाचामं गन्धं माल्यं च धूपकम्।
अपूपान् पृथुकांश्चापि पानकं तर्पणं तथा॥ ४३९॥

नालिकेरजलैर्युक्तमाचामं तदनन्तरम्।
कर्पूरादिसमोपेतं दत्वा ताम्बूलमुत्तमम्॥ ४४०॥

तन्मुद्रां दर्शयित्वा तु रज्जुमादाय वै दृढाम्।
त्रिवृत्कृतैस्तु कार्पाससूत्रैरतिदृढैः कृताम्॥ ४४१॥

यष्ट्यग्रसंस्थिते यन्त्रे योजयित्वा तया ततः।
ध्वजस्य शिखरं विप्र! बन्धयेत् सुदृढं यथा॥ ४४२॥

बालध्वजेन सहितं घण्टया च समन्वितम्।
पुण्याहं वाचयित्वा तु संप्रोक्ष्याखोदकेन तु॥ ४४३॥

महाकुम्भस्थतोयेन संप्रोक्ष्य गरुडं ततः।
महाकुम्भस्थगरुडं पटस्थे तु निवेशयेत्॥ ४४४॥

स्तम्भमूले समुत्कीर्य सास्त्रकुम्भजलं ततः।
कलशाष्टकतोयं च स्तम्भमूले विनिक्षिपेत्॥ ४४५॥

आचर्य मन्त्रन्यासं तु पुष्पांजलिपुरस्सरम्।
सन्निधिं सन्निरोधं च साम्मुख्यं च समाचरेत्॥४४६॥

"अस्माद्दिनात् समारभ्य यावत्तीर्थदिनान्तिमम्।
सन्निधिं कुरु पक्षीन्द्र! राज्ञो जनपदस्य च॥ ४४७॥

ग्रामस्य यजमानस्य वैष्णवानां विशेषतः।
तुष्ट्यै पुष्ट्यै चैव सर्वशत्रुजयाय च॥ ४४८॥

अपमृत्युजयार्थं च विहगेश! प्रसीद ओम्।"
इति विज्ञाप्य पक्षीन्द्रं विकिरेत् कुसुमांजलिम्॥४४९॥

पूर्वाह्णे वाथ मध्याह्ने मुहूर्ते शोभने गुरुः।
रज्जुनारोहयेद्धीशं ध्वजस्थमनुचिन्तयन्॥ ४५०॥

रज्जुं च बन्धयेत् स्तंभे प्रादक्षिण्यक्रमेण तु।
प्रासादाभिमुखं स्तम्भे स्थापयेद्गरुडध्वजम्॥ ४५१॥

विहगेश्वरबिंबं च स्तम्भाग्रे योजयेद्वा।
सन्निधौ देवदेवस्य गत्वा पुष्पांजलिं क्षिपेत्॥ ४५२॥

"ज्ञानतोऽज्ञानतो वापि यथोक्तं न कृतं मया।
तत् सर्वं पूर्णमेवास्तु सुतृप्तो भव सर्वदा॥ ४५३॥

ओमच्युतश्च! जगन्नाथ! मन्त्रमूर्ते! जनार्दन!।
रक्ष मां पुण्डरीकाक्ष! क्षमस्वाज! प्रसीद ओम्"॥

इति विज्ञाप्य देवेशं यात्रामूर्तिगतं विभुम्।
अन्यत्र मण्डपे नीत्वा विशेषार्चनपूर्वकम्॥ ४५४॥

प्रभूतान्नं निवेद्याथ सर्वं हवनपश्चिमम् ।
कृत्वा यथाक्रमेणैव प्रासादं तु प्रवेशयेत् ॥ ४५६ ॥
ध्वजपीठोपरिष्टात्तु स्तंभमूले प्रकल्पयेत् ।
अष्टपत्रं तु कमलं चतुरावरणान्वितम् ॥ ४५७ ॥
सकर्णिकं यथा स्तम्भः कर्णिकास्थो विराजते ।
चतुरंगुलविस्तारास्तावन्मानेन चोन्नताः ॥ ४५८ ॥
कर्तव्या मेखलाः सर्वाश्चतुरश्रा द्विजोत्तम ! ।
स्तंभमानं विना पद्मं षडंगुलसमन्वितम् ॥ ४५९ ॥
तावद्विस्तारसंयुक्तं मेखलोपरि विन्यसेत् ।
पीठोर्ध्वं तु प्रपां कुर्यात् चतुस्तंभसमन्विताम् ॥
यद्वा स्तंभाष्टकोपेतां षोडशस्तंभसंयुताम् ।
चतुस्तोरण संयुक्तां दर्भमालापरिष्कृताम् ॥ ४६१ ॥
भूषितां तु पताकाद्यैर्वाह्ये यवनिकान्विताम् ।
दीपान् प्रदीपयेत्तत्र अनिर्वाणान् समन्ततः ॥ ४६२ ॥
तद्वासरात् समारभ्य पुष्पयागादिनान्तिमम् ।
त्रिसन्ध्यमर्चनं कुर्यात् सविशेषं जपान्तिमम् ॥ ४६३ ॥
उत्सवारम्भदिवसात् त्रिसप्तदिनमाचरेत् ।
पूजालोपो न कर्तव्यो द्विगुणीकृत्य आचरेत् ॥ ४६४ ॥
बलिकाले बलिं दद्यादस्यापि प्रतिवासरम् ।
प्रदोषे समनुप्राप्ते यात्रबिंबगतं विभुम् ॥ ४६५ ॥
अलंकृत्य यथान्यायं नर्तदास्थानमण्टपम् ।
भद्रासने समारोप्य विभवेन तु पूर्ववत् ॥ ४६६ ॥
कृत्वा होमावसानं तु भेरीताडनमाचरेत् ।
अग्रतस्तु विभोः स्थाप्य भेरीं वै धान्यविष्टरे ॥४६७॥
तत्पूर्वे शंखनिकरं वह्नौ काहलसंचयम् ।
याम्ये तु मद्दलं तन्त्रीं वंशयुक्तां तु यातुदिक् ॥
वारुण्यां तु मृदंगं च डुड्डुकान् ह्रस्वमद्दलान् ।
वायव्ये झल्लरीं न्यस्य कांस्यतालसमन्विताम् ॥
पटहं ह्रस्वपटहं सोमे डुड्डुकसंयुतम् ।
ऐशान्यां डुड्डुकां ढक्कीं हस्तघंटासमन्विताम् ॥

तेषां बाह्ये तु विप्रेन्द्र ! दक्षिणे गणिकाजनम् ।
न्यसेन्मंगलगानार्थं तत्पार्श्वे मन्त्रगायकान् ॥ ४७१ ॥
नर्तकानग्रतः स्थाप्य उत्तरे वन्दिवृन्दकान् ।
स्वे स्वे स्थानेषु संस्थाप्य अन्यान् वै वाद्यकोविदान् ॥
एवं क्रमेण संस्थाप्य संभवानुगुणं द्विज ! ।
वाससा वेष्टयेद्वापि भेरीं वित्तानुरूपतः ॥ ४७३ ॥
शब्दविग्रहमाकाशं भेर्यां संस्मृत्य पूजयेत् ।
कोणं तद्दक्षिणे स्थाप्य वायुं तत्र सुपूजयेत् ॥ ४७४ ॥
ततः पारशवं स्नातं दर्भपाणिमलंकृतम् ।
उपवीतादिसंयुक्तं अग्रतःस्थाप्य वीक्षयेत् ॥ ४७५ ॥
अस्त्रेण प्रोक्षयेत् पश्चादर्घ्यतोयेन तत्परम् ।
तेनैव ताडयेद्भेरीं गीतनृत्तपुरस्सरम् ॥ ४७६ ॥
शंखवाद्यादि संयुक्तं मथवा देशिकः स्वयम् ।
मुहूर्ते शोभने प्राप्ते ताडयित्वा तु भेरिकाम् ॥ ४७७ ॥
कोणेन प्रथमं ध्यायन् हयग्रीवं जनार्दनम् ।
त्रिस्थानादिषु देवानां त्रिधा वै तेन ताडयेत् ॥ ४७८ ॥
ततः पारशवेनैव ताडयेत्तु यथेच्छया ।
देवतावाहनीं गाथां संस्कृतां प्राकृतां तु वा ॥ ४७९ ॥
द्रामिडीं वा यथेच्छातस्तदा संश्रावयेद्विभुम् ।
तत्काले देवतानृत्तं तत्तद्गीतादिसंयुतम् ॥ ४८० ॥
दर्शयेद्देवदेवस्य देवतानां सुतृप्तये ।
ततस्तु देवदेवेशं गर्भगेहे प्रवेशयेत् ॥ ४८१ ॥
पायसं द्रोणमानं तु समादायाथ पात्रतः ।
तथार्घ्यगन्धमाल्यादि धूपं तांबूलमेव च ४८२ ॥
प्रासादद्वारमारभ्य बहिर्द्वारावसानकम् ।
आवृतिष्वपि सर्वासु वीथ्यावरणपश्चिमम् ॥ ४८३ ॥
बलिं प्रदाय विधिना गीतनृत्तादिसंयुतम् ।
ततः प्रविश्य ग्रामं तु पूर्वस्यां दिशि संस्थितः ॥४८४॥
देवतावाहनं कुर्यात् प्राङ्मुखो देशिकः स्वयम् ।
तत्पुत्रस्तस्य शिष्यो वा स्वरेणोच्चतरेण तु ॥ ४८५ ॥

"आगच्छतामरगणाः! प्रागाशां येऽधिशेरते।
विरूपाश्च सुरूपाश्च सपर्यामुद्यतामिमाम् ॥ ४८६ ॥
गृहीत्वा पान्तु नस्तृप्ताः कुमुदस्यानुयायिनः।
महमिममुपयान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ॥४८७॥"
अनेन मन्त्रेणावाह्य कुमुदं सगणं ततः।
अर्घ्यालेपनमाल्यादि धूपं तोयं यथाक्रमम् ॥ ४८८ ॥
पायसाद्यं पुनस्तोयं ताम्बूलं च प्रदापयेत्।
पश्चात् संतोषयेद्रम्यैर्महद्भिः शङ्खजै रवैः ॥ ४८९ ॥
तदीयतालसङ्गीतनृत्तैश्चापि, ततः परम्।
"आगच्छतामरगणाः! येऽग्न्याशामधिशेरते ॥ ४९०॥
भीमाभीममुखा रौद्राः सपर्यामुद्यतामिमाम्।
गृहीत्वा पान्तु नस्तृप्ताः कुमुदाक्षानुयायिनः ॥
महमिममुपयान्तु प्रीतास्तेभ्यो नमोऽस्तु वः।"
अनेन कुमुदाक्षं तु समावाह्य गणाधिपम् ॥ ४९२ ॥
प्रागवत् सन्तोषयित्वा तु, ततः संप्राप्य याम्यदिक्।
"आगच्छत पितृगणाः! याम्याशामधिशेरते ॥
दारुणाऽदारुणाचाराः सपर्यामुद्यतामिमाम्।
गृहीत्वा पान्तु नस्तृप्ताः पुण्डरीकानुयायिनः ॥४९४॥
महमिममुपयान्तु प्रीतास्तेभ्यो नमोऽस्तु वः।"
अनेन पुण्डरीकाख्यं समावाह्य गणेश्वरम् ॥ ४९५ ॥
क्रमेण पूजयित्वा तु गत्वा वै यातुधानदिक्।
"आगच्छत यातुगणाः! यात्वाशां येधिशेरते ॥
क्रव्याशिनः क्रूरधियः सपर्यामुद्यतामिमाम्।
गृहीत्वा पान्तु नस्तृप्ता वामनस्यानुयायिनः ॥
महमिममुपयान्तु प्रीतास्तेभ्यो नमोऽस्तु वः।"
इत्यावाह्य गणेशं तु वामनं पूजयेत् क्रमात् ॥ ४९८ ॥
वारुणाशां ततो गत्वा शंकुकर्णं गणेश्वरम्।
"आगच्छताऽहिप्रथमाः! प्रतीचीं येऽधिशेरते ॥
महद्विषा दन्दशूकाः सपर्यामुद्यतामिमाम्।
गृहीत्वा पान्तु नस्तृप्ताः शंकुकर्णानुयायिनः ॥ ५०० ॥
महमिममुपयान्तु प्रीतास्तेभ्यो नमोऽस्तु वः।"
इत्यावाह्य यजेत् प्रागवत्, पश्चात् संप्राप्य वायुदिक् ॥
"आयान्तु गन्धर्वगणाः! वाय्वाशां येऽधिशेरते।
सुदर्शना भीमवेगाः सपर्यामुद्यतामिमाम् ॥ ५०२ ॥
गृहीत्वा पान्तु नस्तृप्ताः स(र्प)र्वनेत्रानुयायिनः।
महमिममुपयातु प्रीतास्तेभ्यो नमोऽस्तु वः ॥ ५०३ ॥
अनेनावाह्य सगणं सर्वनेत्रं तु तोषयेत्।
ततःसोमदिशं गत्वा सुमुखं तु गणाधिपम् ॥ ५०४ ॥
"आगच्छत यक्षगणाः! उदीचीं येऽधिशेरते।
विरूपा दण्डहस्ताश्च सपर्यामुद्यतामिमाम् ॥ ५०५ ॥
गृहीत्वा पान्तु नस्तृप्ताः सुमुखस्यानुयायिनः।
महमिममुपयान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ॥ ५०६ ॥
इति मन्त्रेण चावाह्य तोषयेत् पूर्वकर्मणा।
ततस्त्वीशदिशं गत्वा गणेशं सुप्रतिष्ठितम् ॥ ५०७ ॥
आयान्तु पिशाचगणाः! ईशाशां येऽधिशेरते।
सशूलायुधहस्ताश्च सपर्यामुद्यतामिमाम् ॥ ५०८ ॥
गृहीत्वा पान्तु नस्तृप्ताः सुप्रतिष्ठानुयायिनः।
महमिममुपयान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ॥ ५०९ ॥
मन्त्रेणावाह्य संपूज्य गत्वा वै ग्राममध्यतः।
तत्र चावाहयेदूर्ध्वं पृश्निगर्भं गणेश्वरम् ॥ ५१० ॥
आगच्छत सिद्धगणाः! गगनं येऽधिशेरते।
शुचिमतयः शुचयः सपर्यामुद्यतामिमाम् ॥ ५११ ॥
गृहीत्वा पान्तु नस्तृप्ताः पृश्निगर्भानुयायिनः।
महमिममुपयान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ॥ ५१२ ॥
आवाह्य तोषयित्वा तु, अधस्तान्मानवं ततः।
आगच्छताश्वरगणाः! पृथिवीं येऽधिशेरते ॥ ५१३ ॥
बहुरूपा बहुज्ञानाः सपर्यामुद्यतामिमाम्।
गृहीत्वा पान्तु नस्तृप्ता मानवस्यानुयायिनः ॥ ५१४ ॥
महमिममुपयान्तु प्रीतास्तेभ्यो नमोऽस्तु वः।
आवाह्य तोषयेत् प्रागवत् क्रमान्नृत्तावसानकम् ॥

तस्य सर्वभूतानां बलिशेषं ततः क्षिपेत् ।
बलिदाने तु पूर्वादिर्वैवस्वतदिगन्तिमम् ॥ ५१६ ॥

आचार्यः प्राङ्मुखः स्थित्वा कुर्यादावाहनादिकम् ।
यात्वादिदिक्कूये कुर्यात् पूर्वोदितमुदङ्मुखः ॥ ५१७ ॥

सोमेशदिग्द्वये ग्राममध्येपि प्राङ्मुखो भवेत् ।
समतालस्तथाबद्धस्तालो वै भृङ्गिणी तथा ॥ ५१८ ॥

मल्लतालो मंगलश्च जयतालस्तु भद्रकः ।
ढक्करीसंज्ञितस्तालो ब्रह्मतालस्तथैव च ॥ ५१९ ॥

अनन्तताल इत्येते दश तालाः प्रकीर्तिताः ।
कुमुदादिगणेशानां दशानां क्रमशो द्विज ! ॥ ५२० ॥

षड्जर्षभौ च गान्धारौ मध्यमः पञ्चमस्तथा ।
धैवतश्चैव निषदो धैवतो मध्यमस्तथा ॥ ५२१ ॥

पञ्चमश्च क्रमेणैव कथिताः स्युर्दश स्वराः ।
गान्धारराग: कौलयाख्यः कैशिको नट्टभाषिकः ॥

श्रीकामदश्च तत्केशी दक्षरागस्तथैव च ।
चोलाराण्यभिधो रागो मेघरागश्च पश्चिमः ॥

इत्येते कुमुदादीनां दश रागाः प्रकीर्तिताः ।
विलासं सर्वतोभद्रं खेटकं चक्रमण्डलम् ॥ ५२४ ॥

कान्तारकुट्टिमं पृष्ठकुट्टिमं कटिबन्धनम् ।
वामजानूर्ध्वनृत्तं च आदिमं च द्वयं पुनः ॥ ५२५ ॥

एते नृत्तविशेषाश्च कुमुदानां क्रमात् स्मृताः ।
एते ध्यानृतिदेवानां क्रमात्तालादयः स्मृताः ॥ ५२६ ॥

अन्येषां सर्वदेवानां तालो भद्रः प्रशस्यते ।
भवेद्गारुडतालस्तु पक्षीशस्य तु, मध्यमः ॥ ५२७ ॥

स्वरो, रागस्तु गौडः स्यान्नृत्तं वै विष्णुकान्तकम् ।
विघ्नारेर्जयतालं स्यान्नृत्तं स्वस्तिकमुच्यते ॥ ५२८ ॥

ऋषभस्तु स्वरः प्रोक्तो वराटीराग एव च ।
भेरीताडनपूर्वं तु देवतावाहनं चरेत् ॥ ५२९ ॥

घोषयेद्गारुडं तालमन्तराले तु वै दिशाम् ।
तत्काले देशिकेन्द्रेण स्वयं संस्कृतगाथया ॥ ५३० ॥

अन्ये चतुर्मुखमुखा आहूतव्या मरुद्गुणाः ।
देवस्योत्सवसेवार्थं तथान्ये भगवद्गणाः ॥ ५३१ ॥

तथान्ये भगवद्भक्ता जनास्तत्पदवासिनः ।
यद्वा गुरोरनुमतैर्भगवद्भक्तिबृंहितैः ॥ ५३२ ॥

आहूतव्यास्तु तैर्विप्रैर्दिव्यया गाथया द्विज ! ।
एवं ग्रामं परिभ्राम्य प्रासादं संप्रविश्य तु ॥ ५३३ ॥

गरुडस्थानमासाद्य तोषयित्वा खगध्वजम् ।
तालादिकैस्ततस्त्वेनं विष्वक्सेनं तु तोषयेत् ॥ ५३४ ॥

देवतावाहनं येऽत्र द्रष्टुकामाः समाहिताः ।
भेरीताडनशब्दं च तथा शृण्वन्ति ये जनाः ॥ ५३५ ॥

तद्देशात्ते न गच्छेयुर्यावत्तीर्थदिनान्तिमम् ।
मोहेन यदि गच्छेयुस्ते भविष्यन्ति रोगिणः ॥ ५३६ ॥

न कुर्युस्ते नदीतारं न यानं योजनात् परम् ।
याताश्चेत् पुनरागत्य गरुडं संप्रपूज्य तु ॥ ५३७ ॥

तीर्थयात्रां तु संसेव्य ते भविष्यन्ति नीरुजः ।
एवं तु ध्वजमुत्थाप्य गुरुः पश्चात् समाहितः ॥ ५३८ ॥

देवानां केशवादीनां मन्त्रैर्द्वादशभिः क्रमात् ।
द्वादशाहं व्रतं कुर्यात् यात्रारंभदिनादितः ॥ ५३९ ॥

स्नानार्चनादिकं कृत्वा पीत्वा तच्चरणोदकम् ।
कुशोदकसमायुक्तं जपेद्वै द्वादशाक्षरम् ॥ ५४० ॥

नैवेद्यप्राशनं पूर्वं कुर्यान्नक्ताशनं द्विज ! ।
जपेद्द्वादशनामानि क्रमाद्वाच्यमनुस्मरन् ॥ ५४१ ॥

अंकुरारोपणदिनाद्यावत्तु ध्वजवासरम् ।
दिनषट्केन विप्रेन्द्र ! प्रत्यहं व्रतमाचरेत् ॥ ५४२ ॥

द्वादशाक्षरमन्त्रेण कुर्यादंकुरवासरे ।
द्वितीये तुर्यमन्त्रेण, परे सुषुप्तिवाचकैः ॥ ५४३ ॥

स्वप्नमन्त्रैश्चतुर्थे तु, जाग्रन्मन्त्रैस्तु पञ्चमे ।
केशवादिषु योनीनां मूर्तीनां वाचकैः परैः ॥ ५४४ ॥

उत्सवारम्भणदिनाद्यावत्तीर्थदिनान्तिमम् ।
वाचकैर्नवमूर्तीनां नवाहं व्रतमाचरेत् ॥ ५४५ ॥

यद्वा द्विषट्कमन्त्रेण सर्वत्रापि व्रतं चरेत् ।
ध्वजार्थांकुरनक्षत्राद्यावत्तीर्थदिनान्तिमम् ॥ ५४६ ॥

एवं व्रतसमायुक्त आचार्यः कृत्यमाचरेत् ।
संकल्प्योत्सवमादौ तु व्रतसंकल्पपूर्वकम् ॥ ५४७ ॥

ध्वजार्थमंकुरारोपं कुर्याद्यो देशिकोत्तमः ।
कुर्याद्ध्वजावरोहान्तं सर्वं कर्म स एव तु ॥ ५४८ ॥

प्राज्ञोपि नेतरः कुर्यात् ; यदि, कर्ता विनश्यति ।
मृते वा व्याधिते तस्मिन् तदनुज्ञामवाप्य च ॥ ५४९ ॥

नित्यानुष्ठानलोपाच्च वैधुर्यादिविदूषिते ।
अभ्यनुज्ञां गुरोस्तस्य संप्राप्य विधिपूर्वकम् ॥ ५५० ॥

शेषं कुर्यात्तु तत्पुत्रस्तच्छिष्यो वा समाहितः ।
अन्यो वा यदि वा भ्राता प्रायश्चित्तपुरस्सरम् ॥ ५५१ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे देवतावाहनान्तविधानं नाम षोडशोऽध्यायः ॥

---

श्रीः

# सप्तदशोऽध्यायः ॥

शाण्डिल्यः —

अथोत्सवविधानं तु वक्ष्यामि शृणु सत्तम ! ।
उत्सवारंभदिवसात् पूर्वस्मिन् पञ्चमेऽहनि ॥ १ ॥

अंकुरारोपणं कुर्यात् पूर्वोक्तविधिना ततः ।
पूर्ववद्यागसदनं कल्पयित्वा विभूषयेत् ॥ २

आचार्यान् देशिकेन्द्रस्तु चतुरो वरयेद्गुरुः ।
अथवाष्ट द्वादश वा विनीतान् संयतान् शुचीन् ॥ ३ ॥

तत्तत्कर्मप्रयोगेषु कुशलान् शास्त्रकोविदान् ।
सोष्णीषैरुत्तरीयैश्च गन्धद्रव्यैश्च संयुतान् ॥ ४ ॥

यजमानेन ते सर्वे शोभनीयाः प्रयत्नतः ।
केचिद्गुरुनियुक्तास्तु कुम्भमण्डलपूजनम् ॥ ५ ॥

कुर्युः, रथ्ये बलिं दद्युरन्ये बिम्बगतं विभुम् ।
पूजयेयुर्यथायोगं स्वयं वापि समाचरेत् ॥ ६ ॥

वरयेत् साधकान् चापि कञ्चकाद्यैस्तु भूषितान् ।
विनयादिगुणोपेतान् कुशलान् नयकोविदान् ॥ ७ ॥

उत्सवारम्भदिवसात् पूर्वेद्युश्च निशामुखे ।
कृताह्निको देशिकेन्द्रः प्रासादं संप्रविश्य च ॥ ८ ॥

मूलमूर्तिगतं देवमर्घ्याद्यैः संप्रपूज्य च ।
तत्पादगौ करौ कृत्वा देवं विज्ञापयेदिदम् ॥ ९ ॥

"भगवन् ! पुण्डरीकाक्ष ! करिष्ये कौतुकक्रियाम् ।
महोत्सवार्थं देवेश ! तदर्थं त्वं प्रसीद ओम्" ॥ १० ॥

इति विज्ञाप्य देवेशमावाह्योत्सवकौतुके ।
अर्घ्यगन्धादिनाभ्यर्च्य वासोभिर्विविधैः शुभैः ॥ ११ ॥

भूषणैर्दिव्यगन्धैश्चाप्यलंकृत्य विशेषतः ।
सौवर्णं यानमारोप्य शङ्खभेर्यादिसंयुतम् ॥ १२ ॥

छत्राद्यैश्च समायुक्तं प्रादक्षिण्यक्रमेण तु ।
आस्थानमण्टपं नीत्वा सौवर्णे भद्रविष्टरे ॥ १३ ॥

तत्र मुक्तावितानाद्यैरुपरिष्टाद्विभूषिते ।
सर्वसाधनसंयुक्ते समारोप्य विधानतः ॥ १४ ॥

पूजयित्वा जगन्नाथं प्रभूतान्नं निवेद्य च ।
कृत्वा संतर्पणान्तं च प्रासादं संप्रवेशयेत् ॥ १५ ॥

ततस्तु हेमजं पात्रं राजतं वा समाहरेत् ।
शालिजैस्तण्डुलैर्विप्र ! भारमात्रैः सुपूजिते ॥ १६ ॥

तदर्धैर्वापि तत्पादैः पडंशैर्वाष्टमांशकैः।
तदूर्ध्वं हेमजं सूत्रं क्षौमं कार्पासमेव च ॥ १७ ॥

पट्टजं पञ्चभिः सूत्रैश्चतुर्भिः सप्तभिस्तु वा।
कृतं न्यस्य सताम्बूलं तत्पात्रं विन्यसेत्ततः ॥ १८ ॥

गर्भाग्रमण्टपे पीठे शालिभिः परिकल्पिते।
भारमानैस्तदर्धैर्वा एवं शालिविनिर्मिते ॥ १९ ॥

पीठे पात्रान्तरं न्यस्येदापूपिकसमन्वितम्।
अर्घ्यादिना समभ्यर्च्य सम्यगाच्छाद्य वाससा ॥ २० ॥

पात्रद्वयं दीक्षितयोर्न्यस्त्वा शिरसि देशिकः।
यानादिके वा संस्थाप्य विभवानुगुणं द्विज! ॥ २१ ॥

सह ताभ्यां तु पात्राभ्यां नृत्तगीतादिसंयुतम्।
प्रदक्षिणं परिभ्रम्य सर्वेष्वावरणेष्वपि ॥ २२ ॥

एकस्मिन् वा चतुः कृत्वा ग्रामादौ वा प्रदक्षिणम्।
नीत्वैकधा ततो विप्र! प्रविशेन्मूलमन्दिरम् ॥ २३ ॥

यद्वा सुदर्शनोपेतं विष्वक्सेनं तु वा द्विज!।
खगेशं वा हनूमन्तं विभीषणसमन्वितम् ॥ २४ ॥

यानादिके समारोप्य भ्रामयेत्तु यथारुचि।
गर्भगेहं प्रविश्याथ देवदेवस्य सन्निधौ ॥ २५ ॥

पात्रद्वयं तु विन्यस्य आधारोपरि पूजयेत्।
द्वादशार्णेन मन्त्रेण अर्घ्यगन्धादिकैस्तथा ॥ २६ ॥

कृत्वा पुण्याहघोषं च अर्घ्याद्यैर्देवमर्च्य च।
प्रथमं देवदेवस्य मूलमूर्तिगतस्य च ॥ २७ ॥

बन्धयेत् कौतुकं सूत्रैर्हेमजैः पट्टजैस्तु वा।
हेमजं सूत्रमादाय गन्धेनालिप्य बन्धयेत् ॥ २८ ॥

देवस्य दक्षिणे हस्ते यात्रामूर्तिगतस्य तु।
जितन्ताख्येन मन्त्रेण शंखगीतादिसंयुतम् ॥ २९ ॥

स्पृष्ट्वा दक्षिणहस्तेन सूत्रमष्टशतं जपेत्।
श्रियो वामकरे कुर्यात् पट्टसूत्रेण कौतुकम् ॥ ३० ॥

श्रीसूक्तमुच्चरन् वापि तन्मन्त्रेण द्विजोत्तम!।
पुष्ट्यास्तु वामहस्ते तु क्षौमसूत्रेण बन्धयेत् ॥ ३१ ॥

कुर्यात् स्नपनबिंबस्य पट्टसूत्रेण कौतुकम्।
कौतुकं देशिकेन्द्रस्तु कार्पासेन स्वदक्षिणे ॥ ३२ ॥

करे तु द्वादशार्णेन बन्धयेच्च ततः परम्।
देवमर्घ्यादिनाभ्यर्च्य अपूपान् विनिवेदयेत् ॥ ३३ ॥

सर्वदोषप्रशान्त्यर्थं दर्पणादि च दर्शयेत्।
अनुक्तमत्र यत्किंचित् तत्सर्वं प्राग्वदाचरेत् ॥ ३४ ॥

एवं हि देवदेवस्य कृत्वा कौतुकबन्धनम्।
ततः समानयेद्देवं मण्टपे पुरतः स्थिते ॥ ३५ ॥

ततो देवं समभ्यर्च्य यावदात्मनिवेदनम्।
पूर्वोदितक्रमेणैव ततो वै स्नानविष्टरे ॥ ३६ ॥

स्नानासनोदितैर्भोगैः सर्वैरिष्ट्वा तु पूर्ववत्।
अलंकारासने नीत्वा पूजयेत् क्रमयोगतः ॥ ३७ ॥

नैवेद्यमधुपर्काद्यैर्द्रव्यैश्च विविधैस्ततः।
प्राग्वदिष्ट्वा ततः स्तोत्रैः स्तुवीत पुरुषोत्तमम् ॥ ३८ ॥

ततस्तु नूपुराद्यैश्च विविधैर्हेमभूषणैः।
सद्रत्नघटितैश्चापि तथा मुक्तामयैर्द्विज! ॥ ३९ ॥

किरीटाद्यैरलंकृत्य प्रणामैः सप्रदक्षिणैः।
यथोदितं प्रतिष्ठायां तथा शयनकल्पनम् ॥ ४० ॥

बिंबं चोपरि विन्यस्य शयने स्थापयेच्छुभे।
कोणेषु स्थापयेद्दीपान् पालिकाः सांकुरास्तथा ॥ ४१ ॥

तूर्यघोषैस्तथा वेदैः स्तोत्रैः स्तुत्वा मधुद्विषम्।
जागरेण निशां नीत्वा तस्मादुत्सवकौतुकम् ॥ ४२ ॥

प्रवेशयेद्गर्भगेहं प्रभातसमये ततः।
आचार्यः स्नानपूर्वं तु नित्यं निर्वर्त्य पूर्ववत् ॥ ४३ ॥

यागार्थमण्टपे सर्वसंभारान् संप्रवेश्य च।
अतीते याममात्रे तु पूर्वाह्णे देशिकः स्वयम् ॥ ४४ ॥

आचार्यैः साधकैश्चापि यजमानेन चान्वितः।
मुहूर्ते शोभने प्राप्ते प्रविश्य भगवद्गृहम् ॥ ४५ ॥

अग्रतो देवदेवस्य स्थित्वा विज्ञापयेदिदम्।
"प्रसीद देवदेवेश! उत्सवः क्रियते मया ॥ ४६ ॥

अस्मात् काललावद्यावत्पुष्पयागदिनान्तिमम् ।
त्वत्प्रीतये जगन्नाथ! यद्यत् कर्म करोम्यहम् ॥ ४७ ॥

तत्सर्वमात्मसात्कृत्वा कृपया मे प्रसीद ओम् ”।
इति विज्ञाप्य देवेशं मूलमूर्तिगतं विभुम् ॥ ४८ ॥

अर्घ्यगन्धादिनाभ्यर्च्य यात्रामूर्तिगतं तथा ।
पूजयित्वा जगन्नाथं पादुके विनिवेद्य च ॥ ४९ ॥

श्रुतिघोषैश्च पुण्याहघोषैर्मङ्गलनिस्स्वनैः ।
तथा जयजयारावैः शङ्खकाहलनिस्वनैः ॥ ५० ॥

भेरीपटहवादित्रनृत्तगीतसमन्वितैः ।
लाजानां प्रकरैः सार्धं पुष्पप्रकरमिश्रितैः ॥ ५१ ॥

मूर्तिपैर्देवदेवेशं तस्मादानीय ग्राह्यतः ।
देवं प्रागाननं कृत्वा दर्शयित्वा समागतान् ॥ ५२ ॥

पुरुषानुत्सवं द्रष्टुं यात्रोपकरणान्यपि ।
छत्रचामरपूर्वाणि विविधानि विशेषतः ॥ ५३ ॥

यानमारोप्य देवेशं सौवर्णप्रभयान्विते ।
अर्घ्याद्यैरर्चयित्वा तु पृथुकानि निवेद्य च ॥ ५४ ॥

वहेयुर्ब्राह्मणा यानं ध्यायन्तो विहगेश्वरम् ।
प्रथमावृतिमारभ्य रथ्यावरणपश्चिमम् ॥ ५५ ॥

प्रदक्षिणक्रमेणैव परिभ्रमणमाचरेत् ।
ब्राह्मणैर्ध्रियमाणैश्च कञ्चुकोष्णीषधारिभिः ॥ ५६ ॥

मौलिकैरातपत्रैश्च मायूरैश्च सुशोभनैः ।
हेमदण्डसमायुक्तैस्तालवृन्तैस्तथाविधैः ॥ ५७ ॥

पट्टजैर्विविधैश्चापि चामरैश्च सितासितैः ।
केतुदण्डैश्च विविधैर्वैजयन्तीविभूषितैः ॥ ५८ ॥

केवलै रत्नदण्डैश्च तथान्यैर्माङ्गलीयकैः ।
वन्दिवृन्दैश्च विविधैर्वीणावेणुस्वनैस्तथा ॥ ५९ ॥

सुवर्णशृंगघोषैश्च तथाऽन्यैर्मङ्गलस्वनैः ।
गणिकादेवदासीभिस्तथा नागरिकैर्जनैः ॥ ६० ॥

विप्रैर्वेत्रलताहस्तैः कञ्चुकोष्णीषभूषितैः ।
अन्यैश्च भगवद्भक्तैर्ब्राह्मणैः क्षत्रियादिभिः ॥ ६१ ॥

राजोचितैः परिकरैरन्यैश्च विविधैः सह ।
एवं कृत्वा तु देवेशं नयेदास्थानमण्टपे ॥ ६२ ॥

समारोप्य च सौवर्णे विष्टरे जगतांपतिम् ।
अर्घ्यं पाद्यं तथाचामं गन्धमाल्यैश्च धूपकम् ॥ ६३ ॥

अथार्हणजलं स्वच्छमपूपान् पृथुकानपि ।
तर्पणं नारिकेलोत्थरसमाचमनं तथा ॥ ६४ ॥

मुखवाससमोपेतं ताम्बूलं च क्रमेण तु ।
निवेद्य देवदेवाय उपहारांस्तु दर्शयेत् ॥ ६५ ॥

ततस्तु मण्टपात्तस्मादानयेद्यागमण्टपे ।
तत्र देवेशमारोप्य सौवर्णे भद्रविष्टरे ॥ ६६ ॥

भूषणादीनि सर्वाणि तत्काले तु विसर्जयेत् ।
स्नानपीठे समारोप्य नववस्त्रास्तृते विभुम् ॥ ६७ ॥

ततो यात्राधिवासार्थमारभेन्मूलपूजनम् ।
कुम्भस्थानसमीपे तु उपविश्यासने शुभे ॥ ६८ ॥

करशुद्ध्यादिपूर्वं तु सर्वं कृत्वा विधानतः ।
प्राग्वद्यजेद्विभुं साङ्गं कुम्भे च करकान्विते ॥ ६९ ॥

स्थापनं तोरणादीनामर्चनं प्राग्वदाचरेत् ।
अर्चनं कुमुदादीनामाचरेत्तु समाहितः ॥ ७० ॥

कुमुदादिद्वयोर्मध्ये गरुडं पूजयेत्ततः ।
पुण्डरीकादिमध्ये च चक्रं संस्थाप्य पूजयेत् ॥ ७१ ॥

शंखं चक्रं तथा लक्ष्मीं कुम्भं श्रीवत्समेव च ।
दर्पणं स्वस्तिकं मत्स्ययुग्मं वै मंगलाष्टकम् ॥ ७२ ॥

कुमुदादिसमीपे तु विन्यसेत् क्रमयोगतः ।
सवस्त्रधान्यपीठे तु यथावित्तानुरूपतः ॥ ७३ ॥

एकभारैर्द्विभारैर्वा शालिभिः परिकल्पिते ।
प्रत्येकं तण्डुलैश्चापि तिलैर्युक्ते सवस्त्रके ॥ ७४ ॥

अष्टमंगलविन्यासेष्वेवं सर्वत्र कल्पयेत् ।
प्राग्वत् स्थले समावाह्य मन्त्रेशं पूजयेत्ततः ॥ ७५ ॥

स्नपनानां पुरोक्तानां पूर्वस्मिन्नवके द्विज ! ।
अधमोत्तमसंज्ञं तु स्नपनं परिकल्पयेत् ॥ ७६ ॥

मण्डलस्यैन्द्रदिग्भागे तत्पश्चाद्बिंबसन्निधिम् ।
गत्वा समारभेत् पूजां यथोक्तविधिना द्विज ! ॥ ७७ ॥

सर्वं कृत्वा क्रमेणैव यावदात्मनिवेदनम् ।
कृत्वा पुण्याहघोषं च कुर्यात् कौतुकबन्धनम् ॥ ७८ ॥

स्नानासनादिभिर्भोगैरिष्ट्वा चामलकान्तिमम् ।
स्नपनं विधिवत् कृत्वा शिरः प्रोतादिकं तथा ॥ ७९॥

दत्वा समानयेद्देवं प्राग्भागे मण्डलस्य तु ।
सौवर्णे विष्टरे तत्र यजेत् सर्वेश्वरं विभुम् ॥ ८० ॥

अलंकारासनाद्यैश्च भोगैः परमपावनैः ।
प्रभूतमथ नैवेद्यं विनिवेद्य यथाक्रमम् ॥ ८१ ॥

सर्वं द्विजप्रदानान्तं कृत्वा वै कुण्डसन्निधिम् ।
गत्वा संस्कारपूर्वं तु सर्वनापाद्य तत्र तु ॥ ८२ ॥

पूर्णाहुत्यवसानं तु गत्वा वै बिंबसन्निधिम् ।
होमार्पणं समापाद्य संपूज्याज्यादिना ततः ॥ ८३ ॥

पितॄणां संविभागं तु कृत्वा दत्वा बलिं क्रमात् ।
विष्वक्सेनं नयेत् सांगं ततस्तस्माज्जगत्पतिम् ॥

आस्थानमण्टपे नीत्वा समारोप्य च विष्टरे ।
प्रातेऽपराह्नसमये कृत्वा संग्रहणं द्विज ! ॥ ८५ ॥

पूर्ववत्तु मृदादीनां कृत्वा ग्रामप्रदक्षिणम् ।
पूर्वोदितविधानेन कुर्यादंकुररोपणम् ॥ ८६ ॥

तत्काले देवदेवस्य विभवस्यानुगुण्यतः ।
विधिवत् पूजनं कृत्वा प्रभूतान्नं निवेदयेत् ॥ ८७ ॥

स्थले भस्मनिभे पूर्वं पूजयेन्निष्फलं भवेत् ।
योजयित्वा तु कुम्भस्थे वर्तयेन्मण्डलं ततः ॥ ८८ ॥

सितार्थैः पावनै रागैस्ततः कुम्भे समर्पयेत् ।
यथावद्देवदेवेशं पूजयेन्मण्डले ततः ॥ ८९ ॥

यथोक्तेन विधानेन गत्वा वै बिंबसन्निधिम् ।
तत्र संपूजयेद्देवं महता विभवेन तु ॥ ९० ॥

अग्नौ सन्तर्पणं कुर्यात् यथोक्तविधिना ततः ।
गत्वा बिंबसमीपे तु कृत्वा होमनिवेदनम् ॥ ९१ ॥

सर्वं तु संविभागान्तं क्रमात् कृत्वा ततःपरम् ।
विभवे सति वै कुर्याद्भूयः संपूजनं विभोः ॥ ९२ ॥

होमान्तमखिलं कृत्वा ततस्त्वास्थानमण्टपात् ।
नयेत्तु देवदेवेशं प्रासादमुखमण्डपे । ॥ ९३ ॥

प्रागाननं समारोप्य सौवर्णे भद्रविष्टरे ।
यात्रार्थं देवदेवस्य कुर्यात् कौतुकबन्धनम् ॥ ९४ ॥

आदाय चरुपूर्वाणि बलिद्रव्याणि होमयेत् ।
प्रत्येकं मूलमन्त्रेण द्वात्रिंशत्परिसंख्यया ॥ ९५ ॥

ध्यात्वा ध्यात्वा तु होतव्यं तत्तद्रात्र्यधिदैवतम् ।
भवेत् प्रथमरात्रं तु वासुदेवाधिदैवतम् ॥ ९६ ॥

संकर्षदैवतं विद्धि द्वितीयं तु, तृतीयकम् ।
प्रद्युम्नदैवतं, चान्यदनिरुद्धाधिदैवतम् ॥ ९७ ॥

भवेत् पञ्चमरात्रं यत् तन्नारायणदैवतम् ।
हयग्रीवाधिदैवं तु पष्ठरात्रमुदाहृतम् ॥ ९८ ॥

सप्तमं वैष्णवं त्वन्यन्नरसिंहाधिदैवतम् ।
वराहदैवतं रात्रं नवमं द्विजसत्तम ! ॥ ९९ ॥

एकाहमुत्सवं विद्धि वासुदेवाधिदैवतम् ।
त्र्यहं तु वासुदेवादिप्रद्युम्नान्ताधिदैवतम् ॥ १०० ॥

पञ्चाहं वासुदेवादिपञ्चमूर्त्यधिदैवतम् ।
सप्ताहं वासुदेवादिसप्तमूर्त्यधिदैवतम् ॥ १०१ ॥

द्वादशाहोत्सवं विप्र ! केशवाद्यधिदैवतम् ।
सर्वं पञ्चदशाहादि वासुदेवाधिदैवतम् ॥ १०२ ॥

दद्यात् प्रथमरात्रे तु बलिं बलिविधानवत् ।
पललै रजनीचूर्णैः सलाजदधिसक्तुभिः ॥ १०३ ॥

दिनेष्वपि च सर्वेषु द्रव्यैरेभिर्बलिं ददेत् ।
यद्वा द्वितीयरात्रे तु दद्याच्च तिलतण्डुलैः ॥ १०४ ॥

दद्यात् तृतीयरात्रौ तु धानास्त्वंबिकलाजकैः ।
दद्याच्चतुर्थरात्रे तु बलिं देशिकसत्तमः ।
नालिकेरपयःसक्तुशालिपिष्टैर्विमिश्रितैः ।
पञ्चमे तु बलिं दद्यात् पक्वान्नैः सहाक्षतैः ॥ १०५ ॥

षष्ठरात्रे बलिं दद्यादपूपैश्चरुणा सह ।
अथवा सर्वरात्रेषु प्रदद्याच्चरुणा सह ॥ १०७ ॥

तत्तद्दिनोदितैर्द्रव्यैर्बलिं तु द्विजसत्तम ! ।
सप्तमे तु गुलान्नेन, पायसान्नेन चाष्टमे ॥ १०८ ॥

नवमे कृसरान्नेन बलिं दद्याद्विचक्षणः ।
द्वादशाहोत्सवे विप्र ! माषान्नं दशमेऽहनि ॥ १०९ ॥

शुद्धान्नमथवा विप्र ! मुद्गान्नं तु परेऽहनि ।
द्वादशे सर्वबलयः शुद्धान्नं शालिजं तु वा ॥ ११० ॥

क्षीरं दध्याज्यसंयुक्तं गुलखण्डसमन्वितम् ।
इतः परं तु सर्वत्र शुद्धान्नं पायसं तु वा ॥ १११ ॥

एकाहादिचतुष्के तु भवेत्तत्तद्दिनोदितम् ।
प्रत्येकमाढकं ग्राह्यं बलिद्रव्यं द्विजोत्तम ! ॥ ११२ ॥

तदर्धं वाऽथ पादं वा यथावित्तानुरूपतः ।
एवं द्रव्याणि हुत्वा तु अलंकृत्य विशेषतः ॥ ११३ ॥

यात्राबिंबगतं देवं विचित्रैर्वसनैस्तथा ।
विचित्रैर्भूषणैश्चापि माल्यैर्नानाविधैस्तथा ॥ ११४ ॥

मुहूर्ते शोभने प्राप्ते सर्वमंगलसंयुतम् ।
स्यन्दनं वा गजं वापि यानं सौपर्णमेव वा ॥ ११५ ॥

सपुष्पहेमप्रभया युक्तं पुष्पाद्यलंकृतम् ।
सौवर्णेन विमानेन युक्तं मायूरकेन वा ॥ ११६ ॥

समानीय तु संप्रोक्ष्य ध्यात्वा गरुडरूपिणम् ।
तन्मन्त्रेण समभ्यर्च्य यानमर्घ्यादिभिस्ततः ॥ ११७ ॥

कृत्वा पुण्याहघोषं च श्रुतिघोषसमन्वितम् ।
शङ्खतूर्यादिसंयुक्तं प्रादक्षिण्यक्रमेण तु ॥ ११८ ॥

याने तत्र समारोप्य यात्रामूर्तिगतं विभुम् ।
पाद्यार्थं तत्र देवाय सार्घ्यं पाद्यं तथैव च ॥ ११९ ॥

आचामं गन्धमाल्ये च दीपं धूपं तथैव च ।
अर्हणं मधुपर्कं च नैवेद्यं विविधं तथा ॥ १२० ॥

पृथुकाद्यं पानकं च तर्पणाचमने तथा ।
ताम्बूलं निनिवेद्याथ जपं कृत्वा विधानतः ॥ १२१ ॥

अग्नौ संतर्पणं कुर्यात् तत्काले वापि होमयेत् ।
बलिद्रव्याणि सर्वाणि यथाकालानुरूपतः ॥ १२२ ॥

रथयाने विशेषं तु समाकर्णय सांप्रतम् ।
मुक्ताप्रपावितानैश्च सौवर्णैर्मञ्जरीगणैः ॥ १२३ ॥

मुक्तादामसमेतैश्च विचित्रैः पुष्पदामभिः ।
हैमेन च वितानेन प्रभया च विशेषतः ॥ १२४ ॥

मध्यतो भद्रपीठेन सौवर्णेन तथैव च ।
ध्वजैश्च विविधै रम्यं पताकाभिश्च सर्वतः ॥ १२५ ॥

भूषयेद्रथयानं तु तथा गरुडकेतुना ।
तत्र देवं समारोप्य पूजयेत् पूर्ववर्त्मना ॥ १२६ ॥

आचार्याः साधकाश्चापि रथस्योर्ध्वतलस्थिताः ।
तस्याधस्तात् स्थले स्थाप्याः पश्चिमे छत्रधारकाः ॥

तत्र तत्पार्श्वतः स्थाप्यौ मायूरच्छत्रधारिणौ ।
दक्षिणोत्तरपार्श्वस्थावग्रे चामरधारिणौ ॥ १२८ ॥

सारथिस्तत्स्थले स्थाप्यस्त्वग्रतो मध्यदेशतः ।
ततस्तु गरुडाद्यैश्च चक्रेण गरुडेन वा ॥ १२९ ॥

अष्टाभिर्मंगलैश्चापि दीक्षितैर्ब्राह्मणैर्वृतैः ।
अर्घ्यगन्धादिभिश्चैव सार्धं घण्टारवैस्तथा ॥ १३० ॥

शङ्खभेर्यादिभिश्चैव छत्रेण दीपधारकैः ।
आचार्यः साधको वापि बलिं दद्याद्विधानतः ॥१३१॥

प्रासादद्वारमारभ्य ग्राममध्यान्तमेव च ।
प्रथमावृतिमारभ्य सर्वेष्वावरणेष्वपि ॥ १३२ ॥

देवयानं परिभ्रम्य प्रादक्षिण्यक्रमेण तु ।
रथ्यावरणपर्यन्तं तत्पश्चाद्भ्रामयेद्द्विज ! ॥ १३३ ॥

ग्रामे वा नगरे वापि पत्तने वा महामते ! ।
बृहति स्यन्दने याने यानेनान्येन वान्तरा ॥ १३४ ॥

भ्रामयित्वा तु तत्पश्चाद्बृहति स्यन्दनादिके ।
देवेशं तु समारोप्य भ्रामयेद्ग्रामवीथिषु ॥ १३५ ॥

देवस्य पुरतो दूराद्गच्छेयुर्बलिदायिनः ।
ध्वजदण्डधराः पश्चाच्छङ्खकाहलधारकाः ॥ १३६ ॥

भेरीपटहपूर्वाणां वाद्यानां घोषणोन्मुखाः ।
तत्पृष्ठे गीतकाश्चापि वन्दिवृन्दास्तथैव च ॥ १३७ ॥

सुवेषा भगवद्भक्तास्तथैव गणिकाजनाः ।
दासीगणाश्च तत्पृष्ठे शोणदण्डवहा जनाः ॥ १३८ ॥

लीलांगानि विचित्राणि धारयन्तस्तथैव च ।
वहन्तः पादुकादीनि ततो देवस्य पार्श्वतः ॥ १३९ ॥

अग्रतः पृष्ठतश्चापि जनाश्चामरधारिणः ।
आतपत्रांश्च विविधान् तालवृन्तांस्तथैव च ॥ १४० ॥

धारयन्तो द्विजाश्चापि ततो देवस्य दक्षिणे ।
" कर्मारंभादि " पठतो विप्रानेकायनान् न्यसेत् ॥

ऋक्सामपूर्वान् वामेपि पृष्ठतो वा निवेशयेत् ।
सुमृद्धूपपात्रांश्च वहन्तः पृष्ठतस्तथा ॥ १४२ ॥

पुरतो "ऽस्त्रं" स्मरन् यायात् स्वयं विघ्नांस्तु सूदयन् ।
अनेकशतसंख्यांश्च दीपानतिसमुज्ज्वलान् ॥ १४३ ॥

धारयन्तो जना विप्र! देवस्योभयपार्श्वयोः ।
गच्छेयुः पङ्क्तिरूपेण यावन्तो बलिवाहकाः ॥ १४४ ॥

सर्वाणि राजचिह्नानि वहन्तो देवसन्निधौ ।
गच्छेयुरन्ये भक्ताश्च ब्राह्मणाः क्षत्रियास्तथा ॥ १४५ ॥

वैश्याः शूद्राश्च चत्वारो ह्याश्रमस्थास्तथैव च ।
सर्वशास्त्रेषु कुशला भगवद्भाविनस्तथा ॥ १४६ ॥

सेवेरन् सर्वतोदिक्कं वीक्षमाणाः परं विभुम् ।
ग्रामस्यैन्द्रादियोगेन दिशासु विदिशासु च ॥ १४७ ॥

मध्ये च कुमुदादीनां सगणानां क्रमेण तु ।
पीठिकासु बलिं दद्यान्निर्मितासु पुरैव तु ॥ १४८ ॥

कुमुदादेर्गणानां तु नामानि क्रमशः शृणु ।
उत्कटः प्रकटश्चैव उन्मुखो विमुखस्तथा ॥१४९॥

अश्वग्रीवोऽश्ववदनः अश्वजिह्वस्तथैव च ।
हस्तिवक्त्रश्च कुमुदः हस्तिपादश्च केशवः ॥ १५० ॥

वामनो नरकश्चापि नरो मर्दन एव च ।
मन्ददृष्टिश्च कन्तुश्च तथा कन्तुकलोचनः ॥ १५१ ॥

पटहाक्षो विशालाक्षः क्षामकः क्षमकस्तथा ।
पाण्डरः पाण्डुपृष्ठश्च दुर्दिनः सुदिनस्तथा ॥ १५२ ॥

वामदेवो महादेवो महाग्निर्मधुसूदनः ।
कनकः कालकश्चैव भावनो यवनस्तथा ॥ १५३ ॥

भानुमान् भानुवेगश्च भास्करश्चाप्यभास्करः ।
विश्वसेनो विसेनश्च विष्वक्सेनो विसारणः ॥ १५४ ॥

विस्तारो निस्तरश्चैव विदण्डी दण्ड एव च ।
कामदः कामुकश्चापि कामभृत् कामनाशनः ॥ १५५ ॥

पञ्चाशच्च गणा ह्येते प्राचीं दिशमुपाश्रिताः ।
एते पारिषदाः प्रोक्ताः कुमुदस्य वशानुगाः ॥

शतं शतं गृहगणाः एकैकस्यानुयायिनः ।
एषां कुमुदपूर्वाणां क्रमेण च बलिं हरेत् ॥

पार्श्वस्थमण्डलेष्वेवं गृहेभ्यस्तु बलिं हरेत् ।
देवा एते गृहाश्चापि ऐन्द्रे तु बलिभागिनः ॥

आग्नेयो निधनश्चैव अग्निजिह्वो हुताशनः ।
अग्निरूपोऽग्निवर्णश्चाप्यग्निवर्णोऽहिरेव च ॥ १५९ ॥

अग्निवक्त्रो महावक्त्रो महासेनो महोदरः ।
करालः काकजिह्वश्च काकवक्त्रोऽग्निवक्त्रकः ॥ ११०॥

मण्डुर्मण्डूकवक्त्रश्च देवो देवलकस्तथा ।
शर्वकः शमकश्चापि शंकुः शंकुश्रवास्तथा ॥ १६१ ॥

मारीचो द्रोणमारीचो महिपो माहिषस्तथा ।
कुम्भनासो विनासश्च कुम्भकर्णो विकर्णकः ॥ १६२ ॥

विदारी विक्रमश्चैव मस्करी मस्करस्तथा ।
सूकरः सूकरास्यश्च शशः शशमुखस्तथा ॥ १६३॥

सिंहः सिंहमुखश्चैव नरसिंहो नरस्तथा ।
कालधृक्कालसूत्रश्च सूत्रकः सूत्र एव च ॥ १६४ ॥

विनाली नालकण्ठश्च आग्नेयीं दिशमाश्रिताः ।
कुमुदाक्षगणा ह्येते संयुक्ता आसुरैर्गणैः ॥

आग्नेय्यां पीठिकायां तु कुमुदाक्षबलिं हरेत् ।
धर्मो धर्मधरो धर्मा धर्मराजो धनुर्धरः ॥ १६६ ॥

विनयः प्रश्रयश्चैव निश्चयो निर्गुणस्तथा।
अलसः कुणपश्चैव क्रव्याहश्च कुंजरः ॥ १६७ ॥
प्रांशुर्दमननिष्कोपौ निरनुक्रोशनिर्ममौ।
विभवोऽविभवश्चैव हुताशो वहुरेव च ॥ १६८ ॥
ऊर्ध्वरक्षणसंज्ञश्च पकलः पाकलस्तथा।
कंकटः कटकश्चैव अवटः शंखचक्रिणौ ॥ १६९ ॥
गदी खड्गी च शार्ङ्गी च तथा शार्ङ्गधरो मुने!।
वासुदेवोऽपि भद्रश्च केतुमान् केतुकस्तथा ॥ १७० ॥
क्षमी च ज्वलनश्चापि किन्नरोऽश्वत्थ एव च।
सुतः सुजपनश्चापि जपः पश्चिम एव च ॥ १७१ ॥
कैश्किकश्च तथा संज्ञो धाडवश्चाक्षमी तथा।
गणाः पश्चाशदेते तु दक्षिणां दिशमाश्रिताः ॥
पुण्डरीक वशाश्चैते पितृगृहसमन्विताः।
सर्वत्रैवं समुद्दिष्टाः पञ्चाशच्छक्तिका गृहाः ॥
प्रदद्यात् पुण्डरीकाक्षायैभिर्युक्ताय वै वलिम्।
निष्कृतिः प्रकृतिश्चैव सुकृतिर्विकृतिस्तथा ॥ १७४ ॥
दारुणो दमकश्चैव रक्षको लक्षकस्तथा।
माधवो मांसकश्चैव निष्ठुरः खरभाषणः ॥ १७५ ॥
प्रलंबो लम्बकश्चैव प्राणनः प्रणयस्तथा।
वीरसेनोंगदश्चैव विभापश्च विभीषणः ॥ १७६ ॥
रक्ताक्षो लोहिताक्षश्च रक्तजिह्वो विजिह्वकः।
विद्युत्केशो विशालाक्षो विक्षरो वीरहा तथा ॥१७७॥
अक्षरः प्राक्षरश्चैव कामरूपविरूपिणौ।
सर्वगः सर्वविद्घोरः संभवः प्रभवस्तथा ॥ १७८ ॥
वारुणो वसुरेवापि विमर्दो दमनस्तथा।
वैकर्तनो विकर्ता च कपर्दी च प्रभुस्तथा ॥ १७९ ॥
कन्दकी कन्दकश्चापि नाकी च वरुणोऽरुणः।
गणा एते च पञ्चाशन्नैर्ऋतिं दिशमाश्रिताः ॥
पातुगृहैस्तु संयुक्ता वामनस्यानुगा इमे।
एभिर्युक्ताय विधिना वामनाय वलिं ददेत् ॥

वरुणो वारुणश्चैव पाशी पाशधरो गुरुः।
क्षेपणः क्षोभणश्चैव नारदः सर्वदो रविः ॥ १८२ ॥
सुमना नामनो हंसो वैकुण्ठः परमः परः।
हनुमान् वसुमान् भद्रो भद्रवः प्रभवस्तथा ॥ १८३ ॥
महाकर्णो विकर्णश्च शशकः शलकः पिकः।
वानरो नरकश्चैव कार्ष्णिः कर्णधरोऽशुमान् ॥ १८४ ॥
चक्रोऽग्रश्च तथा चक्री चक्रनाभो विनाभकः।
करभः कुरभश्चैव दाक्षिणो दक्षिणः सुहृत् ॥ १८५ ॥
दुर्गन्धः पूतिगन्धश्च तार्क्ष्यो गरुड एव च।
विरोधो रोधको रोधः कंकणश्च वृकोदरः ॥ १८६ ॥
एते गणाश्च पञ्चाशत् पश्चिमां दिशमाश्रिताः।
शंकुकर्णवशा ह्येते पाशग्रहगणान्विताः ॥
सहैभिः शंकुकर्णाय पीठिकायां वलिं ददेत्।
मरुर्मारुतगो रुवी आखुर्वायुसुतोऽनिलः ॥ १८८ ॥
गलर्तो वर्तकः कंको मार्गणः प्रांकणोऽचलः।
वलो वलनिधिर्वीरो विरोधो रोधको विधिः ॥ १८९ ॥
सिद्धवः सुयवश्चैव शंकरो धीरकस्तथा।
माली मालाधिधिर्वसुः समर्थः सुमहोत्सवः ॥ १९० ॥
कर्कटः कटकश्चैव गन्धो गन्धवहः परः।
सिकतः सिकरोगी च सेवकः सेवनः सवः ॥ १९१ ॥
औषधो भेषजो वापि रोगी रोगभवस्तथा।
कारणः करणः कर्ता गरवीरोऽचलस्तथा ॥ १९२ ॥
वलश्च वाकुवाहश्च सुचारश्च तथैव च।
गणाः पञ्चाशदेते तु वायव्यां दिशमाश्रिताः ॥
सर्वनेत्रानुगान् नित्यं गन्धर्वगृहसंयुताः।
प्रदद्यात् सर्वनेत्राय एभिर्युक्ताय वै वलिम् ॥
सोमः सोमकलः सोम्यः सामवित् सामनायकः।
सुधा सुधाता धाता च सुराध्यः काष्ठकः कलिः ॥
कालधृक्कालचक्रश्च कालकूटविषो वल.।
अमृतोऽमृतनाथश्च केयूरी केवली वली ॥ १९३ ॥

विष्णुः कृष्णपिशंगांगी रेखालेखः पिक शुकः ।
लूयकश्च शुकश्चैव श्येनः श्येनमुखस्तथा ॥ १९७ ॥

मार्जारो मरुभृद्व्यालो गुल्मः कणचकः कणः ।
शेषो विशेष उच्छेषः कर्दमः पूतिविग्रहः ॥ १९८ ॥

साम्बः संवत्सरश्चैव वेगी वेगधरो मरुत् ।
गणाः पञ्चाशदेते तु सोमस्य दिशमाश्रिताः ॥

सुमुखस्य वशा ह्येते यक्षग्रहसमन्विताः ।
सुमुखाय वलिं दद्यादेभिः सह यथाविधि ॥

ईशान ईश्वरो व्यापी व्यसनो विनशो बुधः ।
धरो वको विशो वादः शकुनिः शकटो वटः ॥ २०१ ॥

वृक्षः कक्षः क्षमी क्षान्तिर्मातृरोमा कपिंजलः ।
ब्रह्मण्यो ब्रह्मविद्ब्रह्मी ब्रह्मात्मा ब्रह्मसाधनः ॥ २०२ ॥

वेदी वेदविदुद्गन्धः शंकरः शांकरस्तथा ।
धीमान् विसृष्टिरिष्टात्मा दुष्टात्मा दुष्टकर्मकृत् ॥

विलेता विकचो वादी नोदी विपक एकभुक् ।
सर्वभुक् सर्वगः सर्वः सर्वभंगः सनातनः ॥ २०४ ॥

गोविन्दो गोपतिश्चैव गोप्ता चैव महेश्वरः ।
पञ्चाशच्च गणा ह्येते ऐशानीं दिशमाश्रिताः ॥

सुप्रतिष्ठवशा ह्येते पिशाचगृहसंयुताः ।
सुप्रतिष्ठितसंज्ञाय एभिः सार्धं बलिं ददेत् ॥

सिद्धो धाता विधाता च धाता चैव प्रजापतिः ।
लोकेशो लोककृत् कर्ता स्रष्टा ब्रह्मा तथात्मभूः ॥

सुतापश्च तुलश्चैव तथा वै रीतिवर्धनः ।
अव्यक्तो गुणवान् गौणो गुणभुक्च तथैवहि ॥ २०८ ॥

उद्गीतः प्रणवश्चापि हिरण्यगर्भसंज्ञितः ।
विरिञ्चः पुष्करश्चैव भासनो भास एव च ॥ २०९ ॥

विकर्णो विजयश्चैव तथा चैव रथंतरः ।
छन्दो यजुस्तथा ऋक् च अथर्वा च ततः परम् ॥

मरीचिरंगिराश्चैव पुलहः क्रतुरेव च ।
वसिष्ठश्च प्रचेताश्च शलभो भीष्म एव च ॥ २११ ॥

हेमन्तः शिशिरश्चापि कुसुमाकरसंज्ञितः ।
कलहश्च विरागिश्च अमर्षो रोषणस्तथा ॥ २१२ ॥

शोषणश्च गतिश्चैव हर्षणो वर्धनस्तथा ।
गणाः पञ्चाशदेते तु व्योमसिद्धगृहान्विताः ॥

प्रदद्यात् पृश्निगर्भाय सार्धमेभिर्बलिं द्विज ! ।
मनुष्यो मानवश्चैव मण्डको मानवस्तथा ॥ २१४ ॥

मकरश्च तथा चोरः कंपश्चैव प्रकंपनः ।
अलंपटश्च पटद· योजको भजको ग्रहीः ॥ २१५ ॥

रेचको रोचको मायो धारो वारो रसश्चलः ।
चापालिकः कपिर्वाणो व्रजनो गर्जनो गुडः ॥ २१६ ॥

तित्तरश्चटको ध्वाङ्क्षो बलीवर्दो महानटः ।
हर्षो धर्मनशास्ता च शमको दुन्दुभिः शठः ॥ २१७ ॥

कुक्षिः कुमारः कायस्थो लावकोऽप्रशुनः शुनः ।
लवणो रवणो ऋद्धो राजसस्तामसोऽचलः ॥ २१८ ॥

कल्याणो भगदत्तश्च पृथिवीतलसंस्थिताः ।
गणाः पञ्चाशदेते तु भूमिग्रहसमन्विताः ॥

महाबला दुराधर्षा मानवस्य वशानुगाः ।
मानवाय बलिं दद्यादेभिर्युक्ताय साधकः ॥

एते पञ्चाशतः प्रोक्ता गणानामधिपा द्विज ! ।
ऐकैकस्य भवेदेषां गणाश्चान्ये शतं शतम् ॥ २२१ ॥

एवं पञ्चाशत्सहस्रं एतेषां परिचारकाः ।
चत्वरे च चतुष्के च सभायां ग्राममध्यके ॥ २२३ ॥

ग्रामद्वारेषु सर्वेषु तिष्ठन्ति विविधायुधाः ।
जनानयोरयान् बाधन्ते तथा पाषण्डिनोपि च ॥

नद्यादिषु च देशेषु संचरन्ति यथारुचि ।
दशानां कुमुदादीनां गणेशानां द्विजोत्तम ! ॥ २२४ ॥

गणानामुत्कटादीनामुदितानां क्रमेण तु ।
प्रणवाद्यैर्नमोन्तैस्तु स्वैस्वैर्नामभिरेव च ॥ २२५ ॥

अर्घ्यं गन्धं तथा माल्यं धूपं गन्धाम्बुपूर्वकम् ।
बलिं भूयो जलं चापि ताम्बूलं क्रमशो ददेत् ॥ २२६ ॥

गीतनृत्तादिकं सर्वं पूर्ववत् परिकल्पयेत् ।
पञ्चाशतां सहस्राणां गणशो गणशो द्विज ! ॥ २२७ ॥
नमः पारिषदेभ्यश्च इत्युक्त्वा बलिविस्तरम् ।
भूमौ प्रतिदिशं कुर्यात् सर्वशान्तिकरं शुभम् ॥२२८॥
पञ्चाशतां सहस्राणा एकैकस्य पृथक् पृथक् ।
शतं शतं परिवारा एते ग्रहगणाः स्मृताः ॥ २२९ ॥
एषां ग्रहगणानां तु परिवाराः सहस्रशः ।
असंख्येयाश्चरन्तस्तु सर्वतः पृथिवीमिमाम् ॥ २३० ॥
संचरान्ति ग्रहगणा उक्ता दशविधा महीम् ।
देवा दैत्याश्च पितरः राक्षसा नागनायकाः ॥ २३१ ॥
गन्धर्वयक्षाः पैशाचाः सिद्धाश्चापि धरागणाः ।
एते दशविधा ब्रह्मन् ! दशदिक्षु स्थिताः सदा ॥ २३२॥
उक्ताः पञ्चदशानां तु एतेषां नायका गणाः ।
तेषां तु पूजया सर्वे सुखं यान्ति न संशयः ॥ २३३ ॥
पीठोर्ध्वे कुमुदादीनां बलिं दद्याद्विचक्षणः ।
भूतले गोमयाद्येन लेपिते वा यथारुचि ॥ २३४ ॥
गणानामुत्कटादीनां बलिं तत्परितो ददेत् ।
अन्येषामपि सर्वेषां तद्बहिर्विकिरेद्बलिम् ॥ २३५ ॥
अमुकानां च सर्वेषां ग्राममध्ये बलिं क्षिपेत् ।
कुमुदादिगणेशानाम् अनुकल्पे विधानतः ॥ २३६ ॥
बलिं दत्वाऽवशिष्टानां सर्वेषामपि वै पृथक् ।
नमः पारिषदेभ्यश्चेत्युक्त्वा तस्माद्बलिं द्विज ! ॥ २३७ ॥
अवशिष्टं बलिद्रव्यं ग्राममध्ये विनिक्षिपेत् ।
संतर्पणार्थं भूतानां सर्वदेशनिवासिनाम् ॥ २३८ ॥
राज्यामावाहनं ब्रह्मन् ! ध्वजारोहणवासरे ।
न कृतं कुमुदादीनां सगणानां ततोद्य तु ॥ २३९ ॥
तेषामावाहनं कुर्याद् बलिं दद्याद्विधानतः ।
ध्वजारोहदिने पूर्वं तेषामावाहने कृते ॥ २४० ॥
तद्वासरात् समारभ्य यावदुत्सववासरम् ।
पायसेन बलिं दद्याच्छुद्धान्नेनाथवा द्विज ! ॥ २४१ ॥

दिवा वापि रजन्यां वा कालयोरुभयोस्तु वा ।
भवेत् कर्तुर्महान् दोष आहूतानामनर्चनात् ॥ २४२ ॥
केनापि हेतुना यत्र बलिदानं न शक्यते ।
यात्रारंभदिने तत्र तेषामावाहनं चरेत् ॥ २४३ ॥
एवन्तु बलिसंयुक्तं देवेशं भ्रामयेद्द्विज ! ।
प्रादक्षिण्येन वै ग्रामे नगरे वापि पत्तने ॥ २४४ ॥
यात्रायां वर्तमानायां देवदेवाय भक्तितः ।
मुखवासं सताम्बूलं बहुशोऽथ निवेदयेत् ॥ २४५ ॥
चन्दनं श्रमशान्त्यर्थं कर्पूराद्यैः सुभावितम् ।
प्रदद्याद्देवदेवाय माल्यानि विविधान्यपि ॥ २४६ ॥
शीतलं तर्पणजलं नारिकेलजलान्वितम् ।
श्रमशान्तिनिमित्तानि अन्यान्यपि निवेदयेत् ॥ २४७ ॥
दिगष्टके तु ग्रामादेस्तन्मध्ये च विशेषतः ।
गीतकैर्विविधैर्नृत्तैस्तन्त्रीवाद्यसमन्वितैः ॥ २४८ ॥
शंखभेरीमृदंगाद्यैर्देवेशं परितोषयेत् ।
एवं देवं परिभ्राम्य ग्रामादौ बलिसंयुतम् ॥ २४९ ॥
पुनः प्रदक्षिणं कृत्वा प्रासादावरणेषु च ।
प्रासादद्वारदेशे तु देवदेवस्य भक्तितः ॥ २५० ॥
अर्घ्यं पाद्यं तथाचामं गन्धं माल्यं च धूपकम् ।
निवेद्य देवदेवेशं स्वस्थाने सन्निवेशयेत् ॥ २५१ ॥
ततो यागगृहं गत्वा देशिकः सुसमाहितः ।
तिलैराज्यैश्च पूर्णान्तं यात्राहोमं समापयेत् ॥ २५२ ॥
एवं बलिसमायुक्तमन्येषु दिवसेष्वपि ।
अह्नि रात्रौ तु देवस्य परिभ्रमणमारभेत् ॥ २५३ ॥
तीर्थयात्रादिने कुर्यात् परिभ्रमणमह्नि वै ।
कुर्यात् स्नपनबिंबे च स्नपनं तु दिवानिशम् ॥ २५४ ॥
आरम्भदिनमारभ्य यावदन्तिमवासरम् ।
तत्रापि चांकुरारोपं सप्तमे पञ्चमे तु वा ॥ २५५ ॥
वासरे पूर्ववच्चापि कुर्यात् कौतुकबन्धनम् ।
द्वितीये वासरे प्राप्ते देवमास्थानमण्टपे ॥ २५६ ॥

यागागारेऽथवानीय समारोप्य च विष्टरे ।
ततो यागगृहं गत्वा देशिको विधिना यजेत् ॥ २५७ ॥

कलशे मण्डले चैव ततो गत्वा तु मण्टपम् ।
पूजयेद्देवदेवेशं महता विभवेन तु ॥ २५८ ॥

ततो यागगृहे सम्यग्वह्नौ सन्तर्प्य पूर्ववत् ।
ततस्तस्मात् समानीय महदास्थानमण्टपम् ॥ २५९ ॥

तत्र सम्यक् समभ्यर्च्य देवं नीराजनान्तिमम् ।
महाहविर्निवेद्याथापूपादिसमन्वितम् ॥ २६० ॥

तस्माद्देवं समानीय मण्टपे यागनिर्मिते ।
तत्र देवं समभ्यर्च्य अर्घ्यपाद्यादिभिस्ततः ॥ २६१ ॥

अग्नौ सन्तर्प्य विधिवत् पूर्णाहुत्यावसानिकम् ।
अलंकृतं तु देवेशं पूर्ववद्वसनादिकैः ॥ २६२ ॥

यानादिकं समारोप्य पूर्वोक्तक्रमयोगतः ।
भ्रामयित्वा तु देवेशं ग्रामे त्वन्तः प्रवेशयेत् ॥ २६३ ॥

मण्टपे देवदेवेशमानीय स्नानविष्टरे ।
समारोप्यार्घ्यपाद्यैश्च दद्यादाचमनं विभोः ॥ २६४ ॥

गन्धं पुष्पं च धूपं च दीपं नीराजनान्तिमम् ।
वेदघोषैश्च गीताद्यैरर्हणोदपुरस्सरम् ॥ २६५ ॥

कदलीफलसंयुक्तमपूपं गुलसंयुतम् ।
पानकं तर्पणजलं नालिकेररसान्वितम् ॥ २६६ ॥

ताम्बूलं शशिसंयुक्तम् ततो यात्रार्थकल्पितम् ।
वसनाद्यं परित्यज्य स्नानशाटीं निवेद्य च ॥ २६७ ॥

तैलेनाभ्यंजनं कृत्वा समुद्वर्त्य यथाविधि ।
शिरस्यामलकं दत्वा संस्नाप्य बहुभिर्जलैः ॥ २६८ ॥

वर्णकेन समालिप्य क्षालयित्वा तु वारिणा ।
समालिप्य सुगन्धेन भक्तितश्चन्दनादिना ॥ २६९ ॥

सहस्रधारया विप्र ! स्नानं कृत्वा ततः परम् ।
दत्वा सचन्दनं पश्चात् शिरः प्लोतादिशाटकम् ॥

दत्वा देवं समारोप्य तदन्यस्मिंस्तु विष्टरे ।
करशुद्ध्यादि सर्वं तु कृत्वान्तर्यागपश्चिमम् ॥ २७१ ॥

ततो यथाक्रमेणैव देवं संपूजयेद् द्विज ! ।
यद्वा दिनोत्सवे वृत्ते देवमानीय मण्टपे ॥ २७२ ॥

वितते भद्रपीठे तु समारोप्याथ पूर्ववत् ।
अर्घ्यादि सकलं विप्र ! ताम्बूलान्तं निवेद्य च ॥ २७३ ॥

वस्त्राद्यं पूर्वक्लृप्तं यत् क्रमात् सर्वं विसृज्य च ।
विनिवेद्य च वस्त्रं तु श्रमनिर्हरणार्थतः ॥ २७४ ॥

समालभ्य तु देवेशं सुगन्धैश्चन्दनादिकैः ।
ततस्तु विधिना पूज्य यावदात्मनिवेदनम् ॥ २७५ ॥

स्नानार्थं देवदेवस्य विज्ञाप्य विनिवेद्य च ।
पादुके देवदेवेशं छत्राद्यैश्च समन्वितम् ॥ २७६ ॥

तस्मादानीय पीठे तु स्नानार्थं परिकल्पिते ।
समारोप्य तदाद्यैस्तु भोगैः सर्वैस्तु पूर्ववत् ॥ २७७ ॥

इष्ट्वा ताम्बूलदानान्तं स्कन्धशाटीं निवेदयेत् ।
ततस्तैलं समादाय कर्पूराद्यैः सुभावितम् ॥ २७८ ॥

देवस्य केशानालोड्य हस्ताभ्यां कंकतेन तु ।
अधिवास्य सुगन्धैस्तु धूपैरभ्यंजयेत् ततः ॥ २७९ ॥

शिरो निष्पीड्य देवस्य बहुधा च ततः परम् ।
केशानाबध्य मालाभिः सूक्ष्मेण प्लोतकेन तु ॥ २८० ॥

ललाटोपरि बध्वा तु तथा मुखसरोरुहे ।
देवस्य तैलनिष्यन्दा नापतन्ति यथा द्विज ! ॥ २८१ ॥

ततः स्कन्धप्रदेशात्तु यावत्पादावसानकम् ।
अभ्यंजयेच्च तैलेन सर्वगात्राणि मर्दयेत् ॥ २८२ ॥

तस्मिन् काले बहुविधैस्तालवृन्तैश्च चामरैः ।
तत्तापशमनार्थं तु वीजयेयुः समन्ततः ॥ २८३ ॥

ततस्तु वाससोद्वर्त्य तथा चूर्णैः पुरोदितैः ।
चमपीं च खलिं दत्वा दद्यादुष्णोदकं ततः ॥ २८४ ॥

चन्दनं मुखलेपार्थं घृष्टं कर्पूरभावितम् ।
ततस्त्वामलकं कल्कं गन्धद्रव्यैः सुसंस्कृतम् ॥ २८५ ॥

दत्वा शिरसि देवस्य प्रक्षाल्य बहुभिर्जलैः ।
शनैः शनैः समालोड्य ततोऽर्घ्यं विनिवेद्य च ॥ २८६ ॥

लोध्रं कालेयकं चैव क्षालनार्घ्यसमन्वितम् ।
कृत्वा केशान् समाबध्य देवस्य प्लोतवाससा ॥ २८७ ॥
अधः शाटीं निवेद्याथ पात्रे कृत्वा तु वर्णकम् ।
कर्पूरचूर्णसंमिश्रं सम्यग्धूपाधिवासितम् ॥ २८८ ॥
तेन देवस्य गात्राणि लेपयेत्तु शनैः शनैः ।
आकण्ठात् पादपर्यन्तं ततः प्रक्षालयेज्जलैः ॥ २८९ ॥
अपास्याथ शिरःप्लोतम् दद्यादर्घ्यं तु मूर्धनि ।
ग्रन्थिपल्लवतोयादि सर्वरत्नोदकान्तिमम् ॥ २९० ॥
संस्नाप्य सप्तभिस्तोयैः शिरःप्लोतं ददेद्द्विज ! ।
विनिवेद्याप्यधःशाटीं चन्दनेन सुगन्धिना ॥ २९१ ॥
शशिचूर्णसमेतेन वासितेन हिमांबुना ।
धूपाधिवासितेनापि समालभ्य विशेषतः ॥ २९२ ॥
गात्राणि देवदेवस्य तथा वै कुंकुमेन च ।
उपवीतं सोत्तरीयं दत्वा प्लोतमपास्य च ॥ २९३ ॥
शिरस्यैमथ केशांस्तु गन्धधूपाधिवासितान् ।
आबध्य विविधैर्माल्यैः स्रग्दामानि निवेद्य च ॥२९४॥
ततस्तु बहुभिस्तोयैः संस्कृतैश्चन्दनादिना ।
सहस्रधारया स्नानमाचरेद्देशिको विभोः ॥ २९५ ॥
व्यापकान् चतुरो मन्त्रान् जपेदेकाग्रमानसः ।
तस्मिन् काले बह्वृचाद्या द्विजाः प्रागादिदिक्स्थिताः॥
सूक्तानि पौरुषाद्यानि अधीयीरन् समाहिताः ।
शंखभेर्यादिकान् सम्यग् घोषयेयुः समन्ततः ॥२९७॥
मंगलानि च गीतानि तदा गायन्तु गायकाः ।
एवं स्नाने कृते पश्चात् देशिकेन्द्रः समाहितः ॥ २९८ ॥
पूर्णकुम्भं समादाय विभोः स्नपनमाचरेत् ।
जपन् पवित्रमन्त्रं च तस्य निर्वचनं तथा ॥ २९९ ॥
एवं स्नानं समाप्याथ दद्याद्धीराजनं विभोः ।
सचन्दनार्घ्यं तत्पश्चच्छाटकं विनिवेद्य च ॥ ३०० ॥
कचोदकापकर्षार्थमपरं देहवारिभृत् ।
अधरोत्तरवस्त्रे द्वे गन्धधूपाधिवासिते ॥ ३०१ ॥

स्कन्धप्लोतं निवेद्याथ शिरःस्नानं निवेद्य च ।
चन्दनादि सुगन्धं समाल्यानि विनिवेद्य च ॥३०२॥
पादुके विनिवेद्याथ तस्मात् स्थानात् समानयेत् ।
तृतीयं रत्नखचितं आसनं विनिवेद्य च ॥ ३०३ ॥
तत्रस्थं देवदेवेशमर्घ्याद्यैः पूजयेत् क्रमात् ।
सर्वं होमावसानं च कृत्वा भूयः प्रपूज्य च ॥ ३०४ ॥
महाहविर्निवेद्याथ सर्वं प्राग्वत् समाचरेत् ।
एवं प्रतिदिनं चैव यावत्तीर्थदिनान्तिमम् ॥ ३०५ ॥
स्नपनं पूजनं चैव विभोः कुर्यादतन्द्रितः ।
नित्योत्सवादौ देवस्य स्नपनं तु समाचरेत् ॥ ३०६ ॥
दिनोत्सवसमारम्भे नाचरेत् स्नपनं विभोः ।
यद्वोभयसमारम्भे कुर्यादिच्छानुरूपतः ॥ ३०७ ॥
कलशे मण्डले चैव अह्नि रात्रौ च पूजनम् ।
कुर्यात् प्रतिदिनं सम्यगेकवारं यथाविधि ॥ ३०८ ॥
बिंबस्थं देवदेवेशमह्नि रात्रौ च पूजयेत् ।
एकवारं द्विवारं वा त्रिवारं वा यथारुचि ॥ ३०९
प्रासादे मूलबिंबस्थं सविशेषं यजेत् सदा ।
पञ्चमे वासरे प्राप्ते पूर्वाह्णे तु दिनोत्सवम् ॥
कृत्वा ततस्तु देवेशं महास्नपनपूर्वकम् ।
महता विभवेनैव लक्ष्मीपुष्टिसमन्वितम् ॥ ३११ ॥
महाहविर्विधानेन विभवे सति पूजयेत् ।
षष्ठे दिने तु संप्राप्ते कुम्भार्चनपुरस्सरम् ॥
अग्निसंतर्पणान्तं च पूजयित्वा विधानतः ।
पूर्ववद्देवदेवेशं लक्ष्मीपुष्टिसमन्वितम् ॥ ३१३ ॥
यानादिके समारोप्य प्रासादस्य बहिः क्वचित् ।
उद्याने सुशुभे रम्ये पादपैर्बकुलादिभिः ॥ ३१४ ॥
प्रोच्छ्रितैर्विविधैर्वापि समन्तात् परिशोभिते ।
पुष्पिताभिर्लताभिश्च सर्वतः परिभूषिते ॥ ३१५ ॥
नीत्वा देवं समारोप्य यथार्हं विष्टरे पुरः ।
श्रीपुष्टिसहितं प्राग्वद्धोमान्तं परिपूजयेत् ॥ ३१६ ॥

सूक्ष्मवस्त्रदुकूलानि संरत्नाभरणान्यपि ।
सुधाकस्तूरिकर्पूरदिव्यगन्धसमन्वितम् ॥ ३१७ ॥
सर्वाङ्गदेवदेवेशं मृगस्नेहेन लेपयेत् ।
पुष्पापचयमाल्यादिभूषितानां विशेषतः ॥ ३१८ ॥
परस्परं वा शक्तीनां क्रीडार्थं वाप्यलंकृताम् ।
गरुडारूढदेवाय पारिजातहरं स्मरन् ॥ ३१९ ॥
प्राभृतान्यपि पुष्पाणि देवदेवाय दर्शयेत् ।
इदमस्मात् समायातं इत्युक्त्वा देशिकः स्वयम् ॥
पुष्पापचयकर्मार्थमेवं कृत्वा निवेद्य च ।
तत्र वाऽन्यत्र वा स्थाने कर्तुरिच्छानुरूपतः ॥ ३२१ ॥
ततस्तु देवदेवेशं लक्ष्मीपुष्टिसमन्वितम् ।
पूर्ववद्भ्रामयेत् ग्रामे शेषं प्राग्वत् समाचरेत् ॥ ३२२ ॥
सप्तमे दिवसे प्राप्ते प्रासादं संप्रविश्य च ।
देशिकः साधकैः सार्धं प्रणिपत्य जगद्गुरुम् ॥३२३॥
विज्ञापयेत्तु देवाय सम्यगुच्चस्थया गिरा ।
"भगवन् पुण्डरीकाक्ष शरणागतवत्सल ! ॥ ३२४ ॥
अस्मिन्नहनि कर्तव्या जलक्रीडा त्वया विभो ।
शुद्धये सर्वलोकानां देवानां प्रीतयेऽपि च ॥ ३२५ ॥
यात्रा तदर्थं कर्तव्या मदनुग्रहकाम्यया ।"
इति विज्ञाप्य देवाय प्रणम्य च पुनः पुनः ॥ ३२६ ॥
यानादौ देवमारोप्य लक्ष्मीपुष्टिसमन्वितम् ।
नीत्वा मज्जनशालां तु स्नानोपकरणैर्युताम् ॥ ३२७ ॥
तद्गतान् सर्वसंभारान् दर्शयित्वा विभोस्ततः ।
चन्दनाद्यैः समालभ्य देवं माल्यैर्विभूष्य च ॥ ३२८ ॥
विनिवेद्य च ताम्बूलं मुखवाससमन्वितम् ।
समाहूय च तत्रस्थानाज्ञाप्य परिचारकान् ॥ ३२९ ॥
प्राप्तेऽपराह्णसमये जलक्रीडा भविष्यति ।
तदर्थाः सर्वसंभाराः स्थापितव्यास्तु मण्टपे ॥ ३३० ॥
इत्याज्ञाप्य ततस्तस्माद्धान्यागारं प्रविश्य च ।
दर्शयित्वा तु धान्यानि विभोस्तेषां समृद्धये ॥ ३३१ ॥

उद्यानादौ समानीय विनिवेद्य च तत्स्थितान् ।
उपहारान् यथायोगं तत आस्थानमण्टपे ॥ ३३२ ॥
पूजयेद्देवदेवेशं श्रीपुष्टिभ्यां समन्वितम् ।
सविशेषं ततो लक्ष्मीं पुष्टिमन्तः प्रवेशयेत् ॥ ३३३ ॥
प्राग्वद्दिनोचितं सम्यक् कृत्वा पश्चात्तु मण्टपे ।
देवदेवं समानीय समारोप्य च विष्टरे ॥ ३३४ ॥
अर्घ्यात् ताम्बूलपर्यन्तं सर्वं प्राग्वन्निवेद्य च ।
स्नानार्थं शाटिकां वापि विनिवेद्य जगत्पतेः ॥ ३३५ ॥
मण्टपस्यैकदेशे तु शालितण्डुलनिर्मिते ।
विष्टरे तु जलद्रोणीं सौवर्णीं वापि राजतीम् ॥ ३३६ ॥
ताम्रजं वा यथालाभं चतुस्त्रिद्विकरायताः ।
तदर्धविस्तृतामूर्ध्वं मूले तत्पादविस्तृताम् ॥ ३३७ ॥
वृत्तायतामधोभागे प्रणालेन समन्विताम् ।
उन्मत्तकुसुमाकारसदृशामथवा द्विज ! ॥ ३३८ ॥
बिंबमानानुरूपां तां सर्वलक्षणसंयुताम् ।
निवेद्य तां समापूर्य गालितेन जलेन तु ॥ ३३९ ॥
कुंकुमक्षोदयुक्तेन चन्दनेनान्वितेन च ।
कर्पूरचूर्णयुक्तेन कुसुमैर्वासितेन च ॥ ३४० ॥
तत्पार्श्वं देवमानीय चार्घ्याद्यैः परिपूज्य च ।
भेरीपटहवादित्रशंखघोषसमन्वितम् ॥ ३४१ ॥
स्तुतिमंगलघोषैस्तु श्रुतिघोषसमन्वितम् ।
सूक्तेन पौरुषेणैव विभोः कृत्वावगाहनम् ॥ ३४२ ॥
याने देवं समारोप्य सह स्नानार्द्रवाससा ।
कुंकुमेन समालिप्य आपादान्मस्तकावधि ॥ ३४३ ॥
भ्रामयेत् प्राकारं वीथीं प्रीतये वरुणस्य च ।
जनानामपि सर्वेषां पवित्रीकरणाय च ॥ ३४४ ॥
तत्काले देवदेवेशं भक्त्या पश्यन्ति ये जनाः ।
ते सर्वे धूतपाप्मानो भवन्ति निरुपद्रवाः ॥ ३४५ ॥
ततस्तु मण्टपे देवं विष्टरे विनिवेश्य च ।
स्नानवस्त्रादि सकलमाचार्यः स्वयमाहरेत् ॥ ३४६ ॥

ततो निशोत्सवान्तं च सर्वं पूर्ववदाचरेत्।
अष्टमे दिवसे प्राप्त आचरेन्मृगयां विभोः॥
प्रातरारभ्य पूर्वाह्णे देवमिष्ट्वा तु पूर्ववत्।
अश्वरत्नं समानीय सर्वालंकारशोभितम्॥ ३४८॥
बहुभिस्तुरगैः सार्धं हस्तिनं वा तथाविधम्।
स्वभावं कृत्रिमं वापि तत्रारोप्य जगत्पतिम्॥ ३४९॥
मृगयानुगुणैः सर्वैर्भूषणाद्यैर्विभूषितम्।
आरोप्य याने सौवर्णे श्रियं च धरणीं तथा॥ ३५०॥
ताभ्यां सह परिभ्राम्य ग्रामादौ पूर्ववद्विभुम्।
सैन्यैश्च विविधैः सार्धं भक्ताद्यैश्च तथैव हि॥ ३५१॥
ततो ग्रामस्य बाह्ये तु क्रोशमात्रान्तरीकृते।
उद्याने वितते रम्ये विचित्रैः पादपैर्द्विज!॥ ३५२॥
सरसीभिर्विचित्राभिः लतावृन्दैश्च पुष्पितैः।
शोभिते च समानीय देवं तन्मध्यसंस्थिते॥ ३५३॥
मण्टपे तु वितानाद्यैः सर्वतः परिभूषिते।
सौवर्णे विष्टरे रम्ये समारोप्य जगत्पतिम्॥ ३५४॥
श्रीभूमिसहितं पश्चाच्छीतलैर्व्यजनानिलैः।
चन्दनाद्यैः सुगन्धैश्च हिमतोयैश्च शीतलैः॥ ३५५॥
स्वेदशान्तिं समापाद्य विशेषाद्राजराजवत्।
ततोऽर्घ्यादिभिरभ्यर्च्य द्रव्यं विनिवेदयेत्॥ ३५६॥
मरीचिचूर्णसंमिश्रं जीरकादिसमन्वितम्।
गुलखण्डयुतं शुद्धं पानकानि बहूनि च॥ ३५७॥
कदलीफलपूर्वाणि मधुराणि फलान्यपि।
सर्वं ताम्बूलदानान्तं क्रमात् कृत्वा ततः परम्॥३५८॥
स्नानपूर्वं समभ्यर्च्य महता विभवेन तु।
यथाक्रमेण देवेशं लक्ष्मीपुष्टिसमन्वितम्॥ ३५९॥
निवेद्य च प्रभूतान्नमलंकृत्य विशेषतः।
तुरगादौ समारोप्य अस्तं याते दिवाकरे॥ ३६०॥
दीपानेकशतैर्युक्तं ग्रामं नीत्वा प्रदक्षिणम्।
देवं गेहे प्रवेश्याथ प्राग्वत् कुर्यान्निशोत्सवम्॥३६१॥

तद्रात्रौ तीर्थबिंबस्य कुर्यात् कौतुकबन्धनम्।
आचार्यो यजमानेन साधकैश्च समन्वितः॥ ३६२॥
प्रासादं संप्रविश्याथ प्रणम्य च मुहुर्मुहुः।
दण्डवत्प्रणिपातेन इमं मन्त्रमुदीरयेत्॥ ३६३॥
"तीर्थयात्रा त्वया देव! श्वः कर्तव्या सुरेश्वर!।
तत्र प्रतिसरारम्भं त्वमनुज्ञातुमर्हसि"॥ ३६४॥
इति विज्ञाप्य देवस्य तीर्थबिंबं समानयेत्।
तदलाभे मुनिश्रेष्ठ! नित्यस्नपनकौतुकम्॥ ३६५॥
अलाभे त्वस्य बिंबस्य बलिबिंबं तु वा द्विज!।
मूलबिंबस्य पुरतः संस्थाप्यावाह्य पूज्य च॥ ३६६॥
प्रासादाभ्यन्तरे कुर्याद्वेदिकां व्रीहिभिः शुभाम्।
हस्तमात्रोन्नतायामविस्तारां पद्मसन्निभाम्॥ ३६७॥
बालोभिर्वेष्टयित्वा तां चतुरश्रायतां ततः।
पालिकाः सांकुरा बाह्ये स्थापयेत् ककुभष्टके॥ ३६८॥
तद्बहिर्घटिकास्तद्वच्छरावांस्तद्बहिस्तथा।
तदूर्ध्वं देवमारोप्य घृतारोपणमाचरेत्॥ ३६९॥
देवस्य पुरतः स्थाप्य पात्रं लोहविनिर्मितम्।
घृतेनापूर्य तत् पात्रं प्राग्वत् संस्कृत्य देशिकः॥३७०॥
उभाभ्यां चैव हस्ताभ्यां दूर्वामादाय मूलतः।
घृते निमज्य चाग्राणि देवपादेषु सेचयेत्॥ ३७१॥
ततस्तु कण्ठपार्श्वे तु ततो देवस्य मूर्धनि।
पाणिप्रक्षालनं कुर्यादन्तरान्तरयोगतः॥ ३७२॥
दूर्वाभेदस्तथा प्रोक्तो घृतारोपणकर्मणि।
हस्तद्वयस्यासमाणेन घृतारोपणमाचरेत्॥ ३७३॥
पादे "सुमंगलं चे"ति कर्णे भद्रमिति द्विज!।
"सुशोभनं" तु शिरसि क्रमान्मन्त्रः प्रतिष्ठितः॥
यद्वा सर्वस्य मन्त्रस्य द्वादशाक्षरसंज्ञितः।
अक्षतस्यार्पणं कृत्वा कुर्यात् कौतुकबन्धनम्॥ ३७५॥
ऊर्णामयेन सूत्रेण क्षौमसूत्रेण तेन च।
प्राग्विधानेन तत्पश्चाच्चामराद्यैश्च वीजयेत्॥ ३७६॥

दर्शयेद्दर्पणं छत्रमन्यानि मंगलान्यपि ।
निवेद्य पायसं पश्चाद्विभवानुगुणं ततः ॥ ३७७ ॥
शिरसा शाययित्वा तु देवेशं शयनोपरि ।
गुग्गुल्वगरुधूपैश्च धूपयित्वा समन्ततः ॥ ३७८ ॥
अनिर्वाणैः प्रदीपैस्तु रात्रिशेषं समापयेत् ।
आचार्यः प्रातरुत्थाय कृत्वा स्नानादिकं ततः ॥
देवमुत्सवबिंबस्थं प्राग्वत्पूज्य विधानतः ।
पूर्वाह्णे वाथ मध्याह्ने कृत्वा पूर्वं रथोत्सवम् ॥ ३८० ॥
कारयेत्तीर्थपूर्वाह्णे अथ मध्याह्नपूर्ववत् ।
देवं गेहे समानीय स्वस्थाने सन्निवेशयेत् ॥ ३८१ ॥
देवोपयुक्तमाल्यानि चन्दनादीन्यपि द्विज ! ।
प्रदद्याद्देशिकेन्द्राय सोपि तैः परिभूषितः ॥ ३८२ ॥
कारयेत्तीर्थयात्रां च देवेशस्य विधानतः ।
तीर्थबिंबगतं देवं शयनात् प्रतिबोध्य च ॥ ३८३ ॥
पूजयित्वार्घ्यगन्धाद्यैरानीयास्थानमण्टपे ।
पूजयित्वार्घ्यपाद्याद्यैर्घृतारोपं तु पूर्ववत् ॥ ३८४ ॥
कृत्वा पुरोदितानां तु स्नपनानां चतुर्थके ।
नवके स्नपनं स्थाप्य मध्यमध्यमसंज्ञितत् ॥ ३८५ ॥
पुरतः स्थण्डिलं कृत्वोलूखलं तत्र विन्यसेत् ।
मुसलानि चतुर्दिक्षु विन्यस्योलूखलोपरि ॥ ३८६ ॥
मुसलोलूखले गृह्य दूर्वाकाण्डानि बन्धयेत् ।
नववस्त्रेण संवेष्ट्य तत्र चूर्णं विनिक्षिपेत् ॥ ३८७ ॥
सौवर्णरजनीचूर्णसंमिश्रं गन्धसंयुतम् ।
चतुर्भिर्वैष्णवैर्विप्रैर्वैष्णवीभिस्तु वा द्विज ! ॥ ३८८ ॥
कारयेदवघातं तु गीयमानेपि मंगले ।
स्थापितस्नपनाद्विप्र ! प्राग्भागे वा तदुत्तरे ॥ ३८९ ॥
तण्डुलैः पीठिकां कृत्वा तत्र कुंभं निवेद्य च ।
ससूत्रं तत्र निक्षिप्य चूर्णं वस्त्रेण वेष्ट्य च ॥ ३९० ॥
अथवा पञ्च नव वा कलशांश्चूर्णपूरितान् ।
अर्चयित्वा तु मूलेन ततः संस्नापयेद्विभुम् ॥ ३९१ ॥

तैलेनाभ्यज्य देवेशं समुद्वर्त्य च पूर्ववत् ।
ततः संस्नाप्य विधिना घृताद्यं मंगलान्तिमम् ॥
सहस्रधारया स्नानं कृत्वा संशुद्धवारिणा ।
अधरोत्तरवस्त्राभ्यां नवाभ्यां परिधाप्य च ॥ ३९३ ॥
सूक्ष्माभ्यां धूपिताभ्यां च ततो देवं समर्च्य च ।
अर्घ्यालभनमाल्याद्यैर्हेमचूर्णादिपूरितम् ॥ ३९४ ॥
कुम्भमादाय तेनैव चूर्णैः समभिषेचयेत् ।
अर्घ्याद्यैः पूजयित्वा तु बिंबं तु परिमृज्य च ॥ ३९५ ॥
भुक्तावशिष्टं तच्चूर्णं भक्तानां मूर्ध्नि दापयेत् ।
गंगास्नानफलं चूर्णं सर्वपापप्रणाशनम् ॥ ३९६ ॥
क्रीडया वापि तच्चूर्णं शिरसा धारयेन्नरः ।
तस्य देहगतं पापं तत्क्षणादेव नश्यति ॥ ३९७ ॥
ततो देवं समभ्यर्च्य परमान्नं निवेद्य च ।
मुद्गान्नं चापि शुद्धान्नं तदत्यत्र विधानतः ॥ ३९८ ॥
सर्वं द्विजप्रदानान्तं कृत्वा देशिकसत्तमः ।
यात्रावसानात् प्रागेव सर्वं चोक्तं समाचरेत् ॥३९९॥
ततस्तु रजनीपिण्डं प्रभूतं कुंकुमान्वितम् ।
निवेद्य देवदेवाय दद्याद्धि देशिकोत्तमः ॥ ४०० ॥
आचार्येभ्यः साधकेभ्यस्तथा चान्येभ्य एव च ।
तत्तत्कर्म नियुक्तेभ्यस्तेऽपि पिण्डेन तेन वै ॥ ४०१ ॥
आलभ्य सर्वगात्राणि तथा संहृष्टमानसाः ।
उपतिष्ठन्तु देवेशं प्रणामैः सप्रदक्षिणैः ॥ ४०२ ॥
यात्रावाहनमानीय रथाद्येकतमं तु यत् ।
तत्र देवं समारोप्य ततोऽन्यस्मिंस्तु यानके ॥ ४०३ ॥
आरोप्य चक्रं तार्क्ष्यं वा हनुमन्तं विभीषणम् ।
छत्रचामरशङ्खादिसर्वसाधनसंयुतम् ॥ ४०४ ॥
प्रदक्षिणं परिभ्राम्य सर्वेष्वावरणेष्वपि ।
तीर्थपार्श्वं समासाद्य बिंबं पीठे निवेद्य च ॥ ४०५ ॥
प्रभया पुष्पया चैव वितानाद्यैरलंकृते ।
प्रणामं दण्डवत् कृत्वा पुष्पांजलिपुरस्सरम् ॥ ४०६ ॥

ततः संस्थाप्य देवेशं साधकस्यैव मूर्धनि।
भूषितस्य च वस्त्राद्यैस्तीर्थमासाद्य तत्र तु ॥ ४०७ ॥
नाभिदघ्ने जले स्थित्वा देशिकेन्द्रः समाहितः।
तत्तीर्थे सर्वतीर्थानि समावाह्य द्विजोत्तम! ॥ ४०८ ॥
कृत्वा पुण्याहघोषं च अर्घ्याद्यैः संप्रपूज्य च।
मुहूर्ते शोभने प्राप्ते रवौ मध्यन्दिनं गते ॥ ४०९ ॥
शंखतूर्यादिसंयुक्तं देवमादाय देशिकः।
वामहस्ततले कुर्यात् क्ष्मामण्डलगतं त्विच ॥ ४१० ॥
विधृयान्मध्यभागे तु पाणिना दक्षिणेन तु।
जपन् वै मूलमन्त्रं तु निमज्जेत् सह तेन वै ॥ ४११ ॥
तार्क्ष्यादिमूर्तिभिः सार्धमाचार्यः साधकैस्तथा।
स्वयंव्यक्तादिके स्थाने मध्याह्ने वाऽपराह्णके ॥ ४१२ ॥
रजन्यां पूर्वभागे वा कुर्यादवभृथं विभोः।
मुहूर्तातिक्रमप्राप्तदोषस्तत्र न विद्यते ॥ ४१३ ॥
जलद्रोण्यादिके पात्रे गन्धतोयैः सुपूरिते।
मुहूर्ते मज्जयेद्देवं अर्घ्याद्यैः संप्रपूज्य च ॥ ४१४ ॥
तत्काले ये नराः स्नानं कुर्वन्ति विमलाशयाः।
विमुक्तकल्मषास्ते वै प्राप्नुयुः परमां गतिम् ॥ ४१५ ॥
ततस्तीरे समारोप्य विष्टरे हेमनिर्मिते।
शाटकद्वितयं दत्वा स्नानवस्त्रे विसृज्य च ॥ ४१६ ॥
देशिकः स्वयमादाय ते वस्त्रे मूर्ध्नि धारयेत्।
अर्घ्याद्यैस्तु समभ्यर्च्य अलंकृत्य विशेषतः ॥ ४१७ ॥
याने देवं समारोप्य प्रासादं प्रविशेत् ततः।
सुस्नाता धौतवसनास्तत्काले गणिकाजनाः ॥ ४१८ ॥
जलेनापूरितं पात्रं दीपपात्रं च दर्पणम्।
धारयन्त्योऽग्रतो विप्र! गच्छेयुर्मंगलार्थतः ॥ ४१९ ॥
अनुधारापदेनैव प्रादक्षिण्यक्रमेण तु।
द्वितीयावरणद्वारं समासाद्याथवा द्विज! ॥ ४२० ॥
प्रथमावरणद्वारस्यन्तः कृत्वा तु मण्डलम्।
सुवृत्तं गोमयेनैव सुधाचूर्णैरलंकृतम् ॥ ४२१ ॥
आशासु दीपान् संस्थाप्य पालिका विदिशासु च।
संपूर्णमंभसा कुंभं स्रगाद्यैः परिभूषितम् ॥ ४२२ ॥
आधारस्योपरि स्थाप्य मध्ये पुष्पेण पूज्य च।
सकृत् प्रणवजप्तेन ततो वै तज्जलेन तु ॥ ४२३ ॥
अर्चयेद्देवदेवेशं पुष्पांजलिपुरस्सरम्।
प्रासादद्वारदेशे तु अर्घ्याद्यैः संप्रपूज्य च ॥ ४२४ ॥
देवं निवेदय स्वस्थाने मूलबिंबे विसर्जयेत्।
पश्चादुत्सवबिंबं तु स्नानाद्यैस्तु विधानतः ॥ ४२५ ॥
पूर्ववत् पूजयेद्विप्र! परिभ्रमणवर्जितम्।
दशमेऽहनि संप्राप्ते देशिकेन्द्रः समाहितः ॥
प्रातस्नानादिकं कृत्वा वसनाद्यैर्विभूषितः।
देशिकैः साधकैः सार्धं यजमानेन चैव हि ॥ ४२७ ॥
प्रासादं संप्रविश्याथ प्रणम्य च मुहुर्मुहुः।
देवेशस्याग्रतः स्थित्वा विज्ञापनमथाचरेत् ॥ ४२८ ॥
"भगवन्! पुण्डरीकाक्ष! शरणागतवत्सल!।
ध्वजारोहांकुरमारभ्य उत्सवावभृथान्तिमम् ॥ ४२९ ॥
यन्मयानुष्ठितं कर्म तव संप्रीतये विभो!।
तथाऽन्यैर्मदनुज्ञातैर्देशिकैश्चापि यत् कृतम् ॥ ४३० ॥
साधकैश्च तथान्यैश्च विविधैः परिचारकैः।
तत्तत्संपूरणार्थं च न्यूनाधिक्योपशान्तये ॥ ४३१ ॥
त्वामद्य वासरे यष्टुं चतुःस्थानस्थितं विभो!।
प्रवृत्तमनुजानीहि मदनुग्रहकाम्यया" ॥ ४३२ ॥
इति विज्ञाप्य देवस्य तत्रानुज्ञामवाप्य च।
देवमुत्सवबिंबस्थं यानमारोप्य देशिकः ॥ ४३३ ॥
आस्थानमण्टपं नीत्वा तत्र वै दर्भविष्टरे।
देवमारोप्य तत्पश्चात् वेदाध्ययनतत्परान् ॥ ४३४ ॥
इतिहासपुराणज्ञान् तथा मंगलगायकान्।
नर्तकांश्च यथायोगं विनोदार्थं जगत्पतेः ॥ ४३५ ॥
तत्तत्स्थाने समावेश्य ततो देशिकसत्तमः।
तस्मिन् वा मण्टपे न्यस्य विस्तारस्यानुरूपतः ॥ ४३६ ॥

यागगेहोदितैः सर्वैर्वितानाद्यैरलंकृते ।
तन्मध्यदेशमाश्रित्य कुर्याच्चक्राब्जमण्डलम् ॥ ४३७ ॥
मातुलुंगसमाकारैर्द्वादशारैः परिष्कृतम् ।
सपीठद्वारमार्गाद्यं पञ्चरंगपुरान्वितम् ॥ ४३८ ॥
अथवा भूषितं विप्र ! पीठेन सपुरेण तु ।
पञ्चपुष्पोज्वलेनैव केवलेन पुरेण वा ॥ ४३९ ॥
यथाकालोद्भवै रम्यैस्तत्तद्वर्णसमन्वितैः ।
सर्वं भगवता प्रोक्तः पौष्करे त्वस्य विस्तरः ॥ ४४० ॥
एवं सर्वं समापाद्य साधकैश्चक्रपंकजम् ।
संप्राप्य साधकैः सार्धं देशिको देवसन्निधिम् ॥
विज्ञाप्य देवमानीय पश्चिमे मण्टपस्य तु ।
भद्रासने तु सौवर्णे मसूरकवरान्विते ॥ ४४२ ॥
शुभास्तरणसंयुक्ते प्राङ्मुखं विनिवेश्य च ।
यागपूर्वोक्तमार्गेण कलशे चक्रपंकजे ॥ ४४३ ॥
गीतं नृत्तं च वाद्यं च चतुर्दिग्वेदघोषितम् ।
बिंबे च पूजनं कुर्याद्देशिकः सुसमाहितः ॥ ४४४ ॥
सविशेषं यथावद्वै द्विजदानावसानकम् ।
तत्काले तु विशेषेण गुरोः संमानमाचरेत् ॥ ४४५ ॥
वसनैश्च दुकूलाद्यैर्देवस्य प्राङ्निवेदितैः ।
विविधैः स्त्रग्वरैश्चापि सुगन्धैश्चन्दनादिकैः ॥ ४४६ ॥
आचार्योपि समादाय दुकूलाद्यमनुत्तमम् ।
बद्ध्वा चोष्णीषवत् स्वस्मिन् शिरसि द्विजसत्तम ! ॥
माल्यादि च यथायोगं धारयन् प्रणिपत्य च ।
मुहुर्मुहुर्देवदेवं ततो यागनिकेतनम् ॥ ४४८ ॥
संप्राप्य तत्र वै कुण्डे होमं कृत्वा यथापुरम् ।
गत्वा देवसमीपं तु कृत्वा होमसमर्पणम् ॥ ४४९ ॥
संविभागं पितॄणां च यथावत् प्रतिपाद्य च ।
कुमुदादींश्च चक्रं च खगेशं गणनायकम् ॥ ४५० ॥
इन्द्रादिलोकपालानां दापयित्वा बलिं क्रमात् ।
ततश्चैकायनीं शाखां त्रयीं चाथर्वसंयुताम् ॥ ४५१ ॥
इतिहासं पुराणं च वैष्णवं स्तोत्रमद्भुतम् ।
गीतं नृत्तं च वाद्यं च शंखभेर्यादिकांस्तथा ॥ ४५२ ॥
बन्दिमंगलशब्दांश्च तथा मंगलगीतकम् ।
श्रावयित्वा यथायोगं दर्शयित्वा विभोस्ततः ॥ ४५३ ॥
कुम्भस्थं मण्डलस्थं च देवं हृदि विसृज्य च ।
विष्वक्सेनं समभ्यर्च्य प्राग्वन्मण्डलमध्यतः ॥ ४५४ ॥
ततो देवं समारोप्य यानादौ हेमनिर्मिते ।
सर्वमंगलसंयुक्तं सर्वाण्यावरणानि च ॥ ४५५ ॥
परिभ्रम्य च बाह्यादि त्वन्तरावरणान्तिकम् ।
प्रथमावरणे वापि द्वितीयावरणेपि च ॥ ४५६ ॥
मण्टपे देवदेवेशं विष्टरे विनिवेशयेत् ।
तत्काले यजमानस्तु अलंकृत्य तु देशिकम् ॥ ४५७ ॥
वस्त्रस्त्रक्चन्दनाद्यैश्च समारोप्य च यानके ।
शंखकाहलवादित्रभेरीपटहसंयुतम् ॥ ४५८ ॥
छत्रदीपसमायुक्तं गायकादिसमन्वितम् ।
देशिकं देववत् स्मृत्वा स्वगृहे संप्रवेशयेत् ॥ ४५९ ॥
अथानुयागमाचार्यः कुर्याद्बन्धुसमन्वितः ।
अस्तंगते दिनकरे देवं संपूज्य वै क्रमात् ॥ ४६० ॥
गुलखंडादिसंयुक्तं मुद्गान्नं तु निवेदयेत् ।
ततस्तु भगवद्भक्ता देशान्तरनिवासिनः ॥ ४६१ ॥
देवस्योत्सवसेवार्थं ये नराः पूर्वमागताः ।
तेषां स्वदेशयानार्थं देवानुज्ञापुरस्सरम् ॥ ४६२ ॥
कृत्वा विसर्जनं पश्चात् देवं यागनिकेतने ।
नीत्वा तत्र समावेश्य विष्टरे शुभसंस्तरे ॥ ४६३ ॥
कुम्भपूर्वं क्रमेणैव चतुः स्थानस्थितं विभुम् ।
यथाविधि समभ्यर्च्य प्रभूतान्नसमन्वितम् ॥ ४६४ ॥
उत्सवान्तोदितं कृत्वा स्नपनं चापि कल्पयेत् ।
यात्राबिंबे द्विजश्रेष्ठ ! बिंबे वा स्नपनार्थतः ॥ ४६५ ॥
एवं क्रमेण संपूज्य प्रदाप्य विधिना बलिम् ।
कुम्भमण्डलकुण्डस्थान् मन्त्रेशान् मन्त्रवित्तम ॥

विसर्जयेद्यथावद्धयथोक्तविधिना ततः।
विष्वक्सेनं यजेत् पश्चाद्देवमन्तः प्रवेशयेत् ॥ ४६७ ॥
अर्घ्यगन्धादिनाऽभ्यर्च्य मूलबिंबे विसर्जयेत्।
ग्रामे चावाहितान् विप्र! कुमुदादीन् गणान्वितान् ॥
सन्तोष्य बलिदानेन सविशेषं विसर्जयेत्।
ध्वजस्थानं समासाद्य कुम्भं संस्थाप्य पूर्ववत् ॥ ४६९ ॥
पतत्रीशं समभ्यर्च्य ध्वजस्थं च विशेषतः।
महाहविर्निवेद्याथ ध्वजस्थं विहगेश्वरम् ॥ ४७० ॥
विसर्जयित्वा स्वहृदि कुम्भस्थे वा खगेश्वरे।
ततोऽवरोहयेद्विप्र ध्वजं पूर्वक्रमेण तु ॥ ४७१ ॥
कुम्भस्थं विहगेशं तु स्वस्मिन् हृदि विसर्जयेत्।
यद्वा गरुडगेहं तु गत्वा कुम्भस्थवारिणा ॥ ४७२ ॥
संप्रोक्ष्य गरुडं तत्र कुम्भस्थं तु विसर्जयेत्।
ध्वजदण्डं ध्वजपटं तयोर्हि तल्पगां तथा ॥ ४७३ ॥
आचार्यः स्वयमादद्याद् यागोपकरणान्यपि।
अन्यथा चेन्महान् दोषः कर्तुर्देशाधिपस्य च ॥ ४७४ ॥
निष्फलं स्यात् कृतं कर्म विहगेशोपि कुप्यति।
यागकर्मणि पर्याप्ते तद्रात्रौ वाऽपरेद्दनि ॥ ४७५ ॥
यजमानो गुरुं हैमैर्भूषणैः कटकादिभिः।
वसनैर्गन्धपुष्पाद्यैः अलंकृत्याभिपूज्य च ॥ ४७६ ॥
उत्तमां दक्षिणां दद्यात् स्वर्णनिष्कशतान्विताम्।
ततोऽर्द्धां तु वा दद्यात् विभवस्यानुगुण्यतः ॥४७७॥
तदर्धं मध्यमं विद्धि तत्पादं ह्यधमं भवेत्।
यथावित्तानुरूपं तु यथाश्रद्धं तु वा ददेत् ॥ ४७८ ॥
तदर्धं ऋत्विजां दद्यात् तदर्धं परिचारके।
अन्यान् गायकपूर्वांस्तु यथावित्तानुसारतः ॥ ४७९ ॥
यागस्तु दक्षिणाहीनो निष्फलः स्यान्न संशयः।
तस्माद्वित्तानुगुण्येन देया चाल्पापि दक्षिणा ॥ ४८० ॥
एवं तु गदितः सम्यक् यात्राख्योत्सवविस्तरः।
तत्र यो यो विशेषस्तु तं तमाकर्णयाधुना ॥ ४८१ ॥

देशिके साधके वापि एकस्मिन्नेव कल्पिते।
स एव सकलं कर्म कुर्यात् पूर्वोदितं क्रमात् ॥ ४८२ ॥
बहुष्वेतेषु क्लृप्तेषु त्वेकः कुर्याद्यथाक्रमम्।
ध्वजांकुरं ध्वजारोपं उत्सवार्थांकुरार्पणम् ॥ ४८३ ॥
उत्सवारम्भदिवसात् पूर्वेद्युः कौतुकक्रियाम्।
उत्सवारम्भदिवसे अधिवासार्थमीरितम् ॥ ४८४ ॥
चतुः स्थानार्चनं विप्र! तथा तीर्थांकुरार्पणम्।
तद्रात्रावपि यात्रार्थं चतुः स्थानार्चनक्रियाम् ॥ ४८५ ॥
यात्राप्रतिसरावन्धं तथा चावभृथक्रियाम्।
पुष्पयागदिने वापि चतुः स्थानार्चनं तथा ॥ ४८६ ॥
कुम्भमण्डलकुण्डस्थमन्त्राणां च विसर्जनम्।
ध्वजावरोहणं चैव प्रयत्नान्नियतव्रतः ॥ ४८७ ॥
तदन्ये देशिकाः कुर्युः साधका वा यथाक्रमम्।
अन्यानि सर्वकर्माणि यथायोगं समाचरेत् ॥ ४८८ ॥
कुम्भस्थस्यार्चनं केचित् केचिद्बिंबस्य पूजनम्।
अग्नौ संतर्पणं केचित् केचित् स्नपनकौतुके ॥ ४८९ ॥
स्नपनाद्यर्चनं केचित् यथाकालं यथाविधि।
एकेनैव शक्यं स्याच्चतुःस्थानार्चनं द्विज! ॥ ४९० ॥
कर्तुं न कर्तृभेदः स्याच्चतुःस्थानार्चनाविधौ।
एकस्मिन् पूजने विप्र! वर्तमानेपि मध्यतः ॥ ४९१ ॥
केनचिद्व्याधिना कर्तुरशक्तिर्यदि संभवेत्।
अंगादंगान्तरारम्भे आसनादासनस्य हि ॥ ४९२ ॥
शेषमन्येन कर्तव्यं जप्त्वा मूलं सहस्रकम्।
अन्यथासंभवेत्सा चेत् कर्तुरन्यस्तु पूजकः ॥ ४९३ ॥
भूयश्चादित आरभ्य पूजनं तु समाचरेत्।
दिनोदितेन मार्गेण कुर्याच्चेदन्यथा द्विज! ॥ ४९४ ॥
कर्तुः स्यान्मानसी पीडा पूजनं चापि निष्फलम्।
यदोत्सवे नियुक्तं तु नित्यस्नपनकौतुकम् ॥ ४९५ ॥
तदेकदैव कुर्वीत रात्रावहनि वोत्सवम्।
यदा महोत्सवविधौ बलिर्बिंबं प्रयुज्यते ॥ ४९६ ॥

कालयोरुभयोः कुर्यात् कर्तुरिच्छानुरूपतः ।
यात्राबिंबे नियुक्ते तु कुर्यात् कालद्वये सदा ॥ ४९७ ॥

उत्सवं मुख्यकल्पे तु अनुकल्पे महामते ।
दिवा वापि रजन्यां वा कुर्याद्यात्रोत्सवं द्विज ! ॥

कुम्भे वा विष्टरे चक्रे यदा कुर्यान्महोत्सवम् ।
तदानीं मूलबिंबे तु यात्रा बिंबोदितां क्रियाम् ॥४९९॥

सर्वामपि क्रमात् कृत्वा परिभ्रमणवर्जितम् ।
कुम्भे वा विष्टरे वापि दर्भमंजरिजे शुभे ॥ ५०० ॥

चक्रे वा देवमावाह्य अर्घ्याद्यैः परिपूज्य च ।
यानादिके समारोप्य सर्वसाधनसंयुतम् ॥ ५०१ ॥

ग्रामादौ भ्रामयेत् प्राग्वत् बलिदानसमन्वितम् ।
ग्रामादि बलिदानोक्तकाले दद्यात् बलिं सदा ॥ ५०२ ॥

कुमुदादि गणेशानां पालिकावस्थेऽपि च ।
उत्सवे देवदेवेशं सदा सर्वत्र पूजयेत् ॥ ५०३ ॥

वस्त्रपुष्पादिकैर्भोगैः यथाभिमतदिङ्मुखः ।
आसीनो वा स्थितो वापि साधकस्तु यथारुचि ॥

एवं तु भ्रमणं कुर्यात् एकाहाद्युत्सवेष्वपि ।
एकाहे पूर्वरात्रे वा यात्रा बिंबाधिवासनम् ॥ ५०५ ॥

तीर्थबिंबाधिवासं च तथा कर्मदिने ततः ।
प्रातर्ग्रामं परिभ्राम्य यात्राबिंबं तु पूर्ववत् ॥ ५०६ ॥

तत्पश्चादाचरेत् प्राग्वत् तीर्थबिंबाधिवासनम् ।
अपरस्मिन् दिने कुर्यात् पुष्पयागं न वा द्विज ॥५०७॥

त्रिवासरेऽपि पञ्चाहे सप्ताहे तूत्सवे द्विज ! ।
आरंभाहात्तु पूर्वेद्युः यात्रा बिंबाधिवासनम् ॥ ५०८ ॥

तीर्थाहात् पूर्वरात्रौ तु तीर्थबिंबाधिवासनम् ।
तीर्थाहादपरस्मिन् वै पुष्पयागं समाचरेत् ॥ ५०९ ॥

एकाहात् सप्तरात्रान्तमुत्सवानां चतुष्टये ।
पुष्पापचयलीलां च मृगयामपि नाचरेत् ॥ ५१० ॥

दशाहादिषु सर्वेषु नवाहोदितवर्त्मना ।
सर्वं कुर्याद्यथायोगं कर्तुरिच्छानुरूपतः ॥ ५११ ॥

स्वयं व्यक्ते विमानादौ स्थाने तु न समाचरेत् ।
एकाहात् सप्तरात्रान्तमुत्सवानां चतुष्टयम् ॥ ५१२ ॥

तथा तत्रानुकल्पोक्तमुत्सवं न समाचरेत् ।
स्वयं व्यक्ते जलक्रीडा भवेन्नान्यत्र कल्पयेत् ॥ ५१३ ॥

एकाहाद्यास्तु सकला उत्सवा वत्सरान्तिमाः ।
बहुबेरविधाने तु कर्तव्या द्विजसत्तम ! ॥ ५१४ ॥

एकत्रिपञ्चसप्ताहनवाहद्वादशाह्निकाः ।
एकबेरविधाने तु कर्तव्या नान्यथा भवेत् ॥ ५१५ ॥

ग्रामे वा नगरे वापि प्रतिलोमानधिष्ठिते ।
अशून्ये पत्तने वापि रथ्यासु सुसमाचरेत् ॥ ५१६ ॥

बलिदानादिकं सर्वं अन्यथा चेद् द्विजोत्तम ! ।
अन्तरावरणेष्वेव विभोः कुर्यान्महोत्सवम् ॥ ५१७ ॥

देवस्य यात्राकर्मार्थं प्रवेशश्च विनिर्गमः ।
भवेत्तदग्रद्वारेण सर्वेष्वावरणेष्वपि ॥ ५१८ ॥

प्रवेशनिर्गमौ स्यातां ग्रामाद्यभिमुखेन वा ।
प्रधानैरन्तरैर्द्वारैः कार्यौ वेशविनिर्गमौ ॥ ५१९ ॥

नोपद्वारैर्न शोभैश्च नोपशोभैः कदाचन ।
यदि कुर्यात् प्रमादेन तद्देशनृपतेर्भवेत् ॥ ५२० ॥

प्रधानस्य विपर्यासः स्वस्थानप्रच्युतिस्तथा ।
ग्रामादावपि विप्रेन्द्र ! प्राकारादिपरिष्कृते ॥ ५२१ ॥

यात्रा कर्मणि देवस्य प्रवेशश्चापि निर्गमः ।
उपद्वारैर्न कर्तव्यः कृते यात्रादि निष्फलम् ॥ ५२२ ॥

ग्रामस्यापि विनाशः स्यात् ततो देशाधिपस्य च ।
चतुर्ष्वपि प्रधानेषु विशेषमवधारय ॥ ५२३ ॥

देवागारस्य पूर्वस्यां दिशि ग्रामादिकं यदि ।
प्रत्यक्दिक्स्थितद्वारा भवेत्तत्रोदितद्वयम् ॥ ५२४ ॥

ग्रामादिकं भवेत् प्रत्यक् यदा देवगृहस्य तु ।
प्राग्द्वारेण तदा स्यातां प्रवेशश्च विनिर्गमः ॥ ५२५ ॥

यदा ग्रामादिकं क्लृप्तं प्रासादस्य तु दक्षिणे ।
तदानीमुत्तरद्वारा प्राग्द्वारा वा पुरोदिता ॥ ५२६ ॥

यदा देवगृहस्योदक् ग्रामाद्यं परिकल्पितम्।
तदानीं दक्षिणद्वारा प्रत्यग्द्वारेण वा भवेत्॥ ५२७॥
प्रवेशाद्यं द्वयं यद्वा दक्षिणोत्तरदिक्स्थिते।
ग्रामादावपि विप्रेन्द्र! प्राक्प्रत्यग्द्वारदेशतः॥
प्रवेशनिर्गमौ मुख्यकल्पे तु विहितौ द्विज!।
अनुकल्पे तदन्याभ्यां द्वाराभ्यां परिकीर्तितौ॥ ५२९॥
देवागारांगभूते तु तस्माद्दूरेण संस्थिते।
ग्रामादौ देवदेवस्य यात्रायां वेशनिर्गमौ॥ ५३०॥
कथितौ, सन्निकृष्टेऽथ विधानमवधारय।
प्रासादपूर्वदिक्संस्थे ग्रामे प्रागग्रवीथिषु॥ ५३१॥
मध्यवीथ्यप्रदेशेन पश्चिमस्थेन वै विभोः।
प्रवेशनिर्गमौ स्यातां एतत्पश्चिमसंस्थिते॥ ५३२॥
मध्यवीथ्यप्रदेशेन पूर्वदिक्संस्थितेन च।
दक्षिणोत्तरसंस्थे तु यथायोगं समाचरेत्॥ ५३३॥
ग्रामाद्यं न कृतं यत्र कृता रथ्यावृतिस्तदा।
रथ्यावरणदेवानां बलिं दत्वा तु पूर्वतः॥ ५३४॥
पश्चाद्ग्रामोक्तदेवानां तत्रैव च बलिं ददेत्।
सर्वेषां च क्रमादेवं देवयात्रां द्विराचरेत्॥ ५३५॥
ग्राममध्योदितं कुर्यान्मुख्यद्वारार्थदेशतः।
रथ्यावृतिस्तु न कृता यदा ग्रामः कृतस्तदा॥ ५३६॥
रथ्यावृत्युक्तदेवानां न तत्र प्रददेद्बलिम्।
तदर्थं देवयात्रापि न कर्तव्या महामते!॥ ५३७॥
यदा तु वीथ्यावरणं ग्रामश्चापि न कल्पितः।
तदा ग्रामोक्तदेवानां बहिरावरणे बलिम्॥ ५३८॥
तदुक्तदेवबल्यन्ते प्रदद्यात्तु दिने दिने।
ग्रामोक्तदेवयात्रां च तथा तत्र समाचरेत्॥ ५३९॥
ग्राममध्ये तु यत् कर्म विहितं तत् समाचरेत्।
बलिपीठे तदा सर्वं यथोक्तविधिना द्विज!॥ ५४०॥
बाह्यावृतादौ न यदा कुर्यात्तत् प्रथमावृतौ।
तदभावे तु तत् सर्वं प्रासादद्वारपूर्वतः॥ ५४१॥

यदा ग्रामादिके क्लृप्ता देवयात्रोत्सवक्रिया।
राष्ट्रक्षोभादिविघ्नेन यदि कर्तुं न शक्यते॥ ५४२॥
एवमेव तदापि स्यात् देवयात्रोत्सवक्रमः।
बलिदानोदिते काले बलिदानं समाचरेत्॥ ५४३॥
कुमुदादिगणेशानां प्रथमावरणेऽपि च।
पालिकावसथे चापि मण्डपे यागनिर्मिते॥ ५४४॥
ग्रामादिकेऽपि विप्रेन्द्र नित्यं स्थानचतुष्टये।
यदि रथ्यावृतिः क्लृप्ता तत्रापि च बलिं ददेत्॥ ५४५॥
ग्रामाद्ये सगणानां तु बलिं दद्याद्दिने दिने।
अन्यस्थानचतुष्के तु केवलानां बलिं ददेत्॥ ५४६॥
ग्रामाद्यं पालिकावासं विनान्यत्र समाचरेत्।
देवयागादियोगेन बलिं स्थानत्रयेऽपि च॥ ५४७॥
ग्रामादौ नोत्सवं कुर्याद्योजनात् परतः स्थिते।
नद्यादिव्यवधानेऽपि क्लृप्ते वा योजनावधेः॥ ५४८॥
ग्रामादौ उत्सवं कुर्यात् स्वतन्त्रे वांग एव वा।
देवतान्तरयात्रार्थं निर्मिते नगरादिके॥ ५४९॥
न कुर्याद्देवदेवस्य विभोर्यात्रोत्सवक्रियाम्।
विभोर्यात्रोत्सवार्थं तु कल्पिते नगरादिके॥ ५५०॥
देवतान्तरयात्रां तु न कदाचित् समाचरेत्।
ग्रामाद्यंगतया क्लृप्ते प्रासादे तु महामते॥ ५५१॥
तदंगिनं तु ग्रामाद्यं विनान्यत्र बलिक्रियाम्।
न कल्पयेद्देवयात्रां तथैव न समाचरेत्॥ ५५२॥
देवतान्तरकल्याणे वर्तमाने कदाचन।
देवतान्तरयात्रार्थं तोरणानि कृतान्यपि॥ ५५३॥
देवदेवस्य यागार्थं न स्वीकुर्यात् कदाचन।
एकस्मिन्नुत्सवेनैव दद्याद् ग्रामद्वये बलिम्॥ ५५४॥
न कुर्याद्देवयात्रां च कृता सा निष्फला भवेत्।
तथा ध्वजद्वयं न स्यात् भेदच्छिद्रादिदूषिते॥ ५५५॥
पटस्थे विहगेन्द्रे तु कुर्यात् सन्धानमेव तु।
तद्वद्दशाख्यं तत्यक्त्वा कृत्वान्यं प्राग्वदाचरेत्॥

अन्यथा तत्परित्यागे दोषः स्याद्राजराष्ट्रयोः।
एवं तु देवदेवस्य उत्सवं कल्पयेत्तु यः ॥ ५५७ ॥

इह लोके सुखं भुक्त्वा चिरं भोगान् यथेप्सितान्।
देहसन्यासकाले तु प्राप्नोति भगवत्पदम् ॥ ५५८ ॥

यात्रायां वर्तमानायां अनुगच्छन्ति ये विभुम्।
पदे पदे क्रतुफलं लभन्ते ते नरोत्तमाः ॥ ५५९ ॥

ये तोषयन्ति ते काले देवदेवं जगत्पतिम्।
विविधैरुपचारैस्तु छत्रचामरपूर्वकैः ॥ ५६० ॥

ऐहिकामुष्मिकान् भोगान् प्राप्नोत्यभिमतान् सदा।
इति सम्यङ्मुनिश्रेष्ठ! कीर्तितो वत्सरोत्सवः ॥ ५६१ ॥

एवं नैमित्तिकं चान्यं कुर्यादेकाहमुत्सवम्।
ध्वजारोहादिपूर्वोक्तयात्रांगपरिवर्जितम् ॥ ५६२ ॥

विभवानुगुणं विप्र! विशेषस्नपनान्वितम्।
महता हविषा युक्तं यथाश्रद्धानुरूपतः ॥ ५६३ ॥

तस्मिन् प्रधाननक्षत्रे पत्रपुष्पफलान्विते।
पञ्चविंशतिकुम्भांस्तु स्थापयित्वाभिषेचयेत् ॥ ५६४ ॥

चैत्रे मासि पुनर्वस्वोः वसन्तोत्सवमाचरेत्।
तस्मिंस्तु शुक्लद्वादश्यां कुर्याद्दमनकोत्सवम् ॥ ५६५ ॥

पवित्रारोहवत् कुर्यात् चतुस्स्थानार्चनादिकम्।
भूषणान्युत्तमादीनि कुर्याद्दमनकैस्तथा ॥ ५६६ ॥

तत्तु संख्याविरहितं यथाशोभानुरूपतः।
पञ्चविंशतिकुम्भांस्तु स्थापयित्वाभिषेचयेत् ॥ ५६७ ॥

एको ह वै नारायण इति प्राक्कलशेन तु।
तस्य ध्यानान्तस्थस्येति द्वितीयकलशेन तु ॥ ५६८ ॥

अथ पुनरेव नारायण इति तृतीयकलशेन तु।
अथ पुनरेव नारायण इति चतुर्थतः ॥ ५६९ ॥

सहस्रशीर्षा पुरुष इति पञ्चमकुम्भतः।
पतिं विश्वस्यात्मेश्वरमिति वै षष्ठकुम्भतः ॥ ५७० ॥

नारायण परं ब्रह्म इति वै सप्तमेन तु।
यच्च किंचिज्जगत्यस्मिन् इति ह्यष्टमकुम्भतः ॥ ५७१ ॥

अनन्तमव्ययं कविमिति नवमेनाभिषेचयेत्।
अतो निष्ट्या वितस्त्यां तु इति स्याद्दशमेन वै ॥ ५७२ ॥

सन्ततं शिराभिस्तु लमित्येकादशेन तु।
तस्य मध्ये महानग्निरिति द्वादशमेन वै ॥ ५७३ ॥

सन्तापयति स्वं देहमिति त्रयोदशमेन वै।
नीलतोयदमध्यस्था इति चतुर्दशमेन वै ॥ ५७४ ॥

तस्याश्शिखाया मध्ये इति पञ्चदशमेन वै।
सर्वस्य वशिनं देवं इति षोडशमेन तु ॥ ५७५ ॥

बहिरावरणस्थैस्तु कलशैरभिषेचयेत्।
बहिरावरणे नास्ति इति प्राक्संस्थितेन तु ॥ ५७६ ॥

यत्राभिपद्मादभवदिति वह्निगतेन तु।
धृतोर्ध्वपुण्ड्रं परमेति याम्यदिक्संस्थितेन तु ॥ ५७७ ॥

दक्षिणे तु भुजे विप्रः इति यातुगतेन वै।
विष्णुनाक्रममश्नन्तीति वारुणीदिक्स्थितेन तु ॥ ५७८ ॥

पुंप्रधानेश्वरो विष्णुरिति वायुगतेन वै।
य इमां महोपनिषदमिति सोमगतेन तु ॥ ५७९ ॥

ओमिति प्रथमं नाम इतीशानगतेन तु।
पुरुषोहं वै वासुदेव इति मध्यगतेन तु ॥ ५८० ॥

यद्वा पुरुषसूक्तीयैर्मन्त्रैः षोडशभिः क्रमात्।
बहिरावरणस्थैस्तु कलशैरभिषिच्य च ॥ ५८१ ॥

पूर्वोक्तैर्ब्रह्मसूक्तस्थैर्मन्त्रैर्द्विद्विकसंख्यया।
अन्तरावरणस्थैस्तु संस्नाप्य कलशैः क्रमात् ॥ ५८२ ॥

अवशिष्टैस्त्रिभिश्चान्ते मध्यकुंभेन सेचयेत्।
रजनीचूर्णसंपूर्णान् संस्थाप्य नवकुम्भकान् ॥ ५८३ ॥

अर्घ्याद्यैरर्चयित्वा तु चक्रदर्पिसमप्रभान्।
रजनीचूर्णनिचयान् ध्यात्वा तैरभिषेचयेत् ॥ ५८४ ॥

सर्वविघ्ननिरासार्थं सर्वसंपूरणाय च।
दक्षिणे तु भुजे विप्र! इति प्राक्संस्थितेन च ॥ ५८५ ॥

निचिकिद्धा सुपर्णमिति वह्निगतेन तु।
प्रते विष्णो अन्ज चक्रे इति याम्यगतेन तु ॥ ५८६ ॥

एभिर्वयमुरुक्रमस्येति यातुगतेन तु ।
भूतोर्ध्वपुण्ड्रः कृतचक्रेति पश्चिमाशागतेन तु ॥ ५८७ ॥
पवित्रमित्यग्निरिति वायुगतेन तु ।
चरणं पवित्रं विततमिति सोमगतेन तु ॥ ५८८ ॥
लोकस्य द्वारमर्चिमदिति रुद्रगतेन तु ।
मन्त्रैरेतैस्तु चाष्टाभिः अन्यैः सौदर्शनैस्तथा ॥ ५८९ ॥
संस्नाप्य मध्यकुम्भेन शुद्धोदैरभिषिच्य च ।
महोपनिषदन्तस्थैः ब्रह्मसूक्तैः पुरोदितैः ॥ ५९० ॥
मन्त्रैश्चतुर्भिः पुंसूक्तैः मन्त्रैः षोडशभिस्तथा ।
वासुदेवद्विषट्कार्णब्राह्मणद्वितयेन तु ॥ ५९१ ॥
ओंकारादिपवित्रान्तैः चतुर्भिर्व्यापकैस्तथा ।
सहस्रधारया देवं स्नापयेद्विधिपूर्वकम् ॥ ५९२ ॥
यद्वा द्विषट्कमन्त्रेण सर्वं स्नपनमाचरेत् ।
ततोऽन्यैः सकलैर्भोगैः प्राग्वदिष्ट्वा क्रमेण तु ॥ ५९३ ॥
सर्वैः पुरोदितैर्मन्त्रैः द्विषट्कार्णेन वा द्विज !
होमं कृत्वा विशेषेण समिद्भिस्त्रिमधुप्लुतैः ॥ ५९४ ॥
ततो दमनकारोपमाचरेत्तु यथाविधि ।
अत्रानुक्तं तु सकलं पवित्रारोहवद्भवेत् ॥ ५९५ ॥
माघमासे पुनर्वस्वोश्चैत्रे वा द्वितयेऽपि वा ।
वैशाखे श्रवणे ऋक्षे रोहिण्यां श्रवणे तथा ॥ ५९६ ॥
आर्द्रायां मार्गशीर्षाख्ये आषाढे हस्ततारके ।
कार्तिके मासि रोहिण्यामन्येष्वेवंविधेष्वपि ॥ ५९७ ॥
अवतारदिनेष्वेवं कुर्यादेकाहमुत्सवम् ।
ग्रामे वा नगराद्ये वा सर्वेष्वावरणेषु वा ॥ ५९८ ॥
शुभलीलासमायुक्तमाचरेत्तु परिभ्रमम् ।
पक्षे पक्षे च द्वादश्यां मासि मासि तथैव च ॥ ५९९ ॥
अमावास्यां पौर्णमास्यां श्रवणे चोत्तरे दिने ।
अन्येष्वपि प्रशस्तेषु विभवेच्छानुरूपतः ॥ ६०० ॥
यजमानादिजन्मर्क्षे चैत्रादि विषुवद्वये ।
अयनद्वितये चापि सूक्ष्मस्थूले विशेषतः ॥ ६०१ ॥

तथा चाग्रयणाख्यं तु वत्सरे वत्सरे द्वयम् ।
आषाढे पूर्वफल्गुन्यां पुष्ये चैव विशेषतः ॥ ६०२ ॥
माघमासे तु पञ्चम्यां सप्तम्यामथवा द्विज ! ।
विशेषयजनं कुर्याद्विभवेच्छानुरूपतः ॥ ६०३ ॥
एकादश्यां मार्गशीर्षे पूर्वपक्षे विशेषतः ।
कुर्याद्विशेषयजनं तत्र संश्रावयेद्विभुम् ॥ ६०३ ॥
सदागमादिकान् सर्वान् वेदान् वै वेदघोषणम् ।
इतिहासपुराणं च तथा दैवं च मानुषम् ॥ ६०५ ॥
वेदोपबृंहणं त्वन्यत् संस्कृतं प्राकृतं तु वा ।
भाषान्तरगतं वापि यथाश्रद्धानुरूपतः ॥ ६०६ ॥
एवं विशेषयजनं द्वादश्यां तु समाचरेत् ।
पायसाद्यं गुलाद्यं वा प्रभूतं विनिवेदयेत् ॥ ६०७ ॥
समाप्ते भगवद्यागे पारणं तु समाचरेत् ।
एतत्तिथिद्वययुतमुत्तमं व्रतमीरितम् ॥ ६०८ ॥
अतः परं स्याद्विस्तारो विभवेच्छानुरूपतः ।
तदादिपौर्णमास्यान्तं पञ्चम्यन्तं तु वा द्विज ॥ ६०९ ॥
दशम्यमावास्यान्तं वा पञ्चमी दशमी तु वा ।
एवं त्रिंशद्दिनान्तं तु विभवानुगुणं भवेत् ॥ ६१० ॥
वैशाखे च विशाखर्क्षे विशेषयजनं भवेत् ।
सहकारफलैः पक्वैः गुलक्षीरादिपाचितैः ॥ ६११ ॥
कार्तिके मासि कार्तिक्यां विशेषार्चनमाचरेत् ।
घृततैलमहादीपैः प्रभूतैर्दर्शयेत् प्रभुम् ॥ ६१२ ॥
शुभैरन्यैर्लाजपूर्वैः शुभैर्भक्ष्यादिभिः सह ।
फलपुष्पादिकैः पूतैः तत्तत्काले समर्चयेत् ॥ ६१३ ॥
पौषे मासि च पुष्ये तु विशेषस्नपनान्वितम् ।
कार्तिके मासि विप्रेन्द्र ! शुक्लैकादशिका तु या ॥
तस्यामुपोष्य रात्र्यां तु जागरेण जगत्पतिम् ।
तत्कालोचितरागोत्थैः तोषयित्वा तु गीतकैः ॥
ब्राह्मे मुहूर्ते संप्राप्ते विशेषेण यजेद्विभुम् ।
संश्रावयेद्गीतकानि स्तोत्राणि विविधाः कथाः ॥६१५॥

होमाद्यसानं सर्वं तु सविशेषं समाचरेत् ।
तत्काले ये च गायन्ति तच्च शृण्वन्ति ये जनाः ॥
तेषां पुण्यफलावाप्तिं कः शक्तोत्यभिवर्णितुम् ।
आचार्याः साधका वापि कुर्वीरंश्चैवमुत्सवम् ॥ ६१८ ॥
आचार्यास्तेषु सोष्णीषा भवेयुस्सोत्तरीयकाः ।
अकंचुकाः सदा विप्र ! साधकाः स्युः सकञ्चुकाः ॥
सकञ्चुका यद्याचार्यास्तत्पूजा निष्फला भवेत् ।

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे महोत्सवादिविधिर्नाम सप्तदशोऽध्यायः ।

---

श्रीः

# अष्टादशोऽध्यायः ॥

सनकः —

नित्यनैमित्तिकाद्येषु यागेषु वदतां वर ।
मानं तु प्रापणादीनां श्रोतुमिच्छामि तद्वद ॥ १ ॥

शाण्डिल्यः —

नित्ये नैमित्तिके काम्ये प्रायश्चित्ते तथैव च ।
मानं नवविधं विप्र ! शृणु मुख्यानुकल्पयोः ॥ २ ॥
क्रमात् प्रापणपूर्वाणां द्रव्याणामुत्तमादिकम् ।
अर्चकमूर्तेरेकस्मिन् काले भारद्वयेन तु ॥ ३ ॥
कल्पयेत् प्रापणं चैतदुत्तमोत्तमसंज्ञितम् ।
एकैकं द्रोणमानेन क्रमाद्ध्रासं समाचरेत् ॥ ४ ॥
अधमाधमसंज्ञं स्याद्यथा द्रोणचतुष्टयम् ।
मुख्यकल्पमिमं विद्धि अनुकल्पं शृणुष्व मे ॥ ५ ॥
मुख्यमूर्तेस्त्वथैकस्मिन् यागे भारेण कल्पितम् ।
उत्तमोत्तमसंज्ञं तु प्रापणं द्विजसत्तम ! ॥ ६ ॥
आढकद्वयहीनं तद्भवेदुत्तममध्यमम् ।
अधमाधमकं यावदेवं ह्रासं समाचरेत् ॥ ७ ॥
यथा द्रोणद्वयं विप्र ! अधमाधमसंज्ञितम् ।
यद्वाढकद्वयं प्रोक्तमधमाधमसंज्ञितम् ॥ ८ ॥
क्रमेण तस्मादारभ्य द्रोणार्धं वर्धयेद्द्विज ! ।
अथोत्तमोत्तमं विप्र ! सार्धद्रोणचतुष्टयम् ॥ ९ ॥
कुर्यादाढकमात्रं तु प्रापणं संकटे सति ।
पुरुषाशनमात्रं वा भवेद् द्रव्यानुरूपतः ॥ १० ॥
आढकद्वयमानेन तदर्धेनाथवा द्विज ! ।
पृथक्पात्रेषु निर्दिष्टं यावद्भारद्वयावधि ॥ ११ ॥
नित्ये नैमित्तिके काम्यप्रायश्चित्ताख्ययोरपि ।
विधिरेष समानः स्यादत ऊर्ध्वं महाहविः ॥ १२ ॥
दशैकभारमात्रं तु उत्तमोत्तमसंज्ञितम् ।
महोदनोऽनुकल्पे तु भारै (एकै) क ह्रासमाचरेत् ॥ १३ ॥
अधमाधमपर्यन्तमस्मिन् भारद्वयं यथा ।
यद्वा विंशतिभारं तु उत्तमोत्तमसंज्ञितम् ॥ १४ ॥
भारद्वयद्वयह्रासं यथा स्यादधमाधमे ।
चतुर्भारप्रमाणं तु मुख्यकल्पे विधिं शृणु ॥ १५ ॥
एकभारविहीनैस्तु त्रिंशद्भारैः प्रकल्पितम् ।
उत्तमोत्तमसंज्ञं तु भाराणां तु त्रयं त्रयम् ॥ १६ ॥
ह्रासयेत्क्रमयोगेन यथा स्यादधमाधमे ।
पञ्चभारप्रमाणं तु एवं वा परिकल्पयेत् ॥ १७ ॥
पञ्चाशद्भारमात्रं स्यात् उत्तमोत्तमसंज्ञितम् ।
पञ्चपञ्चपरित्यागादेवं नवविधं भवेत् ॥ १८ ॥
दशभारप्रमाणं तु यथा स्यादधमाधमे ।
अस्मादूर्ध्वं तु गृह्णीयान्महोदनविधौ द्विज ! ॥ १९ ॥

सहस्रभारपर्यन्तं विभवेच्छानुरूपतः।
मात्रार्थं तण्डुलं श्रेष्ठमाढकत्रयकल्पितम् ॥ २० ॥
अधमाधमपर्यन्तं प्रस्थं प्रस्थं तु ह्रासयेत्।
मुख्यकल्पे भवेच्छ्रेष्ठं सार्धद्रोणविनिर्मितम् ॥ २१ ॥
प्रस्थद्वयद्वयह्रासमाचरेत्तु यथाक्रमम्।
अधमाधममानं स्याद्यथा द्रोणार्धकल्पितम् ॥ २२ ॥
अधमाढकमानस्य हविषो मुख्यकल्पने।
मात्रार्थं तण्डुलं प्रस्थं तदर्धमनुकल्पके ॥ २३ ॥
हविर्वृद्धिक्रमेणैव मात्रावृद्धिं समाचरेत्।
अधमस्यैककल्पे तु द्रोणार्धं परिकल्पयेत् ॥ २४ ॥
मात्रार्थमनुकल्पे तु आढकं परिकल्पयेत्।
तण्डुलाद्द्विगुणः शालिर्मात्रा स्यादुत्तमोत्तमा ॥ २५ ॥
समाना मध्यमा प्रोक्ता तदर्धा कीर्तिताधमा।
शालिवत्कल्पितव्या स्याद्बीजमात्रा त्रिधा स्थिता ॥
बीजानामप्यभावे तु मुद्गमेकं प्रशस्यते।
बीजेष्वेकतमं वापि तत्तत्कालानुरूपतः ॥ २७ ॥
तण्डुलेन समा मुख्या तिलमात्रा प्रकीर्तिता।
तदर्धा मध्यमा प्रोक्ता पादमाना कनीयसी ॥ २८ ॥
यथा विभवमानः स्याद्विकयित्ताढ्यमानयोः।
शालिमात्रा न कर्तव्या यागे स्नपनवर्जिते ॥ २९ ॥
अन्या मात्राः प्रकल्प्याः स्युः सर्वस्मिन्नर्चनाविधौ।
मुख्यमूर्त्युचितान्मानादधिकेन न कल्पयेत् ॥ ३० ॥
प्रमाणेनाङ्गबिम्बानां सर्वं तु हविरादिकम्।
तथाप्यधिककालं तु हविराद्यं न कल्पयेत् ॥ ३१ ॥
अन्नादाढकमानात्स्यात् पुरुषाशनमात्रकात्।
प्रासादयजने ह्रासं न कदाचित् समाचरेत् ॥ ३२ ॥
मात्रा तण्डुलमानं च शालिमानं तथैव च।
न ह्रासयेन्मुनिश्रेष्ठ! मानादाढकनिर्मितात् ॥ ३३ ॥
स्वगृहे यजने कुर्याद्विभवेच्छानुरूपतः।
आज्यादीनामथो मानं वक्ष्ये तदवधारय ॥ ३४ ॥

अन्नस्याढकमानस्य घृतं तु कुडवत्रयम्।
उत्तमोत्तमसंज्ञं तु मुख्यकल्पक्रमेण तु ॥ ३५ ॥
एकैकमुष्टिहान्या तु नवधैतत् प्रकीर्तितम्।
अनुकल्पे घृतं विप्र! सार्धं तु कुडवं भवेत् ॥ ३६ ॥
अर्धार्धमुष्टिहान्या तु तत्रापि नवधा स्मृतम्।
द्विगुणं घृतमानं स्यात् मुद्गान्नपरिकल्पने ॥ ३७ ॥
अन्नवृद्धिक्रमेणैव घृतवृद्धिं समाचरेत्।
कर्मण्यान्युपदंशार्थं मूलानि च फलानि च ॥ ३८ ॥
त्रिंशत्पलानि प्रोक्तानि उत्तमोत्तमसंज्ञया।
अन्नस्याढकमानस्य मुख्यकल्पक्रमेण तु ॥ ३९ ॥
एकैकपलहान्या तु तदेतन्नवधा भवेत्।
उत्तमं द्वादशपलमनुकल्पे क्रमेण तु ॥ ४० ॥
एकैकपलहानिः स्यादधमाधमपश्चिमम्।
मुद्गमेदोपदंशस्तु आढके घृतमानवत् ॥ ४१ ॥
मुद्गान्ने मुद्गमानस्तु तण्डुलेन समो भवेत्।
मुख्यः पादविहीनस्तु मध्यमः परिकीर्तितः ॥ ४२ ॥
अर्धमानोऽधमः प्रोक्तस्तस्मान्न ह्रासमाचरेत्।
नालिकेरफलं चैकमाढकस्य प्रकीर्तितम् ॥ ४३ ॥
तदर्धं मध्यमं प्रोक्तं तदर्धमधमं भवेत्।
लवणं च मरीचादि यथायोगं समाचरेत् ॥ ४४ ॥
तण्डुलादष्टगुणितं पयः स्यात् पायसोदने।
मध्यमं पादहीनं स्यादधमं स्यात्तदर्धकम् ॥ ४५ ॥
क्षीराभावे नालिकेरपयसा परिकल्पयेत्।
उभयोः पयसोर्वापि मिश्रणं सममानयोः ॥ ४६ ॥
गुडान्नस्याढकस्याथ गुलानां त्रिंशतं पलम्।
उत्तमं विंशतिश्चैव मध्यमे दशमं भवेत् ॥ ४७ ॥
तण्डुलादर्धमानो वा मुद्गभेदस्तदर्धकः।
अथवा सममानो वा पायसान्नगुलान्नयोः ॥ ४८ ॥
एकं चापूपमानं स्यात् कुडुवद्वयकल्पितम्।
मुख्यं तदर्धं मध्यं स्यात्तदर्धमधमं भवेत् ॥ ४९ ॥

मुद्गमेदस्तण्डुलार्धस्तत्पादो वा यथारुचि ।
एकस्यापूपमानस्य षट्पलं तु गुळं भवेत् ॥

अथवैकपलं वापि संकटे परिकल्पयेत् ।
नालिकेरपलं चैकं तदर्धं पादमेव वा ॥ ५१ ॥

एकस्यापूपमानस्य यथापाकं घृतं भवेत् ।
लवनं च मरीचाद्यं यथायोगं तु पूर्ववत् ॥ ५२ ॥

शतत्रयं पञ्चधिकमपूपानां तदुत्तमम् ।
चत्वारिंशत्क्रमाद्ध्रासं चत्वारिंशत्तथान्तिमे ॥ ५३ ॥

पूगीफलानि ताम्बूलीदलाश्चाशीतिसङ्ख्यया ।
एवं प्रकल्पितं ब्रह्मन्नेकं ताम्बूलमुच्यते ॥ ५४ ॥

तस्मान्न्यूनं न कर्तव्यं प्रासादेषु कदाचन ।
मुख्यकल्पे द्विसाहस्रं क्रमुकीफलमुच्यते ॥ ५५ ॥

तस्माद्द्विगुणमानं तु ताम्बूलीदलमीरितम् ।
उत्तमोत्तममेतत्तु अशीतिर्ह्रासचतुःक्रमात् ॥ ५६ ॥

ह्रासयेदुभयं विप्र ! यथा स्यादधमाधमे ।
शतानि सप्त, विंशच्च फलानि स्युर्दलानि च ॥ ५७ ॥

चतुर्दशशतानि स्युश्चत्वारिंशच्च सत्तम ! ।
एकस्य ताम्बूलकस्य अङ्गानां मानमुच्यते ॥ ५८ ॥

एलालवङ्गतक्कोलजातीनां निष्कपादकम् ।
मानं स्याच्चन्दनस्यापि चूर्णस्यापि तथैव च ॥ ५९ ॥

कर्पूरमष्टमानं तु नालिकेरफलार्धकम् ।
मातुळङ्गफलार्धं च तैलमुष्ट्यष्टमांशकम् ॥ ६० ॥

एवमेव क्रमेणैव ह्यङ्गानां वृद्धिमाचरेत् ।
उत्तमोत्तमपूजायां चन्दनं द्विपलं भवेत् ॥ ६१ ॥

सपादं, मुख्यकल्पे तु, द्विद्विनिष्कविहीनकम् ।
अधमाधमकं याव, दनुकल्पे शृणुष्व मे ॥ ६२ ॥

पलमेकं सनिष्कं स्यान्निष्कैकं ह्रासयेत् क्रमात् ।
चन्दनं निष्कमानं तु यथा स्यादधमाधमे ॥ ६३ ॥

स्नपने चन्दनं मानं मुख्यकल्पेऽवधारय ।
अष्टादशपलं मानमुत्तमोत्तमसंज्ञितम् ॥ ६४ ॥

पलद्वयद्वयह्रासो यावत् स्यादधमाधमम् ।
अनुकल्पे नव पलं स्नपने चन्दनं भवेत् ॥ ६५ ॥

होमे चन्दनमानं तु पूजोक्तादर्धकं भवेत् ।
तदर्धं वा यथायोगं वाह्लिके मानमुच्यते ॥ ६६ ॥

पूजाचन्दनवन्मानं मुख्यकल्पानुकल्पयोः ।
तथा कर्पूरमानं तु तदर्धं वा द्विजोत्तम ! ॥ ६७ ॥

आढकं हैममुदकं कुडुबद्वयसंयुतम् ।
कुडुबद्वयद्वयह्रासमाचरेदन्तिमावधि ॥ ६८ ॥

मुख्यकल्पमिमं विद्धि, ह्यनुकल्पे तदर्धकम् ।
कृष्णाङ्गरागं मुख्ये तु सार्धनिष्कचतुष्टयम् ॥ ६९ ॥

निष्कार्धक्रमह्रासेन नवधा परिकीर्तितम् ।
अनुकल्पे तदर्धेन नवधा मानमीरितम् ॥ ७० ॥

कृष्णाङ्गरागवन्मानं भवेन्मृगमदस्य च ।
कस्तूरिकायाश्च तथा मानं नवविधं भवेत् ॥ ७१ ॥

द्रव्याणां स्नपनोक्तानां निष्काष्टादशकं तु वा ।
नवकं चोत्तमोत्कृष्टं यथा स्यादधमाधमम् ॥

निष्कद्वयं तथैकं वा भवेत्तत्कल्पयेत्तथा ।
एवं विज्ञाय मानाद्यं संस्कृत्य हविरादिकम् ॥ ७३ ॥

आराधयेद्देशिकेन्द्रो यथा शास्त्रोदितक्रमात् ।
आचार्यः साधको वाऽन्नं पाचयेत्पाचकैः सदा ॥ ७४ ॥

स्वयं वाऽपि यथायोगं मन्त्रज्ञानामसन्निधौ ।
तेषामाचार्यपूर्वाणां सङ्ख्यानियम उच्यते ॥ ७५ ॥

श्रीरङ्गाख्यविमानादौ स्वयं व्यक्ते महामते !
प्रासादे च तथा सिद्धैः विबुधैश्च प्रतिष्ठिते ॥ ७६ ॥

आचार्यान् शास्त्रविहितांश्चतुरः परिकल्पयेत् ।
अष्टौ द्वादश षड्वाथ कल्प्याः स्युः पञ्च वा मुने !

प्रधानगुरुणा सार्धं कल्प्या ह्येकोत्तरास्तु वा ।
यथा विहितसङ्ख्या वा सह तेन महामुने ! ॥ ७८ ॥

एवमेव भवेत् सङ्ख्या ऋषिभिः परिकल्पिते ।
मनुष्यनिर्मिते स्थानेऽप्येवमेव समाचरेत् ॥ ७९ ॥

आचार्याणां यथोक्तानां योग्यानामप्यसन्निधौ।
आचार्यास्तु त्रयः कल्प्याः द्वावेको वा महामते! ॥
मूलबिम्बादि पूजार्थमाचार्या मुख्यकल्पके।
कल्प्याः साधकमिश्रा वा मध्यकल्पेऽनुकल्पके ॥
केवलाः साधकाः कल्प्या यथा विहितसङ्ख्यया।
चत्वारः साधकाः कल्प्याः षडष्टौ द्वादशाथवा ॥८२॥
षोडशाथापि विभवे नान्यथा परिकल्पयेत्।
स्वयंव्यक्तादिकेष्वेवं कल्प्याः पञ्चविधेष्वपि ॥ ८३ ॥
स्थानेषु मानुषेष्वत्र विशेषः परिकीर्त्यते।
व्यामिश्रयाजिभिर्वर्णैः स्थाने तु परिकल्प्यते ॥ ८४ ॥
एवं विहितसङ्ख्याः स्युराचार्याः साधकास्तथा।
मुख्यकल्पेऽनुकल्पे तु केवलाराधकान् दश ॥ ८५ ॥
यथोक्तसङ्ख्यैराचार्यैः सहितान् परिकल्पयेत्।
मूलबिम्बस्य पूजार्थं तदेवंसङ्ख्यकास्तु ते ॥ ८६ ॥
कल्पने पञ्चसङ्ख्यायास्तथा पञ्चदश स्मृताः।
तेषां तु देशिकेन्द्राणामेकद्वित्रित्वकल्पने ॥ ८७ ॥
एकादश द्वादश च त्रयोदश च ते क्रमात्।
तस्मादाराधकानां तु दशसङ्ख्यां तु केवलाम् ॥ ८८ ॥
न कल्पयेत्तु सर्वत्र तस्माच्छास्त्रोक्तमाचरेत्।
मानुष्याद्यतिरिक्तेषु स्वयं व्यक्तादिषु द्विज! ॥ ८९ ॥
यथा विहितसङ्ख्याः स्युराचार्यास्साधकास्तथा।
नित्ये नैमित्तिके काम्ये प्रायश्चित्तेऽपि सर्वदा ॥ ९० ॥
दशसङ्ख्या न कल्प्या स्यात् उक्तन्यायेन कल्पयेत्।
मूलबिम्बादिपूजार्थं तथा बाह्यस्थमूर्तिषु ॥ ९१ ॥
कृते सति महान् दोषस्तदा स्याद्राजराष्ट्रयोः।
महद्भयं स्यात् स्थानस्य कर्तुः कारयितुस्तथा ॥ ९२ ॥
तस्मादुक्तेन मार्गेण तत्तत्सङ्ख्याः प्रकल्पयेत्।
परिवारेषु यागः स्याच्चतुर्भिर्वा षडष्टभिः ॥ ९३ ॥
द्वादशभिः षोडशभिः साधकैः परिकल्पितैः।
गोपुरे मण्डपे साले प्राङ्गणे मालिकादिके ॥ ९४ ॥

स्थापिते वैभवं मूर्तं प्रादुर्भावं तु वा द्विज!।
प्रादुर्भावान्तरं मुख्यं यद्यन्मूर्तं प्रतिष्ठितम् ॥ ९५ ॥
तत्तद्यागेऽथ चत्वारः षडष्टौ द्वादशाथ वा।
सङ्कल्प्याः साधका विप्र! कल्प्याः षोडश वा द्विज! ॥
त एव परिचारार्थं कल्पनीयास्तु वा द्विज!।
गोपुरादौ स्थापितेषु बिम्बेष्वपि सदार्चने ॥ ९७ ॥
देशिका एव संकल्प्याः तद्योग्यानामसन्निधौ।
परिचारपदे योग्या अनन्या ब्राह्मणा द्विज ॥ ९८ ॥
दीक्षिता ब्राह्मणा वापि कर्मज्ञाः कर्मकौशलाः।
श्रीरङ्गादौ स्वयं व्यक्ते स्थाने तु परिचारकाः ॥ ९९ ॥
अशीतिसङ्ख्यासङ्ख्याताः पाचकाश्च त एव हि।
सिद्धप्रतिष्ठिते स्थाने तत्त्वयैव तु ते स्मृताः ॥ १०० ॥
देवप्रतिष्ठिते षष्टिर्विंशदधिकल्पिते।
मनुष्यनिर्मिते स्थाने त्रिंशद्विंशत्तथापि वा ॥ १०१ ॥
अथवा भारमाल्यापचनादिषु कर्मसु।
एकायना दीक्षिता वा चत्वारो वा त्रयोऽपि वा ॥
एवं भारानुसारेण क्रमेण परिवर्धयेत्।
यथा स्याद्दनुभारेषु (द्वि) द्वादशाष्टादश द्विज! ॥
एकस्तु कल्पनीयः स्यात्ताम्बूलापूपसाधने।
एकस्तु कल्पनीयोऽन्तः परिचारककर्मणि ॥ १०४ ॥
चत्वारिंशत्समाख्याताः तदेवं परिचारकाः।
पक्षभारोद्वनानां तु साधने तु चतुर्गुणाः ॥ १०५ ॥
अपूपसाधने द्वौ तु द्वौ तु ताम्बूल साधने।
चत्वारस्तु तथात्यन्तः परिचारककर्मणि ॥ १०६ ॥
एवं त्वशीतिसङ्ख्याः स्युः पक्षभारावसाधने।
वर्धयेदत ऊर्ध्वं च तत्तद्भारानुसारतः ॥ १०७ ॥
ह्रासस्तदनुसारेण कर्तव्योऽभ्यूह्य सर्वदा।
एवं स्याद्भारमाने तु त्रयाणां परिकल्पने ॥ १०८ ॥
चतुर्णां कल्पने वाऽपि तत्क्रमेण विवर्धयेत्।
साधकाः पाचकाश्चैव स्वाचार्यवशवर्तिनः ॥ १०९ ॥

आचार्यसाधकानां च आज्ञासन्धारणोद्यताः ।
सर्वदा पाचकाः सर्वे भवेयुः परिचारकाः ॥ ११० ॥

पाचका एव शास्त्रेषु कीर्त्यन्ते परिचारकाः ।
अन्तरङ्गा बहिरङ्गा द्विविधाः परिचारकाः ॥ १११ ॥

अन्तरङ्गास्तु संप्रोक्ताः पाचकाः परिचारकाः ।
बहिरङ्गास्तु संप्रोक्ताः पुष्पाद्याहरणोद्यताः ॥ ११२ ॥

अन्येऽपि ये निबद्धाः स्युस्तत्तत्कर्मानुरूपतः ।
तेऽपि सर्वे यथायोगमाचार्यवशवर्तिनः ॥ ११३ ॥

वाहका गायकाश्चैव पाचकोक्तक्रमेण तु ।
वर्धनीया यथायोगमन्ये स्युः कर्मकारिणः ॥ ११४ ॥

आचार्याश्चैव चत्वारः तथा षोडश साधकाः ।
अशीतिसङ्ख्यासङ्ख्याताः पाचकाः परिचारकाः ॥

एवमेकायनानां तु चतुः सङ्ख्याप्रकल्पनम् ।
मुख्यकल्पमिमं विद्धि तदभावे महामते ! ॥ ११६ ॥

तेषां दीक्षितमिश्राणां कल्पनं मध्यकल्पनम् ।
अधमं कल्पनं विद्धि सङ्ख्यास्वन्यास्वपि द्विज ! ॥

मुख्यादिप्रविभागत्वमेवमभ्यूह्य कल्पयेत् ।
पुत्रदीक्षाभिषेकेण संस्कृतांस्तत्र कल्पयेत् ॥ ११८ ॥

समये दीक्षाभिषेके संस्कृतान् वा न चान्यथा ।
आचार्यैः साधकाश्चैव केवलास्त्वथवा द्विज ! ॥११९॥

बहिरङ्गेषु सर्वेषु कल्प्याः समयदीक्षिताः ।
यया कया च विधया दीक्षिताऽदीक्षितास्तु वा ॥

भूयः कश्चिद्विशेषोऽयं कथ्यते तमिमं शृणु ।

सनकः —

मुनीन्द्र प्रापणादीनां सङ्ख्यामानमुदाहृतम् ॥ १२१ ॥

इदानीं सविशेषेण चैतेषां मानलक्षणम् ।
शालिमुद्गादिभेदं च साधनं मन्त्रपूर्वकम् ॥ १२२ ॥

निवेदनप्रकारं च कारिणां संप्रदानकम् ।
यथावत् सर्वमेवैतत् पृच्छतो मे प्रकाशय ॥ १२३ ॥

शाण्डिल्यः —

शृणु सम्यक् प्रवक्ष्यामि यथा पृष्टं त्वया मुने ! ।
येन संसाधितेनैव संपूर्णं पूजनं भवेत् ॥ १२४ ॥

नित्यं नैमित्तिकं काम्यं त्रिविधं हविरुच्यते ।
प्रथमं नित्ययागे तु हविषो लक्षणं शृणु ॥ १२५ ॥

स्वहस्तेनाष्टतालोच्चो यः स मध्यमपूरुषः ।
तस्य देशिकमुख्यस्य मध्यमाङ्गुलिसंभवः ॥ १२६ ॥

द्विपर्वस्राविणी बिन्दुः द्वात्रिंशद्बिन्दुभिस्त्रुटिः ।
त्रुटिद्वयं तथा शुक्तिस्तद्द्वयं प्रसृतं भवेत् ॥ १२७ ॥

प्रसृताभ्यां प्रकुंजं तु तद्द्वयं कुडुबं भवेत् ।
मानिका कुडुबाभ्यां तु प्रस्थं तन्मानिकाद्वयम् ॥१२८॥

प्रस्थद्वयं शरं प्रोक्तं तद्द्वयं चाढकं भवेत् ।
शिवमाढकयुग्मं तु द्रोणं तद्द्विगुणं भवेत् ॥ १२९ ॥

द्रोणद्वयं तु खारी स्यात् तत्त्रयं भारमुच्यते ।
शालितण्डुलमुद्गादि दधिक्षीरादिकान्यपि ॥ १३० ॥

प्रोक्तेनानेन मीयन्ते हविष्पाकादिकर्मसु ।
चत्वारो व्रीहयः कुंजः तेऽष्टौ माञ्जिष्ठमुच्यते ॥ १३१ ॥

तच्छतं षष्टिरधिकं निष्कं निष्काष्टकं पलम् ।
चन्दनादीनि गन्धामि गुळखण्डयुतानि च ॥ १३२ ॥

कदलीपनसाम्राणि कूष्माण्डप्रमुखानि च ।
तुलया तुलितानि स्युः यथोक्तपलमानतः ॥ १३३ ॥

ज्ञात्वैवं नियतं मानं हविषां साधनाय च ।
शालिमुद्गयवा माषा गोधूमाश्च प्रियङ्गवः ॥ १३४ ॥

तिलाः सप्त इमे ग्राह्या ग्राम्या वै चरुकर्मणि ।
वेणुश्यामाकनीवारा जर्त्तिलाश्च गवीधुकाः ॥ १३५ ॥

मर्कटाः कनकाः सप्त विज्ञेयास्तु वनोद्भवाः ।
शालयस्तेषु मुख्याः स्युस्तदन्यास्तदभावतः ॥ १३६ ॥

रक्तशाल्यो महाशालयः कलमा गन्धशालयः ।
श्वेतशाल्यः सशूकाश्च हेमाभा गर्भशालयः ॥ १३७ ॥

सुकुमाराश्च सूक्ष्माश्च दशैताः शालयः स्मृताः ।
अन्तर्भेदाश्च बहवः सप्तमुद्गा उदाहृताः ॥ १३८ ॥

मुद्गाः कृष्णाश्च हेमाश्च श्वेताः पीता महत्तराः ।
अञ्जनाभाश्च सप्तैते अन्तर्भेदा उदाहृताः ॥ १३९ ॥

श्वेताः कृष्णाश्च पीताश्च वन्याश्चैव महातिलाः ।
तिलानां पञ्चभेदास्तु ग्राह्याः स्युः परिकीर्तिताः ॥

उपाहृतानि केदाराद् दैवीयाच्च कृषीवलैः ।
शालिमुद्गादिभेदानि कर्मण्यान्यर्चने विभोः ॥ १४१ ॥

अवपक्वादिभिर्दोषैरष्टभिर्वर्जितानि च ।
आनयेदवघातार्थं अवघातगृहे पुरा ॥ १४२ ॥

गोमयेन समालिप्ते सुधाद्यैः परिमण्डिते ।
शोधिते शतधारेण पवित्रेण कुशाम्बुभिः ॥ १४३ ॥

स्थले प्रणवमुच्चार्य प्राङ्मुखैर्वाऽप्युदङ्मुखैः ।
दीक्षितैर्नियतैर्विप्रैर्भूतचक्रादिलक्षणैः ॥ १४४ ॥

सुस्नातैर्लोहदार्वश्ममृण्मयानि समन्ततः ।
स्थापयित्वोलूखलानि क्षालितैः खादिरैर्दृढैः ॥ १४५ ॥

मुसलैरवहन्युस्ते द्वादशाक्षरविद्यया ।
निस्तुषान्निष्कणान् कृत्वा तण्डुलान् शूर्पकोटरैः ॥

तैस्तावदवहन्तव्या यावन्मुक्ताफलप्रभाः ।
अखण्डिताश्चानणवः कृष्णबिन्दुविवर्जिताः ॥ १४७ ॥

मुद्गभेदास्तथा कार्याः सारवन्तश्च निस्तुषाः ।
साध्वीभिर्ब्राह्मणीभिर्वा दीक्षितानामभावतः ॥ १४८ ॥

शूद्रैर्वा दीक्षितैर्देवदासीभिर्देवसद्मनि ।
हविःपाकादिकार्यार्थं कार्याऽवहननक्रिया ॥ १४९ ॥

वैष्णवानां गृहे शुद्धे दीक्षितानां गृहेऽपि वा ।
तण्डुलांस्तु प्रगृह्णीयाद्विधिक्षुण्णांस्तु देशिकः ॥ १५० ॥

अकृणानतुषानेव क्रिमिहीनानपि क्रमात् ।
केशपाषाणहीनांस्तु प्राण्यङ्गरहितांस्तथा ॥ १५१ ॥

भस्माङ्गारविहीनांस्तु अभग्नानलघूनपि ।
कणैस्तु भवति व्याधिस्तुषैर्दारिद्र्यकं भवेत् ॥

कृमिभिः पुत्रनाशः स्यात् केशैर्दारविनाशनम् ।
पाषाणैर्मरणं विद्धि अशान्त्या वह्निना जलैः ॥

प्राण्यङ्गैर्व्याधयः प्रोक्ता भस्मना कलहो ध्रुवः ।
अङ्गारैर्वह्निना बाधो भग्ने भङ्गस्तु विग्रहे ॥ १५४ ॥

प्रवासो लघुभिश्चैवं तस्मात्तान् परिवर्जयेत् ।
संभारानखिलानेव प्राक्संकल्पितसंमतान् ॥ १५५ ॥

संभृत्य देशिकास्सार्धं साधकैः पाचकैरपि ।
अवघातगृहं प्राप्य तत्रस्थं तण्डुलादिकम् ॥ १५६ ॥

ब्रह्मशुक्रमिवेत्युक्त्वा नेत्रेणैवावलोकयेत् ।
प्राग्वत् संशोधयेत्तानि दहनाप्यायनादिभिः ॥ १५७ ॥

पैद(त्त)लादिषु शुद्धेषु पात्रेषु विततेष्वपि ।
पचनार्थं समुद्धृत्यं तत् सर्वं तण्डुलादिकम् ॥ १५८ ॥

तत्तत्पात्रसमुद्धारे निपुणैः परिचारकैः ।
सुस्नातैश्च सुवेषैश्च वस्त्रेणाच्छादिताननैः ॥ १५९ ॥

आनयेत् पचनागारं शङ्खतूर्यादिमङ्गलैः ।
द्वारस्योत्तरपार्श्वे तु गोमयेनोपलेपिते ॥ १६० ॥

प्रदेशे निक्षिपेत्तानि भाजनानि यथाक्रमम् ।
गुळोपदंशपूर्वाणि लवणादिरसानि च ॥ १६१ ॥

विन्यसेद्वायुदिग्भागे दधिक्षीरघृतानि च ।
निदध्यादैशकोणे भागे होमोपकरणान्यपि ॥ १६२ ॥

चतुर्भिर्व्यापकैर्मन्त्रैः वस्त्रपूतेन वारिणा ।
क्षाळयित्वा चतुर्धा च यथा स्यात्तण्डुलादिषु ॥ १६३ ॥

शिलाशकलनिर्मुक्तं निस्तुषं निष्कणं यथा ।
अपक्वव्रीह्यवहततण्डुलेनैव साधितम् ॥ १६४ ॥

गव्यदुग्धाज्यसंपृक्तं गुळखण्डफलान्वितम् ।
अक्षारलवणोपेतं देवानां हविरुच्यते ॥ १६५ ॥

तदेव परमान्नं स्यात् क्षीराज्यगुडपाचितम् ।
घृतसिक्तं तु शुद्धान्नमभावे हविरुच्यते ॥ १६६ ॥

अक्षारलवणं सिद्धं गुळक्षीरफलान्वितम् ।
शान्तिके व्रतयज्ञे च संसाध्यं हविरुत्तमम् ॥ १६७ ॥

पायसान्नं, गुळान्नं च मुद्गान्नं, केवलोदनम् ।
दध्यन्नं, च तिलान्नं च, निरान्नं, सर्वमिश्रितम् ॥

इत्यष्टधा समुद्दिष्टं हविर्देवस्य संमतम् ।
सर्वमाज्येन संसिच्य सोपदंशं निवेदयेत् ॥ १६९ ॥
तेषां संसाधनार्थं तु लोहजा वाऽथ मृण्मयाः ।
स्थाल्यः सशरावाश्च कल्पनीयाः पुरैव तु ॥ १७० ॥
देशिकेन्द्रकराङ्गुष्ठजठरोत्थाङ्गुलेन तु ।
षोडशाङ्गुलकोन्मानाः स्थाल्यः स्युः पाककर्मणि ॥
उच्छ्रायादुदरं तत्र द्वादशाङ्गुलसंमितम् ।
जठरे, मूलविस्तारः कलया तुलितो भवेत् ॥ १७२ ॥
अङ्गुलान्तरितं कार्यं कण्ठे सूत्रचतुष्टयम् ।
एवं लक्षणयुक्तायाः विस्तारोच्छ्रायमानयोः ॥ १७३ ॥
अर्धाधिकं वा द्विगुणं मध्यमोत्तमवाञ्छया ।
एवमाकृतिरुद्दिष्टा स्थालीनां पाककर्मणि ॥ १७४ ॥
शरावाणामथान्येषां लक्षणं शृणु सत्तम ! ।
अष्टाङ्गुलायतं सूत्रं भूमौ प्राप्य परिभ्रमेत् ॥ १७४ ॥
मध्यतो जठरं तस्य षोडशाङ्गुलविस्तृतम् ।
अष्टाङ्गुलान्तमुच्छ्रायमर्धचन्द्रसमाकृति ॥ १७६ ॥
कण्ठोर्ध्वं त्र्यङ्गुलं चोर्ध्वे वलयं द्व्यङ्गुलं भवेत् ।
दशाङ्गुलं चास्यतारं वलयेन समन्वितम् ॥ १७७ ॥
कण्ठोद्यादुदरोद्यान्तं ऋजुसूत्रद्वयेन तु ।
गुळसिद्धं च कुर्वीत प्राग्वत् सूत्रचतुष्टयम् ॥ १७८ ॥
हविः सङ्ख्यानुगुण्येन बहवः स्थाल्यस्तथेतराः ।
तथोपदंशपात्राणां सर्वेषामास्यविस्तृतेः ॥ १७९ ॥
अधिकान्यपिधानानि तत्तद्द्रव्यमयानि च ।
सुवृत्तानि पिधेयानि पादचन्द्राकृतीनि च ॥ १८० ॥
तथा पाकोपयोग्यानि पात्राण्यन्यानि सत्तम ! ।
प्राग्वन्मध्याद्यपेक्षायां समभ्यूह्य प्रकल्पयेत् ॥ १८१ ॥
घृततसोपदंशार्थमम्बरीषमथायसम् ।
जलद्रोण्यः कटाहाश्च बहवः क्षीरपाचने ॥ १८२ ॥
घृतपाके तथापूपसाधने पात्रसञ्चयम् ।
अन्यानि च समुत्पाद्य दर्व्यादीनि विधानतः ॥ १८३ ॥

प्रारभेत हविःपाकं वक्ष्यमाणेन वर्त्मना ।
आहृत्योदनपाकाग्निं कुण्डादौपासनानलात् ॥ १८४ ॥
चुल्ल्यां निधाय "तारेण" "सप्तते"ऽत्र इतीरयन् ।
इन्धनानि विनिक्षिप्य यज्ञदारुमयानि च ॥ १८५ ॥
क्रिमिकीटादिहीनानि "ज्योतिरात्मे"तिमन्त्रतः ।
प्रज्वाल्य व्यजनेनैव ततः स्थालीश्च ताम्रजाः ॥ १८६ ॥
प्रक्षाल्य तिन्त्रिणीतोयैः केवलैर्मृण्मयांस्ततः ।
प्रक्षाल्य द्वादशार्णेन वीर्यमन्त्रेण मन्त्रवित् ॥ १८७ ॥
घृतेनालेपयेत्तासामन्तरं व्यूहविद्यया ।
तण्डुलान् प्रक्षिपेत्तासु गायत्र्या विष्णुपूर्वया ॥ १८८ ॥
अंभस्यपार इति च मन्त्रेण स हृदा पुनः ।
जलेनापूरयेदूर्ध्वे तण्डुलान् प्रतिपात्रगान् ॥ १८९ ॥
तण्डुलाढकमानस्य षट्प्रस्थमुदकं भवेत् ।
कर्मारंभेण ताःस्थालीश्चुल्ल्यामारोपयेत्ततः ॥ १९० ॥
चक्रमन्त्रेणापिधानीस्ताः संछाद्य यथाक्रमम् ।
पाककाले समुद्घाट्य वीर्यमन्त्रेण तद्ध्वनिम् ॥ १९१ ॥
निरीक्ष्य नेत्रमन्त्रेण दर्व्या 'मूलं' समुद्धरन् ।
चतुर्धा वर्तयेच्चैव चक्रेणाच्छादयेत् पुनः ॥ १९२ ॥
पक्वे जलमविस्राव्य द्वादशार्णं समुच्चरन् ।
विद्रावितेन गव्येन हविषा चाभिघार्य च ॥ १९३ ॥
शुचीन् सन्क्रियतेत्यादि मन्त्रेणाधारपृष्ठतः ।
शोधिते भूतले वाथ व्रीहिभिर्वा प्रसारिते ॥ १९४ ॥
एवं हवींषि सिद्धानि पाणिभ्यामवरोप्य च ।
अस्त्राभिमन्त्रितेनैव वह्निः प्रक्षाल्य वारिणा ॥ १९५ ॥
तन्मन्त्रितेन शुद्धेन वस्त्रेणोद्वर्तयेत्ततः ।
भस्मना मथितेनाद्भिर्वासुदेवादिवाचकैः ॥ १९६ ॥
तर्जन्याद्यङ्गुलीभिश्च कुर्याद्विक्षूर्ध्वपुण्ड्रकम् ।
समाच्छाद्य पिधानैश्च वसनैः क्षालितैस्ततः ॥ १९७ ॥
इत्युक्तं साधनं सम्यक् शुद्धान्नस्य विशेषतः ।
अन्येषां साधनं वक्ष्ये परमान्नपुरस्सरम् ॥ १९८ ॥

तण्डुलस्य तु तुर्यांशं पायसे मुद्गसारकम्।
तन्मानं घृतमुद्दिष्टं प्रागेव कथितं पयः ॥ १९९ ॥

चतुर्गुणं तण्डुलाच्च खण्डचूर्णसमन्वितम्।
साधयेदुक्तमार्गेण समन्त्रं केवलोदने ॥ २०० ॥

"हंसः शुचिष"दित्यत्र गोक्षीरस्य नियोजनम्।
तदभावे नियोक्तव्यं नालिकेरोद्भवं पयः ॥ २०१ ॥

"अब्जागोजे"ति तत्क्षेपः स्याद्रव्यप्रतियोजने।
गुडान्नपाचने क्षीरमपद्यार्थेक्षवं रसम् ॥ २०२ ॥

कथितं गुडखण्डं वा क्षीरमानानुसारतः।
क्षीरप्रक्षेपमन्त्रेण गुडाद्यानि नियोजयेत् ॥ २०३ ॥

मुद्गान्ने तण्डुलं सम्यक् मुद्गसारं नियोजयेत्।
शुद्धान्ने तु पुरा प्रोक्तं विशेषेण घृताप्लुतम् ॥ २०४ ॥

दध्योदने दधिक्षेपः क्षीरार्धपरिसंमितः।
कदलीपनसाम्रादिगुडखण्डसमन्वितम् ॥ २०५ ॥

खण्डचूर्णसमोपेतं कृसरान्ने तु मुद्गकम्।
आढकस्य हरिद्रान्ने निशापिष्टं पलं भवेत् ॥ २०६ ॥

मुद्गसारसमोपेतं गुडखण्डादिसंयुतम्।
मिश्रान्ने योजयेत् किंचित् क्षीराज्यघृतसंप्लुतम् ॥

शान्त्यर्थं पयसा मिश्रं पुष्ट्यर्थं गुडमिश्रितम्।
वश्यार्थं मुद्गसारोत्थमाकृष्टौ दधिमिश्रितम् ॥ २०८ ॥

कृसरान्नं तु पित्र्यर्थं मारणोच्चाटनेऽपि च।
स्तंभने च हरिद्रान्नं मिश्रान्नं मोहने भवेत् ॥ २०९ ॥

साधारणं तु शुद्धान्नं यात्रासु मृगयादिके।
विशेषेण तु दध्यन्नं हेमराजतपात्रगम् ॥ २१० ॥

मरीचिशुण्ठीलिकुचतिन्त्रिणीरसमिश्रितम्।
चूर्णेन जीरकोत्थेन संस्कुर्याद्रसवस्तुभिः ॥ २११ ॥

रसभेदसमुत्थानि पनसद्वितयोद्भवम्।
चूतभेदसमुत्थानि नातिपक्वानि कालतः ॥ २१२ ॥

वृहत्युर्वारुवार्ताककूष्माण्डप्रभवानि च।
कारवल्लीलतोत्थानि कार्कोटप्रभवानि च ॥ २१३ ॥

पटोलद्वितयोत्थानि कोशातक्युद्भवे तथा।
अलाबुकर्करीनिम्बभेदोत्थं तिन्त्रिणीफलम् ॥ २१४ ॥

क्षुद्रकन्दसमेतं च वल्लीकन्दद्वयं तथा।
सूरणद्वयकन्दं च तथा पिण्डारकद्वयम् ॥ २१५ ॥

पद्मोत्पलसमुत्थं च हविर्योग्यं विशेषतः।
उच्छिष्टं कृमिदष्टं च शिवाद्यैर्दंशितं तथा ॥ २१६ ॥

घ्रातं लालाजलस्पृष्टममेध्यस्थलसंभवम्।
पादस्पृष्टमकालोत्थमाहृतं चाशुचिस्थले ॥ २१७ ॥

भुक्तशेषं तथाऽहृद्यस्पृष्टं दृष्ट्वावशेषकम्।
परीक्ष्य बहुधा मन्त्री वर्जयेत् पाककर्मणि ॥ २१८ ॥

जीवन्तीं वास्तुकं शाकं कारवल्लीदलं तथा।
तुम्बीदलं च पिण्डीं च चमू (पुच्छ) मुद्गदलानि च ॥

शाकिनीं शतपर्वाणं तथैव श्वासमर्दितम्।
आगस्त्यं पाचयेच्छाकं विहितं ब्राह्मणस्य च ॥ २२० ॥

एकमूलानि चान्यानि गृह्णीयाद्नैवेद्यने।
छेदयित्वा लवित्रेण वीर्यमन्त्रं समुच्चरन् ॥ २२१ ॥

निरीक्ष्य कृमिकीटादीन् शाकांश्च बहुधा तथा।
प्रक्षाल्य तेषु पात्रेषु निधाय बहुधा जलैः ॥ २२२ ॥

प्रावत् स्थालीषु निक्षिप्य प्रत्येकं वाऽथ मिश्रितम्।
सैन्धवैः समरीचैश्च सर्षपैर्जीरकैरपि ॥ २२३ ॥

श्रीपर्णीदलसंमिश्रैः पयोभिर्नालिकेरजैः।
तत्फलैरपि संघृष्टैर्मृदुभिर्घृतमिश्रितैः ॥ २२४ ॥

मसूरमाषनिम्बादिमुद्गभेदसमन्वितम्।
सयूपान् मुद्गभेदाद्रीनयूपान् लवणादिभिः ॥ २२५ ॥

रसभेदैः समेतांश्च साधयेत्तदनन्तरम्।
त्वचो व्यपोह्य मुद्गोत्थैः सारैः क्षीरेण पाचितैः ॥

मरीचजीरलवणैर्धृतयुक्तैश्च मर्दितैः।
दध्यादिभिश्च संस्कुर्यात् गुल्मानि सरसं यथा ॥२२७॥

स्थालीशरावपूर्णेषु पाचितानि पुरैव तु।
कदलीपनसादीनि नालिकेरफलानि च ॥ २२८ ॥

कूश्माण्डबृहतीपूगकारवल्लीफलानि च ।
क्षुद्रकन्दसमेतानि वल्लीपिण्डारकानि च ॥ २२९ ॥
अम्बरीषादिपात्रेषु विततेषु समन्ततः ।
घृतलिप्तेषु तप्तेषु समारोप्य प्रसार्य च ॥ २३० ॥
चूर्णीभूतैर्मरीचैश्च जीरकेन घृतेन च ।
प्रतापितानि स्निग्धानि दर्व्यालोड्य पुनः पुनः ॥
स्थापनीयानि भाण्डेषु छादितान्यम्बरादिभिः ।
आम्रादीनि च शुष्काणि अशुष्काणि फलानि च ॥
तिन्त्रिणीगुडमिश्राणि मरीचैर्जीरकैरपि ।
नालिकेरोत्थपयसा सर्वैः पेषितैरपि ॥ २३३ ॥
स्थापयेदाम्रसारोत्थं लवणेन समन्वितम् ।
शृङ्गिबेरं तथार्द्रं च दलितं रहितं च वा ॥ २३४ ॥
वासितं लवणोपेतं लिकुचोत्थरसेन तु ।
कदलीपनसाम्राणां केवलानि फलानि च ॥ २३५ ॥
गोधूमशालिजैः पिष्टैर्गुडपाकेन लोलितैः ।
पाचितैर्मुद्गसारैश्च शकलैर्नालिकेरजैः ॥ २३६ ॥
जीरकैः समरीचैश्च घृतेऽपूपानि पाचयेत् ।
सुवृत्तान्याम्रतुल्यानि धात्रीफलसमानि च ॥ २३७ ॥
न्यग्रोधफलतुल्यानि लिकुचाद्याकृतीनि च ।
अन्तर्निक्षिप्तमुद्गानि रसवन्ति समन्ततः ॥ २३८ ॥
गुडपिष्टेन बद्धानि नालिकेराकृतीनि च ।
नानाभेदसमुत्थानि घृतेऽपूपानि साधयेत् ॥ २३९ ॥
शालिव्रीहिसमुत्थाश्च शालिषु स्फुटितानि च ।
लघूनि वह्नितप्तानि गुडपाकान्वितानि च ॥ २४० ॥
चूर्णितैश्च मरीचैश्च जीरकैः खण्डितैरपि ।
नालिकेरफलैः शुष्कैः पृथुकानि च साधयेत् ॥ २४१ ॥
भर्जितैः शालिपिष्टैश्च मिश्रितैर्जीरकादिना ।
लोलितैर्गुडपाकेन पिण्डीभूतैः पृथक् पृथक् ॥ २४२ ॥
सक्तु स्यात् साधितं तद्वत्तिलैः पिण्डः सुभर्जितैः ।
तिलपिण्ड इति ख्यातः सदा देवस्य संमतः ॥ २४३ ॥

सुशृतं च घनीभूतं खण्डचूर्णसमन्वितम् ।
क्षीरं च मधुसर्पिभ्यां संपृक्तं सुघनं दधि ॥ २४४ ॥
तरुणैः शकलीभूतैरुर्वारुसहकारयोः ।
रूक्षसर्षपसंमिश्रं समरीचं तथा दधि ॥ २४५ ॥
पृथक्पात्रगतं शुद्धं गालितं माक्षिकं मधु ।
द्राक्षापनसरंभाम्रसमुत्थैर्मर्दितै रसैः ॥ २४६ ॥
लोलितं गुळखण्डेन जीरकादिसमन्वितम् ।
रसालमेतद्विज्ञेयं दधिमिश्रं तु पानकम् ॥ २४७ ॥
केवलं दधिसंमिश्रं वारिणा तत्समेन तु ।
मथितं समरीचं च लवणेनाधिवासितम् ॥ २४८ ॥
खण्डचूर्णसमोपेतं पानकं श्रमशान्तिकृत् ।
अन्नानामपि संस्कारे पुरा मन्त्राः प्रकीर्तिताः ॥
तदन्येषां तु संस्कारो द्वादशार्णेन वा हृदा ।
साङ्गेन मूलमन्त्रेण सर्वं संसाधयीत वा ॥ २५० ॥
विष्णुगायत्रिया वाऽथ पञ्चोपनिषदाथवा ।
संसाध्य परमाम्नायमुपदेशान्वितं क्रमात् ॥ २५१ ॥
फलकादिषु संस्थाप्य चोर्ध्वपुण्ड्राद्यलंकृतम् ।
महानसद्वारभूमेरालयद्वारपश्चिमम् ॥ २५२ ॥
गोमयेनानुलिप्तेन सुधाचूर्णेन शोभिना ।
पथाऽस्त्रमन्त्रसंजप्तवारिधारापुरस्सरम् ॥ २५३ ॥
शङ्खतूर्यादिघोषेण तथा मङ्गलगीतिभिः ।
प्रदीपच्छत्रयुक्तैश्च हविःपालनतत्परैः ॥ २५४ ॥
वेत्रपाणिभिरन्यैश्च नास्तिकोत्सारणोद्यतैः ।
स्नाताः शुक्लाम्बरा दक्षाः कृतपादावनेजनाः ॥ २५५ ॥
स्वाचान्ताः कुशहस्ताश्च मृदा वा चन्दनादिना ।
धृतोर्ध्वपुण्ड्रा नियताः मनोवाक्कायकर्मभिः ॥ २५६ ॥
सितकञ्चुकधरोरः स्थगितानननासिकाः ।
बलमन्त्रेण भाण्डानि वहेयुः परिचारकाः ॥ २५७ ॥
मूलालयाग्रदेशस्थमण्टपे विततेऽथवा ।
प्रथमावरणे धाम्नो दक्षिणे माळिकावनौ ॥ २५८ ॥

सुगुप्ते सुविस्तानाञ्चं दीपमालाद्यलंकृते ।
प्रदेशे वस्त्रसञ्छन्ने स्थाप्यानि फलकादिके ॥ २५९ ॥

शुचिः प्रमाणतुल्याश्च हैमराजतकाम्रजाः ।
स्थालिकाश्च यथालिप्ताः प्रक्षाल्यास्त्रेण वारिणा ॥

पाणिना दक्षिणेनैव परामृश्य च तेन च ।
तारेण तासु निक्षेप्या धाराऽऽज्यस्य समन्ततः ॥२६१॥

स्थालीभ्यः समुपाहृत्य दर्व्या हैमादिक्लृप्तया ।
तदूर्ध्वं निक्षिपेन्मौनी पायसादीन्यनुक्रमात् ॥ २६२ ॥

घृतेनाप्लाव्य मधुरव्यञ्जनानि समन्ततः ।
दधिक्षीरादिपूर्णानि चषकाण्यूर्ध्वतो न्यसेत् ॥ २६३ ॥

सिद्धान्यपूपभेदानि पृथुकादीनि यान्यपि ।
पानकानि विचित्राणि पृथक्पात्रगतानि च ॥ २६४ ॥

कर्पूरचन्दनक्षोदप्रसूनैश्चाधिवासितम् ।
शीतलं वस्त्रसञ्छन्नं पानीयं करकादिषु ॥ २६५ ॥

एलालवङ्गतक्कोलजातीपूगफलान्वितम् ।
कर्पूरतैलसंमिश्रं खण्डितं च क्षुरादिभिः ॥ २६६ ॥

नागवल्लीदलोपेतं सचूर्णं चेन्दुसंयुतम् ।
ताम्बूलं च प्रतिष्ठाप्य पात्रेष्वब्जाकृतीषु च ॥ २६७ ॥

चन्दनादीनि गन्धानि तथा नानाविधाः स्रजः ।
स्थापयित्वा यथास्थानमाराधकमुखेन तु ॥ २६८ ॥

विज्ञापयेयुर्देवस्य तत्तत्कर्माधिकारिणः ।
भोज्यासनाधिरूढस्य देवस्याराधकः स्वयम् ॥ २६९ ॥

अर्घ्याद्यैः प्राग्वदभ्यर्च्य साध्यबीजावसानिकैः ।
द्वारस्याभ्यन्तरगते देवस्य पुरतः स्थले ॥ २७० ॥

शोधिते चार्घ्यतोयेन चन्दनाद्यैश्च मण्डिते ।
मण्डले तु परिस्तीर्य तण्डुलानि यथारुचि ॥ २७१ ॥

क्षालितं वस्त्रतुण्डं तु तदूर्ध्वं संप्रसार्य च ।
अन्नाधारं प्रतिष्ठाप्य तदूर्ध्वं लोहनिर्मितम् ॥ २७२ ॥

ऊर्ध्वतो वसनाद्यद्धं तदूर्ध्वं स्रोतसंप्लुते ।
न्यसेदपि परमान्नादि पात्राण्येकैकशः क्रमात् ॥२७३॥

तर्पणं तु प्रतिष्ठाप्य हस्तप्रक्षालनाम्भसा ।
कुर्याद्दक्षकरे देवे प्रागुपस्तरणाह्वयम् ॥ २७४ ॥

ततो देवादिमूर्तीनां हवींषि विनिवेदयेत् ।
प्रथमं पायसं, पश्चात् गुडान्नं मुद्गमेदितम् ॥ २७५ ॥

शुद्धान्नं तिलसंमिश्रं निशान्नं, दधिमिश्रितम् ।
मिश्रान्नं च क्रमाद्द्यादपूपानि तदन्तिमे ॥ २७६ ॥

पृथुकानि च सक्तूनि तिलपिण्डान्वितानि च ।
कदलीपनसादीनि फलानि विविधानि च ॥ २७७ ॥

रसभेदसमेतानि पानकानि च तर्पणम् ।
नालिकेररसं चैव हस्तप्रक्षालनं ततः ॥ २७८ ॥

उपस्पर्शं च ताम्बूलं दत्वा प्रागुक्तमाचरेत् ।
राजभिर्हविषो नित्यं प्राचुर्यं कारिते सति ॥ २७९ ॥

आधारेषु प्रतिष्ठाप्य वितते गर्भमन्दिरे ।
निवेद्यानि यथायोगमन्यथा संकटे भुवि ॥ २८० ॥

तदेकस्मिन् हव्याधारे वस्त्रच्छन्ने यथाक्रमम् ।
निधाय विनिवेद्याथ तथातमपनीय च ॥ २८१ ॥

प्रोक्षिते चास्त्रमन्त्रेण निक्षेप्यं हविरन्तरम् ।
निवेदयेद्यथापूर्वं विशेषोऽत्र समीरितः ॥ २८२ ॥

मन्त्रक्रियाविहीनं च गन्धदुष्टं विवर्णकम् ।
अतिपक्कमपक्वं च चिरस्रावितजलं तथा ॥ २८३ ॥

अदीक्षितैश्च पतितैरीक्षितं प्रतिलोमजैः ।
अत्युष्णमतिशीतं च प्रमाणरहितं तथा ॥ २८४ ॥

समुद्धृतं च निःशेषं मुखवातादिदूषितम् ।
व्यञ्जनादिविहीनं चाप्यपात्रस्थमगोपितम् ॥ २८५ ॥

अन्तस्तण्डुलसंयुक्तं भिन्नभाण्डगतं तथा ।
अनाधारं परस्पृष्टं अर्कतापहतं तथा ॥ २८६ ॥

अङ्गारतुषसंयुक्तं केशपाषाणसंयुतम् ।
कृमिलोष्ठादिभिर्जुष्टं प्राणयन्त्रादिसमन्वितम् ॥ २८७ ॥

अपूर्णपाकमाधाररहितं वमनोज्झितम् ।
गव्याज्यदधिनिर्मुक्तं काङ्क्षितं चेतरैर्जनैः ॥ २८८ ॥

अपिधानविनिर्मुक्तं दैवतान्तरसंमतम् ।
एवं दुष्टं हविर्बुध्वा प्रक्षिपेज्जलमध्यतः ॥ २८९ ॥

मोहात् त्यक्तं हविर्विष्णोः यदि दद्यात्तदर्चनम् ।
निरर्थकं स्यात् कर्तॄणां विनाशश्च भवेद् ध्रुवम् ॥२९०॥

तस्मात्तदैव मूलस्य सहस्रं जपमाचरेत् ।
ततस्तत्राश्रयाणां च स्थापितानां विधानतः ॥ २९१ ॥

विभवव्यूहमूर्तीनां मण्टपे गोपुरादिषु ।
स्थापितानां च मूर्तीनां प्रादुर्भावात्मनामपि ॥ २९२ ॥

पूजितानां यथान्यायं सत्यादीनां खगात्मनाम् ।
कुमुदादिगणेशानां द्वास्थानामपि सद्मनि ॥ २९३ ॥

प्रतिष्ठितानां भक्तानां प्रागुक्तानां विधानतः ।
तत्तन्मन्त्रेण विधिवत्सिद्धानि च पृथक् पृथक् ॥

हवींषि पायसादीनि क्रमेण विनिवेदयेत् ।
गारुडेनैव मन्त्रेण बल्यर्थं साधयेद्धविः ॥ २९५ ॥

अन्येषां प्रणवेनैव सिद्धमन्नं निवेदयेत् ।
अग्निकार्यं हविस्साध्यं यथा मूलालयाकृतेः ॥ २९६ ॥

सर्वाण्यपूपभेदानि नाग्निकार्ये हितानि वै ।
अन्यानि पायसादीनि नित्यनैमित्तिकादिषु ॥ २९७ ॥

होतव्यानि विशेषेण फलानि विविधानि च ।
भूतानां बलिदानेषु पायसादीनि नित्यशः ॥ २९८ ॥

अपूपानि च सक्तूनि पृथुकानि फलानि च ।
तिलपिण्डसमेतानि मिश्रितान्यथवा पृथक् ॥ २९९ ॥

दातव्यानि यथान्यायं तेषां तृप्तिकरं यतः ।
तेन क्रूरादिभिर्ब्रह्मन्! उत्सवादिषु कर्मसु ॥ ३०० ॥

तत्र तल्लोकविधिना बलिद्रव्याण्युपाहरेत् ।
अभावे सर्ववस्तूनां सोदकं केवलौदनम् ॥ ३०१ ॥

तण्डुलं वोदकेनैव दातव्यं मन्त्रवित्तमैः ।
इति सम्यक् समाख्यातं हविषां साधनादिकम् ॥

निवेदनप्रकारश्च नित्यं मूलादिमूर्तिषु ।
तथाश्रयेषु प्रासादे बाह्यतो वाऽङ्कणादिके ॥ ३०३ ॥

प्रासादेषु च कलशेषु स्थापितेष्वाश्रयादिषु ।
प्राकारगोपुरद्वारमण्टपेषु समन्ततः ॥ ३०४ ॥

विभवव्यूहबिम्बेषु तथाङ्गालयमूर्तिषु ।
प्रासादाभ्यन्तरस्थानां देवतानां यथार्चने ॥ ३०५ ॥

निवेदनार्थं नादद्यात् द्वारबाह्ये प्रतिष्ठितम् ।
निषिद्धान्नं निवेद्यं तद् दूषितं राक्षसादिभिः ॥ ३०६ ॥

देवेन प्रागनुज्ञातं रक्षसां दितिजन्मनाम् ।
अन्येषां भरणीयानां भूतानां पिशिताशिनाम् ॥३०७॥

तस्मात्तत्स्था अनादेया बलवीर्यादिशक्तयः ।
विभूत्या वाऽविभूत्या वा हविषः प्राप्तये पृथक् ॥

पृथक्पात्रगतं सिद्धं द्वारस्यान्ते निवेशितम् ।
निवेदनीयं क्रमशः परमान्नपुरस्सरम् ॥ ३०९ ॥

काम्ये नैमित्तिकेष्वेवं महतो हविषोऽर्चने ।
प्रासादाभ्यन्तरस्थस्य सकर्मार्चादिकस्य च ॥ ३१० ॥

आढ्यैर्द्विजातिभूपाद्यैः यथाविभवमादरात् ।
निवेदनीयं यद्येकं पात्रस्थं मूलकौतुके ॥ ३११ ॥

अन्नपूर्णं प्रतिष्ठाप्य प्रासादाग्रस्थमण्टपे ।
मूलमूर्तिं समभ्यर्च्य कर्मार्चाभिः सशक्तिभिः ॥

स्नापयेत् कर्मबिम्बस्थं कलशैः प्रागुदीरितैः ।
मूले प्राग्वत् पृथक्पात्रे निवेद्य च हविस्ततः ॥ ३१३ ॥

कर्मबिम्बगतं देवमानीयाग्रस्थमण्टपे ।
तस्मिन्निवेदयेन्मन्त्री मूलमूर्त्यवलोकितम् ॥ ३१४ ॥

महद्धविश्च तत्रस्थं परमान्नादिसत्कृतम् ।
मन्त्रकौतुकपूर्वासु क्रमेणाभ्यर्चितासु च ॥ ३१५ ॥

निवेद्य च यथायोगं पात्रस्थानि पृथक् पृथक् ।
वत्सरोत्सवपूर्वेषु नानावैशेषिकेष्वपि ॥ ३१६ ॥

यात्रामूर्तिं समानीय बाह्यतो यत्र कुत्रचित् ।
विस्तरेणार्चयित्वा तु महदन्नं निवेदयेत् ॥ ३१७ ॥

तदर्थं विधिवत् कुर्यात् स्नपनं स्नानकौतुके ।
मृगयाद्युत्सवे प्राप्ते बहिरुद्यानभूमिषु । ३१८ ॥

महोदनसपर्यार्थमालयाभ्यन्तरस्थिते ।
स्नापयेद्विधिवन्मन्त्री तद्बिम्बं स्नानमण्टपे ॥ ३१९ ॥

द्वादश्यादिषु कालेषु तथा च श्रवणादिषु ।
वत्सरोत्सवनिष्ठेषु नानार्थेष्वपिकेष्वपि ॥ ३२० ॥

साधनं हविषामेतत् साधारणमुदाहृतम् ।
अथोत्सवार्चामानीय कुत्रचिन्मण्टपादिके ॥ ३२१ ॥

यथाविधि समाराध्य बहुधा पायसादिना ।
यथालब्धेन चान्नेन प्रीणयेद्भक्तिपूर्वकम् ॥ ३२२ ॥

विशेषमथ वक्ष्यामि महतो हविषोऽर्चने ।
नित्ये महाहविर्योगो न च कार्यो हितैषिभिः ॥३२३॥

वितते गर्भगेहे वा प्रासादाग्रस्थमण्टपे ।
बाह्यतः स्नपनाद्यर्थं यागार्थं वा प्रकल्पिते ॥ ३२४ ॥

प्रागुक्तेन प्रमाणेन त्वेकपात्रे समर्पितम् ।
यत्तन्महाहविः प्रोक्तं हरेः प्रीतिकरं सदा ॥ ३२५ ॥

प्रासादाभ्यन्तरे कल्प्यमुपपात्रोज्झितं हविः ।
तदन्यत्र विशेषेण विस्तृतं परिकल्पयेत् ॥ ३२६ ॥

मूलमूर्तिं पुराऽभ्यर्च्य तदर्थं मन्त्रवित्तमः ।
अभ्यर्च्यार्घ्यादिभिर्मन्त्रैः प्राग्वद्धूपान्तिमैस्ततः ॥

तस्मात् स्नपनबिम्बस्य हृदयाम्भोरुहोदरे ।
चिच्छक्तिमवतीर्याथ तथाचोत्सवकौतुके ॥ ३२८ ॥

समभ्यर्च्य यथा पूर्वमानीय स्नानमण्टपे ।
स्नानकौतुकमासाद्य कलशैरभिषिच्य च ॥ ३२९ ॥

निवेद्य च हविः पश्चादानयेद्गर्भमन्दिरम् ।
तस्मिन् विन्यस्य तन्मन्त्रं मूलमूर्तौ नियोजयेत् ॥

यानादौ तु समारोप्य उत्सवार्चामलङ्कृताम् ।
यागार्थमण्टपे वाथ नयेदास्थानमण्टपे ॥ ३३१ ॥

हेमादिनिर्मिते तत्र वितते भद्रविष्टरे ।
समारोप्य च देवेशं महद्भिर्भोगसञ्चयैः ॥ ३३२ ॥

प्रदक्षिणप्रणामान्तैर्मूलमन्त्रेण देशिकः ।
समाराध्यार्घ्यपुष्पाद्यैस्तोयदानपुरस्सरम् ॥ ३३३ ॥

दद्यात्तदादिनो भोगान् मात्रान्तांश्च निवेदितान् ।
निवेदनार्थं हविषां मण्टपं विस्तृतं कृतम् ॥ ३३४ ॥

वितानध्वजपूर्वैश्च यथा यवनिकापटैः ।
अलंकृतं मध्यभूमौ हविष्पूरप्रमाणतः ॥ ३३५ ॥

कुर्यात्तालोच्छ्रयां वेदिमुपपीठसमाकृतिम् ।
इष्टकाद्यैश्च तुर्यश्रां दृढां समतलां शुभाम् ॥ ३३६ ॥

गोमयेन समालिप्य सुधाद्यैर्वर्णकैरपि ।
पिष्टचूर्णैश्च परितः शोभयित्वा च पश्चिमे ॥ ३३७ ॥

दुकूलतूलसञ्छन्नं मसूरकसमन्वितम् ।
भोज्यासनं प्रतिष्ठाप्य नात्युच्चं नातिनीचकम् ॥ ३३८ ॥

साधितानि यथापूर्वं हविः पात्राणि पाचकाः ।
परमान्नानुपेतानि सोपदंशफलानि च ॥ ३३९ ॥

भक्ष्यभोज्यसमेतानि मधुरादिरसानि च ।
छत्रदीपसमोपेतभेरीपटहनिःस्वनैः ॥ ३४० ॥

शङ्खघण्टादिघोषेण दुर्जनोत्सारणोद्यतैः ।
पुरावच्छोधितैनैव यथा वै गोमयादिना ॥ ३४१ ॥

सूत्रितेन सुधाचूर्णैः पार्श्वयोरम्बुवारिणा ।
प्रोक्षितेन पवित्रेणः ततस्तस्मान्महानसात् ॥ ३४२ ॥

अनुधारापदं प्रोक्तं निनयेद्यागमण्टपम् ।
यातुवारुणमध्ये वा सोमसामीरणान्तरे ॥ ३४३ ॥

शालिव्रीहिपरिस्तीर्णे स्थले मलतरुद्भवे ।
फलके संप्रतिष्ठाप्य वस्त्रच्छन्नेऽस्त्रमन्त्रिते ॥ ३४४ ॥

ततो वेद्यां परिस्तीर्य तण्डुलाञ्छालिसंभवान् ।
कंसादि धातवो नेष्टा महोदननिवेदने ॥ ३४५ ॥

अच्छिन्नानि सुपूतानि कदल्यादिदलानि वा ।
प्रागग्राण्युदगग्राणि बहुशः क्षालितानि च ॥ ३४६ ॥

निधाय च यथापूर्वमुपस्तीर्य घृतेन तु ।
पात्रेभ्यस्त्वथादाय दर्व्या मूलेन तद्धविः ॥ ३४७ ॥

मध्यगे वितते पात्रे प्रतिष्ठाप्य यथाक्रमम् ।
सुवृत्तं चतुरश्रं वा दर्व्या तं (सं) सेचयेत्ततः ॥ ३४८ ॥

संस्कृतैर्घृतपूरैश्च विद्धैर्वातशीतलैः ।
मूलमन्त्रं समुच्चार्य पुनरप्यभिधार्य च ॥ ३४९ ॥

परितो मुद्गभेदेन गुल्भापं "हृदयेन" तु ।
गुडखण्डानि "शिरसा" खण्डचूर्णान्वितानि च ॥

उपदंशानि "शिखया" पाचितानि यथाविधि ।
कदलीपनसाम्राणि फलानि विविधानि च ॥ ३५१ ॥

कालपक्वानि हृद्यानि "कवचं" समुदीरयन् ।
घृततत्रोपदंशानि तदूर्ध्वं "नेत्र" मुच्चरन् ॥ ३५२ ॥

पुटीकृते तदूर्ध्वं तु वीर्यमन्त्रेण साधितम् ।
चूर्णितैः समरीचैश्च जीरकैश्च गुळान्वितैः ॥ ३५३ ॥

दधिपूरं तु संपूर्य खण्डचूर्णसमन्वितम् ।
एवं प्रतिष्ठिते पूर्वमेकपात्रे महाहविः ॥ ३५४ ॥

पूरितान्युप पात्राणि परितः पायसादिभिः ।
प्राग्वद्घृतोपदंशाद्यैश्चाधारेषु निवेशयेत् ॥ ३५५ ॥

महात्रस्य तु पाश्चात्यप्रमुखासु दिशास्वपि ।
द्वन्द्वयोगेन निक्षेप्यं पायसादिकमष्टकम् ॥ ३५६ ॥

एकैकं स्थापयेद्वाथ क्षीरान्नादिचतुष्टयम् ।
तत्तत्स्थानेषु शुद्धान्नमपूपादीनि विन्यसेत् ॥ ३५७ ॥

पायसान्नं गुडान्नं वा मुद्गान्नं केवलोदनम् ।
स्थाप्यं वा, मध्यकल्पे तु पाश्चात्यादिष्वनुक्रमात् ॥

मुद्गान्नं मधुरं वाथ क्षीरान्नादित्रिकं तु वा ।
गुळपायसयोरेकं शुद्धान्नं वाथवार्पयेत् ॥ ३५९ ॥

अनुकल्पेन शुद्धान्नं भक्तिश्रद्धावशेन तु ।
यथाकल्पं तु संकल्प्य पायसादिष्वथेच्छया ॥ ३६० ॥

सुगन्धिशालिसंपन्नमभावाच्छालिसंभवम् ।
मध्यतो घृतसंपूर्णसौवर्णचषकान्वितम् ॥ ३६१ ॥

पात्रं पाश्चात्यदिङ्मध्ये व्यञ्जनादि परिष्कृतम् ।
प्रापणार्थं प्रतिष्ठाप्यमुच्चाधारोपरिस्थितम् ॥ ३६२ ॥

मध्यतः पायसद्रोणीं गुळान्नपरिपूरिताम् ।
प्रतिष्ठाप्याथ परितस्त्वन्यान्यूह्य प्रकल्पयेत् ॥ ३६३ ॥

पानीयं गन्धपुष्पाद्यैर्वासितं करकादिषु ।
प्रच्छादनाम्बरादिनि मण्टपस्य तु दक्षिणे ॥ ३६४ ॥

मधुपर्कं च गोमात्रा साध्यबीजानि पश्चिमे ।
ताम्बूलतिलरत्ना(लोत्था)र्थमात्रा गन्धस्रगादयः ॥

यागद्रव्याणि चान्यानि त्वक्षसूत्रादिकानि च ।
स्थापयित्वोत्तरस्यां च ततस्तत्कर्मकारिभिः ॥ ३६६ ॥

पूजितस्य विशेषेण देवस्य पुरतः स्थितः ।
विज्ञापयेद्देशिकेन्द्रः प्रणतः पुरुषोत्तमम् ॥ ३६७ ॥

"भगवन्! पुण्डरीकाक्ष! सच्चिदानन्दलक्षण!।
बलवीर्यमयैर्भोगैर्नित्यतृप्तस्त्वमव्ययः ॥ ३६८ ॥

तथापि चात्मसिध्यर्थं महता हविषाऽधुना ।
भवन्तं तर्पयिष्यामि संपूर्णं तत् प्रकल्पितम् ॥ ३६९ ॥

अनुग्रहार्थं भक्तानां भोक्तुमासाद्य प्रभो!" ।
विज्ञाप्यैवं ततः पश्चात्प्राग्वत्संपूजयेद्विभुम् ॥ ३७० ॥

स्वर्णादिनिर्मिते याने देवमारोप्य मूर्तिपाः ।
सर्वालङ्कारसंयुक्तं नयेयुर्भोजनास्पदम् ॥ ३७१ ॥

आरोपयित्वा प्रागास्यं तत्रस्थे भोजनासने ।
अर्घ्यं पाद्यं तथाचामं प्रदद्यात् सप्रतिग्रहम् ॥ ३७२ ॥

प्रच्छादनपटं चाथ मधुपर्कं यथाविधि ।
गोमात्रां साध्यबीजानि दत्वाऽऽचामजलेन तु ॥

हस्तौ प्रक्षाल्य देवस्य पानीयं चार्घ्यवारिणा ।
प्रतिष्ठाप्य समासीनः पीठे देवस्य दक्षिणे ॥ ३७४ ॥

अथार्हणजलं त्वर्घ्यादुद्धृतं विनिवेदयेत् ।
विलोक्य नेत्रमन्त्रेण पृथक् पात्रगणान्वितम् ॥ ३७५ ॥

सव्यञ्जनं सभक्ष्यं च परमान्नादिकं हविः ।
"पवित्रेण" समभ्युक्ष्य "शतधारेण" पूर्ववत् ॥

दहनाप्यायने कृत्वा सर्वं सुरभिमुद्रया ।
ध्यात्वा तन्मन्त्रमुच्चार्य त्वमृतीकृत्य तद्गतम् ॥ ३७७ ॥

बलं वीर्यं च तेजश्च त्वर्घ्यपुष्पं समुत्क्षिपेत् ।
"कवचेन" च सास्त्रेण नेत्रमन्त्रेण भावयेत् ॥ ३७८ ॥

ततः स्वदक्षिणे हस्ते विज्ञानैश्वर्यशक्तयः ।
स्मर्तव्याः स्वस्वमन्त्रेण भोजकाः करणात्मकाः ॥
तेनाथ "विष्णुहस्तेन" परमान्नपुरस्सरम् ।
स्पृष्ट्वा स्पृष्ट्वा यथायोगं बद्ध्वा ग्रासमुद्रया ॥ ३८० ॥
निवेदनीया वै विष्णोरन्नमूर्त्यन्तरस्थिताः ।
रसरूपादिभेदोत्थास्तेजोवीर्यबलात्मकाः ॥ ३८१ ॥
षाड्गुण्यविग्रहस्यापि देवस्यार्चाभिमानिनः ।
प्रीणनं परमं ह्येतद्धविर्मन्त्रैः सुसंस्कृतम् ॥ ३८२ ॥
ज्ञात्वैवं शंखशृङ्गादिभेरीपटहनिःस्वनैः ।
घण्टारवसमेताभिर्मङ्गलाभिश्च गीतिभिः ॥ ३८३ ॥
श्रुतिस्मृतीतिहासानां भगवद्गुणशंसिनाम् ।
स्तोत्राणां च पुराणानां वैष्णवानां च निःस्वनैः ॥
प्रदक्षिणक्रमेणैव पायसाद्युपपात्रकम् ।
प्रभूतान्नं ततः पश्चात् प्रापणान्नपुरस्सरम् ॥ ३८५ ॥
भक्ष्याण्यपूपपूर्वाणि भोज्यानि च फलानि च ।
लेह्यानि मधुपूर्वाणि चोष्याण्याम्रादिकान्यपि ॥
पेयानि क्षीरपूर्वाणि अनुपानान्वितानि च ।
विनिवेद्य च देवाय विन्यस्तान्योदनोपरि ॥ ३८७ ॥
बलवीर्यादिसम्पन्नान् सवीर्यादिविवर्जितान् ।
ओमित्युपाहरेन्मन्त्री ततः संहृतिमुद्रया ॥ ३८८ ॥
पूर्णात्पूर्णमिति प्राज्ञो जप्त्वा मन्त्रं समाहितः ।
सुतृप्तं भावयेद्देवं सुतृप्तमिति चोच्चरन् ॥ ३८९ ॥
शीतलं तर्पणजलं शङ्खशुक्त्याकृतिष्वपि ।
पात्रेषु पूरितं तस्मै चूर्णं निष्पुंसनाय च ॥ ३९० ॥
तदर्थं शाटकं चाथ हस्तप्रक्षालनं ततः ।
समाचमनतोयं च घृष्टकर्पूरभावितम् ॥ ३९१ ॥
चन्दनं करशुध्यर्थं मात्रां करसमुद्रयाम् ।
सरत्नां विनिवेद्याथ ताम्बूलं शशिभावितम् ॥३९२॥
दत्त्वाऽथ मूलमुद्रां तु दर्शयेन्मूलमुच्चरन् ।
जपं कृत्वा यथापूर्वमर्घ्याद्यैर्धूपपश्चिमैः ॥ ३९३ ॥

समभ्यर्च्य, समाहूय गुरुपूर्वांश्च साधकान् ।
सिद्धान्तनिरतांश्चाथ पञ्चकालपरायणान् ॥ ३९४ ॥
दीक्षितांश्च यथान्यायं त्रैविद्यांस्तदभावतः ।
अर्घ्यानुलेपनाभ्यां तु स्रग्वरैर्धूपपश्चिमैः ॥ ३९५ ॥
समभ्यर्च्य ततस्तेषां दद्यादर्घ्योदकं करे ।
परितः पायसादीनि पात्रस्थानि पृथक् पृथक् ॥
महोदनं च मध्यस्थं चतुर्धा संविभज्य च ।
प्रयच्छेदेकमंशं तु कारिभ्यः श्रेयसे ततः ॥ ३९७ ॥
द्वितीयमोदनं दद्यात् सेनेशाय ततः परम् ।
तृतीयमन्नं दातव्यं सर्वेषां परिचारिणाम् ॥ ३९८ ॥
चतुर्थं वैष्णवानां च देवायतनवासिनाम् ।
आराधकप्राशनार्थं प्रापणान्नं समाचरेत् ॥ ३९९ ॥
गोमात्रां साध्यबीजानि शालिमुद्गादिकानि च ।
मात्रां च तिलहोत्थां तथा चाच्छादनाम्बरम् ॥
निष्पुंसनपटं चाथ ताम्बूलं च विशेषतः ।
प्रयच्छेद्देशिकेन्द्राय नियुक्तायार्चने क्षणे ॥ ४०१ ॥
महाविभूतिर्देवेशः सर्वसङ्कल्पसिद्धिदः ।
यस्मात् प्रागात्मसात्कुर्याद्भोगशक्तिमनश्वरीम् ॥४०२॥
व्यक्तां गुर्वादिवक्त्रेण भुनक्ति तदनन्तरम् ।
तस्मान्निवेदितं सर्वं वासुदेवस्य वै विभोः ॥ ४०३ ॥
प्रदद्याद् गुरुपूर्वेभ्यो नियतेभ्यः सदार्चने ।
रक्षणीयमभक्तेभ्यस्तदन्नं विष्णुयाजकैः ॥ ४०४ ॥
प्रायश्चित्ती भवेद्दाता अपात्रप्रतिपादनात् ।
प्रक्षिपेज्जलमध्ये तु विष्वक्सेननिवेदितम् ॥ ४०५ ॥
जलजानां तीरजानां जन्तूनां तृप्तयेऽथवा ।
जले किञ्चिद्विनिक्षिप्य शेषमन्नं तदग्रतः ॥ ४०६ ॥
तद्भक्तानां द्विजातीनां निरतानां स्वकर्मसु ।
एवं सन्तर्प्य देवेशं महता हविषा ततः ॥ ४०७ ॥
भोज्यासनगतं पश्चादन्यत्र शयनासने ।
सुवितानपताकाढ्ये पुष्पमालाद्यलंकृते ॥ ४०८ ॥

सर्वोपकरणोपेते पर्यङ्कस्योर्ध्वतो नयेत् ।
अपनीय च माल्यानि गन्धानि वसनानि च ॥ ४०९ ॥

स्वयं किञ्चित् समादाय विष्वक्सेनस्य वै ततः ।
प्रदद्यादवशिष्टं तु पर्यङ्कस्थस्य वै विभोः ॥ ४१० ॥

अर्घ्यं पाद्याम्बुना शाटीं तथा पादानुलेपनम् ।
सप्रतिग्रहमाचामं हस्तसंमार्जनाम्बरम् ॥ ४११ ॥

दत्वा ततः सुगन्धैस्तु चन्दनाद्यैः समालभेत् ।
व्यजनैः श्रमशान्त्यर्थं संवीज्य च समन्ततः ॥ ४१२ ॥

क्वथितं च मृगस्नेहं शशिचूर्णाधिवासितम् ।
मर्दयित्वाथ देवस्य केशपाशे प्रसारिते ॥ ४१३ ॥

नानाविधैर्गन्धवद्भिः पुष्पैः संवलितान्तरम् ।
स्रग्भिर्नानाविधाभिश्च केशान् संवेष्टयेत्ततः ॥ ४१४ ॥

निवेदयेदपूपानि पृथुकानि फलानि च ।
पानकं तर्पणजलं नालिकेररसान्वितम् ॥ ४१५ ॥

ताम्बूलं शशिसंयुक्तं साङ्गं विज्ञाप्य वै विभुम् ।
छत्रदीपान्वितो यायादर्घ्यभृत् पाचनालयम् ॥ ४१६ ॥

तत्र नैमित्तिके कुण्डे नित्ये वा संस्कृते पुरा ।
तथैव संस्कृते वह्नौ प्राग्वत् संतर्पिते सति ॥ ४१७ ॥

तस्मिन् ज्वाला जटाधारं ह्यक्तं मन्त्रनायकम् ।
अवतीर्य समिद्भिश्च सप्तभिस्तर्पयेत्ततः ॥ ४१८ ॥

पायसाद्यैर्विशेषेण पाचितैरखिलैरपि ।
शङ्खभेरीनिनादेन घण्टारवसमन्वितम् ॥ ४१९ ॥

पूर्णाहुतिं ततो दद्यादाज्यस्याच्छिन्नधारया ।
कर्मशेषं समाप्याथ दद्याच्छिष्टं चरुं गुरोः ॥ ४२० ॥

ततो देवान्तिकं प्राप्य होमकर्म समर्पयेत् ।
संविभज्य पितॄन् प्राग्वत् संप्रदानसमन्वितम् ॥ ४२१ ॥

अर्चयित्वार्घ्यगन्धाद्यैः प्राग्वत् कुर्यात् प्रदक्षिणम् ।
विज्ञाप्य यानगं कृत्वा देवमन्तः प्रवेशयेत् ॥ ४२२ ॥

स्वस्थानस्थस्य देवस्य दद्यादर्घ्यादिकत्रयम् ।
तत्र संरोधितं मन्त्रं प्राग्वन्मूले नियोजयेत् ॥ ४२३ ॥

तत्रापि पूजयेद्भोगैरर्घ्याद्यैर्धूपपश्चिमैः ।
ततो विज्ञापयेद्देवं पुष्पाञ्जलिपुरस्सरम् ॥ ४२४ ॥

" पूजितोऽसि जगन्नाथ ! महता हविषा विभो ! ।
त्वदीये मयि वात्सल्यात् तृप्तो भवितुमर्हसि ॥ "

इति विज्ञाप्य देवस्य चरणाम्बुरुहद्वये ।
मूलमन्त्रं समुच्चार्य प्रक्षिपेत् कुसुमाञ्जलिम् ॥ ४२६ ॥

महोदनसपर्यादौ प्राप्ते नैमित्तिकादिषु ।
पूजनादुत्सवार्चायाः पुरस्ताद्वाथ पश्चिमात् ॥ ४२७ ॥

सशक्तिकं मूलबिम्बं साङ्गं बिम्बं च साश्रयम् ।
विहगेशावृतिद्वारपालभक्तैः समन्वितम् ॥ ४२८ ॥

विमानेषु बहिष्ठेषु मण्टपे गोपुरादिषु ।
विभवव्यूहमूर्तीनां स्थापितानां विधानतः ॥ ४२९ ॥

प्राग्वत् संपूजनं कृत्वा महान्नं विनिवेदयेत् ।
मुख्यकल्पमिदं प्रोक्तं मध्यकल्पे यथाबलम् ॥ ४३० ॥

पर्यङ्कस्थाढकाद्येन मानेनान्नं प्रकल्पयेत् ।
मूलालयगतं देवं केवलं वा समर्चयेत् ॥ ४३१ ॥

प्रासादस्थस्य नित्ये तु न संकल्प्यं महाहविः ।
तदर्थं बलियानं तु नार्चतव्यं हितेच्छुना ॥ ४३२ ॥

महोदनं च स्नपने स्नपनं च महोदने ।
कर्तव्यमविनाभूतं द्वितयं मुख्यकल्पने ॥ ४३३ ॥

अनुकल्पे तदन्योन्यमेकैकेन विना कृतम् ।
प्रभूतोदनयागार्थमन्ययागार्थमेव वा ॥ ४३४ ॥

बिम्बे कस्मिंश्चिदावाह्य पूजिते तु यथाविधि ।
समारब्धे समाप्तेऽस्मिन् यागेऽकस्माद् द्विजोत्तम ! ॥

अन्यं महाहविर्यागे प्राप्ते नैमित्तिकादिषु ।
दातव्यं तत्र मन्त्रज्ञैरन्यत्रोद्वासनादिकम् ॥ ४३६ ॥

तत उद्वासयेदत्र स्नपनेऽप्ययमेव हि ।
मूलबिम्बे यथा देयं मन्त्रिभिस्तु महाहविः ॥ ४३७ ॥

तृतीयावरणाद्बाह्ये तथैवाभ्यन्तरेऽपि वा ।
महोत्सवविधौ दद्यात् कुत्रचिद्वा महाहविः ॥ ४३८ ॥

महताऽनेन हविषा भक्त्या यः पूजयेद्धरिम् ।
स भुक्त्वा विपुलान् भोगानिह लोके चिरंतनान् ॥
कालान्तरेऽत्यये प्राप्ते प्राप्तं यात्यच्युतं पदम् ।
विशेषादभिषिक्तैश्च भूपैर्भूतहिते रतैः ॥ ४४० ॥
विधिनानेन कर्तव्यं महोदनसमर्चनम् ।
प्राप्नुवन्ति च ते शश्वत् प्रतिभूपालमण्डलम् ॥ ४४१ ॥
वारणं च वराश्वं च तदीयं कोशसञ्चयम् ।

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे प्रापणादिमान साधननिवेदनादिप्रकारो नाम अष्टादशोऽध्यायः ।

---

श्रीः

# एकोनविंशोऽध्यायः ॥

सनकः —
मुने ! सिद्धान्तनिष्ठस्य समाराधनकाङ्क्षिणः ।
समयाचारवैकल्ये प्रायश्चित्तमुदीरय ॥ १ ॥
शाण्डिल्यः —
शृणु सम्यक् प्रवक्ष्यामि प्रायश्चित्तं मुने ! हितम् ।
यत् कृत्वा देशिकादीनां चतुर्णां शुभमेधते ॥ २ ॥
अस्नात्वा विधिवन् मन्त्री नद्यादौ पूजयेद्यदि ।
स्नात्वा मूलसहस्रं तु जप्त्वा संपूजयेद्विभुम् ॥ ३ ॥
जीर्णं पर्युषितं वासो दधानो यदि पूजयेत् ।
स्नात्वा विशुद्धवासोभृन्मूलमन्त्रं जपेत्तथा ॥ ४ ॥
ध्यानहीनस्त्वनाचान्तः पवित्ररहिताङ्गुलिः ।
केशास्थिलोष्टसिरासृगस्पृश्यस्पर्शनेऽपि च ॥ ५ ॥
स्नात्वा यथापुरं पूज्य मूलमन्त्रायुतं जपेत् ।
उदक्यासूतिकाऽपेयचण्डालाद्युपवर्तकः ॥ ६ ॥
स्पृशेच्चेद्भगवद्बिम्बं स्नात्वा पूर्वं स्वयं ततः ।
पञ्चगव्येन देवेशमभिषिच्य समर्चयेत् ॥ ७ ॥
उदक्यासूतिकाद्यैश्च स्पृष्टः संस्पृश्य कौतुकम् ।
स्नात्वोत्तमेन देवेशमभिषिच्याथ शान्तये ॥ ८ ॥
हुत्वाऽथ मूलमन्त्रेण जपेच्चायुतसङ्ख्यया ।
सूतके मृतके बिम्बं स्पृशेद्वा पूजयेद्यदि ॥ ९ ॥
अधमोत्तमेन संस्नाप्य प्राग्वद्धुत्वा जपेन्मनुम् ।
महापातकिभिः स्पृष्टो विण्मूत्रापेयपैस्तथा ॥ १० ॥
पूजयेद्यदि देवेशं पुनः स्नात्वा विधानतः ।
पूर्ववत् स्नपनं कृत्वा शान्तिहोमादिकं चरेत् ॥ ११ ॥
निष्ठीवरुधिरस्वेदयुक्तो देवं स्पृशेद्यदि ।
कुशोदकेन संस्नाप्य विशेषेण यजेद्विभुम् ॥ १२ ॥
दिवा गत्वा स्त्रियं स्वीयामस्नात्वा चेत् स्पृशेद्विभुम् ।
उपोष्य पञ्चभिर्गव्यैः कुशोदैः स्नापयेद्विभुम् ॥ १३ ॥
परस्त्रीगमनासक्तश्चीर्णकृच्छ्ररितो विभुम् ।
पूजयेद्वा तथा स्पृष्टे देवबिम्बेऽभिषेचयेत् ॥
मध्यमाधममार्गेण हुत्वा मन्त्रं जपेच्छतम् ।
कृमिकीटास्थिकेशादिपतङ्गनखरादिकैः ॥ १५ ॥
प्राण्यङ्गतुषभस्मादिदुष्टैः पत्रफलादिभिः ।
पुष्पैस्तोयैस्तथाप्यन्यैश्चन्दनाद्यैश्च भूषणैः ॥ १६ ॥
तथोपचारैरन्यैश्च वर्जितैरपि वस्तुभिः ।
तथा पर्युषितैः पत्रपुष्पाङ्कुरफलादिभिः ॥ १७ ॥
अस्पृश्यप्राणिभिः स्पृष्टैस्तथा चास्पृश्यवस्तुभिः ।
चण्डालसूतिकाद्यैश्च निषादपतितादिभिः ॥ १८ ॥
संस्पृष्टैश्च परिम्लानैः सरजोभिर्यजेद्यदि ।
जपेदष्टोत्तरशतं मूलमन्त्रमनन्यधीः ॥ १९ ॥

एतैर्दुष्टैस्तु यत्नाद्यैर्देवं संपूजयेद्यदि ।
संस्नाप्य चाधमेनैव पूजयित्वा विधानतः ॥ २० ॥

शान्तिहोमं प्रकुर्वीत सहस्राहुतिभिः क्रमात् ।
चण्डालसूतिकोदक्याशवरापेयपायिभिः ॥ २१ ॥

संस्पृष्टे पानभक्ष्यादौ देवेशस्य निवेदिते ।
मृण्मयानि परित्यज्य क्षालयित्वेतराणि च ॥ २२ ॥

स्नात्वा कुशोदकं पीत्वा स्नापयेदधमेन तु ।
पुनः संपूज्य जुहुयान्मूलेन शतसङ्ख्यया ॥ २३ ॥

विड्वराहसृगालाभिः काकश्येनखरादिभिः ।
एवमादिभिरन्यैश्च स्पृष्टेऽन्नादौ निवेदिते ॥ २४ ॥

पूर्ववच्छान्तिरेव स्यात्ततः शुद्धं निवेदयेत् ।
परस्त्रीगमनासक्तैर्मद्याभक्ष्याविवेकिभिः ॥ २५ ॥

यथेष्टाचारनिरतैर्वैष्णवकुलोद्भवैः ।
पक्वं स्पृष्टं तथा दृष्टं दुष्टं पूयासृगादिभिः ॥ २६ ॥

अमत्या चेद्धविर्दत्तं पूर्ववच्छान्तिमाचरेत् ।
शवादिदूषितान्नस्य पक्वस्य विनिवेदने ॥ २७ ॥

पूर्ववत् पूज्य देवेशं शान्तिहोमं समाचरेत् ।
त्यक्तमन्त्रादिकं दद्याद्यदि पूज्य पुनस्तिलैः ॥ २८ ॥

सघृतैर्जुहुयान्मन्त्री सहस्रशतसङ्ख्यया ।
तथा पर्युषितान्नस्य प्रदाने शान्तिमाचरेत् ॥ २९ ॥

त्यक्तं हविः फलं पुष्पं पवित्राम्बरसादिकम् ।
त्यजेज्जलाशये वाग्नौ भुवि वा गोप्यलोलुपः ॥ ३० ॥

मक्षिकाघुणभृङ्गाद्यैर्दष्टं दुष्टं पुरीषगैः ।
पत्रपुष्पफलाद्यन्नं त्यक्तव्यं, तदधिष्ठितम् ॥ ३१ ॥

अस्त्रोदकेन संप्रोक्ष्य दद्याद्देवाय भक्तितः ।
महाहविर्विधाने तु विशेषमवधारय ॥ ३२ ॥

पचनालयमन्यत्र साधितं दीक्षितेतरैः ।
अमन्त्रसंस्कृतं चाचमविभक्तमलक्षणम् ॥ ३३ ॥

निरीक्षितमयोग्यैश्च संपृष्टं मक्षिकादिभिः ।
संप्रोक्ष्य चास्त्रतोयेन निवेद्यं यत्नगौरवात् ॥ ३४ ॥

सेनेशाय न दातव्यं होमं कुर्याद्यथारुचि ।
कारिभ्यः संप्रदानं च बलिदानं न कारयेत् ॥ ३५ ॥

अभ्यागतेष्वनाप्तेषु दीनानाथजनेष्वपि ।
प्रदेयमन्यथा शान्तिहोमं कुर्यादनन्यधीः ॥ ३६ ॥

बिडालमूषिकासर्पमण्डूकाद्यैश्च जन्तुभिः ।
कृमिकीटपतङ्गाद्यैर्वायसाद्यैश्च खेचरैः ॥ ३७ ॥

न देयं देवदेवाय दुष्टं स्पृष्टं महाहविः ।
दत्ते हुत्वा च जप्त्वा च पुनर्दद्यान्महाहविः ॥ ३८ ॥

भोगमन्त्रक्रियाध्यानं मुद्राणामङ्गरूपिणाम् ।
द्वारावरणपूर्वाणां विम्बपीठादिकारिणाम् ॥ ३९ ॥

कालानामपि चान्येषां नित्यनैमित्तिकात्मनाम् ।
विपर्यासे प्रवृत्ते तु दिव्यैर्व्यापकपञ्चकैः ॥ ४० ॥

प्रत्येकं जुहुयान्मन्त्री तिलैश्चान्यैः शतं शतम् ।
समित्परिधिदर्भाणां कूर्चानां हविषामपि ॥ ४१ ॥

आज्यस्थाल्यादिपात्राणमस्त्रैः स्थण्डिलकुण्डयोः ।
स्रुक्स्रुवस्य प्रणीताया अभावे लक्षणोज्झिते ॥ ४२ ॥

शान्त्यर्थं जुहुयान्मन्त्री प्राग्वद्व्यापकपञ्चकैः ।
अभावे काष्ठसमिधामाज्येन चरुणा हुनेत् ॥ ४३ ॥

समिद्भिराज्याभावे तु तिलैर्वा होममाचरेत् ।
अलाभे हविषोऽन्येषामाज्येन जुहुयात् सुधीः ॥ ४४ ॥

सर्वथाहोमकर्मार्थे तिलमाज्यं न लोपयेत् ।
तिलाज्ययोरभावे तु हवनं स्यान्निरर्थकम् ॥ ४५ ॥

शान्तिहोमं प्रकुर्वीत प्रतिष्ठायां यथोदितम् ।
वह्नौ कुण्डे स्थले चुल्यां संस्कृतेऽनुगतिं गते ॥ ४६ ॥

पुनराधाय संस्कृत्य शान्तिहोमादिकं हुनेत् ।
वह्नौ स्पृष्टे तथाऽस्पृश्यैः केशास्थिनखैरपि ॥ ४७ ॥

यथावन्मूलमन्त्रेण जुहुयात् सर्पिषा शतम् ।
उदक्यासूतिकाद्यैश्च सन्निकृष्टेऽयुतं हुनेत् ॥ ४८ ॥

संस्पृष्टेऽन्यं समाधाय जुहुयाद्वाऽयुतं जपेत् ।
असमिद्धे हुते वह्नौ पुनर्होमं समाचरेत् ॥ ४९ ॥

नैमित्तिकेषु काम्येषु चोत्सवेषु विशेषतः।
तदङ्गहुतभुग्यागं कुण्डेऽन्यस्मिन् समाचरेत् ॥ ५० ॥

शान्तिहोमं प्रकुर्वीत कृते चेत्तद्विपर्यये।
परिवारानमूर्तांश्च मूर्तांश्चैव यथाक्रमम् ॥ ५१ ॥

अनर्चयित्वाऽहोरात्रं जपेत्तत्र पुरोऽग्निके।
तन्मन्त्रांश्छतमष्टौ तु प्रत्येकं पूजनादिकम् ॥ ५२ ॥

पतने बलिवस्तूनामस्पृश्यस्पर्शनेऽपि वा।
तथैव मानेऽभिमते केशलोष्टादिदूषिते ॥ ५३ ॥

तत्त्यक्त्वाऽन्येन निर्वर्त्य शान्तिहोमं समाचरेत्।
बलिं दुष्टे न दद्याच्चेच्छान्तिहोमपुरस्सरम् ॥ ५४ ॥

बलिं दत्वा विशेषेण प्रागुक्तं मन्त्रवान् जपेत्।
नित्योत्सवाथबिम्बे तु यानाद्विपतिते सति ॥ ५५ ॥

तदेवोद्धृत्य तद्बिम्बमक्षतं स्नाप्य मन्त्रवित्।
अधमाधममार्गेण शान्त्यर्थं जुहुयादनु ॥ ५६ ॥

तथैव च क्षतं बिम्बं समाधाय यथापुरम्।
कृत्वा प्रातिष्ठिकं कर्म स्वस्थाने स्थापयेदनु ॥ ५७ ॥

यावत्समाधिकालं तु तावद्बिम्बान्तरेण वा।
कूर्चेन वाऽन्यबिम्बेन कुर्यान्नित्योत्सवं हरेः ॥ ५८ ॥

अस्पृश्यैश्चाथ संस्पृष्टे बलिबिम्बेऽभिषेचयेत्।
अधमाधममार्गेण शान्तिहोमपुरस्सरम् ॥ ५९ ॥

यानस्थे त्वथ बिम्बे तु व्यूढेऽयोग्यजनैः सति।
कुशोदकेन संप्रोक्ष्य शान्तिहोमं समाचरेत् ॥ ६० ॥

अस्पृश्यैर्यदि संस्पृष्टो बलिबिम्बस्य वाहकः।
पञ्चगव्येन संप्रोक्ष्य शुचिनाऽन्येन वाहयेत् ॥ ६१ ॥

मुद्रामन्त्रक्रियाध्यानद्रव्याणां भोगरूपिणाम्।
विशेषाद्बलिकाले तु हानिरुत्पद्यते यदि ॥ ६२ ॥

जपेन्मूलसहस्रं तु मन्त्री ध्यानसमन्वितः।
न दत्तं यदि दातव्यं फलपुष्पोदनादिकम् ॥ ६३ ॥

देवोपभुक्तं योग्याय मूलमन्त्रायुतं जपेत्।
हुतशेषे हविश्शेषे भुक्ते योग्यजनैर्विना ॥ ६४ ॥

जपेन्मूलायुतं मन्त्री दाता किल्बिषशान्तये।
सात्वतैः सत्वनिरतैः सदा भगवतःप्रियैः ॥ ६५ ॥

तत्तं भगवते यद्यत् तत्तत् पावनपावनम्।
ब्रह्मघ्नस्य सुरापस्य स्वर्णस्तेयरतस्य च ॥ ६६ ॥

गुरुतल्परतस्यापि संयुक्तस्यापि तैः सह।
प्राशनं सर्वपापघ्नमन्येषामपि किं पुनः ॥ ६७ ॥

तस्मात्तत् संप्रदातव्यं ज्ञानिनां मुख्यकल्पने।
त्रैवर्णिकानां दातव्यं दीक्षितानां तु मध्यमे ॥ ६८ ॥

केवलानां तु भक्तानां त्रैविद्यानां द्विजन्मनाम्।
प्रधानमनुकल्पे स्यादन्यथा प्राशयेत् स्वयम् ॥ ६९ ॥

विष्वक्सेनस्य यद्दत्तं पूजान्ते मन्त्रिभिर्विभोः।
न भोक्तव्यंविशेषेण त्यक्तव्यं भूजलादिषु ॥ ७० ॥

गोषु वा विष्णुभूतानां वृत्तये हितमिच्छताम्।
भोक्ता किल्बिषशान्त्यर्थं व्रतं चान्द्रायणं चरेत् ॥ ७१ ॥

संकल्प्य यागं होमान्तं हवनं न कृतं यदि।
द्विगुणं हवनं कृत्वा पूर्णान्तं मन्त्रवित्तमः ॥ ७२ ॥

एकद्वित्रिचतुःपञ्चषट्कालेषु यथाक्रमम्।
एकादिदिनमासर्तुवत्सरेषु तथैव च ॥ ७३ ॥

वह्निकार्येषु लुप्तेषु नित्यनैमित्तिकेष्वपि।
द्विगुणं मिश्रितैर्होमैरधमस्नपनं चरेत् ॥ ७४ ॥

पूजालोपे प्रवक्ष्यामि प्रायश्चित्तं मुने शृणु।
औपचारिकसांस्पर्शिकहृदयंगमरूपिणाम् ॥ ७५ ॥

परिच्युतौ च भोगानां त्रयाणां क्रमशो मुने!।
पूजान्ते सर्वबीजानि मात्राचित्तं घृतोदनम् ॥ ७६ ॥

निवेदनीयं देवस्य विशेषेज्यापुरस्सरम्।
एककाले च दिवसे पक्षे वैशेषिकार्चनम् ॥ ७७ ॥

तत्तद्द्विगुणितैर्द्रव्यैर्बलिहोमान्तमाचरेत्।
एकमासीयपूजाया यावद्द्वादशमासिकी ॥ ७८ ॥

तावद्द्विगुणितैर्द्रव्यैर्मासस्रङ्ख्यार्चनेऽपि च।
स्नपनं चापि नवकमधमाधमपूर्वकम् ॥ ७९ ॥

मुख्योत्तमावसानं तु सहस्रकलशाष्टकम् ।
संप्रोक्षणं च विध्युक्तं प्रतिष्ठां च क्रमाचरेत् ॥ ८० ॥
आरभ्य मासिकीं पूजां यावद्वा दशमासिकी ।
तावदेकैकवृद्ध्या तु महता हविषा यजेत् ॥ ८१ ॥
समिद्भिः सप्तभिर्हुत्वा पुरा पश्चाद्घृताप्लुतैः ।
घृतैश्च जुहुयान्मन्त्री त्वासहस्राद्यथाबलम् ॥ ८२ ॥
तथैव च जपं कुर्यान्मूलमन्त्रस्य सादरम् ।
बलिप्रदानहीने तु हुत्वा मूलशतं ततः ॥ ८३ ॥
तत्तदावरणद्वारदेवानां स्वस्वसंज्ञया ।
जुहुयात्तिलमिश्रेण घृतेनैव शतं शतम् । ॥ ८४ ॥
प्रायश्चित्तं प्रवक्ष्यामि नित्यादिस्नपनेषु ते ।
गृहार्चने प्रकुर्वीत नित्यादिस्नपनं सुधीः ॥ ८५ ॥
तत्र स्नानीयतोयेन पूजार्थमभिषेचयेत् ।
बहुबेरे तु कर्मार्चां स्नापयेदग्रमण्टपे ॥ ८६ ॥
प्रासादे वितते ब्रह्मभागस्थे भद्रविष्टरे ।
स्नापयेत् स्नानकलशैः स्थापितैरग्रमण्टपे ॥ ८७ ॥
मध्याह्ने चापि सायाह्ने स्नानीयकलशोद्धृतैः ।
स्नानद्रव्यसमेतैर्वा वारिभिः प्रोक्षयेत् क्रमात् ॥ ८८ ॥
मूलबिम्बादिबिम्बानां कुर्याद्वा विनिवेदनम् ।
बहुबेरेऽभिषेकार्चां तां गृहीत्वाग्रमण्टपात् ॥ ८९ ॥
न गच्छेद्गालयतो मन्त्री स्नपनार्थं बहिर्गते ।
शान्तिहोमं प्रकुर्वीत तस्य दोषस्य शान्तये ॥ ९० ॥
एकबेरे गृहद्रूपे कर्मार्चामभिषेचयेत् ।
गृहस्थैश्च बहुभिः सहस्रकलशादिभिः ॥ ९१ ॥
यदाभिषेको बाह्यस्थे मण्टपे स्नानकौतुकम् ।
संस्नाप्य विधिवन्मन्त्री महता विभवेन तु ॥ ९२ ॥
पूजयित्वोत्सवार्चायां विनिवेद्य महाहविः ।
कलशस्नपनार्थं चेत्र कुर्यादङ्कुरार्पणम् ॥ ९३ ॥
तथा प्रतिसराबन्धं मूलमन्त्रायुतं जपेत् ।
पुरस्तादङ्कुरानर्प्य बद्ध्वा बिम्बेऽपि कौतुकम् ॥
अमत्या वा समत्या वा स्नपनं नाचरेद्यदि ।
शान्तिहोमं पुरा कृत्वा जपेदष्टोत्तरायुतम् ॥ ९५ ॥
कौतुकाङ्कुरपूर्वं तु पुनरेवाभिषेचयेत् ।
अकृत्वाङ्कुरयागे तु तथा कौतुकबन्धनम् ॥ ९६ ॥
स्नापितो यदि देवेशः स्नानं तन्निष्फलं भवेत् ।
विधिवच्चाङ्कुरावापं तथा कौतुकबन्धनम् ॥ ९७ ॥
स्नापयेद्विधिवन्मन्त्री शान्तिहोमपुरस्सरम् ।
संकल्पिते तु स्नपने त्वकृते द्विगुणं चरेत् ॥ ९८ ॥
नासादितैर्द्रव्यहीनैः स्नापितेऽप्येवमाचरेत् ।
अधिवासितकुंभस्थतोयानां पूर्वमेव तु ॥ ९९ ॥
न पर्युषितहानिः स्यान्मन्त्रन्यासैस्तथार्चनैः ।
स्थापितेष्वथ कुंभेषु हीनेषु स्थाप्य पूर्ववत् ॥ १०० ॥
जपेत् कलशदैवत्यं मन्त्रमष्टोत्तरं शतम् ।
समुद्धृतेषु कुंभेषु रिक्तेषु सुषिरादिना ॥ १०१ ॥
प्राग्वदन्यं प्रतिष्ठाप्य जपेदष्टोत्तरं शतम् ।
अस्पृश्यैश्च तथा स्पृष्टे मार्जारार्याद्यैश्च दूषिते ॥ १०२ ॥
श्वादिभिः कुक्कुटाद्यैर्वा शबराद्यैर्विजातिभिः ।
केशास्थिलोष्टसंदुष्टे पुनः कलशसञ्चये ॥ १०३ ॥
सद्द्रव्यं पूर्ववत् स्थाप्य तद्दैवत्यं जपेच्छतम् ।
दुष्टैः संस्नापिते देवे पुनरप्यभिषेचयेत् ॥ १०४ ॥
व्यापकैः पञ्चभिर्मन्त्रैः प्रत्येकं जुहुयाच्छतम् ।
पूर्ववत् कुंभदैवत्यं जपेद्ध्यानसमन्वितम् ॥ १०५ ॥
अक्रमेण समुद्धारे स्थापने द्रव्ययोजने ।
अनर्चने च मन्त्राणां जपेदष्टोत्तरं शतम् ॥ १०६ ॥
माहिषाजोष्ट्रसंभूतैः दधिक्षीरघृतादिभिः ।
स्नपनाद्देवदेवस्य मूलमन्त्रेण मन्त्रवित् ॥ १०७ ॥
समिद्भिः सप्तभिर्होमं कुर्यादष्टोत्तरं शतत् ।
गेयमङ्गलवादित्रस्तोत्रनृत्तादिभिर्विना ॥ १०८ ॥
वीणावेणुनिनादैश्च तथा पुण्यहवाचनैः ।
विनाभिषेचिते मूलं शतमष्टोत्तरं जपेत् ॥ १०९ ॥

बिम्बेऽभिषिच्यमाने तु पतिते स्नानविष्टरात् ।
चलिते वा विशेषेण प्रतिष्ठास्नपनं चरेत् ॥ ११० ॥
चरुणा सर्पिषा चैव प्रागुक्तैर्मूलपञ्चकैः ।
हुत्वा चाष्टोत्तरशतं तत्सङ्ख्यं च जपेत्ततः ॥ १११ ॥
प्रभापीठाब्जवक्त्राङ्गभेदभङ्गादिदूषिते ।
तत्तद्बिम्बगतां शक्तिं नियोज्य ध्रुवकौतुके ॥ ११२ ॥
सन्धानं शिल्पिभिः कृत्वा सुसंस्कृत्य तदैव तु ।
शेषकर्मणि निर्वृत्ते स्नापयेदुत्तमक्रमात् ॥ ११३ ॥
तिलेन चरुणाज्येन प्रत्येकं च सहस्रशः ।
जुहुयान्मूलमन्त्रेण तेन शान्तिर्भविष्यति ॥ ११४ ॥
तदा न घटितुं शक्तिर्यदि स्याद्यत्नगौरवात् ।
शोभार्थबिम्बैः पुरतः स्थापितैः शेषमाचरेत् ॥ ११५ ॥
एवमुत्सवतीर्थार्थशयनादिषु मूर्तिषु ।
तत्तदङ्गादिसन्धानं स्थापनं योजनं पुनः ॥ ११६ ॥
उक्तप्रमाणादधिके हीने स्नपनवस्तुनि ।
शरावे कलशे कूर्चे वस्त्रे कोष्ठे सदस्यपि ॥ ११७ ॥
पालिकादौ तथा पीठे तोरणे चाष्टमङ्गले ।
द्वारमङ्गलकुंभेषु साधनेष्वितरेष्वपि ॥ ११८ ॥
मूलमन्त्रं जपेन्मन्त्री शतमष्टाधिकं सुधीः ।
मोक्षार्थी स्नापयेद्देवं सर्वकालं यथाविधि ॥ ११९ ॥
रिपूणां निग्रहार्थाय दिवा कुर्यात्तु सर्वदा ।
स्वर्गकामस्तु पूर्वाह्ने धर्मार्थी दिनमध्यमे ॥ १२० ॥
दिनान्ते सर्वभोगार्थी प्रायश्चित्तेषु सर्वदा ।
चन्द्रसूर्योपरागे च तत्काले स्नापयेद्विभुम् ॥ १२१ ॥
संक्रान्तिषु च सूर्यस्य प्रागवत् पश्चात्तथैव च ।
सङ्क्रान्तिकालविज्ञानानाड्यः षोडश षोडश ॥१२२॥
तदानीं स्नापयेद्देवमनुक्रान्तं हुनेन्मनुम् ।
सहस्रकृत्यस्तदनु तत्समं जपमाचरेत् ॥ १२३ ॥
पुरस्तात् सर्वकर्मार्थमङ्कुरेष्वर्पितेष्वनु ।
रक्तेषु श्यामवर्णेषु तथा तिर्यग्गतेषु च ॥ १२४ ॥
वक्रेषु चाप्ररूढेषु दक्षिणाभिमुखेषु च ।
विधिहीनेषु चास्पृश्यस्पृष्टेष्वविकृतैर्विना ॥ १२५ ॥
पालिकादिषु भिन्नेषु नष्टेषु पतितेषु च ।
मूषिकाद्यैश्च दष्टेषु मूलमन्त्रायुतं जपेत् ॥ १२६ ॥
पुरस्तादेकयागार्थमङ्कुरेष्वर्पितेषु च ।
असमाप्ते ततस्तस्मिन् प्राप्ते वैशेषिकान्तरे ॥ १२७ ॥
तदर्थमपि कुर्वीत पालिकास्वङ्कुरार्पणम् ।
उत्सवाद्यन्तयोर्मध्ये रक्षासूत्रविवर्जितम् ॥ १२८ ॥
बद्धप्रतिसरे बिम्बे स्नपनार्थं तु मन्त्रिणा ।
संप्राप्ते स्नपनेऽन्यस्मिन् शीघ्रकर्मनिमित्ततः ॥ १२९ ॥
तदर्थं कौतुकं बध्वा स्नानकर्म समाप्य च ।
पूर्वारब्धं प्रकुर्वीत प्रायश्चित्तादनन्तरम् ॥ १३० ॥
अन्यत्र क्रमशः कुर्यात् पूर्वारब्धं समाप्य च ।
अन्यथा चेदिदं कर्म निष्फलं भवति द्विज ! ॥ १३१ ॥
तद्दोषपरिहारार्थं शान्तिहोमो जपस्तथा ।
सहस्रसङ्ख्यया युक्तो मूलमन्त्रेण मन्त्रवित् ॥ १३२ ॥
स्नपनेऽस्मिन्नतिक्रान्ते मूलमन्त्रायुतं जपेत् ।
मूषिकासर्पमण्डूकचुचुंदर्यादिजन्तुभिः ॥ १३३ ॥
स्थापिते कलशे स्पृष्टे लङ्घिते सति तं त्यजेत् ।
पुनरन्यं तथा स्थाप्य जपेन्मूलशतं गुरुः ॥ १३४ ॥
प्रायश्चित्तेष्वनुक्तेषु एवमादिषु सत्सु च ।
मूलमंत्रायुतं चैव जपेदष्टोत्तरं गुरुः ॥ १३५ ॥
प्रायश्चित्तं प्रवक्ष्यामि महोत्सवविधौ मुने !
गृहे प्रतिष्ठिते बिम्बे न कुर्वीत महोत्सवम् ॥ १३६ ॥
स्वतन्त्रं परतन्त्रं च दिव्याद्यायतनं द्विधा ।
पर्वताग्रे नदीतीरे तीर्थानां निकटे विभोः ॥ १३७ ॥
स्थापितस्यालयं विद्धि स्वतन्त्रमिति सत्तम ।
ग्रामाद्यङ्गतया क्लृप्तमस्वतन्त्रमितीरितम् ॥ १३८ ॥
तयोर्महोत्सवं कुर्यात् त्रयोदशविधं मुने ! ।
सङ्कल्प्यैकतमे तत्र प्रवृत्ते वत्सरं प्रति ॥ १३९ ॥

न तु कुर्याद्विभूत्यर्थं तस्मान्न्यूनं दिनोत्सवम् ।
अनल्या यदि कुर्वीत कुर्याद्रूर्ध्वं गतोत्सवम् ॥ १४० ॥

प्राक् प्रवृत्तं तु शान्त्यर्थमन्यथा स्यान्नृपक्षयः ।
प्रमाणरहिते वंशे पटे वालध्वजेऽपि च ॥ १४१ ॥

वर्णभूषणमानाद्ये दण्डे यष्टौ च वैणवे ।
फेणके चावटे पीठे प्रपायां ध्वजरज्जुनि ॥ १४२ ॥

विधिवच्छान्तिहोमं तु जपान्तं प्राग्वदाचरेत् ।
छिन्ने भिन्नेऽग्निना दग्धे नष्टे मूषिकदंशिते ॥ १४३ ॥

विण्मूत्ररुधिरापेयरेतोनिष्ठीवनादिभिः ।
दूषितं ध्वजमुत्सृज्य प्राग्वदन्यं समाहरेत् ॥ १४४ ॥

प्रतिष्ठाप्याथ दण्डाग्रे मानयित्वाधमेन तु ।
संस्नाप्य दोषशान्त्यर्थं जुहुयात् सर्पिषा शतम् ॥

स्तम्भाग्रे ध्वजवस्त्रस्य रक्षाकार्याय दीक्षितैः ।
आरोहणं न दोषोऽत्र रक्षाहेतोर्द्विजादिभिः ॥ १४६ ॥

सुजीर्णान् फेणदण्डादीन् परित्यज्य ततोऽपरान् ।
संस्कृत्य योजयेत्तत्र वध्वा तु ध्वजमञ्जसा ॥ १४७ ॥

मध्यमस्नपनान्तं तु शान्तिहोमं समाचरेत् ।
वर्षवातातपस्पर्शैः लुप्तवर्णे खगध्वजे ॥ १४८ ॥

न किंचिद्प्यनिष्टं स्यात् स्तंभाग्रे यावदुत्सवम् ।
वध्वा ध्वजपटे स्तम्भे वातवेगादिहेतुभिः ॥ १४९ ॥

मूलदेशे तु विच्छिन्ने सध्वजे पतिते सति ।
अकृत्वा ध्वजविश्लेषं स्थापयेच्छेषमञ्जसा ॥ १५० ॥

स्नपनं चोत्तमं कुर्यात् चतुः स्थानार्चनादिकम् ।
गोभूहेमयवादीनां दानं शक्त्या समाचरेत् ॥ १५१ ॥

उत्सवध्वजभङ्गेन राज्याद्भ्रष्टो भवेन्नृपः ।
तस्मात्तत्परिहारार्थं त्वरया शान्तिमाचरेत् ॥ १५२ ॥

हेतुभिर्वातवेगाद्यैर्ध्वजे निपतिते भुवि ।
क्षिप्रमुद्धृत्य तद्बध्वा स्नपनं चाधमेन तु ॥ १५३ ॥

शान्त्यर्थं जुहुयादाज्यं तिलेन शतसङ्ख्यया ।
ध्वजे निपतिते छिन्ने कुर्यात् स्नपनमुत्तमम् ॥ १५४ ॥

पुनरन्यं समुत्पाद्य वध्नीयात् संस्कृतं तथा ।
अन्यथा यदि दोषः स्याद्नाशो राष्ट्रस्य मन्त्रिणः ॥१५५॥

पक्षीशाधिष्ठिते कुंभे नष्टे वा पतिते भुवि ।
स्पृष्टेऽस्पृश्यैस्तथा केशलोष्टास्थिशकृदादिभिः ॥१५६॥

कुंभेऽन्यस्मिन् समारोप्य तां शक्तिं कुंभमध्यगाम् ।
जप्त्वा मूलायुतं मन्त्री शेषकर्म समाचरेत् ॥ १५७ ॥

अनुक्तानां तु सर्वेषां जपेदेवं यथावलम् ।
देवतावाहनार्थं तु भेरीताडनकर्मणि ॥ १५८ ॥

वाद्यजातेषु सर्वेषु मृदङ्गपणवादिषु ।
न स्थापितेषु स्वस्थानेतत्पूजातविलोपने ॥ १५९ ॥

पुण्याहपाठराहित्ये तथावाहनगाथया ।
सगणेषु च भूतेषु सगृहेपूत्कटादिषु ॥ १६० ॥

स्वासु दिक्षु यथान्यायमनाहूतेषु सत्सु च ।
द्वारावरणरथ्यासु ग्रामवास्तुष्वनुक्रमात् ॥ १६१ ॥

वलिप्रदानहीने तु तथा ताळस्वरादिषु ।
गेयनृत्तेषु हीनेषु शान्तिहोमपुरस्सरम् ॥ १६२ ॥

प्रत्येकं देवतामन्त्रमष्टधाऽऽवर्तयेद्बुधः ।
पुनरुत्पादयेत् सर्वं देवतावाहनादिकम् ॥ १६३ ॥

अनङ्कुरार्पणाग्रं तु प्रारभेच्च महोत्सवम् ।
पुनः प्राप्ते दिने वाथ सद्यः कृत्वाऽङ्कुरार्पणम् ॥

शान्तिहोमं प्रकुर्वीत पूर्ववच्छतसङ्ख्यया ।
तथैव तीर्थयात्रार्थं भूतरात्र्यादिसिद्धये ॥ १६५ ॥

परिच्युतौ तथाङ्गानामङ्कुरार्पणकर्मणि ।
न कृतं चेत्तथा साङ्गं तथा कौतुकवन्धनम् ॥ १६६ ॥

कर्तव्या पूर्ववच्छान्तिर्होमेन सजपेन च ।
उत्सवार्थाधिवासेषु चतुःस्थानार्चनेऽपि च ॥ १६७ ॥

आरंभकलशस्नाने स्नानवेराभिषेचने ।
महाहविषि होमे च दिवसेषु तथा निशि ॥ १६८ ॥

भूतादिरात्रिदेवानां वलिर्देयैर्यथोदितैः ।
हवने च तथोद्याने लीलया मृगयोत्सवे ॥ १६९ ॥

मृगयायां विशेषेण लोपः सञ्जायते यदि ।
शान्तिहोमादिकं तत्तत् कृत्वा शेषं समाचरेत् ॥

अधिष्ठितेषु बिम्बेन यानेषु पतितेषु वा ।
भिन्नेष्वपि च वाहेषु प्रमादाद्यत्र कुत्रचित् ॥ १७१ ॥

यानान्तरे समारोप्य वाहने वाऽथ कौतुकम् ।
शान्तिहोमं पुरा कृत्वा जपेन्मूलसहस्रकम् ॥ १७२ ॥

गोभूहेमादिकं दद्याद्वैष्णवेभ्यो गुरोरपि ।
यानाद्वा वाहनाद्वाऽपि बिम्बे तु पतिते सति ॥ १७३॥

बलिबेरोक्तविधिना समाधानपुरस्सरम् ।
स्नपनं शान्तिहोमं च मन्त्रजापान्तमाचरेत् ॥ १७४ ॥

समाधौ दीर्घकालीने कुर्याच्छोभार्थकौतुके ।
शेषकर्म महार्चायां निर्वृत्ते सन्धिकर्मणि ॥ १७५ ॥

पूर्ववत्तां प्रतिष्ठाप्य यथावच्छान्तिमाचरेत् ।
शून्येषु ग्रामनगरपत्तनादिषु चोत्सवम् ॥ १७६ ॥

बलिदानं न कुर्वीत कृते तत्रापि निष्फलम् ।
समाहिते तु ग्रामादौ महाशान्तिपुरस्सरम् ॥१७७॥

पुनरप्युत्सवं कुर्यात् ब्राह्मणानामनुज्ञया ।
ग्रामादावग्निना दग्धे वात्याऽऽसारादिदूषिते ॥१७८॥

शान्तिहोमं पुरा कृत्वा पश्चादुत्सवमाचरेत् ।
स्थापिते पर्वताग्रेषु देवबिम्बे महोत्सवम् ॥ १७९ ॥

यथावकाशं कुर्वीत तत्रैव बलिपूर्वकम् ।
तदासन्नेऽग्रहारादौ शक्यं चेत् कर्तुमुत्सवम् ॥ १८० ॥

बलिप्रदानरहितं तत्र कुर्यात् परिभ्रमम् ।
देवतास्नानवेलायामाहूतानां विभोः पुरा ॥ १८१ ॥

देवासुरगणादीनां भूतानामप्यनुक्रमात् ।
उत्सवार्थबलिं दद्यान्महापीठे दिवानिशम् ॥ १८२ ॥

ध्वजाग्रेमङ्कुरानर्प्य ध्वजमुत्थाप्य वा तथा ।
दीक्षार्थं कौतुकं बध्वा पुरा तीर्थावमर्पणात् ॥ १८३ ॥

देशिके व्याधिते वाऽथ मृते कार्यान्तरोद्यते ।
सूतकाद्युपघाते च शेषकर्मसमापनम् ॥ १८४ ॥

कर्तव्यं गुरुणाऽन्येन जप्त्वा मूलायुतं जपेत् ।
रिपुचोराग्निवृष्ट्यादिभयाद्विघ्ने महोत्सवे ॥ १८५ ॥

जाते दद्याद्बलिं तस्मिन्नष्टेऽप्यहनि देशिकः ।
अतीतं तु बलिं दद्याच्छान्तिहोमजपान्वितम् ॥

कुर्यादुत्सवयात्रां च विहितेऽह्नि महोत्सवम् ।
भ्रष्टायां तीर्थयात्रायामवारुह्य खगध्वजम् ॥ १८७ ॥

पूर्ववद्ध्वजमुत्थाप्य कुर्यात्तीर्थान्तमुत्सवम् ।
प्रतिरात्रिबलिद्रव्यव्यत्यासे सर्पिषा शतम् ॥ १८८ ॥

हुत्वाऽग्नौ मूलमन्त्रेण जपेदष्टोत्तरं शतम् ।
कालेऽन्यस्मिन् बलिं दद्यात्तत्काले प्रासमञ्जसा ॥

व्यासे बलिदेवानां जपो होमश्च तादृशः ।
अङ्कुरार्पणपूर्वश्च नारब्धश्चेन्महोत्सवः ॥ १९० ॥

तथैव चाङ्कुरावापं कृत्वा मूलायुतं जपेत् ।
विशेषात् पालिकावासे रथ्यावृतिषु चोत्सवे ॥

ग्रामवास्तुषु रथ्यासु भूतानां बलिमाचरेत् ।
न चाश्रये प्रकुर्वीत राजराष्ट्रविवृद्धये ॥ १९२ ॥

दद्याद् ग्रामादिवृद्ध्यर्थं तस्मिन्नप्यालये बलिम् ।
शान्तिहोमं प्रकुर्वीत बलिदानेऽन्यथाकृते ॥ १९३ ॥

खद्योतपांसुनीहारवर्षवातातपादिभिः ।
बिम्बे महोत्सवे स्पृष्टे सजपं होममाचरेत् ॥ १९४ ॥

प्रपामण्टपपात्राणामग्निदाहे च पूर्ववत् ।
निर्वापितेषु दीपेषु पूर्ववच्छान्तिरीरिता ॥ १९५ ॥

वस्त्रभूषणमाल्यानां हेतीनां च तथैव च ।
छत्रचामरपूर्वाणां महतां मङ्गलात्मनाम् ॥ १९६ ॥

ध्वजतोरणपूर्वाणां पीठानामङ्गरूपिणाम् ।
अग्निदाहे समुत्पन्ने पुनरुत्पाद्य तानपि ॥ १९७ ॥

सजपं शान्तिहोमं तु कुर्यादष्टोत्तरं शतम् ।
प्रागुक्तानां च सर्वेषां दीपानां तु विशेषतः ॥ १९८ ॥

पतने भुवि सञ्जाते मूलमन्त्रेण मन्त्रवित् ।
अष्टोत्तरसहस्रं तु हुत्वा तदनुज्ञया जपेत् ॥ १९९ ॥

द्विवारञ्चोत्सवं कुर्याद्दिवासूर्यास्तमयोदयात् ।
कालयोर्विपरीतश्चेदधमस्नपनं चरेत् ॥ २०० ॥

तीर्थयात्रा प्रकर्तव्या सूर्यस्यास्तमयात् पुरा ।
पूर्वभागे रजन्यां वा कुर्यात् स्वव्यक्तदिव्ययोः ॥

उत्तमस्नपनं कुर्यात्तीर्थकालविपर्यये ।
द्विवारयुक्ते तीर्थर्क्षे पुरुहूतक्षणान्वितम् ॥ २०२ ॥

पुण्यं भवेत्तत्पूर्वं स्यादुभयोर्विद्यते यदि ।
देवस्योत्सवयात्रायां स्पृष्टेऽस्पृश्यैस्तु देशिके ॥

न दोषस्तत्र विज्ञेयो विशेषाद्देवसन्निधौ ।
उत्सवे होमविधुरे द्विगुणं जुहुयाज्जपेत् ॥ २०४ ॥

नेत्रास्त्रसहितं मूलं प्रत्येकं शतसङ्ख्यया ।
सर्वभक्तजनैर्देवो यथाभिमुखदिङ्मुखैः ॥ २०५ ॥

स्रग्गन्धवस्त्रक्षीरान्नपानकापूपसत्फलैः ।
ताम्बूलैर्गन्धसंमिश्रैस्तोषणीयो यथाबलम् ॥ २०६ ॥

सुस्थितैर्वाऽऽसनासीनैर्देशिकैर्वाथ साधकैः ।
पूजिते सति देवेशे न दोषो भक्तिगौरवात् ॥ २०७ ॥

बिम्बे चोरादिभिर्नष्टे वर्तमाने महोत्सवे ।
बिम्बान्तरं समापाद्य प्रतिष्ठाप्य यथापुरम् ॥ २०८ ॥

महाभिषेकं हवनं जपं कृत्वा यथाविधि ।
कुर्यादुत्सवशेषं तु कर्मार्चादिषु वाऽऽचरेत् ॥ २०९ ॥

निशायां सर्वशान्त्यर्थी पुष्ट्यर्थी मध्यमे दिने ।
आप्यायनार्थी पूर्वाह्ने धर्मार्थी मध्यतो निशि ॥ २१० ॥

तथा रिपुक्षयार्थी च पुष्पयागं समाचरेत् ।
न च पर्युषितैः पुष्पैः परिम्लानैस्तदार्चयेत् ॥ २११ ॥

तद्दोषशान्तये कुर्यात् स्नपनं मध्यमं चरेत् ।
न कृते पुष्पयागेऽस्मिन् कुर्यात् स्नपनमुत्तमम् ॥२१२॥

देशिकाः षट् समाख्याताः पुष्पयागे विशेषतः ।
चतुःस्थानार्चनार्थं तु चत्वारः परिकीर्तिताः ॥

तथैकः स्नपनार्चायां बल्यादिषु तथेतरः ।
जलोत्थितानि पुष्पाणि त्रिरात्रोपोषितान्यपि ॥२१४॥

पुष्पयागे नियुञ्जीत न दोषस्तेषु सत्तम ! ।
तथैव पुष्पपूजार्थं कल्हारकुसुमान्यपि ॥ २१५ ॥

तथैव दमनीयं च पुष्पयागे विशेषतः ।
पूर्वरात्रोपोषितैश्च दिवा संपूजयेत् प्रभुम् ॥ २१६ ॥

न पूर्वाह्णोषितैस्तद्वन्निशायां तु समर्चयेत् ।
महोत्सवान्ते स्नपने न कृते स्नापयेत्ततः ॥ २१७ ॥

अधमोत्तममार्गेण शान्त्यर्थं जुहुयात्ततः ।
तद्रात्रौ ध्वजदण्डाग्रादवरोप्य खगध्वजम् ॥ २१८ ॥

ग्रामादिवास्तुनिष्ठानां बलिं दत्वा विसर्जयेत् ।
उत्सवान्ते ध्वजे नष्टे पुरस्तादवरोहणात् ॥ २१९ ॥

प्राग्वद्ध्वजं समुत्थाप्य पुनरेवावरोहयेत् ।
एकाह्नो द्विबलिर्वाथ तथैकबलिरेव वा ॥ २२० ॥

बलितीर्थविहीनो वा परिभ्रमणवर्जितः ।
चतुर्भिर्बलिभिर्युक्तः त्रियहः पञ्चवासरात् ॥ २२१ ॥

पञ्चानामुपरिस्थानामानक्षत्रदिनोत्सवात् ।
द्विगुणं दिनसङ्ख्याया विहीने बलिमाचरेत् ॥

ऊनाऽधिकैश्चेद्बलिभिर्युक्तास्त्वेते महोत्सवाः ।
कर्तुः कारयितुश्चापि राज्ञो राष्ट्रस्य मन्त्रिणः ॥ २२३ ॥

दारुणा व्याधयो नित्यं भविष्यन्त्यसुखान्यपि ।
तद्दोषशान्तये कुर्यात् स्नपनं चाधमोत्तमम् ॥ २२५ ॥

वैशेषिकेषु प्राप्तेषु वर्तमाने महोत्सवे ।
द्वादश्यादिषु तत् सर्वं यथान्यायं समर्चयेत् ॥ २२६ ॥

न लोपयेत् प्रयत्नेन प्राप्तं वैशेषिकं सुधीः ।
जपेदस्त्रायुतं मन्त्री त्वकृतेषु च शान्तये ॥ २२६ ॥

प्रायश्चित्तमितो वक्ष्ये पवित्रारोहणाय ते ।
अप्रमाणे पवित्राणां कुण्डमण्डलयोरपि ॥ २२७ ॥

अस्त्रमन्त्रायुतं जप्त्वा पूजयेदस्त्रबन्धनम् ।
पत्रपुष्पफलादीनां पूरकाणां तथैव च ॥ २२८ ॥

अतीते उक्तकाले तु चातुर्मास्यस्य मध्यतः ।
मध्यमं स्नपनं कृत्वा कालेऽन्यस्मिन् तदाचरेत् ॥

कालात्यये तथान्येषु शान्तिरेवं विधीयते ।
पवित्रे केशपाषाणचर्माङ्गारनखादिभिः ॥ २३० ॥

दूषिते वह्निना दग्धे छिन्ने दुष्टेऽथ भक्षिते ।
मूषिकाद्यैश्च काकाद्यैः स्पृष्टे त्यक्त्वा तु तत् पुनः ॥

सूत्रैस्तथाविधं कृत्वा त्वधिवास्य यथापुरम् ।
उत्तमं स्नपनं कृत्वा समारोप्य पवित्रकम् ॥ २३२ ॥

शान्त्यर्थं जुहुयान्मन्त्री मधुक्षीरादिभिः क्रमात् ।
अष्टोत्तरं शतं मूलमन्त्रादि च तथा जपेत् ॥ २३३ ॥

अस्पृश्यैरपि संस्पृष्टमस्त्यारोपितं यदि ।
पुनरन्यं समारोप्य पूर्ववच्छान्तिमाचरेत् ॥ २३४ ॥

स्थापितं पूजितं कुंभमस्पृश्यः संस्पृशेद्यदि ।
कुंभान्तरे समावाह्य जपेन्मूलसहस्रकम् ॥ २३५ ॥

कुंभभेदे तथा स्थाप्य मूलमन्त्रायुतं जपेत् ।
अत्र बिम्बस्य पतने भेदे च्छेदे यथापुरम् ॥ २३६ ॥

समाधानादिकं कृत्वा स्थाप्य शान्तिं समाचरेत् ।
पवित्रैरक्रमेणैव पूजयेद्यदि देशिकः ॥ २३७ ॥

शान्तिहोमं पुरा कृत्वा मूलमन्त्रं शतं जपेत् ।
मुहूर्ते समतिक्रान्ते शुभे यजनविस्तरात् ॥ २३८ ॥

तदन्यस्मिन् समारोप्य कृत्वा स्नपनमुत्तमम् ।
स्थापिते बहुबेरे तु दिव्याद्यायतनेषु च ॥ २३९ ॥

मुख्यकल्पविधाने तु पवित्रारोहकर्मणि ।
देशिका बहवः प्रोक्ताः ध्यानमन्त्रक्रियान्विताः ॥

तेष्वेकः कुंभपूजायामितरो मण्डलार्चने ।
अर्चायामितरो विद्वानितरः पावकार्चने ॥ २४१ ॥

मूलालये तथैकश्च अन्यः शोभाश्रयार्चने ।
गरुडस्यार्चने त्वन्यो विष्वक्सेनार्चने परः ॥ २४२ ॥

तथैकः स्नानबेरे स्याद्बलिदाने तथा परः ।
नित्याग्निहवने त्वन्यो महोदनविधौ परः ॥ २४३ ॥

अष्टभिर्वा समारोप्यं कर्मलाघवमीक्ष्य च ।
तत्र तत्र च तैः कार्यं पवित्रारोहणं परम् ॥ २४४ ॥

एकाहमुत्सवं कृत्वा तस्मिन्नहनि पूर्ववत् ।
तीर्थयात्रां प्रकुर्वीत तदन्यस्मिन् दिने दिवा ॥ २४५ ॥

द्विरात्रौ प्राग्दिनादौ वा कुर्यात्तीर्थाद्यमर्पणम् ।
द्वितीयादौ चतुर्थाद्वाचरेत् त्रियहोत्सवम् ॥ २४६ ॥

प्रधानदिनमारभ्य सप्ताहो वा महोत्सवः ।
तयोरन्तेऽपि कर्तव्या तीर्थयात्रा यथापुरम् ॥ २४७ ॥

एवं तीर्थान्तिमाः कल्प्याः पवित्रारोहणक्रियाः ।
न कृता तीर्थयात्रा चेन्निष्कृतिः स्नपनोत्तमम् ॥२४८॥

अङ्कुरार्पणपूर्वं तु प्रारभ्यान् प्रारब्धुत्सवम् ।
तत्तीर्थदिनयामिन्यां पवित्राणां विसर्जनम् ॥ २४९ ॥

कृत्वा गुरोः प्रदातव्यं पाञ्चरात्रार्थकोविदैः ।
तदभावात्तदन्येषा माचार्याणां यथाक्रमम् ॥ २५० ॥

समर्पणीयमन्येषामयोग्यानां नियोजनात् ।
पुनर्निवेद्य विधिवत् पवित्राणि प्रदाय च ॥ २५१ ॥

मध्यमं स्नपनं कृत्वा शान्तिहोमं समाचरेत् ।
प्रक्लृप्ते वा यथापूर्वं चातुर्मास्ये विधानतः ॥ २५२ ॥

मुख्यमध्याधमे चैव प्रागुक्तेषु दिनेषु च ।
न कल्पिते तथैकस्मिन् चान्द्रायणपुरस्सरम् ॥ २५३ ॥

तदनन्तरसंप्राप्ते दिवसे प्रारभेच्च तत् ।
तदाद्यमष्टपक्षं च विधिवन्नियतो भवेत् ॥ २५४ ॥

चातुर्मास्यं तु संकल्प्य वर्तमाने व्रतोत्तमे ।
विच्छिन्ने सति मध्येऽस्य पारतन्त्र्यादिहेतुना ॥२५५॥

कालान्तरे च संकल्प्य कार्यश्चान्द्रायणादिकः ।
काले तस्मिन् प्रकुर्वीत यथावच्छयनादिकम् ॥ २५६ ॥

तदत्यये विलोपे च चतुः स्थानार्चनादिकम् ।
जप्त्वा मूलायुतं मन्त्री शान्त्यर्थं जुहुयात्तदा ॥ २५७॥

नृसिंहकपिलक्रोडहयहंसादिरूपिणाम् ।
तथा चक्रविशिष्टानां शक्तीशस्य विशेषतः ॥ २५८ ॥

तथा च जामदग्न्यस्य विश्वरूपस्य वै प्रभोः ।
पारिजातहरस्यापि तथा कल्क्यात्मनो हरेः ॥ २५९ ॥

शयनं न तु कुर्वीत प्रासादेषु स्थिरस्थितौ ।
सौम्यरूपं समासाद्य कौतुकं कामनावशात् ॥ २६० ॥

तदर्थं शाययेद्वाथ चातुर्मास्ये विधानतः ।
उत्थापिते तु देवेशे चतुःस्थानेऽर्चिते सति ॥ २६१ ॥

वस्त्राभरणमाल्याद्यैर्यथाशोभमलंकृतम् ।
विहगेशे प्रतिष्ठाप्य उत्सवार्चागतं विभुम् ॥ २६२ ॥

अशेषभुवनग्रामं विधिना दोषशान्तये ।
महोत्सवोक्तविधिना परिभ्राम्य विशेषतः ॥ २६३ ॥

एकरात्रादियोगेन प्रागुक्तविधिना ततः ।
कुर्यादवभृथं स्नानं नदीतीरादिषु प्रभोः ॥ २६४ ॥

अनुकल्पे विधानं तद्विना तीर्थावमर्षणम् ।
मध्ये सूर्यस्य सङ्क्रान्त्योर्दर्शद्वयसमन्वितः ॥ २६५ ॥

तद्वद्दर्शवियुक्तश्च मलमास इतीरितः ।
चातुर्मास्योऽयमग्राह्यः सदारंभावसानयोः ॥ २६६ ॥

दिनत्रये तु प्रागुक्ते प्रारब्धे सति मध्ययोः ।
मलमासस्य सङ्गत्या कदाचिच्च न दोषतः ॥ २६७ ॥

अधिके मासि सर्वत्र तथाऽस्ते गुरुशुक्रयोः ।
औत्सवः प्रथमारंभः न कार्यो हितमिच्छता ॥ २६८ ॥

स्वयंव्यक्तालयाद्येषु तीर्थेषु गिरिमूर्धनि ।
नदीतीरेषु रम्येषु वनेपूपवनेषु च ॥ २६९ ॥

गोष्ठेषु मुनिमुख्यानामाश्रमेषु हरेः पुनः ।
सङ्कल्प्य नियतं वासमभीष्टव्रतसिद्धये ॥ २७० ॥

नेतव्यं देशिकेन्द्राद्यैस्तथा मासचतुष्टयम् ।
नदीनगादितरणं नाचर्तव्यं कदाचन ॥ २७१ ॥

नद्यादिव्यवधानेऽपि दिव्यमायतनं प्रति ।
गन्तव्यं योजनादर्वाक् शुभयात्राधिकारिभिः ॥

विशेषेण द्विपट्कार्णपूर्वैर्व्यागकपञ्चकैः ।
सदाराधननिष्ठानां पञ्चकालरतात्मनाम् ॥ २७२ ॥

दिव्यक्षेत्राभिगमनं न खण्डयति तद्व्रतम् ।
सूतकं मृतकं नैव कालेऽस्मिन् नियतात्मनाम् ॥

प्राणिहिंसा न कर्तव्या द्रुमविच्छेदनं तथा ।
नदीकेदारकूलानां भेदनं सस्यशोषणम् ॥ २७५ ॥

देवतायतनादीनां पीडनं तन्निवासिनाम् ।
वापीकूपतटाकानां पूरणं मृच्छिलादिभिः ॥ २७६ ॥

बन्धनं च द्विजातीनां सहवासं विजातिभिः ।
संभाषणं तथा तेभ्यो मात्रा वित्तपरिग्रहम् ॥ २७७ ॥

तस्मिन् काले विशेषेण वर्जयेद् बुद्धिमान्नरः ।
य एवं कुरुते तस्य प्रायश्चित्तैर्न निष्कृतिः ॥ २७८ ॥

कदाचिज्जायते वाऽथ नानाधर्मप्रतिष्ठया ।
स्थापनं वासुदेवस्य तेषु मुख्यं प्रकीर्तितम् ॥ २७९ ॥

एकान्तिद्विजमुख्यानां स्थापनं मध्यमं भवेत् ।
अन्येषामपि सर्वेषां प्रतिष्ठा चरमा भवेत् ॥ २८० ॥

प्रतिष्ठायां प्रवक्ष्यामि प्रायश्चित्तं यथाक्रमम् ।
क्ष्माशिलातरुसल्लोहपूर्वाणां तु परिग्रहे ॥ २८१ ॥

तत्तदङ्गे यथोदीर्णद्रव्यमन्त्रक्रियादिषु ।
परिच्युतेषु तद्भूयः शान्तिहोमजपादिकम् ॥ २८२ ॥

समाचरेद्यथा शास्त्रमन्यथा निष्फलं तु तत् ।
अकृते सति सर्वस्मिन् वास्तुदेशपरिग्रहे ॥ २८३ ॥

आनीतस्यालयक्षेत्रे शिल्पिभिः सत्क्रियां विना ।
यथावदाचरेद्विद्वानर्चाद्रव्यस्य संग्रहम् ॥ २८४ ॥

मृद्दारुवसनादीनामेवमेव समाचरेत् ।
अन्यालयार्थमानीतां शिलामर्चां सुनिर्मिताम् ॥ २८५ ॥

सर्वावयवसंपन्नां स्थापने तु विलम्बिताम् ।
न्यायेनादाय तामर्चां स्थापयेत् सिद्धसद्मनि ॥ २८६ ॥

प्रागवदन्यां समापाद्य स्थापयेत् प्राक् प्रकल्पिते ।
निर्मितां प्रतिमां शीघ्रं स्वगृहे न निवेशिताम् ॥ २८७ ॥

राज्ञो राष्ट्रस्य तत्कर्तुररिष्टमुपपादयेत् ।
एकविंशद्दिनादूर्ध्वमासुरी सा भवेद्ध्रुवम् ॥ २८८ ॥

कृत्वा महाभिषेकाद्यं स्थापयेदन्यथा त्यजेत् ।
प्रमाणरहिते बिम्बे पीठशक्त्यप्रभादिकं ॥ २८९ ॥

वस्त्रे वा भूषणे वाऽथ शमीपत्रसमन्वितम्।
घृतसिक्तैश्च बहुशः सतिलैः शालितण्डुलैः ॥ २९० ॥

जुहुयात् पञ्चभिर्मन्त्रैः प्रत्येकं शतसङ्ख्यया।
जलाधिवासस्नपने तथा नयनमोक्षणे ॥ २९१ ॥

शयने वेदिकायां च मन्त्रन्यासादिकर्मसु।
कुंभमण्डलपूजायां द्वारतोरणकुंभयोः ॥ २९२ ॥

अयथाकरणे नूनं पूर्ववच्छान्तिरिष्यते।
अस्थाने स्थापिते बिम्बे पादाधारशिलान्वितम् ॥

तदानीमेव चोद्धृत्य स्थापयेत्तं स्वके पदे।
मध्यमस्नपनं कृत्वा शान्तिहोमं समाचरेत् ॥ २९४ ॥

न स्थापिते मुहूर्तेऽस्मिंस्तु तदा बिम्बमुद्धरेत्।
पूर्ववत् स्नपने होमे कृते शान्तिर्भविष्यति ॥ २९५ ॥

स्थापनेऽधिकृते मुख्ये देशिके व्याधिते सति।
न्यस्तदेहेऽथवा मध्ये वर्तमाने क्रियाक्रमे ॥ २९६ ॥

क्रियामन्त्रोपदेष्टा च प्रतिष्ठाकर्मणि स्थितः।
पुत्रो वा देशिकेन्द्रस्य स्थापने शेषमाचरेत् ॥ २९७ ॥

अन्ते सहस्रकलशैरभिषिच्य सुरेश्वरम्।
चक्राम्बुरुहकुण्डे तु मधुक्षीरादिभिः क्रमात् ॥ २९८ ॥

शान्त्यर्थमयुतं हुत्वा तत्सङ्ख्यं जपमाचरेत्।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैर्वा भगवन्मयैः ॥ २९९ ॥

सकामैरथ निष्कामैर्मन्त्राराधनतत्परैः।
साधकैर्भगवद्बिम्बस्थापनार्थं सदैव हि ॥ ३०० ॥

पुरा प्रसादनीयश्च प्रार्थनापूर्वकं तु वा।
अधिकारपदस्थश्च द्विजेन्द्रः पाञ्चरात्रिकः ॥ ३०१ ॥

वेत्ता यो व्यूहपूर्वस्य व्यक्तस्य परमात्मनः।
सोऽन्येषां भगवद्बिम्बस्थापनेऽधिकृतः सदा ॥ ३०२ ॥

अनुग्रहप्रतिष्ठा चाप्यधिकारनिरूपणा।
अनन्यैरुपपन्नानां भक्तानां कार्यमुच्यते ॥ ३०३ ॥

अनन्याः पञ्चकालज्ञा व्यतिरिक्ता न ये प्रभोः।
प्राक् सृष्टास्तन्मुखोद्भूताः द्विषट्काध्यात्मचिन्तकाः ॥

चातुर्व्यूहपरत्वेन येषां वै प्रभवाव्ययौ।
कर्मणामपि सन्न्यासं कुर्वन्त्यध्यक्षतः क्रमात् ॥ ३०५ ॥

अतोऽमी दुर्लभतराः पारम्यं यस्य ते प्रति।
प्रमेयनिष्ठा श्रद्धा वा स्फुटास्तत्कर्मणि स्थिताः ॥

परत्वमन्यमार्गस्था नेच्छन्ति च परस्परम् ॥
य इच्छन्ति विभोस्तेषां स्थितिर्नास्ति तथा कृतौ ॥

मुक्ताधिकारिणं तं वै लब्धलक्षमकृत्रिमम्।
पञ्चकालरतं सिद्धं तन्त्रसिद्धान्तपारगम् ॥ ३०८ ॥

तेनैव श्रुतिमन्त्राणां स्थूलानामपि चोदना।
प्रतिकर्मणि वै कार्या यथावसरलक्षणा ॥ ३०९ ॥

यस्मादब्जसमुद्भूतमण्डलादिषु वृत्तिषु।
स्वार्थतो वा परार्थेन सदाराधनकर्मणि ॥ ३१० ॥

नित्यसिद्धे तदाकारे तत्परत्वेऽपि सन्ततम्।
यस्यास्ति सक्तिर्हृदये तस्यासौ सन्निधिं व्रजेत् ॥

मन्त्ररूपी जगन्नाथः परमात्माच्युतः प्रभुः।
अत्यौत्सुक्यं विना विप्र! मनसः प्रीतये त्वपि ॥

कामात्तये वा कीर्त्यर्थं तस्य तद्विहितं द्विज!।
सध्यानेन प्रतिष्ठानं प्रासादे स्वगृहेऽपि वा ॥ ३१३ ॥

इति सम्यक् समाख्यातं मुख्यकल्पं महामते!।
अनुकल्पं यदन्यत् तत्समासाद्विबोध तु ॥ ३१४ ॥

प्राक् प्राप्तदीक्षितैर्विधिवत्, वर्णधर्मस्थितैर्द्विजैः।
नित्याराधनसक्तैस्तु भक्तैर्भगवतो विभोः ॥ ३१५ ॥

धारणाध्यानपूर्वाणां लब्धलक्षैस्तु कर्मणाम्।
मन्त्रमण्डलमुद्राब्जकुण्डादीनां कृतश्रमैः ३१६ ॥

षडध्वव्याप्तिनिष्ठैस्तु त्यागशीलैरमत्सरैः।
अनुज्झितकर्मदक्षैः स्वकर्मपरिपालकैः ॥ ३१७ ॥

सत्कीर्तिप्रथितैर्लोके तथाऽकीर्तिपराङ्मुखैः।
प्रतिष्ठां लभते कर्ता तैः प्रतिष्ठापने कृते ॥ ३१८ ॥

निषिद्धमरविन्दाक्ष अतोऽन्येषां हि सर्वदा।
महामहं प्रतिष्ठाख्यं कर्तुर्व्यामिश्रयाजिनाम् ॥ ३१९ ॥

ये पुनर्लोकधर्मस्थाः समबुद्धिपदे स्थिताः ।
भगवत्यविशेषज्ञा नित्यं कार्यवशेन तु ॥ ३२० ॥

वाङ्मात्रेण परत्वं ये सर्वेषां प्रवदन्ति वै ।
अधिकारं विना येऽत्र प्रेरिता देवतार्चने ॥ ३२१ ॥

व्यामिश्रयाजिनस्ते वै पातित्यपदसंस्थिताः ।
नयन्ति नरकं नूनमेवमेव प्रवर्तिनः ॥ ३२२ ॥

न तु सद्भक्तिपूतानां वासुदेवरतात्मनाम् ।
कदाचित्तत्कृते दोषं विदधाति च खण्डना ॥ ३२३ ॥

अतस्तावन्महाबुद्धे! कर्तव्यं भक्तिपूर्वकम् ।
भक्त्या वै मन्त्रनिष्ठानां तन्मन्त्रो जपकर्मणि ॥ ३२४ ॥

वर्णव्यत्ययमापन्नो लुप्तस्तेन स्वरेण वा ।
स्वरादिनाधिकश्चैव मन्त्रोऽनर्थप्रदः सदा ॥ ३२५ ॥

अचिरात्तत्प्रयोक्तॄणां तथापि कमलोद्भव! ।
अतिभक्तिप्रभावाच्च वाञ्छितं संप्रयच्छति ॥ ३२६ ॥

यस्मात् सद्भक्तिपूतानां प्रपन्नानां क्रमं विना ।
प्रसादमेति मन्त्रेशस्त्वचिराद्भावितात्मनाम् ॥ ३२७ ॥

किं पुनर्वै क्रियाज्ञानसंपूर्णानां द्विजोत्तम! ।
श्रद्धाभक्तिपराणां च बोधितानां च देशिकैः ॥ ३२८ ॥

तस्मात् सर्वप्रयत्नेन शासनेऽस्मिन्महामते! ।
कार्यं दीक्षादिकं सर्वं भक्तानां भक्तवत्सले ॥ ३२९ ॥

मामसंप्रतिपन्नोऽपि मत्प्राप्त्यर्थं करोति च ।
मन्दमध्यमभक्तानां कामभोगरतात्मनाम् ॥ ३३० ॥

भविनां मामकीं दीक्षां मोहाद्वा स्थापनादिकम् ।
स नयत्यचिरात्तस्य भक्तिर्बीजेन वै सह ॥ ३३१ ॥

समन्त्रं कर्मतन्त्रं च सिद्धयश्च पराङ्मुखम् ।
इहैव शीघ्रं विप्रेन्द्र! देहान्ते गतसन्ततिः ॥ ३३२ ॥

घोरं प्रयाति नरकं भुक्त्वैवं दुष्कृतं महत् ।
भगवन्मन्त्रमाहात्म्यात्तद्व्यापारवशात्तु वै ॥ ३३३ ॥

संसर्गोत्थमघं याति प्राक् संस्कारवशात् पुनः ।
चीर्णदुश्चरितो भूयः प्राप्नुयान्मानुषीं तनुम् ॥ ३३४ ॥

प्रयत्नमाचरेच्छुभ्रं येन शान्तिमवाप्नुयात् ।
साहङ्कारः स आचार्य स्वभक्तो नाधिकार्यपि ॥

प्राप्नोति नूनं स्वगतिं स्वकामो नारकीं तथा ।
सर्वगस्त्वपि मन्त्रात्मा सर्वानुग्रहकृद्द्विजः ॥ ३३६ ॥

यद्यप्येवं हितं तत्र न भजेत्तत्र सन्निधिम् ।
प्रतिमामध्यदेहान्तं नूनमावाह्य तत्क्षणात् ॥ ३३७ ॥

भूतवेतालयक्षाद्याः कुर्वन्त्यर्थादिकक्षयम् ।
अन्यदर्शनसंस्था ये नानुग्राह्यास्ततो मुने! ॥ ३३८ ॥

नोपास्यो हि तथाचार्यः संसारभयभीरुणा ।
सम्यग्भक्तिपरेणैव डम्भरागोज्झितेन च ॥ ३३९ ॥

अत एव महाबुद्धे! प्रतिष्ठाख्यं मखोत्तमम् ।
निर्वर्तनीयमामूलाद्वैष्णवानां च वैष्णवैः ॥ ३४० ॥

एवं द्रव्यमयो यत्र सन्निवेशो मुनीश्वर! ।
उभयानुग्रहं नित्यं करुणाभक्तिलक्षणम् ॥ ३४१ ॥

प्रतिष्ठाख्यं हि तत् कर्मभुक्तिमुक्तिफलप्रदम् ।
तच्च सद्ब्रह्मनिष्ठानां द्विजानामात्मसिद्धये ॥ ३४२ ॥

कर्तव्यत्वेन वै नित्यं प्रसिद्धममलेक्षण! ।
तद्योपाद्य यतस्तेषां विस्तारो हि न विद्यते ॥ ३४३ ॥

देहपाताहते नान्यः तत्पातस्त्वतिदोषकृत् ।
आदावेव हि तत्तस्माच्चाचर्तव्यं कृतात्मभिः ॥ ३४४ ॥

तत्कर्मप्रतिपन्नानां चतुर्णामपि तैः सदा ।
कार्यं सम्यक् प्रतिष्ठानमनुग्रहधिया मुने! ॥ ३४५ ॥

नोपरोधः स्वभावेन न लोभेन न नामतः ।
प्राप्ते ह्याकस्मिके दोषे त्वङ्गभङ्गादिके मुने! ॥ ३४६ ॥

भक्तानामनुकंपार्थं दिव्यैर्मन्त्रैर्बलादिकैः ।
द्वादशाक्षरपूर्वैश्च मोक्षैकफललक्षणैः ॥ ३४७ ॥

संपूजिते तु तैर्भक्तैः कुरुते निष्कृतिं सदा ।
सर्वनाशेन बिम्बानामक्रमात्लोपकल्पना ॥ ३४८ ॥

तत्तत्कर्तव्यमुद्दिश्य विशेषः प्रागुदीरितः ।
तथापि विस्तरेणात्र विधानमवधारय ॥ ३४९ ॥

देवसिद्धमुनीन्द्राद्यैरेवं संस्थापिते सति ।
बिम्बे चोरादिभिर्नष्टे सद्यः संपाद्य पूर्ववत् ॥ ३५० ॥
स्थापयेद्विधिवन्मन्त्री रात्रावहनि सन्ध्ययोः ।
न कालोऽत्र परिज्ञेयो नष्टोद्धारे विशेषतः ॥ ३५१ ॥
बालालये तु प्रथमे जीर्णोद्धारे तथान्तिमे ।
प्रायश्चित्तं प्रवक्ष्यामि मुने! सम्यक् शृणुष्व मे ॥
अतीते प्रार्थिते काले कर्त्रा प्रासादबेरयोः ।
निर्माणे स्नपनं कार्यमुत्तमं शास्त्रचोदितम् ॥ ३५३ ॥
पश्चादप्यर्थयेत् कालं वाञ्छितं तत्समापने ।
न कृत्वैवं गते पश्चात् काले द्वादशवार्षिके ॥ ३५४ ॥
पुनः प्रतिष्ठां कुर्वीत मूले बालालये तु वा ।
बिम्बे चोरादिभिर्नष्टे बालगेहे प्रमादतः ॥ ३५५ ॥
तथैवापाद्य तामर्चां प्रतिष्ठाप्य यथाविधि ।
अधमस्नपनं कृत्वा शान्तिहोमं समाचरेत् ॥ ३५६ ॥
स्वस्थानाच्चलिते तस्मिन् हेतुना येन केनचित् ।
यथापूर्वं प्रतिष्ठाप्य स्नापयेत्पुरुषोत्तमम् ॥ ३५७ ॥
सर्वं बालगृहे कार्यं नित्यनैमित्तिकात्मकम् ।
एकबेरविधानेन पवित्रारोहपश्चिमम् ॥ ३५८ ॥
स्तेनैर्नष्टे तथा बिम्बे तत्तद्द्रव्येण पूर्ववत् ।
निर्माय लक्षणोपेतं प्रतिष्ठाप्य तथैव तु ॥ ३५९ ॥
पूर्ववत् पूजयेन्मन्त्री बिम्बं सर्वत्र सर्वदा ।
द्रव्यान्तरेण वा कुर्याद्देशिको यागसिद्धये ॥ ३६० ॥
चोरैरपहृतं बिम्बं पुनः प्राप्तं यदि द्विज! ।
पुनः प्रतिष्ठां कुर्वीत नयनोन्मीलनं विना ॥ ३६१ ॥
चोरभूतैर्द्विजैः स्पृष्टे अधमस्नपनं चरेत् ।
उत्तमस्नपनं कुर्यात् प्रवेशे गर्भवेश्मनि ॥ ३६२ ॥
चिरोषिते तु संस्पृष्टे प्रतिष्ठां पुनरारभेत् ।
श्वसृगालबिडालाद्यैः प्रविष्टे गर्भवेश्मनि ॥ ३६३ ॥
अधमस्नपनेनैव शान्तिहोमं समाचरेत् ।
अधिष्ठितेऽङ्गणे चैतैः शान्त्यर्थं जुहुयाच्छतम् ॥ ३६४ ॥

एतैर्बिम्बे तु संस्पृष्टे स्नापयेन्मध्यमोत्तमम् ।
स्पृष्टे तु पक्षिभिः कैश्चिद्दोष आयतने भवेत् ॥ ३६५ ॥
काककुक्कुटगृध्राद्यैः स्पृष्टे बिम्बे प्रमादतः ।
पूर्ववत् स्नपनं कृत्वा शान्तिहोमं समाचरेत् ॥ ३६६ ॥
खद्योताद्यैस्तु संस्पृष्टे अधमस्नपनं चरेत् ।
न भृङ्गमक्षिकाद्यैस्तु स्पृष्टे दोषो भवेद्ध्रुवम् ॥ ३६७ ॥
तथा पिपीलिकाद्यैस्तु न तत्प्रायैर्विशेषतः ।
रेतोरुधिरविण्मूत्रापेयमांसादिवस्तुभिः ॥ ३६८ ॥
देवबिम्बे तु संस्पृष्टे कुर्यात् स्नपनमुत्तमम् ।
एतैः स्पृष्टेऽङ्गणादौ तु तस्मादुद्धृत्य तत्क्षणात् ॥ ३६९ ॥
गोमयेनोपलिप्याथ प्रोक्षयेद्द्रव्यपञ्चकैः ।
शान्त्यर्थं जुहुयान्मन्त्री तिलाज्याभ्यां शतं शतम् ॥
वैश्यैश्च वैष्णवैर्बिम्बे शूद्रैः स्त्रीभिर्विशेषतः ।
विमाने स्थापिते स्पृष्टे क्षालयेत् पञ्चगव्यकैः ॥
शान्तिहोमं प्रकुर्वीत मधुक्षीरादिभिः शतम् ।
बिम्बेऽनुलोमैः संस्पृष्टे प्रतिलोमैश्च गर्हितैः ॥ ३७२ ॥
स्नपनं शान्तिहोमं च सद्वान् सर्वदा चरेत् ।
वैखानसैस्तु संस्पृष्टे पयःस्नानेन शुध्यति ॥ ३७३ ॥
आराधिते स्वमार्गेण प्रतिष्ठामाचरेत् पुनः ।
प्रतिमा चैव तत्पीठं प्रासादो गर्भमन्दिरम् ॥ ३७४ ॥
विग्रहं देवदेवस्य चतुष्टयमिदं समम् ।
समाधिश्च तथा शान्तिः कार्या तत्र सदा समा ॥
वेदिकायां तथा चक्रे पङ्कजे चक्रपङ्कजे ।
हेमादिद्रव्यरचिते मण्डले रजसा कृते ॥ ३७६ ॥
समाधिश्चैव शान्तिश्च प्रतिपत्तिश्च तादृशी ।
प्राकारे गोपुरद्वारमण्टपादिपरिष्कृते ॥ ३७७ ॥
शिवादिभिर्न दोषोऽस्ति प्राङ्गणाद्यधिष्ठिते ।
प्रविष्टे यजनस्थाने प्रोक्षयेत् पञ्चगव्यकैः ॥ ३७८ ॥
मण्टपाङ्गणशालासु मालिकाद्यासु भूमिषु ।
पूजाङ्गत्वेन विहितैर्गुरुसाधकदीक्षितैः ॥ ३७९ ॥

न दोषो द्विजशार्दूल! शयनासनभोजनैः।
पादप्रक्षाळनाचामस्नानाभ्यङ्गादिकैरपि ॥ ३८० ॥
अन्यैः स्वल्पेषु चैतेषु गोमयेनोपलिप्य च।
प्रोक्षयेत् पञ्चभिर्गव्यैः कुशोदकसमन्वितैः ॥ ३८१ ॥
बिडालमूषिकासर्पमण्डूककृकलासकैः।
आखुचुचुन्दरी गोधाराजिलाद्यैश्च जन्तुभिः ॥
अधिष्ठिते गर्भगेहे शान्तिहोमं समाचरेत्।
मक्षिकायायवल्मीककृमीणां निचयेष्वपि ॥ ३८३ ॥
बिम्बे विमाने जातेषु तदैवोद्धृत्य तान् पुनः।
समाधाय यथापूर्वं चतुःस्थानार्चनादिकम् ॥ ३८४ ॥
स्नपनं देवदेवस्य कुर्यादुत्तममध्यमम्।
मण्टपादौ तु सर्वत्र कुत्रचिद्वा हरेर्गृहे ॥ ३८५ ॥
ब्रह्मदण्डादिरोहे च छत्राकाणां समुत्थितौ।
दुष्टसत्त्वगणापूर्वपक्षिसंघसमाकुले ॥ ३८६ ॥
शान्तिहोमं प्रकुर्वीत तान् व्यपोह्य तदैव तु।
विमाने तेषु जातेषु मध्यमस्नपनं चरेत् ॥ ३८७ ॥
बिम्बे यदि तदा कार्यं प्रवालावसथादिकम्।
कर्म कृत्वा यथापूर्वं स्यागान्तं तु नृपाज्ञया ॥ ३८८ ॥
नवीकृत्य पुनर्बिम्बं पुरावत् स्थापयेद्बुधः।
स्फुरद्वीपु समुत्पन्नास्वर्चायामेवमेव तु ॥ ३८९ ॥
समाधाय प्रतिष्ठाप्य शान्त्यर्थं पुनरेव तु।
स्नापयेद्देवदेवेशमुत्तमोत्तमवर्त्मना ॥ ३९० ॥
विमान आसु जातासु कुर्यात् स्नपनमध्यमम्।
मण्टपादिषु जातासु स्नपनं च समाचरेत् ॥ ३९१ ॥
दृष्टास्वेतासु विप्रेन्द्र! प्राङ्गणादौ तु कुत्रचित्।
तास्तदैव समुद्धृत्य गव्यैः संप्रोक्षयेत्ततः ॥ ३९२ ॥
शान्त्यर्थं जुहुयान्मन्त्री वह्निश्चेत् सघृतैस्तिलैः।
देवालयेष्वकर्तव्ये कृते कर्मणि कुत्रचित् ॥ ३९३ ॥
मध्यमावरणादन्तः स्नपनं होमपश्चिमम्।
शान्तये जुहुयान्मन्त्री वह्निश्चेज्ज्वलितेऽनले ॥ ३९४ ॥

छर्दिनिष्ठीवलालाद्यैर्दूषिते देवसद्मनि।
तदैव तद्व्यपोह्यात्र पञ्चगव्यैर्विलिप्य च ॥ ३९५ ॥
जपेदष्टशतं मन्त्री हृन्मन्त्रं च विधानतः।
प्रायश्चित्तं प्रवक्ष्यामि शवस्पृष्टौ विशेषतः ॥ ३९६ ॥
द्विजातिशवसंस्पृष्टे प्रमादाद्देवकौतुके।
एकाशीतिघटैः स्नाप्य मूलमन्त्रायुतं हुनेत् ॥ ३९७ ॥
क्षत्रविट्छूद्रजातीनां शवैः स्पृष्टे तु कौतुके।
मध्यमेनोत्तमेनैव सहस्रकलशेन तु ॥ ३९८ ॥
क्रमेण स्नापयेद्देवमेकैकेन यथाविधि।
शान्त्यर्थं हवनं कृत्वा यथापूर्वं तथा जपेत् ॥ ३९९ ॥
अनुलोमशवस्पृष्टौ संप्रोक्षणमथाचरेत्।
चण्डालपतितोदक्यासूतिकाशवदूषिते ॥ ४०० ॥
बिम्बे प्रतिष्ठां कुर्वीत सहस्रकलशाप्लवम्।
शान्तिहोमायुतं तद्वज्जपं कुर्याद्यथाक्रमम् ॥ ४०१ ॥
विमाने ब्राह्मणादीनामनुलोमादिकस्य च।
शवस्पृष्टौ तु संक्षाल्य बहूदकघटेन तु ॥ ४०२ ॥
उत्तमोत्तमनिष्ठं तु स्नपनं मध्यमाधमात्।
संस्नाप्य देवदेवेशमेकैकेन क्रमेण तु ॥ ४०३ ॥
शान्तिहोमं प्रकुर्वीत पश्चान्मन्त्रं तथा जपेत्।
प्रथमावृतिमारभ्य रथ्यावरणपश्चिमे ॥ ४०४ ॥
दूषिते प्राङ्गणक्षेत्रे प्रागुक्तैः क्रमशो भुवः।
स्थलं संशोध्य विधिवद्दीक्षितैर्मन्त्रवित्तमैः ॥ ४०५ ॥
मुख्योत्तमात्तु स्नपनाचार्चान्तिममनुक्रमात्।
स्नापयित्वा विशेषेण शान्तिहोमं समाचरेत् ॥ ४०६ ॥
एवमेवान्त्यजातीनां शवस्पृष्टौ समाचरेत्।
सालमण्टपपीठेषु गोपुरे मन्दिरेऽपि वा ॥ ४०७ ॥
विमानाद्बाह्यतः क्वाऽपि परिवारालयादिषु।
वर्णानां ब्राह्मणादीनामनुलोमादिकस्य च ॥ ४०८ ॥
मरणेष्वपि जातेषु तत्तदावरणोक्तवत्।
पश्वादिषु मृतेष्वेषु गजाश्वोष्ट्रखरादिषु ॥ ४०९ ॥

मरणादिषु सर्वत्र भूशुद्धिं पुरतश्चरेत्।
श्वसृगालशवाद्येषु काकश्येनादिजन्तुषु ॥ ४१० ॥

मार्जारवानराद्येषु तथान्येष्वेवमादिषु।
संप्रोक्ष्य पञ्चगव्येन शान्तिहोमं समाचरेत् ॥ ४११ ॥

मृते मूषिकसर्पादौ भूशुद्धिं च जपं चरेत्।
मरणादिषु सर्वत्र भूशुद्धिं पुरतश्चरेत् ॥ ४१२ ॥

सर्वावासे महापीठे तथा शैलमयेष्वपि।
प्रदेशेषु समालिप्य गोमयेन समन्ततः ॥ ४१३ ॥

प्रोक्षयेत् पञ्चभिर्गव्यैः पुण्याहोक्तिपुरस्सरम्।
गृहार्चायां न दोषोऽस्ति मृते पूजागृहाद्बहिः ॥ ४१४ ॥

क्षालनालेपनाद्येन व(क)र्मणा तत्र शोधयेत्।
संनिकर्षे गृहार्चायाः क्षीरेण स्नाप्य पूजयेत् ॥ ४१५ ॥

देवसिद्धमुनीन्द्राद्यैः कल्पिते भगवद्गृहे।
तत्तदङ्गतया क्लृप्ते ग्रामादौ राष्ट्रसंकुलात् ॥ ४१६ ॥

चण्डालपतितोदक्यासूतिकाशवरादिभिः।
दूषिते भगवद्बिम्बे संप्रोक्षणविधिं चरेत् ॥ ४१७ ॥

सहस्रकलशैर्देवं सन्निकृष्टेऽभिषिच्य च।
शान्तिहोमं प्रकुर्वीत चतुःस्थानार्चनादिकम् ॥

सहस्रकृत्वस्तदनु जपं कुर्यात्तथाविधम्।
प्रासादे वाऽङ्कणद्वारि मण्टपे पचनालये ॥ ४१९ ॥

पुष्पावासे जलागारे धनधान्यालयादिषु।
ध्वजपीठे महापीठे रथ्यावृतिगणेष्वपि ॥ ४२० ॥

उत्सवाङ्गतया क्लृप्ते ग्रामादौ राष्ट्रसंकुलात्।
चण्डालपतितोदक्यासूतिकाशवरादिभिः ॥ ४२१ ॥

वर्णानां ब्राह्मणादीनामनुलोमविलोमयोः।
शवास्थिभिश्च सन्दुष्टां सर्वत्रैकत्र वा क्षितिम् ॥४२२॥

खात्वा मृदं समुद्धृत्य बहिः प्रक्षिप्य शुद्धया।
संपूर्य च समीकृत्य कुशाद्भिः परिमृज्य च ॥ ४२३ ॥

गोमयेनोपलिप्याथ पुण्याहवचनादिकम्।
पञ्चगव्येन चाभ्युक्ष्य गोगणं तत्र वासयेत् ॥ ४२४ ॥

वाचयित्वा महाशान्तिं ब्राह्मणैर्वेदपारगैः।
भोजयित्वा द्विजांस्तत्र तेभ्यो दद्यात्तु दक्षिणाम् ॥

कृत्वैवं स्थूलशुद्धिं तु शान्तिं कुर्यादनुक्रमात्।
पञ्चयज्ञमयीं पुण्यां सर्वदोषापनुत्तये ॥ ४२६ ॥

एवं यथाविधि यावच्च कृता शान्तिकी क्रिया।
सहस्रकलशेनैव पवित्रावर्तितेन च ॥ ४२७ ॥

व्यापकैः पञ्चभिर्मन्त्रैः पञ्चधा स्नापयेद्विभुम्।
ध्वजमुत्थाप्य विधिवच्चावाहाद्युत्सवं पुरा ॥ ४२८ ॥

शान्त्यर्थं सर्वदोषाणां कुर्यात्तीर्थावमर्पणम्।
चक्रशङ्खगदापद्मवृत्तकुण्डेष्वनुक्रमात् ॥ ४२९ ॥

तत् कुर्यात् पञ्चभिर्मुख्यैर्द्वादशार्णपुरस्सरैः।
मधुक्षीरादिभिर्द्रव्यैः पञ्चभिर्नियुताख्यया ॥ ४३० ॥

सङ्ख्यया जुहुयान्मन्त्री लक्षलक्षा भवेत्तथा।
अनुकल्पे विधिरयं शान्तिकर्मणि संमतः ॥ ४३१ ॥

मुख्यकल्पो विशेषेण वक्ष्यते होमकर्मणि।
स्थापनोक्तविधानेन कल्पिते मण्टपे शुभे ॥ ४३२ ॥

चक्राम्बुरुहपूर्वेषु यथावत्कल्पितेषु च।
क्लृप्तेषु दशकुण्डेषु ब्रह्मवृक्षादिसंभवैः ॥ ४३३ ॥

समिद्भिर्गैस्तिलैराज्यैः सेचितैः प्रागुदीरितैः।
पञ्चभिर्मधुराद्यैश्च मिश्रीभूतैः क्रमेण तु ॥ ४३४ ॥

महत्तराणां दोषाणां शान्तये मन्त्रवित्तमः।
अयुतं नियुतं लक्षं कोटिनिघ्नं यथाबलम् ॥ ४३५ ॥

होतव्यं पूर्णया सार्धं दशभिर्मन्त्रसत्तमैः।
कुण्डेषु मध्यपूर्वेषु, मन्त्राणां नियमं शृणु ॥ ४३६ ॥

चक्राब्जे द्वादशार्णेन वस्वश्रेऽष्टाक्षरेण तु।
षडर्णेन षडश्रे तु शङ्खाभे प्रणवेन तु ॥ ४३७ ॥

जितंतया च तुर्यश्रे विश्वत्राता त्रिकोणके।
द्वात्रिंशद्दलपद्माख्ये नृसिंहानुष्टुभेन तु ॥ ४३८ ॥

सौदर्शननृसिंहेन चक्रकुण्डेऽक्षरारके।
वराहेणार्धचन्द्राख्ये वृत्ते सौदर्शनेन तु ॥ ४३९ ॥

धिष्ण्यद्वयं मध्यवेद्याः प्रागुक्तं दक्षिणोत्तरे ।
शेषाणि परितः कुर्याद्दिक्षु चैवं विदिक्षु च ॥ ४४० ॥

सिद्धमन्त्रा नियोक्तव्या होतारः शान्तिकर्मणि ।
सर्वकुण्डानि सर्वेषां मन्त्राणामिच्छया गुरोः ॥ ४४१ ॥

कल्पनीयानि वा मन्त्रा यतः सर्वफलप्रदाः ।
न्यस्तमन्त्रैर्यथान्यायं जप्यास्ते सङ्ख्यया तथा ॥

गोभूहेमतिलादीनां दानैर्यागयजनस्य च ।
तृप्तिः कार्या विशेषेण दिव्याद्यायतनस्य च ॥ ४४३ ॥

प्रजापालनशीलेन भूपेनात्महितेच्छुना ।
शान्तिरेवंविधा कार्या शास्त्रवद्बहुभिर्धनैः ॥ ४४४ ॥

प्राचुर्यात् सर्वदोषाणां धर्मशः शान्तिकी क्रिया ।
निर्वर्तुं न तु शक्या चेन्महा स्नानादिपञ्चकम् ॥

महादानावसानं च कार्यं दिव्यालयादिषु ।
पौनःपुन्येन विधिवच्छुद्धेन द्रविणेन च ॥ ४४६ ॥

उल्काशन्यादिपाते च नक्षत्रपतने च स्यात् ।
सधूमे च दिशादाहे भूताद्यावेशिते नृपे ॥ ४४७ ॥

दुर्भिक्षे व्याधिते राष्ट्रे तथा वै शत्रुसङ्कटे ।
सूर्योदयस्य व्यत्यासे भूकम्पे तद्विदारणे ॥ ४४८ ॥

अतिवृष्ट्यवनावृष्टौ देवताहसने इति ।
रोदने च तथा स्विन्ने तथार्चाचलनेऽपि च ॥ ४४९ ॥

भ्रमणे च तथा पीठादङ्गभङ्गादिके सति ।
शैथिल्ये सरघादीनामुद्भवे बहुधा गृहे ॥ ४५० ॥

एवमादिषु चान्येषु दुर्निमित्तेषु सत्सु च ।
शान्तिरेतैश्च जायेत क्रियमाणैरनुक्रमात् ॥ ४५१ ॥

चतुःस्थानार्चनं कार्यं दोषमात्रसमुद्भवे ।
यथाशक्ति दरिद्राणां दानमात्रं कथञ्चन ॥ ४५२ ॥

प्रासादे मण्टपे साले गोपुरे मालिकादिके ।
प्रमादादग्निना दग्धे ता नीत्वाऽन्यत्र देवताः ॥

यथापूर्वं नवं कृत्वा प्रतिष्ठाप्य विधानतः ।
उत्तमं स्नपनं कुर्यात्तस्य दोषस्य शान्तये ॥ ४५४ ॥

हीनैकदेशे प्रासादे हुतभुग्वातवृष्टिभिः ।
कारणैः कैश्चिदन्यैर्वा सन्धेयं तच्च शिल्पिभिः ॥

प्रथमं स्नपनं कृत्वा शान्तिहोमं समाचरेत् ।
विमाने सर्वतो भग्ने बालस्थानं प्रकल्प्य च ॥ ४५६ ॥

तथैव बाले बिम्बे तु नित्यनैमित्तिकादिकम् ।
पवित्रारोहणान्तं च सर्वकर्म समाचरेत् ॥ ४५७ ॥

तद्दोषशान्तये कार्यं स्नपनं मध्यमं पुनः ।
भग्नबिम्बसमाधाने विशेषः प्रागुदीरितः ॥ ४५८ ॥

तथापि विस्तरेणाद्य प्रोच्यते तद्विधिं शृणु ।
मूलबिम्बेऽग्निना दग्धे बालस्थाने तथार्चयेत् ॥

सहस्रकलशस्नानमाचर्तव्यं विधानतः ।
वह्निना कमबिम्बादौ वैवर्ण्ये समुपागते ॥ ४६० ॥

तत्तद्बिम्बेषु कुर्वीत स्नपनं चोत्तमं क्रमात् ।
वह्निवातादिवेगेन मन्त्रिणामपराधतः ॥ ४६१ ॥

सौवर्णे राजते बिम्बे ताम्ररीतिमये तु वा ।
भिन्नाङ्गे सति संधेयं तत्क्षणाच्छिल्पिवित्तमैः ॥ ४६२ ॥

लोहान्तरेण तद्बिम्बं न सन्धेयं प्रयत्नतः ।
ताम्ररीतिमयं यद्वा सन्धयेद्वित्तवर्जितः ॥ ४६३ ॥

यद्द्रव्येणादितः क्लृप्तं तद्द्रव्येणात्र सन्धयेत् ।
त्यक्तं बिम्बं समुद्भ्रान्तः प्रक्षिपेच्छास्त्रवर्त्मना ॥

सुवर्णरजतोत्थं यत् महाङ्गेषु च सक्षतम् ।
न त्याज्यं तत् समाधेयं तस्यां शक्तिं विसृज्य तु ॥

तद्द्रव्येण यथापूर्वं बिम्बकर्म समापयेत् ।
मृत्काष्ठोपलजे भग्ने बिम्बे केनापि हेतुना ॥ ४६६ ॥

बालालयगते बिम्बे तां शक्तिं सन्निरोध्य च ।
दुष्टामर्चां परित्यज्य कृत्वा बिम्बान्तरं पुनः ॥ ४६७ ॥

न त्याज्या मृत्तिकाशूलरज्ज्वाद्या देवनिर्मिते ।
देवयक्षमुनीन्द्राद्यैरन्यैः पौराणिकैस्तु वा ॥ ४६८ ॥

प्रतिष्ठिते तथा जीर्णे बिम्बे स्वर्णादिलोहजे ।
तदङ्गं सन्धयेत् पश्चात् सुवर्णेन नान्यथा ॥ ४६९ ॥

भग्ने शिलामये विम्बे देवमुन्यादिकल्पिते ।
तदङ्गं रुक्मजं कृत्वा सन्धेयं तद्दृढं यथा ॥ ४७० ॥

देवादिस्थापिते विम्बे हीनाङ्गे मृण्मये सति ।
कदाचिन्न परित्याज्यं तत् सन्धेयं तदा शनैः ॥ ४७१ ॥

एवं जीर्णं तथाभूतं तदङ्गं सन्धयेत् सदा ।
न बालगेहविम्बाद्यमन्येनैव तु कारयेत् ॥ ४७२ ॥

नित्यादौ वर्तमानेऽत्र सर्वं कार्यमतन्द्रितैः ।
एवमेव स्वयंव्यक्ते कारयेत्तन्त्रवित्तमः ॥ ४७३ ॥

देवादिपूजिते वाऽपि स्वयंव्यक्ते तु कौतुके ।
मृद्दारुजे तु सञ्जीर्णे कृमिवह्निजलादिभिः ॥ ४७४ ॥

तत्तद्बालगृहं कृत्वा पूज्यमाने तु पूर्ववत् ।
क्रमादर्चान्तरं कृत्वा स्थापयेच्च यथाविधि ॥ ४७५ ॥

बालविम्बे तु जीर्णेऽत्र कुर्यादेवं पुनःपुनः ।
मनुष्यनिर्मिते जीर्णे नष्टे दुष्टे तु वा क्वचित् ॥ ४७६ ॥

वर्णशोभादिहीने च विम्बे शैलमये सति ।
विशेषान्मृण्मये वाऽपि चित्राभासपटादिषु ॥ ४७७ ॥

बालविम्बे समाहूय चित्रयित्वा तु पूर्ववत् ।
पुनः प्रतिष्ठां कुर्वीत विधिवन्मन्त्रवित्तमः ॥ ४७८ ॥

रीतिजे ताम्रजे वाऽपि आरकूटविनिर्मिते ।
प्रणीते पूज्यमाने तु काम्यविम्बादिके सति ॥ ४८० ॥

कालान्तरेण जीर्णेऽस्मिन्नुत्कृष्टे समुपस्थिते ।
निकृष्टं सन्त्यजेद्विद्वान्न दोषस्तत्र विद्यते ॥ ४८१ ॥

लोहपाषाणमृत्काष्ठैः स्थापिते मूलकौतुके ।
न संपाद्यमतोऽन्येन कदाचिन्मुख्यवस्तुना ॥ ४८२ ॥

पुरावज्जीर्णतां याते कर्तव्यं मूलकौतुके ।
बहुबेरैकबेराभ्यां स्थापिताभ्यां गृहान्तरे ॥ ४८३ ॥

जीर्णोद्धारेऽपि कर्तव्यं पूर्ववत् स्थापितं बुधैः ।
लक्ष्म्यादिकान्तारहिते बहुबेरे पुरा स्थिते ॥ ४८४ ॥

जीर्णे तु पश्चाद्देवीभ्यां सहितं वा प्रकल्पयेत् ।
सर्वथा बहुबेरत्वहानिर्न स्याद्विपर्ययात् ॥ ४८५ ॥

देवयक्षमुनीन्द्राद्यैः स्थापिते लक्षणोज्झिते ।
विम्बे विमाने प्राकारे गोपुरे द्वारि मण्टपे ॥ ४८६ ॥

पीठे वा पचनावासे कोशागारादिवस्तुषु ।
जीर्णेषु पूर्ववत् कुर्यान्न कुर्याल्लक्षणान्तरम् ॥ ४८७ ॥

पापिष्ठैरतिनष्टेऽस्मिन् त्रिदशादिप्रतिष्ठिते ।
विम्बादौ वैष्णवे चिह्ने लक्षणैश्चापि वर्जिते ॥ ४८८ ॥

युक्ते वा पूर्ववत् कुर्यात् पूर्वरूपानुसारतः ।
राजराष्ट्रविनाशः स्यादन्यथा कल्पिते सति ॥ ४८९ ॥

देवसिद्धमुनीन्द्राद्यैः स्थापिता पूजिता पुरा ।
विद्युत्प्रपातपूर्वैश्च दोषैर्वा चातिदूषिता ॥ ४९० ॥

निर्दोषादासनात्तस्मात्तामुत्थाप्य विसृज्य च ।
पूर्ववन्निर्मितां पीठे प्रतिष्ठाप्य विधानतः ॥ ४९१ ॥

पीठभङ्गे तथान्यस्मिन् कल्पिते योजयेद्दृढम् ।
क्ष्माभेदजलवेगाद्यैः पतितं भगवद्गृहम् ॥ ४९२ ॥

प्राग्विम्बसहितं तस्माद्देशादन्यत्र कल्पयेत् ।
नष्टे सविम्बे सदने दिव्यादौ प्राग्वदाचरेत् ॥ ४९३ ॥

चोरत्वादिवेगाद्यैरतिनष्टे तु मानुषे ।
विम्बे पश्चात् प्रकुर्वीत पूर्ववद्वान्यथापि वा ॥ ४९४ ॥

न शून्यमूलविम्बत्वाद्बालार्चावाहनादिकम् ।
न कार्यं देशिकेन्द्रेण पूर्ववत् स्थाप्य पूजयेत् ॥ ४९५ ॥

एवं हि सर्वदेवानां परव्यूहादिरूपिणाम् ।
विष्वक्सेनगणेशादिपरिवारगणस्य च ॥ ४९६ ॥

कलशानां गोपुराद्येषु विभवव्यूहरूपिणाम् ।
सान्निध्यातिशयात्तेषु पूजितानां दिनं प्रति ॥ ४९७ ॥

जीर्णोद्धारविधाने च विशेषः कथितो मया ।
मन्त्रसिद्धैश्च विविधैर्मुनिभिर्मनुजैस्तथा ॥ ४९८ ॥

प्रतिष्ठितानां गेहानां चिरकालवशेन तु ।
पतनस्फोटभेदादिनाशकं भगवद्गृहे ॥ ४९९ ॥

निर्वाहकानां भक्तानां शास्त्रज्ञानामनुज्ञया ।
बाह्ये बाह्यान्तरे तेषां रक्षणार्थं शिलादिभिः ॥ ५०० ॥

निपुणैः शिल्पिभिः कार्यो भित्तिबन्धः समन्ततः ।
प्रासादे मण्टपे चाग्र्ये प्राकारे गोपुरे तु वा ॥ ५०१ ॥

प्राङ्गणे पचनावासे कोशागारेऽम्बरास्पदे ।
पुष्पपानीयशालायामवघातगृहादिषु ॥ ५०२ ॥

स्नानार्थमण्टपे वाऽपि तथा वै यागमण्टपे ।
जीर्णे कालान्तरे चैव विभूत्या विस्तृते गृहे ॥ ५०३ ॥

रक्षार्थं विनियोगार्थं तद्बाह्ये तु विवर्धयेत् ।
अभ्यन्तरात् समारभ्य ह्रासयेन्न तु कुत्रचित् ॥ ५०४ ॥

प्रमुखे सर्ववस्तूनि वन्धयेत् परितोऽथवा ।
प्रागुदग्वा न वृद्धिः स्यात् पृष्ठे वारुणयाम्ययोः ॥

उत्तरे पश्चिमे वाऽथ वृद्धिं कुर्यान्महानसे ।
पौराणिकालयं पीठं तथा तीर्थं सरोवरम् ॥ ५०६ ॥

मठं वा मण्टपाद्यं वा चिह्नं सौदर्शनादिकम् ।
न चालयेत् प्रयत्नेन सालादीनां च कल्पने ॥ ५०७ ॥

बाह्यतः कल्पयेत्तानि लंघयित्वा पुरातनम् ।
प्राक् स्थितस्य बहिश्चान्तर्वर्धिते ह्रासिते सति ॥

पाश्चात्ये न तु दोषः स्यादायामोच्छ्रायविस्तरे ।
ब्रह्मरुद्रेन्द्रयक्षाद्यैस्तथा क्लृप्तं पुरातनम् ॥ ५०९ ॥

चिरायुषोऽर्थवृध्यर्थी चालयेन्न तु कुत्रचित् ।
तथा सरोवरं कूपं मृदाद्यैर्न तु पूरयेत् ॥ ५१० ॥

अल्पीयांसि विमानानि विभूत्या श्रद्धयाऽथवा ।
महान्ति कारयेत् पश्चान्न दोष उपजायते ॥ ५११ ॥

सालगोपुरपीठानां मण्टपाद्यङ्गरूपिणाम् ।
प्रथमे कल्पने चैव नष्टोद्धारे विशेषतः ॥ ५१२ ॥

एकस्मिन् प्राक् स्थिते वस्तुन्यशक्तौ स्थानसङ्कटे ।
ग्रहणं न तु दोषः स्यादमुख्यं मुख्यगौरवात् ॥ ५१३ ॥

यद्यत् पादप्रतिष्ठायां प्रासादस्य जगत्पतेः ।
पादाधारशिलाद्यं वै तथा ब्रह्मशिलादिकम् ॥ ५१४ ॥

विना प्रतिष्ठिते बिम्बे कुर्यात् स्नपनमुत्तमम् ।
मधुना पयसा दध्ना घृतेन चरुणा सह ॥ ५१५ ॥

शान्तिहोमं प्रकुर्वीत सहस्रशतसङ्ख्यया ।
प्रासादश्च तथा बिम्बो येन शास्त्रेण निर्मितौ ॥ ५१६ ॥

प्रतिष्ठाप्य च तेनैव नित्यादौ पूजयेद्धरिम् ।
योऽर्चयेदन्यमार्गेण तथा चार्चापयेत्तु यः ॥ ५१७ ॥

तावुभौ कलुषात्मानौ राज्ञो राष्ट्रस्य वै गुरोः ।
कुलं च व्याधितं चैव विप्लवं दुःखमञ्जसा ॥ ५१८ ॥

वित्तहानिं विशेषेण कुर्यातामालयस्य च ।
न कुर्यात् तन्त्रसांकर्यं पञ्चरात्रपरायणः ॥ ५१९ ॥

पुनः प्रतिष्ठा कर्तव्या कृते चेत्तन्त्रसंकरे ।
वैखानसादिभिस्तन्त्रैः प्रासादार्थं पुरैव तु ॥ ५२० ॥

गर्भन्यासे कृतेऽप्यत्र पञ्चरात्राभिलाषया ।
तद्वैवोद्धृत्य तं गर्भं पञ्चरात्रोक्तमाचरेत् ॥ ५२१ ॥

चतुर्धा भेदभिन्नस्तु पञ्चरात्राख्य आगमः ।
तल्लक्षणं च प्रागुक्तं तथाप्यत्राप्युदीर्यते ॥ ५२२ ॥

पूर्वमागमसिद्धान्तं द्वितीयं मन्त्रसंज्ञितम् ।
तृतीयं तन्त्रमित्युक्तमन्यत् तन्त्रान्तरं भवेत् ॥ ५२३ ॥

आद्यं नित्योदितव्यूहस्थापनादिप्रकाशकम् ।
अपौरुषेयं सद्ब्रह्मवासुदेवाख्ययाजिनाम् ॥ ५२४ ॥

लक्ष्यभूतं द्विजेन्द्राणां हृदिस्थमधिकारिणाम् ।
ब्रह्मोपनिषदाख्यं च दिव्यमन्त्रक्रियान्वितम् ॥ ५२५ ॥

विवेकदं परं शास्त्रमनिच्छातोऽपवर्गदम् ।
एवं नित्योदिताख्यस्य नित्याकारस्य च प्रभोः ॥ ५२६ ॥

वासुदेवाभिधानस्य षाड्गुण्यादिमहोदधेः ।
प्रथमं लक्षणं विद्धि हृदयाद्यङ्गशब्दवत् ॥ ५२७ ॥

एतदागमसिद्धान्तं श्रुतिरूपं तु विद्धि तत् ।
एष कार्तयुगो धर्मः सर्वधर्मोत्तमः स्मृतः ॥ ५२८ ॥

ततस्त्रेतायुगस्यादौ भोगमोक्षप्रसिद्धये ।
तस्मादागमसिद्धान्तान्निःसृतं बहुभेदकम् ॥ ५२९ ॥

मन्त्रसिद्धान्तसंज्ञं तज्ज्ञाग्रव्यूहादिमूर्तिना ।
समुत्कीर्णं द्वितीयस्य सात्वतस्य महात्मनः ॥ ५३० ॥

तेन प्रद्युम्नसंज्ञस्य तेन तुर्यात्मनो विभोः।
तेन वागीश्वराख्यस्य तस्माद्धिग्राख्यविग्रहे ॥ ५३१ ॥

संक्रान्तं च ततः पश्चाद्रुद्रादित्येन्द्रवह्निषु।
तथैव नारदाद्येषु देवर्षीणां गणेष्वपि ॥ ५३२ ॥

संक्रान्तं मन्त्रसिद्धान्तं भेदभिन्नमनेकधा।
यत्र शान्ततरं व्यूहं शान्तोदितमनन्तरम् ॥ ५३३ ॥

सुषुप्तिसंज्ञं स्वप्नाख्यं जाग्रद्व्यूहं यथोदितम्।
मूर्त्यन्तरं केशवाद्यं प्रादुर्भावं तथान्तरम् ॥ ५३४ ॥

हृत्पद्मपद्मपीठादौ लक्ष्मीपुष्ट्यादिशक्तिभिः।
लाञ्छनैः शङ्खचक्राद्यैः गरुडप्रमुखैरपि ॥ ५३५ ॥

भूतसिद्धादिभिः सास्त्रपर्यन्तैर्यजनं हितम्।
विश्वत्रातृनृसिंहस्य दीक्षापूर्वं तथा परम् ॥ ५३६ ॥

विहगव्यूहसूक्ष्माख्यमधिकारं यथाक्रमम्।
समयी पुत्रकादीनां चतुर्णामभिषेचनम् ॥ ५३७ ॥

तथैव समयाचारमूर्तीनां स्थापनक्रमम्।
मन्त्रमण्डलमुद्राणां कुण्डादीनां च लक्षणम् ॥ ५३८ ॥

कर्मणामेवमादीनां विधानं यत्र पुष्कलम्।
मन्त्रसिद्धान्तसंज्ञं तद्बहुभेदसमन्वितम् ॥ ५३९ ॥

परव्यूहादिभेदेन विनैकैकेन मूर्तिना।
साङ्गेन केवलेनाथ कान्ताव्यूहेन भूषणैः ॥ ५४० ॥

तथास्त्रैर्विग्रहोपेतैरावृतं तन्त्रसंज्ञितम्।
नृसिंहकपिलक्रोडहंसवागीश्वरादयः ॥ ५४१ ॥

मुख्यादिवृत्तिभेदेन केवला चाङ्गसंयुताः।
चक्राद्यस्त्रवरैश्चाथ भूषणैर्मकुटादिभिः ॥ ५४२ ॥

कान्तागणैश्च लक्ष्म्याद्यैः परिवारैः खगादिकैः।
पूजिता विधिना यत्र तत्तन्त्रान्तरमीरितम् ॥ ५४३ ॥

ये जन्मकोटिभिः सिद्धास्तेषामन्तोऽत्र जन्मनः।
यस्मात्तस्माद्विवेदैष सिद्धान्ताख्यो यथार्थतः ॥

शास्त्रमन्त्रक्रियादीनां मूर्तीनां भवनस्य च।
देशिकस्याभिजातस्य यथापूर्वं परिग्रहः ॥ ५४५ ॥

तथैव यावत्कालं तु नाचर्तव्यं तदन्यथा।
विपरीते कृते चात्र राजराष्ट्राद्यनर्थकृत् ॥ ५४६ ॥

ततः समाचरेद्यत्नात् प्रतिष्ठां प्राक् प्रयत्नतः।
ततः सिद्धान्तसाङ्कर्यं न कर्तव्यं कृतात्मभिः ॥ ५४७ ॥

यद्यदिष्टतमं लोके पूर्वसिद्धाविरोधि तत्।
प्रतिग्राह्यमतोऽन्योन्यविरुद्धं संत्यजेद्बुधः ॥ ५४८ ॥

वैखानसेषु तन्त्रेषु शैवपाशुपतेषु च।
विहितान्यत्रजातानि विरुद्धानीति किं पुनः ॥ ५४९ ॥

पञ्चरात्रविधानेन पूज्यमाने प्रतिष्ठिते।
नान्येन पूजनं कार्यं विदुषाऽपि कदाचन ॥ ५५० ॥

सद्ब्रह्मनिरतैर्मुख्यैः पञ्चरात्रपरायणैः।
पूजनीयं विशेषेण मुख्यकल्पाधिकारिभिः ॥ ५५१ ॥

त्रयीधर्मरतैर्विप्रैः सिद्धान्तेष्वपि दीक्षितैः।
सदाचाररतैर्वाथ तदलाभेऽनुकल्पके ॥ ५५२ ॥

प्रासादे स्थापितो देवो नैकेनार्च्यो विशेषतः।
बलिहोमादिसंयुक्ते वित्ताढ्ये त्वपि किं पुनः ॥ ५५३ ॥

पञ्चकालरतैर्मुख्यैर्मन्त्रसिद्धान्तवेदिभिः।
पदार्थसप्तकप्राप्तैर्द्वादशाध्यात्मकोविदैः ॥ ५५४ ॥

त्रयोदशविधे कर्मण्यभिसन्धिपरैः सदा।
कर्मसन्यासिभिश्चाप्तैः मुख्यकल्पाधिकारिभिः ॥

तथान्यैर्वा त्रयीनिष्ठैः सिद्धान्तार्थविशारदैः।
समर्चनीयमनिशं द्विचतुःषड्भिरष्टभिः ॥ ५५६ ॥

द्विषट्षोडशविंशद्भिश्चतुर्विंशतिभिस्तु वा।
तेष्वेकः पूजयेदन्तः पर्यायेण दिनं प्रति ॥ ५५७ ॥

द्वौ च त्रयो वा चत्वारः कुर्युरेवं पुनः पुनः।
परिवारानर्चयेयुरन्ये देशिकसत्तमाः ॥ ५५८ ॥

अन्योऽग्निकार्यं कुर्वीत कुर्यादन्यो बलिं क्रमात्।
एतेषामुपकुर्वीरन्नन्ये भागवतोत्तमाः ॥ ५५९ ॥

गुर्वादिष्टेन विधिना कुर्युरन्ये च साधकाः।
सर्वमेकेन वा कार्यं बहूनां संयतात्मनाम् ॥ ५६० ॥

प्रवीणानामभिज्ञानां दीक्षितानामसंनिधौ ।
वैदेशिकेषु प्राप्तेषु बहुष्वायतनार्चने ॥ ५६१ ॥

मूलाद्दावाह्य बिम्बेषु कुर्वीरन् प्रतिकर्मणि ।
उत्सवं स्नपनं यात्रां प्रभूतान्ननिवेदनम् ॥ ५६२ ॥

तत्तद्बिम्बेषु कुर्वीरन् मन्त्रिणो बहवो यदि ।
नित्येऽप्येवं हि कुर्वीरन् पूजनं बलितर्पणम् ॥

बलियानादिकं सर्वमेकदैव तु मन्त्रिणः ।
न दोषोऽत्र तु विज्ञेयः कालकर्मनिमित्ततः ॥ ५६४ ॥

न गृहे बहुभिः कार्यं नित्यनैमित्तिकादिकम् ।
एकदैवं तु यजनमन्यथा दोषदं भवेत् ॥ ५६५ ॥

तद्दोषशान्तये कुर्याच्छान्तिहोमसमन्वितम् ।
यथाशक्ति जपेन्मन्त्री मूलमन्त्रस्य सादरम् ॥ ५६६ ॥

भक्तैर्भागवतैरेवं प्रासादे च प्रतिष्ठितः ।
समर्चनीयो नित्यादौ राजराष्ट्रसमृद्धये ॥ ५६४ ॥

अन्यैः संपूजितो देवो न कदाचित् प्रसीदति ।
प्रयच्छत्यशुभं शश्वद्विशेषाद्राजराष्ट्रयोः ॥ ५६८ ॥

तद्दोषशान्तये कार्यं स्नपनं चोत्तमोत्तमम् ।
आवाहिते प्रतिष्ठायामर्चासु जगतः पतौ ॥ ५६९ ॥

नोद्वास्यः सर्वपूजानामावाह्य पुरतोऽर्चनात् ।
त्रिकालमङ्गबिम्बेषु कर्मार्चादिषु सत्स्वपि ॥ ५७० ॥

आवाह्य पूजयेन्मूलाद्विशेषेष्वपि कार्यतः ।
तत्तत्कर्मावसाने तु पुनर्मूले नियोजयेत् ॥ ५७१ ॥

यद्यन्यथा कृतेऽर्चासु मूलमावाहनादिके ।
शान्तये स्नपनं कुर्यात् अधमाधमसंज्ञितम् ॥ ५७२ ॥

प्रायश्चित्तेषु सर्वेषु दोषगौरवलाघवम् ।
समीक्ष्य चाङ्कुरानर्घ्यं पुण्याहोक्तिपुरस्सरम् ॥ ५७३ ॥

चतुःस्थानार्चनं चैव महता हविषार्चनम् ।
स्नपनं जपसंयुक्तमाचार्याणां च दक्षिणाम् ॥ ५७४ ॥

गोभूहेमादिदानं च पञ्चकालज्ञभोजनम् ।
कार्यं च यथाशक्ति मुख्यकल्पे विशेषतः ॥ ५७५ ॥

पूजनं स्नपनं होममनुकल्पे समाचरेत् ।
अतिक्रूरैरवाच्यैस्तु भुवं दोषैश्च दूषिताम् ॥ ५७६ ॥

खननाद्यैश्च संशोध्य दशभिर्विधिचोदितैः ।
यथावत् कर्षयित्वा तु रत्नकाञ्चनजं रजः ॥ ५७७ ॥

विकीर्य सर्वतो दिक्षु जुहुयात्तत्र शान्तये ।
देवालयेषु शून्येषु महास्नानादिकं चरेत् ॥ ५७८ ॥

स्वतन्त्रपरतन्त्रेषु शून्यग्रामादिवास्तुषु ।
मार्जनालेपनाभ्यां च गव्यैरभ्युक्षणेन च ॥ ५७९ ॥

संशोध्य तत्तन्मध्ये तु वापयेद्द्रव्यपञ्चकम् ।
बलिदानं प्रकुर्वीत वास्तुदेवगणस्य च ॥ ५८० ॥

गोभूहेमादिकं दद्याद्गुर्वादीनां यथाबलम् ।
भूपतिः सत्त्वनिष्ठस्तु प्रजापालनतत्परः ॥ ५८१ ॥

द्विजेन्द्रः पञ्चकालज्ञः प्रयत्नाच्छान्तिमाचरेत् ।
अन्यथा यद्युपेक्षेत शान्तिकर्म नराधिपः ॥ ५८२ ॥

स्वमात्मानं स्वराष्ट्रं च स्वकोशं वाहनादिकम् ।
कलत्रपुत्रपौत्रांश्च नाशयत्यविसंशयम् ॥ ५८३ ॥

तस्मादेतानि रक्षेत भूपतिर्भूतितत्परः ।
स्वबुध्या परबुध्या वा कृते वापदि संकटे ॥ ५८४ ॥

तुलापुरुषदानेन सुवर्णेनोपशाम्यति ।
तथा हिरण्यगर्भस्थः कुर्याद्दानमलोलुपः ॥ ५८५ ॥

काले काले विशेषेण ब्राह्मणानामनुज्ञया ।
समठं साग्रहारं च प्रासादं परिकल्प्य च ॥ ५८६ ॥

सर्वदेवमयो देवः सर्ववेदमयो हरिः ।
सर्वयज्ञमयो विष्णुः सर्वलोकमयो विभुः ॥ ५८७ ॥

सर्वधर्ममयोऽनन्तः सर्वभूतमयो ध्रुवः ।
सर्वतीर्थमयो योगी प्रतिष्ठाप्यो विधानतः ॥ ५८८ ॥

अन्यत्र विततं कुण्डे यथाभिमतमेखले ।
पावनैर्वैष्णवैः सर्वदोषघ्नैः श्रुतिचोदितैः ॥ ५८९ ॥

मन्त्रैः प्रयोगकुशलैः जुहुयुर्ब्राह्मणोत्तमाः ।
दिव्यन्तरिक्षभौमेषु महोत्पातेषु सत्स्वपि ॥ ५९० ॥

शान्तिरेवं विधानेन कर्तव्या भूतिमिच्छता ।
बहुनात्र किमुक्तेन मुने ! सर्वाघनाशनम् ॥ ५९१ ॥

सौदर्शनमहायन्त्रस्थापनं विषये स्वके ।
विधानं परमं विद्धि राजराष्ट्राभिवर्धनम् ॥ ५९२ ॥

लोहेन वा सच्छिलया प्रकल्प्य
सुदर्शनं यन्त्रवरस्य मध्ये ।
तस्यापराङ्गे नृहरिं विधाय
कराम्बुजैश्चक्रधरैश्चतुर्भिः ॥ ५९३ ॥

गर्भावृतिद्वारि गवाक्षयुक्त-
प्रासादमध्ये विधिवन्निवेश्य ।
समर्चयेद्यो विजयी स भूत्वा
भुनक्ति भोगानखिलानिहैव ॥ ५९४ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे प्रायश्चित्तविधानं नाम एकोनविंशोऽध्यायः ।

---

श्रीः

# विंशोऽध्यायः ॥

सनकः —

तुलापुरुषदानादि मम संसूचितं पुरा ।
भूभुजां तद्विधानं मे विस्तरेण मुने ! वद ॥ १ ॥

शाण्डिल्यः —

शृणु सम्यक् प्रवक्ष्यामि द्विज ! सर्वाघनाशनम् ।
तुलापुरुषदानाद्यं सर्वकामफलप्रदम् ॥ २ ॥

प्रजापालनशीलस्य सत्यनिष्ठस्य भूभुजः ।
कदाचित् कर्मलोपेन दैवकोपोऽभिजायते ॥ ३ ॥

तथैव राष्ट्रसंक्षोभः प्रजापीडा च वर्धते ।
तथा वर्णाश्रमाचारैर्देशः स्यात् कलुषीकृतः ॥ ४ ॥

वेदवैदिकधर्माश्च च्यवन्ते कालविप्लवैः ।
बाध्यते प्रतिभूपालैरुपर्युपरि भूपतिः ॥ ५ ॥

शून्यो जनपदो भूयात् प्रजा नश्यन्ति तत्क्षणात् ।
स्वदोषजनितं कष्टमिति बुद्ध्या महीपतिः ॥ ६ ॥

सपुरोधाः सहामात्यः सप्रजापदमादरात् ।
पञ्चरात्रविधानज्ञं सर्वभूतहिते रतम् ॥ ७ ॥

अलोलुपं चाप्यक्रोधं ऋजुं भागवतं द्विजम् ।
कर्मद्वयविधानज्ञं देशिकेन्द्रं समाश्रयेत् ॥ ८ ॥

पुरावृत्तं तु सकलं स्वापराधनिमित्तजम् ।
सर्वं निवेद्य गुरवे यथावृत्तं महीपतिः ॥ ९ ॥

रक्ष रक्षेति चरणौ प्रणम्य समुदीरयन् ।
सोऽपि तद्वचनं श्रुत्वा सर्वानुग्रहकारकः ॥ १० ॥

वित्तमाहृत्य नृपतेर्न्यायधर्मसमाहृतम् ।
प्रवर्ततेऽथ तत् कर्म ऋत्विग्भिः पञ्चरात्रिकैः ॥ ११ ॥

त्रैविद्यैरपि तत्कर्मकुशलैर्भगवत्परैः ।
चैत्रादिषु च मासेषु विषुवे चायनद्वये ॥ १२ ॥

व्यतीपाते च जन्मर्क्षे चन्द्रसूर्योपरागयोः ।
श्रवणे वासवेऽश्विन्यां कृत्तिकास्वथवा मुने ! ॥ १३ ॥

रोहिण्यां सौम्यनक्षत्रे पुनर्वस्वोर्विशेषतः ।
पुष्ये वा हस्तनक्षत्रे उत्तरासु तथैव च ॥ १४ ॥

चित्रायां च तथा स्वातौ मैत्रे मूले तथैव च ।
दुःस्वप्ने ग्रहपीडायां महोत्पातेषु सत्स्वपि ॥ १५ ॥

व्याधिते च तथा राष्ट्रे कुर्यात् कर्तुश्च सम्मते ।
एतन्निमित्तमुद्दिश्य कर्तव्यं चेत्तदैव तु ॥ १६ ॥

प्रारभेत्तद्यथा दोषविप्लवो नाभिजायते ।
स्वयंव्यक्तादिके स्थाने विष्णोः सर्वगुणान्विते ॥ १७ ॥

यथाभिमतदिक्पक्षे पुरस्ताद्गयदूगृहे ।
त्रिवर्गं मण्टपं कुर्याच्चतुरश्रं समन्ततः ॥ १८ ॥

सप्तविंशत्करं क्षेत्रं सप्तधा संविभज्य च ।
हस्तोच्छ्रायां महावेदिं सर्वालङ्कारमण्डिताम् ॥ १९ ॥

दिक्षु चारोहणैर्युक्तां त्रिभिर्मध्ये प्रकल्पयेत् ।
तदूर्ध्वं मध्यतो दिक्षु पार्थिवं पीठपञ्चकम् ॥ २० ॥

तालोन्नतं वितस्तं च त्रिस्थानयजनाय च ।
भूपतेरधिवासार्थं स्वर्णादेरपि वस्तुनः ॥ २१ ॥

तुलायाः खड्गमुख्यस्य भूषणानां च वाससाम् ।
मण्डलं मध्यमे पीठे, प्राक्स्थं चक्राब्जसन्निभम् ॥२२॥

कुण्डं दक्षिणदिक्पीठं नृपजागरणास्पदम् ।
प्रत्यक्स्थे कुंभयागं तु, सौम्यस्थे स्वर्णसञ्चयः ॥ २३ ॥

तुलादीनां च संस्कारः कार्यस्तेषां च वाग्यतः ।
हस्तमात्रं परित्यज्य दिक्कुण्डानि प्रकल्पयेत् ॥ २४ ॥

चतुरश्रं च चक्राभं शङ्खाभं चाम्बुजाकृति ।
विदिक्षु वह्न्यादीशान्तं शृणु कुण्डगणं क्रमात् ॥ २५ ॥

योन्याकारं त्रिकोणं च वस्वश्राद्धेन्दुलक्षणे ।
पीठोर्ध्वे कल्पनीयानि चक्राद्यैरङ्कितानि च ॥ २६ ॥

परितोऽपि त्रिवंशेन चतुर्द्वारसमन्वितम् ।
कोणेषु च सुभित्याढ्यं सुभद्रविराजितम् ॥ २७ ॥

विविधारोहणैर्युक्तं सर्वालङ्कारमण्डितम् ।
पुरोभागे प्रपा कार्या भानाधामाल्योपमा ॥ २८ ॥

मध्यतो रङ्गसंयुक्ता पश्चिमाशां विसृज्य च ।
प्राक् दक्षिणोत्तराशासु द्विभक्त्या प्रावृता दृढा ॥

महोत्सवे प्रतिष्ठायां पवित्रारोहणादिषु ।
पुरा यथोक्तं बहुधा तेष्वेकस्मिन् प्रकल्पिते ॥ ३० ॥

मण्टपे वा प्रकुर्वीत तुलारोहादिकं द्वयम् ।
पुरस्ताद्देवमापाद्य मण्टपं पूर्वतोमुखम् ॥ ३१ ॥

पश्चादारोहणतुला विधेया विधिचोदिता ।
पकाङ्गुलघने तुल्ये सुवृत्ते हस्तनिर्मिते ॥ ३२ ॥

घटे हेमादिना कार्ये प्रोद्यदर्कसमप्रभे ।
परिधावङ्गुलं त्यक्त्वा वलयैर्दिक्षु कीलिते ॥ ३३ ॥

तुलादण्डसमायामे श्रृङ्खलापादयोजिते ।
कालायसमयं दण्डं कार्यं हस्तत्रयायतम् ॥ ३४ ॥

त्रितालनाहं मध्ये तु द्वितालं पार्श्वयोर्द्वयोः ।
तालमात्रं परित्यज्य कालायसमयं चलम् ॥ ३५ ॥

बालचन्द्रसमाकारवक्त्रादंष्ट्राद्वयं द्वयोः ।
श्रृङ्खलापाशयोगार्थं कृत्वा, मध्ये तदूर्ध्वतः ॥ ३६ ॥

तीक्ष्णाग्रां स्थापयेत्त्रितामचलां षोडशाङ्गुलाम् ।
शंसन्तीं साम्यवैषम्ये, तदूर्ध्वे तोरणं चलम् ॥ ३७ ॥

अष्टादशाङ्गुलायामं विश्रान्तं पार्श्वयोर्द्वयोः ।
बलाकावदनं, वक्रं योजयेत्तोरणोपरि ॥ ३८ ॥

तुलामेवं समापाद्य लक्षणेनोपलक्षिताम् ।
प्रसिद्धयज्ञदारूत्थौ सारवन्तौ ऋजू दृढौ ॥ ३९ ॥

द्विहस्तपरिणाहौ च हस्तैः षड्भिः समुच्छ्रितौ ।
मूलतश्चतुरश्राभौ मध्यतोऽष्टाश्र लक्षितौ ॥ ४० ॥

ऊर्ध्वतो वर्तुलाकारौ शिल्पिश्रेष्ठेन निर्मितौ ।
चतुरश्रस्य कुण्डस्य प्राच्यां द्वारस्य चान्तरे ॥ ४१ ॥

दक्षिणोत्तरयोः स्तम्भौ द्विहस्तेनान्तरीकृतौ ।
हस्तैः पञ्चभिरुच्छ्राये निखातौ हस्तमानतः ॥ ४२ ॥

समानजातिवृक्षोत्थं योजयेदुत्तरं तयोः ।
स्तंभाग्रतुल्यविस्तारं तावन्मानोन्नतं दृढम् ॥ ४३ ॥

मङ्गलैरप्यभिजुष्टं पार्श्वयोश्च श्रियान्वितम् ।
मध्यतस्तदधस्ताच्च कीलयेद्वलयं दृढम् ॥ ४४ ॥

तुलावलम्बनार्थं च ताम्रजं वाऽयसं तु वा ।
कार्याथ तादनीयष्टिरायामात् षोडशाङ्गुला ॥ ४५ ॥

प्रकोष्ठपरिणाहा च लौही वा सारदारुजा ।
यागोपकरणान्यत्र होमोपकरणान्यपि ॥ ४६ ॥

स्रुक्स्रुवादीनि सर्वाणि कुंभाश्च करकादयः ।
तथाष्टमङ्गलादीनि शक्त्या हेमादिजानि वा ॥ ४७ ॥

अङ्कुरानर्पयित्वाऽथ प्रागुक्तेऽन्यतमे दिने ।
पालिकादिषु पात्रेषु मङ्गलार्थं प्रयोगवित् ॥ ४८ ॥
संभाराणि च सर्वाणि सम्भर्तव्यानि सादरम् ।
मण्टपालंक्रियार्थं च त्रिस्थानयजनाय च ॥ ४९ ॥
चन्दनादीनि गन्धानि पत्रपुष्पफलानि च ।
सितादिवर्णयुक्तानि वासांसि विविधानि च ॥ ५० ॥
सर्वकुण्डेषु होमार्थं समिधां सतकं वसु ।
दिक्कुण्डेषु च होतव्याः सिद्धार्थाः काम्यकर्मणाम् ॥
पलाशखदिराश्वत्थोदुम्बरप्रभवा अपि ।
विदिक्षु पिप्पलप्लक्षवटकाश्मर्यजातयः ॥ ५२ ॥
समिधः सर्वकुण्डेषु पालाश्यस्तदलाभतः ।
हैमराजतताम्रोत्थाः कलशा मृण्मयास्तु वा ॥ ५३ ॥
शालिपूर्वाणि धान्यानि बीजानि च विशेषतः ।
दधिक्षीराज्यकुंभानि षड्विधानि रसान्यपि ॥ ५४ ॥
तण्डुलानि विशुद्धानि पाकयोरर्थान्यनुक्षणम् ।
कर्मण्यान्युपदंशानि पाकपात्राण्यनेकशः ॥ ५५ ॥
निवेशनार्थस्थालीकाः पात्राण्यर्घ्यादिकस्य च ।
प्रदीपधूपपात्राणि सुगुणान्यद्भुतानि च ॥ ५६ ॥
पाद्यपतिग्रहादीनि यागोपकरणानि च ।
गुग्गुल्वगरुपूर्वाणि धूपद्रव्याणि यान्यपि ॥ ५७ ॥
स्नानकुंभोपयोग्यानि यानि सर्वौषधानि च ।
दानार्थं ब्राह्मणादीनां धनधान्याम्बराणि च ॥ ५८ ॥
भूषणानि महार्हाणि देशिकेन्द्रस्य ऋत्विजाम् ।
हेमादि दक्षिणार्थं च संभर्तव्या यथाबलम् ॥ ५९ ॥
यागालयमलंकुर्यात् पवित्रारोहणे यथा ।
वितानैर्ध्वजिकाभिश्च तुङ्गैर्यवनिकापटैः ॥ ६० ॥
क्षौमैर्नानाविधैर्वस्त्रैर्घण्टाचामरदर्पणैः ।
व्यालम्बिदर्भमालाभिः कदलीपनसादिभिः ॥ ६१ ॥
सुगन्धपुष्पमालाभिः सौवर्णैर्मञ्जरीगणैः ।
सफलैः कदलीपूगनालिकेरादिभूरुहैः ॥ ६२ ॥
प्रदीपैः प्रकरैः पुष्पैः सिताद्यैर्वर्णकैरपि ।
तोरणैर्द्वारकुंभैश्च सवस्त्रैः सुरभीगणैः ॥ ६३ ॥
मण्डितैः खलु शृङ्गाद्यैः क्षौमाम्बरभूषणादिभिः ।
एवमाद्यैरलंकृत्य यथाशोभं तु मण्टपम् ॥ ६४ ॥
तृतीये वासरे पूर्वं कर्मादाद्दिवलक्षये ।
ऋत्विग्भिर्देशिकेन्द्रस्तु कृतसन्ध्याविधिक्रमः ॥ ६५ ॥
प्रविश्य मण्टपं प्राग्वत् पुण्याहोक्तिपुरस्सरम् ।
अर्चनं वासुदेवस्य सहोमं प्राक् समाप्य च ॥ ६६ ॥
यागालयं तु सर्वत्र गव्यैरभ्युक्ष्य पञ्चभिः ।
द्रव्याणि यागयोग्यानि तत्तत्स्थाने नियोजयेत् ॥
प्रभातायां तु शर्वर्यां पूर्वाह्ने देहशुद्धये ।
उत्तरोमनखश्मश्रुर्भूत्वा नियतः शुचिः ॥ ६८ ॥
धौतदन्तश्च सुस्नातः परिशुद्धाम्बरावृतः ।
सितालेपनपुष्पाद्यैरञ्चितः संस्मरन् हरिम् ॥ ६९ ॥
उपोषितो घृतं प्राश्य ब्राह्मणैर्वेदपारगैः ।
पारायणमृचां शृण्वन्नासीत सपुरोहितः ॥ ७० ॥
निशामुखे प्रवृत्ते तु ऋत्विग्भिर्देशिकोत्तमः ।
प्रविशेद्यागसदनं कृत्वा द्वारार्चनं सुधीः ॥ ७१ ॥
त्रिस्थानस्थं जगन्नाथं यजेद्दीक्षाविधेः समम् ।
पुण्याहं पूर्वमुच्चार्य ऋत्विग्भिः कुंभमुद्धरन् ॥ ७२ ॥
कुंभमण्डलयोः पूजां विस्तरेण समाप्य च ।
स्वकुण्डे हवनं कुर्यात् समिद्भिः सप्तभिः पुरा ॥ ७३ ॥
शान्तिहोमं ततः पश्चान्मधुक्षीरादिभिः क्रमात् ।
प्रत्येकं शतसङ्ख्यं च पूर्णान्तं मूलमुच्चरन् ॥ ७४ ॥
स्वमार्गेण तु संस्कृत्य गुरुः कुण्डगणं ततः ।
तेषु प्रश्रययोगेन होमार्थं दिक्षु योजयेत् ॥ ७५ ॥
चतुरो वासुदेवादिनाम्ना एकायनान् द्विजान् ।
तैः स्वशाखोदितैर्मन्त्रैः होतव्यं तु क्रमेण तु ॥ ७६ ॥
ऋगाद्यांश्चतुरो वेदान् विदिक्कुण्डेषु विन्यसेत् ।
मन्त्रैरर्चितलिङ्गैस्तु स्वशाखोक्तैश्च पावनैः ॥ ७७ ॥

तत्रापि देशिकादिभ्यो दद्याद्वै दक्षिणां क्रमात् ।
दीनान्धकृपणानाथान् बालवृद्धकृशातुरान् ॥ १३८ ॥

भोजयेच्च विधानेन द्रव्यादीन्यपि दापयेत् ।
विविधानि च बीजानि शाल्यादीन्यपि दापयेत् ॥

बन्दीकृतांश्च विसृजेत् कारागृहनिवेशितान् ।
एष ते कथितो विप्र ! तुलाभारविधिः क्रमात् ॥

हिरण्यगर्भाद्यन्येष्वप्येवमेव समाचरेत् ।
एवं कुर्यात्तुलाभारं यः सकृद्बहुशोऽपि वा ॥ १४१ ॥

सर्वपापविमोक्षस्तु तस्य स्यान्नात्र संशयः ।
यो वा भगवतोऽर्थे तु मातापित्रोर्गुरोस्तु वा ॥

स्वप्राणांस्त्यजतां भक्त्या विप्रादीनां महामते ।
निमित्ती तु भवेत्तस्य तुलाभारादिकेन च ॥ १४३ ॥

बहुशोऽनुष्ठितेनैव सम्यगेव तु कर्मणा ।
अन्यैर्वा विहितैर्विप्र ! प्रायश्चित्तैः सुदुष्करैः ॥ १४४ ॥

ब्रह्महत्योऽत्थदोषस्य शुद्धिर्भवति वा न वा ।
प्राणत्यागः कृतस्तेन विष्ण्वर्थं यन्महात्मना ॥ १४५ ॥

तस्मान्न निष्कृतिर्विप्र ! भवेत्तस्य निमित्तिनः ।
ब्राह्मणाः क्षत्रिया वैश्या विष्ण्वर्थं मौढ्यात्तु वा ॥

परित्यजेयुः स्वप्राणान् भगवद्भक्तिसंयुताः ।
भृग्वादिभिरुपायैस्तु पञ्चभिर्वा विषादिकैः ॥ १४७ ॥

अन्यैस्तेषां भवेत् सद्यो वाजपेयादिजं फलम् ।
सकामस्य तु निष्कामः प्राप्नुयात् परमां गतिम् ॥

महात्मनस्तु तान् विद्धि विष्ण्वर्थं त्यक्तजीवितान् ।
आत्महत्योत्थदोषैस्ते न लिप्यन्ते कदाचन ॥ १४९ ॥

आत्महत्योत्थदोषाः स्युरन्येषां सर्वदा द्विज ! ।
एवं भगवदर्थं तु प्राणत्यागे कृतादरः ॥ १५० ॥

यमुद्दिश्य त्यजेत् प्राणान् तं विद्याद्ब्रह्मघातकम् ।
मुख्यविप्रे मृते तस्य तद्दोषः स्याच्चतुर्गुणः ॥ १५१ ॥

क्षत्रिये ब्रह्महत्योत्थदोषस्तु त्रिगुणो भवेत् ।
निमित्तिनः स दोषः स्याद्द्विगुणः संस्थिते विशि ॥

निमित्तिने मृते शूद्रे दोष एकगुणो भवेत् ।
एवं दोषविवृद्धिस्तु भवेद्विप्रे निमित्तिनि ॥ १५३ ॥

निमित्तिनि क्षत्रियादावेकैकगुणवर्धनात् ।
भवेत् पूर्वोक्तदोषस्तु भवार्थं नास्ति संशयः ॥ १५४ ॥

एवं मृते विप्रमात्रे दोष उक्तो निमित्तिनः ।
मुख्यदोषः पञ्चगुणो ब्रह्मचारिणि संस्थिते ॥ १५५ ॥

गृहस्थे यजनि मृते स दोषः षड्गुणो भवेत् ।
वानप्रस्थे मृते मुख्यदोषः सप्तगुणो भवेत् ॥ १५६ ॥

सन्न्यासाश्रमनिष्ठे तु संस्थिते तु निमित्तिनः ।
स्यान्मुख्यदोषोऽष्टगुण एवं तु कथितो मुने ! ॥ १५७ ॥

निमित्तिनो दोषशुद्धिः विष्ण्वर्थं मरणे सति ।
एवं निमित्तभूतानां द्विजादीनां न निष्कृतिः ॥ १५८ ॥

तत्र यत् ब्राह्मणैरुक्तं विवेकनिरतैस्सदा ।
सर्वशास्त्रार्थतत्त्वज्ञैः तत् कुर्यादविचारतः ॥ १५९ ॥

अन्यथा तु महान् दोषो भवेद्देशाधिपस्य तु ।

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे प्रायश्चित्ततुलाभारविधिर्नाम त्रिंशोऽध्यायः ।

---

॥ श्रीः ॥

# ॥ एकोविंशाऽध्यायः ॥

शाण्डिल्यः —

मुने! हिरण्यगर्भादौ विशेषो वक्ष्यतेऽधुना।
हेमगर्भविधानं तु प्रथमं कथ्यते मया ॥ १ ॥

सनकः —

यद्यदत्रोच्यते कर्म तुलाभारेऽपि नोदितम्।
साधारणं भवेत्तत्तु सर्वेषामपि कर्मणाम् ॥ २ ॥

तुलाभारादिकानां तु विशेषाधानुगुण्यतः।
प्राग्वन्मण्टपनिर्माणं पीठादिपरिकल्पनम् ॥ ३ ॥

प्रतिष्ठोदितमार्गेण कुर्याद्वा मण्टपादिकम्।
यद्वाष्टसप्तषट्पञ्चचतुस्त्रिकरविस्तृतम् ॥ ४ ॥

त्रिंशदङ्गुलमानं तु गोलकैकैकहानितः।
उन्नतं मध्यपीठं स्यात् तत्तत्क्षेत्रानुसारतः ॥ ५ ॥

चतुर्हस्तं समारभ्य षट्षड्गोलकहानितः।
विस्तृतं पार्श्वयोः पीठद्वितयं परिकल्पयेत् ॥ ६ ॥

विंशत्यंगुलमानाच्च द्विद्विकांगुलहानितः।
तदुन्नतिर्यथा साऽन्त्ये सार्धहस्ते दशांगुला ॥ ७ ॥

द्वयोरुन्नानादर्धं वा भवेत् सर्वत्र चोन्नतिः।
पीठानामन्तरालं तु कल्पयेत् करसंमितम् ॥ ८ ॥

करार्धं वर्धयेद्वापि भवेद्यावच्चतुष्करम्।
अन्तरालं भवेत्तावद्यथा वा नातिसङ्कटम् ॥ ९ ॥

यथोदितेषु मानेषु यथाभिमतमानतः।
कुर्यात् कुण्डगणं चापि लक्षणेनोपलक्षितम् ॥ १० ॥

आस्थानमण्टपाद्ये तु यद्येतत् कल्पयेत्तदा।
मध्यपीठोदितं कर्म तत्तद्वे(वे)दासने भवेत् ॥ ११ ॥

तदुदक् दक्षयोः पीठद्वयमुक्तप्रमाणतः।
प्राक्दिक्कुण्डस्य वै प्राच्यां पीठं कुर्यात् स्तंभं शुभम् ॥

सप्तषट्पञ्चहस्तं वा चतुस्त्रिद्विकरं तु वा।
एकहस्तोच्छ्रितं वाऽपि तदर्धोच्छ्रितमेव वा ॥ १३ ॥

तस्योपरिष्टात् कर्तव्यं हेमगर्भनिवेशनम्।
तुलाभारोदितं कर्म पीठोपर्यथवा चरेत् ॥ १४ ॥

यद्वा कुंभादियजनं अधिवासनकर्म च।
मण्टपे कल्पयित्वा, तत्प्रपायां वा समाचरेत् ॥ १५ ॥

हेमगर्भनिवेशं तु प्रपायां वा समाचरेत्।
कुंभयागादिकं रूपं कर्तुरिच्छानुरूपतः ॥ १६ ॥

तुलाभारादिकेऽन्यस्मिन् दिनेऽप्येवं समाचरेत्।
ततः कुर्याच्च सौवर्णमेकांगुलघनं दृढम् ॥ १७ ॥

अधः पात्रं चोर्ध्वपात्रं यथासङ्गतयोस्तयोः।
सुखासनं स्यान्नृपतेर्विस्तृतं कल्पयेत्तथा ॥ १८ ॥

अधः पात्रं सुवर्णानां सहस्रेण पलेन वा।
यद्वा निष्कसहस्रेण, तदर्धेनोर्ध्वपात्रकम् ॥ १९ ॥

एवं पात्रद्वयं कुर्यात् सर्वालङ्कारसंयुतम्।
विभवे सर्वपात्राणि कुर्याद्धेममयानि च ॥ २० ॥

अधिवासदिनोक्तं तु तुलाभारवदाचरेत्।
पात्रद्वयस्योदक् पीठे ह्यधिवासं समाचरेत् ॥ २१ ॥

ततः कर्मदिनोक्तं तु प्राग्वत् कृत्वा क्रमेण तु।
इन्द्रदिक्कल्पिते पीठे भारद्वादशभिर्मुने! ॥ २२ ॥

शालीनां विष्टरं कृत्वा तदूर्ध्वं तण्डुलान् न्यसेत्।
तदर्धमानांस्तस्योर्ध्वं तदर्धांस्तु तिलान् न्यसेत् ॥२३॥

होमं कुर्याद्यथायोगं पुंसूक्तेनैव वा द्विज ! ।
भूः स्वाहेति भुवः स्वाहा, स्वः स्वाहेति तथैव च ॥
भूर्भुवस्सुवःस्वाहेति मन्त्रैर्वा वह्निदिक्क्रमात् ।
भूः पुरुपाय स्वाहा, भुवः पुरुपाय स्वाहा ॥ ७९ ॥
स्वः पुरुपाय स्वाहा, भूर्भुवस्स्वः पुरुपाय स्वाहा ।
एतैश्चतुर्भिर्मन्त्रैर्वा जुहुयाद्दिक्क्रमेण तु ॥ ८० ॥
सात्त्वांणां लोकपालानां कुमुदादिगणस्य च ।
अष्टानां मङ्गलानां च प्राग्वत् स्यात् स्थापनादिकम् ॥
पालाशादिसमिद्भेदाश्चरुभेदाश्च पूर्ववत् ।
प्रतिकुण्डं च कुंभानां स्थापनाद्यं तु पूर्ववत् ॥ ८२ ॥
चतुर्णां ऋङ्मयादीनां तथा चैकान्तिनामपि ।
निवेशनादिकं कार्यं पुरोदितविधानतः ॥ ८३ ॥
एवं क्रमेण संपाद्य तदन्ते भूपतिं गुरुः ।
प्राशयेत् पञ्चगव्यं तु कुशोदकसमन्वितम् ॥ ८४ ॥
भगवत्पादतोयं च सर्वपापहरं शुभम् ।
भक्षयेच्चरुशेषं तु कोष्ठसंशोधनाय च ॥ ८५ ॥
कृत्वा दक्षिणपीठे तु शालिभारैस्तु विष्टरम् ।
नवसङ्ख्यैस्तदूर्ध्वं तु मार्गं चर्म तु विन्यसेत् ॥ ८६ ॥
व्याघ्रजं वा तदूर्ध्वं तु दर्भानास्तीर्य साक्षतान् ।
प्रागग्रानुदगग्रान् वा तस्मिन्नारोप्य भूपतिम् ॥ ८७ ॥
पूर्णोदकुंभांश्चतुरः प्राग्वद्वस्त्रादिभूषितान् ।
चतुर्दिक्ष्वपि संस्थाप्य तेष्वर्च्या मूर्तयः क्रमात् ॥
चतुर्विधानि चान्नानि तासां दद्यात् क्रमेण तु ।
ततो होमश्च कर्तव्यः कुण्डेषु प्राक्क्रमेण तु ॥ ८९ ॥
ततो भूपस्य पुरतः उपविश्यासने गुरुः ।
तद्देहस्थिततत्त्वानां शुद्धिं कुर्याद्विधानतः ॥ ९० ॥
प्राक् तेषां विलयं कृत्वा ततः सृष्टिं समाचरेत् ।
कुर्यात् कौतुकबन्धं च प्राग्वत्तस्यापि चात्मनः ॥
स्वर्णसञ्चयमाहृत्य तिन्त्रिणीमिश्रवारिणा ।
निर्मलीकृत्य संप्रोक्ष्य वीर्यमन्त्रेण तत्पुनः ॥ ९२ ॥

उदक् दिक् संस्थिते पीठे शालिभारैस्त्रिभिः कृते ।
पीठे निवेश्याधिवास्य वासोलङ्कारपूर्वकम् ॥ ९३ ॥
अन्यच्च सर्वं संस्थाप्य वर्मणा चावकुण्ठयेत् ।
ततश्चक्राब्जमालिख्य त्वन्यद्वा मण्डलं शुभम् ॥ ९४ ॥
रत्नजैर्धातुजैर्वापि वर्णकैः परिपूरयेत् ।
गीतनृत्तादिकैः स्तोत्रैः शङ्खवाद्यादिनिस्वनैः ॥ ९५ ॥
मङ्गलैर्विविधैश्चान्यैर्जागरेण नयेन्निशाम् ।
द्वितीयाद्यायतने कार्यं विशेषयजनं विभोः ॥ ९६ ॥
ततः कर्मदिने ब्राह्मे मुहूर्ते देशिकः स्वयम् ।
कृत्वा स्नानादिकं सर्वं नित्यकर्मविधानतः ॥ ९७ ॥
ततो यजेद्विशेषेण कुंभस्थं जगतीपतिम् ।
मण्डलस्थं क्रमेणैव विविधैर्भोगसञ्चयैः ॥ ९८ ॥
औपचारिकसांस्पर्शहृदयङ्गमसंज्ञितैः ।
परमान्नादिकैस्तत्र प्रभूतैरन्नसञ्चयैः ॥ ९९ ॥
एवमिष्ट्वा ततोऽग्निस्थं विभुं सन्तर्पयेत् क्रमात् ।
समित्सतरुपूर्वैस्तु मूलेन सघृतैस्तिलैः ॥ १०० ॥
सहस्रमाहुतीनां तु शतं वाऽपि समाचरेत् ।
सर्वविघ्नविनाशार्थमस्त्रेणापि तथाचरेत् ॥ १०१ ॥
ऋत्विजश्च स्वकुण्डेषु जुहुयुः पूर्ववत् क्रमात् ।
पतितासु च पूर्णासु सर्वकुण्डेषु वै क्रमात् ॥ १०२ ॥
संस्नाप्य मूलमन्त्रेण, पुंसूक्तेन तथैव च ।
सुप्रक्षालितपाण्यंघ्रिं स्वाचान्तं परिभूषितम् ॥०
निशाधिवासितैः सर्वैर्वस्त्रमाल्यानुलेपनैः ।
सर्वैराभरणैश्चैव महार्घैर्विविधैरपि ॥ १०४ ॥
खड्गखेटकहस्तं च समादाय गुरुः स्वयम् ।
मुहूर्ते शोभने प्राप्ते पाणिना पृथिवीपतिम् ॥ १०५ ॥
पुण्याहं वाचयित्वा तु सर्वमङ्गलसंयुतम् ।
कलशस्थलदिक्कुंभसर्वकुण्डेषु संस्थितम् ॥ १०६ ॥
विभुं प्रदक्षिणीकृत्य कारयित्वा नमस्क्रियाम् ।
ब्राह्मणाग्रधानुज्ञाप्य तुलां नीत्वा प्रदक्षिणम् ॥

तस्याः पश्चिमदिक्संस्थे भूयः प्रागाननं घटे ।
आरोपयेन्मूलमन्त्रं साङ्गमावर्तयन् गुरुः ॥ १०८ ॥

दिव्यान् बलादिकान् मन्त्रान् तथा सूक्तं तु पौरुषम् ।
प्राक्पात्रे भूपतिसमं निक्षिपेत् स्वर्णसञ्चयम् ॥ १०९ ॥

निशाधिवासितं त्वेष तुलाभारः समो भवेत् ।
एवं वाऽपि तुलाभारे प्राक् घटे विन्यसेन्नृपम् ॥

प्रत्यङ्मुखं पश्चिमे तु निक्षिपेत् स्वर्णसञ्चयम् ।
शतनिष्काधिकः श्रेष्ठो, मध्यमोऽर्धाधिको भवेत् ॥

शतपादाधिकः स स्यात्तुलाभारः कनिष्ठकः ।
तत्काले ऋग्मयाद्याश्च चत्वारो दिक्षु संस्थिताः ॥

स्वशाखाः समधीयीरन्, विदिशासु च संस्थिताः ।
सद्ब्रह्मज्ञा अधीरयन् शाखाः परमपावनाः ॥ ११३ ॥

शङ्खकाहळभेर्यादिवाद्यानि विविधानि च ।
वादयेयुः समन्ताच्च तत्तद्वाद्यविशारदाः ॥ ११४ ॥

गीतं तु विविधं कुर्युः गीतशास्त्रविशारदाः ।
विविधानि च नृत्तानि कुर्युश्च परितो दिशः ॥ ११५ ॥

अन्यच्च मङ्गळं यद्यत् तत्तत् सर्वं तु कारयेत् ।
ततस्तु सर्वकुण्डेषु शान्तिहोमं च कारयेत् ॥ ११६ ॥

तिलैराज्यैश्च बहुभिः शतमष्टोत्तरं क्रमात् ।
भूपतिर्मनसा ध्यायेत् भगवन्तं जनार्दनम् ॥ ११७ ॥

एकनाडीं तदर्धं वा आसीत नृपतिर्घटे ।
ततोऽवरुह्य वै तस्मात् प्रणमेद्दण्डवद्धरिम् ॥ ११८ ॥

ततस्तु भूषणैर्वस्त्रैर्भूषयेद्भूपतिर्गुरुम् ।
सुवर्णदक्षिणां दद्याच्छतनिष्कां तु तत्समाम् ॥ ११९ ॥

ऋत्विग्भ्यस्तु तदर्धं वा ये चान्ये तत्र कर्मणि ।
नियोजितास्तु साहाय्ये तेभ्यः कर्मानुरूपतः ॥ १२० ॥

द्रव्याणि दद्यान्नृपतिर्वस्त्राणि विविधानि च ।
सुवर्णसञ्चयांस्तांश्च भूषणानि च भूपतिः ॥ १२१ ॥

स्वयं व्यक्तादिके स्थाने दद्याद्भगवतो विभोः ।
दानार्थं फलविशेषं तु समाकर्णय सांप्रतम् ॥ १२२ ॥

स्वयं व्यक्ते विभोः स्थाने यो दद्याद्भूपतिर्हरेः ।
सर्वपापविनिर्मुक्तः सर्वामयवियोजितः ॥ १२३ ॥

सर्वसंपत्समृद्धश्च सर्वदेशाधिपो भवेत् ।
भुङ्क्ते च विविधान् भोगानिह लोके परत्र च ॥

कोटिकोटिगुणं दानं तथैव च फलं भवेत् ।
दानं यद्दिव्यायतने तदनन्तगुणं भवेत् ॥ १२५ ॥

आर्षे च सैद्धायतने दानं लक्षगुणं भवेत् ।
सद्भिप्रकल्पिते दानं सहस्रगुणितं भवेत् ॥ १२६ ॥

सत्क्षत्रकल्पिते स्थाने दानं शतगुणं भवेत् ।
सद्वैश्यकल्पिते स्थाने तदर्धगुणितं भवेत् ॥ १२७ ॥

सच्छूद्रकल्पिते दत्तं द्विषट्कगुणितं भवेत् ।
अनन्यशरणैर्वर्णैः स्थाने तु परिकल्पिते ॥ १२८ ॥

दानं दशगुणं प्रोक्तं वर्णैर्व्यामिश्रयाजिभिः ।
निर्मितायतने दत्तं तत् पञ्चगुणितं भवेत् ॥ १२९ ॥

दाने मुख्यविधिः प्रोक्तस्त्वनुकल्पमतः शृणु ।
तत्र ये श्रोत्रियाः प्राप्ता वैष्णवा ब्राह्मणोत्तमाः ॥

सुवर्णसञ्चयार्धं च तेभ्यो दद्याद्यथाक्रमम् ।
यागोपकरणं सर्वमाचार्याय प्रदापयेत् ॥ १३१ ॥

यः कुर्याद्भूपतिः कश्चित् अन्यो वा धनवान् सकृत् ।
तुलाभाराह्वयं कर्म सर्वपापैः प्रमुच्यते ॥ १३२ ॥

रोगैरनभिभूतश्च भविष्यति न संशयः ।
यः कुर्यान्नियमेनैव कर्मैतत् प्रतिवत्सरम् ॥

तस्य पुण्यफलावाप्तिं कः शक्तोत्यभिवर्णितुम् ।
तत्काले भगवद्यागं चतुःस्थानार्चनान्वितम् ॥

दिव्याद्यायतने सम्यक् कारयेत् पृथिवीपतिः ।
तदन्यस्मिन् दिने विप्र! स्नापयेत् पुरुषोत्तमम् ॥

सहस्रकलशैः सम्यक् पुरोदितविधानतः ।
यद्वान्यस्नपनेनैव तत्तत्कालोचितेन वै ॥ १३६ ॥

चतुःस्थानार्चनं तत्र विशेषात् कारयेन्नृपः ।
महाहविर्निवेद्यं च विशेषेणैव कारयेत् ॥ १३७ ॥

तत्रापि देशिकादिभ्यो दद्याद्वै दक्षिणां क्रमात् ।
दीनान्धकृपणानाथान् बालवृद्धकृशातुरान् ॥ १३८ ॥
भोजयेच्च विधानेन द्रव्यादीन्यपि दापयेत् ।
विविधानि च बीजानि शाल्यादीन्यपि दापयेत् ॥
बन्दीकृतांश्च विसृजेत् कारागृहनिवेशितान् ।
एष ते कथितो विप्र ! तुलाभारविधिः क्रमात् ॥
हिरण्यगर्भाद्यन्येष्वप्येवमेव समाचरेत् ।
एवं कुर्यात्तुलाभारं यः सकृद्बहुशोऽपि वा ॥ १४१ ॥
सर्वपापविमोक्षस्तु तस्य स्यान्नात्र संशयः ।
यो वा भगवतोऽर्थं तु मातापित्रोर्गुरोस्तु वा ॥
स्वप्राणांस्त्यजतां भक्त्या विप्रादीनां महामते ।
निमित्ती तु भवेत्तस्य तुलाभारादिकेन च ॥ १४३ ॥
बहुशोऽनुष्ठितेनैव सम्यगेव तु कर्मणा ।
अन्यैर्वा विहितैर्विप्र ! प्रायश्चित्तैः सुदुष्करैः ॥ १४४ ॥
ब्रह्महत्योऽत्थदोषस्य शुद्धिर्भवति वा न वा ।
प्राणत्यागः कृतस्तेन विष्वगर्थे यन्महात्मना ॥ १४५ ॥
तस्मान्न निष्कृतिर्विप्र ! भवेत्तस्य निमित्तिनः ।
ब्राह्मणाः क्षत्रिया वैश्या विष्वगर्थे मौद्गलास्तु वा ॥
परित्यजेयुः स्वप्राणान् भगवद्भक्तिसंयुताः ।
भृग्वादिभिरुपायैस्तु पञ्चभिर्वा विषादिकैः ॥ १४७ ॥
अन्यैस्तेषां भवेत् सद्यो वाजपेयादिजं फलम् ।
सकामस्य तु निष्कामः प्राप्नुयात् परमां गतिम् ॥

महात्मनस्तु तान् विद्धि विष्वगर्थे त्यक्तजीवितान् ।
आत्महत्योत्थदोषैस्ते न लिप्यन्ते कदाचन ॥ १४९ ॥
आत्महत्योत्थदोषाः स्युरन्येषां सर्वदा द्विज ! ।
एवं भगवदर्थे तु प्राणत्यागे कृतादरः ॥ १५० ॥
यमुद्दिश्य त्यजेत् प्राणान् तं विद्याद्ब्रह्मघातकम् ।
मुख्यविप्रे मृते तस्य तद्दोषः स्याच्चतुर्गुणः ॥ १५१ ॥
क्षत्रिये ब्रह्महत्योत्थदोषस्तु त्रिगुणो भवेत् ।
निमित्तिनः स दोषः स्याद्द्विगुणः संस्थिते विशि ॥
निमित्तिने मृते शूद्रे दोष एकगुणो भवेत् ।
एवं दोषविशुद्धिस्तु भवेद्विप्रे निमित्तिनि ॥ १५३ ॥
निमित्तिनि क्षत्रियादावेकैकगुणवर्धनात् ।
भवेत् पूर्वोक्तदोषस्तु मदर्थे नास्ति संशयः ॥ १५४ ॥
एवं मृते विप्रमात्रे दोष उक्तो निमित्तिनः ।
मुख्यदोषः पञ्चगुणो ब्रह्मचारिणि संस्थिते ॥ १५५ ॥
गृहस्थे यज्वनि मृते स दोषः षड्गुणो भवेत् ।
वानप्रस्थे मृते मुख्यदोषः सप्तगुणो भवेत् ॥ १५६ ॥
सर्वयाश्रमनिष्ठे तु संस्थिते तु निमित्तिनः ।
स्यान्मुख्यदोषोऽष्टगुण एवं तु कथितो मुने ! ॥ १५७ ॥
निमित्तिनो दोषशुद्धिः विष्वगर्थे मरणे सति ।
एवं निमित्तभूतानां द्विजादीनां न निष्कृतिः ॥ १५८ ॥
तत्र यत् ब्राह्मणैरुक्तं विवेकनिरतैस्तदा ।
सर्वशास्त्रार्थतत्त्वज्ञैः तत् कुर्यादविचारतः ॥ १५९ ॥
अन्यथा तु महान् दोषो भवेद्देशाधिपस्य तु ।

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे प्रायश्चित्ततुलाभारविधिर्नाम त्रिंशोऽध्यायः ।

---

॥ श्रीः ॥

# ॥ एकोविंशाऽध्यायः ॥

शाण्डिल्यः —

मुने ! हिरण्यगर्भादौ विशेषो वक्ष्यतेऽधुना ।
हेमगर्भविधानं तु प्रथमं कथ्यते मया ॥ १ ॥

सनकः —

यद्यद्व्रोच्यते कर्म तुलाभारेऽपि नोदितम् ।
साधारणं भवेत्तत् सर्वेषामपि कर्मणाम् ॥ २ ॥

तुलाभारादिकानां तु विभवाद्यानुगुण्यतः ।
प्राग्वन्मण्डपनिर्माणं पीठादिपरिकल्पनम् ॥ ३ ॥

अग्निष्टोदितमार्गेण कुर्याद्वा मण्टपादिकम् ।
यद्वाष्टसप्तषट्पञ्चचतुस्त्रिकरविस्तृतम् ॥ ४ ॥

त्रिंशदङ्गुलमानं तु गोलकैकैकहानितः ।
उन्नतं मध्यपीठं स्यात् तत्तत्क्षेत्रानुसारतः ॥ ५ ॥

चतुर्हस्तं समारभ्य षट्षड्गोलकहानितः ।
विस्तृतं पार्श्वयोः पीठद्वितयं परिकल्पयेत् ॥ ६ ॥

विंशत्यंगुलमानाच्च द्विद्व्येकांगुलहानितः ।
तदुन्नतिर्यथा साऽन्त्ये सार्धहस्ते दशांगुला ॥ ७ ॥

द्वयोरेकमानार्धं वा भवेत् सर्वत्र चोन्नतिः ।
पीठानामन्तरालं तु कल्पयेत् करसंमितम् ॥ ८ ॥

करार्धं वर्धयेद्वापि भवेद्यावच्चतुष्करम् ।
अन्तरालं भवेत्तावद्यथा वा नातिसङ्कटम् ॥ ९ ॥

यथोदितेषु मानेषु यथाभिमतमानतः ।
कुर्यात् कुण्डगणं चापि लक्षणेनोपलक्षितम् ॥ १० ॥

आस्थानमण्टपाद्ये तु यथैतत् कल्पयेत्तदा ।
मध्यपीठोदितं कर्म तत्तद्वे(द्वे)वासने भवेत् ॥ ११ ॥

तदुदक् दक्षयोः पीठद्वयमुक्तप्रमाणतः ।
प्राक्दिक्कुण्डस्य वै प्राच्यां पीठं कुर्यात् शुभं शुभम् ॥

सप्तषट्पञ्चहस्तं वा चतुस्त्रिद्विकरं तु वा ।
एकहस्तोच्छ्रितं वाऽपि तदर्धोच्छ्रितमेव वा ॥ १३ ॥

तस्योपरिष्टात् कर्तव्यं हेमगर्भनिवेशनम् ।
तुलाभारोदितं कर्म पीठोपर्यथवा चरेत् ॥ १४ ॥

यद्वा कुंभादियजनं अधिवासनकर्म च ।
मण्टपे कल्पयित्वा, तत्प्रपायां वा समाचरेत् ॥ १५ ॥

हेमगर्भनिवेशं तु प्रपायां वा समाचरेत् ।
कुंभयागादिकं रूपं कर्तुरिच्छानुरूपतः ॥ १६ ॥

तुलाभारादिकेऽन्यस्मिन् दिनेप्येवं समाचरेत् ।
ततः कुर्याच्च सौवर्णमेकांगुलघनं दृढम् ॥ १७ ॥

अधः पात्रं चोर्ध्वपात्रं यथासङ्गतयोस्तयोः ।
सुखासनं स्यान्नृपतेर्विस्तृतं कल्पयेत्तथा ॥ १८ ॥

अधः पात्रं सुवर्णानां सहस्रेण पलेन वा ।
यद्वा निष्कसहस्रेण, तदर्धेनोर्ध्वपात्रकम् ॥ १९ ॥

एवं पात्रद्वयं कुर्यात् सर्वालङ्कारसंयुतम् ।
विभवे सर्वपात्राणि कुर्याद्धेममयानि च ॥ २० ॥

अधिवासदिनोक्तं तु तुलाभारवदाचरेत् ।
पात्रद्वयस्योदक् पीठे ह्यधिवासं समाचरेत् ॥ २१ ॥

ततः कर्मदिनोक्तं तु प्राग्वत् कृत्वा क्रमेण तु ।
इन्द्रदिक्कल्पिते पीठे भारैर्द्वादशभिर्मुने ! ॥ २२ ॥

शालीनां विष्टरं कृत्वा तदूर्ध्वं तण्डुलान् न्यसेत् ।
तदर्धमानांस्तस्योर्ध्वं तदर्धांस्तु तिलान् न्यसेत् ॥२३॥

शालिभिः समभारान् वा तण्डुलांश्च तिलान् न्यसेत् ।
अधिवासेऽप्येवमेव भवेद्वित्तानुसारतः ॥ २४ ॥
एवमेव भवेद्वापि तुलाभारादिकर्मणि ।
मार्गं वा व्याघ्रजं चर्म शाल्यादेरन्तरान्तरा ॥ २५ ॥
विन्यसेन्नववस्त्रं वा विभवे त्रितयं तु वा ।
अन्यच्च मङ्गलं कुर्याद्वस्त्रवेष्टनपूर्वकम् ॥ २६ ॥
अधः पात्रं तदूर्ध्वं तु न्यसेत् प्रागधिवासितम् ।
मुहूर्ते शोभने प्राप्ते गृहीत्वा भूपतिं गुरुः ॥ २७ ॥
सुस्नातं भूषितं प्राग्वद्वस्त्रमाल्यादिभूषणैः ।
महार्घैर्विविधैश्चापि खड्गखेटकवर्जितम् ॥ २८ ॥
प्राग्वत्तत्त्वोपसंहारं कृत्वा जीवावशेषितम् ।
शङ्खतूर्यनिनादाद्यैः सहचात्र निवेशयेत् ॥ २९ ॥
अधस्थे प्राङ्मुखं यद्वा विन्यसेत् प्रत्यगाननम् ।
वर्मणा विन्यसेदूर्ध्वे ह्यूर्ध्वपात्रमधोमुखम् ॥ ३० ॥
तदण्डान्तः समासीने तस्मिंस्तस्याग्रतो गुरुः ।
उपविश्यासने प्राग्वत् तत्त्वोत्पत्तिं समाचरेत् ॥ ३१ ॥
अण्डाज्जातं तु तं स्मृत्वा ततस्तस्मात्तु भूपतिम् ।
स्नानपीठे समावेश्य मङ्गलद्रव्यवासितैः ॥ ३२ ॥
नवभिः पञ्चभिर्वापि कुंभैरुदकपूरितैः ।
वस्त्रादिवेष्टितैः कुर्याद्भूपतेरभिषेचनम् ॥ ३३ ॥
कल्पयेत् प्रोक्षणं चाऽपि ऋत्विग्भिः सह देशिकः ।
कृत्वा ततस्तं स्वाचान्तं भूषणादिविभूषितम् ॥ ३४ ॥
प्रणामं कारयेद्भूयो भूयो भगवतो विभोः ।
जातकर्मादिसंस्कारं जातार्थं जुहुयात् क्रमात् ॥ ३५ ॥
तिलैराज्यैश्च बहुभिः सर्वसंपूरणाय च ।
सर्वदोषविनाशाय ततः पूर्णां च पातयेत् ॥ ३६ ॥
भूषणानि च ते पात्रे नृपो दद्याद्धरेर्विभोः ।
दानात् फलं च पूर्वोक्तं विभोरायतने सदा ॥ ३७ ॥
स्वयंव्यक्तादिके कुर्यात्तुलाभारादि कर्म च ।
तदाऽपि भूपस्य फलं भवेद्दानोदितं क्रमात् ॥ ३८ ॥
अनुकल्पे तदर्धं तु दद्याद्भगवतो विभोः ।
अर्धं दद्याद्ब्राह्मणेभ्यो तुलाभारे तथैव च ॥ ३९ ॥
तुलाभाराह्वयं कर्म हेमगर्भाभिधं च यत् ।
एतद्द्वयं तु मुख्यं स्यात् सर्वेषामपि कर्मणाम् ॥ ४० ॥
क्रमेण वक्ष्यमाणानां तिलपर्वतपूर्वकम् ।
अन्यत्तु सकलं कर्म तुलाभारवदाचरेत् ॥ ४१ ॥
हेमनिष्कसहस्रं वै दद्याद्वै गुरुदक्षिणाम् ।
तदर्धं शतनिष्कं वा तदर्धं वा यथावसु ॥ ४२ ॥
दशनिष्कं तदर्धं वा तदर्धं वाऽथ दक्षिणाम् ।
आचार्याय प्रदद्याद्वै न कदाचिददक्षिणम् ॥ ४३ ॥
तुलाभारादिकं कर्म सर्वेषामपि ऋत्विजाम् ।
दक्षिणा तु तदर्धा स्यात् तदर्धा परिचारिणाम् ॥
अन्येषां तु यथाशक्ति, ततोऽन्यस्मिंस्तु वासरे ।
कुंभमण्डलकुण्डस्थविभोः कुर्याद्विसर्जनम् ॥ ४५ ॥
विशेषार्चनसंयुक्तं ततोऽन्यस्मिन्दिने तु वा ।
एवं सर्वत्र वै कुर्याद्विसर्जनविधिं द्विज ! ॥ ४६ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे प्रायश्चित्तहिरण्यगर्भविधिर्नाम एकविंशोऽध्यायः ।

श्रीः

# द्वाविंशोऽध्यायः ॥

सनकः —

संप्रोक्षणविधानं मे प्रब्रूहि मुनिसत्तम!।
प्रायश्चित्तेषु सर्वत्र प्रशस्तो यस्तु पूरकः ॥ १ ॥

शाण्डिल्यः —

प्रासादप्रतिमापीठे प्रमादादेव दूषिते।
समाहिते यथापूर्वं पूजालोपे विशेषतः ॥ २ ॥

चण्डालपतितोदक्यासूतिकादिशवादिभिः।
सूतकैर्मृतकैर्वाऽपि नित्याशौचैश्च गर्हितैः ॥ ३ ॥

शिल्पिभिर्वेदबाह्यैश्च मूर्खैरज्ञातजातिभिः।
विण्मूत्ररुधिरापेयरेतोभिर्दूषिते सति ॥ ४ ॥

जनने मरणे नृणां मन्दिरे राष्ट्रसंकुले।
श्वसृगालखराद्यैश्च वायसश्येनजातिभिः ॥ ५ ॥

स्पृष्टे बिम्बे तु संदृष्टे तन्त्राणां सङ्करे सति।
एवमादिषु सर्वेषु संप्रोक्षणविधिर्भवेत् ॥ ६ ॥

दोषैरुपहतं ज्ञात्वा प्रासादप्रतिमादिकम्।
असंप्रोक्ष्यार्चनं कुर्वन् राजानं राष्ट्रमञ्जसा ॥ ७ ॥

देवतायतनं ग्रामं नाशयेन्नात्र संशयः।
तस्मात् संप्रोक्षणं कार्यं प्रासादप्रतिमादिषु ॥ ८ ॥

पुरा संप्रोक्षणदिनं राजराष्ट्राभिवृद्धिदम्।
निश्चयीकृत्य कालज्ञैः पुरस्तादुक्तवासरे ॥ ९ ॥

अंकुरानर्प्य विधिवत् पश्चात् संशोधिते गृहे।
सर्वत्र गोमयाम्भोभिः पुण्याहोक्तिपुरस्सरम् ॥ १० ॥

संप्रोक्ष्य पञ्चभिर्गव्यैः कुशोदकसमन्वितैः।
मूलबेरादिबिम्बानां षड्भिः सिद्धार्थकादिभिः ॥ ११ ॥

पवित्रावर्तितैरद्भिर्बहुशः क्षालने कृते।
प्रधानदिनपूर्वस्यां रात्र्यां यागादिमण्टपे ॥ १२ ॥

तोरणद्वारकलशवितानध्वजशोभिते।
दीक्षाधिवासवत् कृत्वा कुंभे वै मण्टपस्थले ॥ १३ ॥

पूजनं विभवेनैव जपान्तं मूलमन्दिरे।
क्षीराद्यैः पञ्चविंशद्भिः स्नापयेद्ध्रुवकौतुकम् ॥ १४ ॥

लेपभित्तिपटस्थस्य पुरस्ताद्भद्रविष्टरे।
कर्मार्चामथवा कूर्चं दर्पणे प्रतिबिम्बितम् ॥ १५ ॥

संस्नाप्य विधिवत् कुंभैः स्थापितैरग्रमण्टपे।
उत्सवार्चादि बिम्बानामङ्गानामाश्रयात्मनाम् ॥ १६ ॥

पूजनं स्नपनं कार्यं पाश्चात्यं यागमण्डपे।
तत्रस्थे हवनं कुण्डे शङ्खचक्रादिलक्षणे ॥ १७ ॥

मधुक्षीरादिभिः कार्यं सहस्रशतसङ्ख्यया।
कर्मबिम्बं विनान्येषां बिम्बानामङ्गरूपिणाम् ॥ १८ ॥

दक्षिणे मण्टपस्याथ शयनं कल्पयेन्महत्।
तिलतण्डुलशालीनां भारैर्वस्त्रादिभिः सह ॥ १९ ॥

तदूर्ध्वं शाययेदर्चां विधिवद्ध्रुवकौतुकाम्।
संपूज्य कम्बलाद्यैश्च छादयेत्तां सितादिभिः ॥ २० ॥

वर्णकैर्मण्डलं कुर्याच्चक्राम्बुरुहभूषितम्।
यावत् प्रभातसमयं बिम्बस्यस्य समीपतः ॥ २१ ॥

देशिको मूलमन्त्रस्य जपेनैव नयेन्निशाम्।
प्रभातायां तु शर्वर्यां कृतसन्ध्याविधिर्गुरुः ॥ २२ ॥

चतुःस्थानार्चनं कृत्वा पूर्ववत् स्नपनान्वितम्।
मुहूर्ते शोभने प्राप्ते नववस्त्रपरिष्कृतम् ॥ २३ ॥
सोत्तरीयोपवीतं च कृतकौतुकबन्धनम्।
समस्ततत्त्वविन्यस्तमभ्यर्च्यार्घ्यादिभिः क्रमात् ॥ २४ ॥

तासु स्वहृदयाम्भोजात् पुष्पाञ्जलिपुरस्सरम्।
अग्राह्यमपरिच्छेद्यममूर्तममलं महत् ॥ २५ ॥

नित्यशुद्धमनौपम्यं सुसूक्ष्ममचलं स्फुटम् ।
सच्चिद्रूपं च सामान्यं भास्वरं सुदृढं महत् ॥ २६ ॥

* [तेजस्तु संक्रमय्याथ दण्डवत् प्रणिपत्य तु ।
विनिवेद्य विभोः सर्वं कृतं कर्म द्विजोत्तमाः ॥ २७ ॥

उत्थाप्योत्सवबिम्बादीन् पूर्ववन्मङ्गलैः सह ।
महाकुम्भं च पुरतो वाहयन् मूर्तिपादिभिः ॥ २८ ॥

करकांशं समादाय त्वाचार्यः पुरतो व्रजेत् ।
शलाकामात्रयाऽच्छिन्नधारया सेचयन् भुवम् ॥ २९ ॥

प्रादक्षिण्येन धामान्तः प्रवेश्य मुनिपुङ्गवाः ! ।
महोत्सवोक्तमार्गेण कुम्भप्रोक्षणमाचरेत् ॥ ३० ॥

द्वारावरणदेवांश्च आलयश्रयवर्तिनः ।
खगेशविष्वक्सेनादीन् परिवारांश्च सर्वशः ॥ ३१ ॥

कुम्भावशिष्टतोयेन प्रोक्षयेत् सर्वतः क्रमात् ।
अवशिष्टं कुम्भतोयं बलिपीठेऽभिषेचयेत् ॥ ३२ ॥

एवं सम्प्रोक्ष्य विधिवत् प्रासादान्तः प्रविश्य च ।
करस्थं कौतुकं चाथ हृदयेन विसृज्य तु ॥ ३३ ॥

गोभूहेमादिकं दत्वा सर्वदोषप्रशान्तये ।
देवमर्घ्यादिनाभ्यर्च्य हविरन्तं विशेषतः ॥ ३४ ॥

ब्राह्मणान् भोजयेत् पश्चात् सहस्रं शतमेव वा ।
सद्यो वा सकलं त्वेवं कुर्यात् संप्रोक्षणं विभोः ॥ ३५ ॥

पुष्पांकुरपुरस्कं तु तत्तद्दोषप्रशान्तये ।
न तिथिर्न च नक्षत्रं कालवेला न विद्यते ॥ ३६ ॥

सद्यः सम्प्रोक्षणं विप्राः ! निशि वा दिवसेऽपि वा ।
प्रायश्चित्तविलम्बे तु कुर्यात् कालनिरीक्षणम् ॥ ३७ ॥

इति सम्प्रोक्षणं प्रोक्तं सर्वं चापि द्विजोत्तमाः ! ।]
स्थापनं पञ्चगव्यस्य सर्वाभ्युदयसाधनम् ॥ ३८ ॥

नागयोग इति ख्यातः सार्पर्क्षकरणक्षमैः ।
ऋक्षेण वानयोरेकयोगस्याप्यागसंज्ञितः ॥ ३९ ॥

पुरा तन्निश्चयीकृत्य कर्तव्यमिति सत्तमैः ।
तदर्थमंकुरानर्प्य द्रव्याणि समुपाहरेत् ॥ ४० ॥

मनश्शिलां हरीतालमञ्जनं श्यामसीसके ।
सौराष्ट्रं रोचनं चैव गैरिकं पारदं तथा ॥ ४१ ॥

आदाय धातुरत्नानि पद्मरागपुरस्सरम् ।
मुक्ताफलं प्रवाळं च वज्रं वैडूर्यसंज्ञितम् ॥ ४२ ॥

गोमेदं पुष्यरागं च महानीलं च गारुडम् ।
रत्नान्येतानि संगृह्य बीजानि समुपाहरेत् ॥ ४३ ॥

शालिनीवारकंकूनि प्रियंगुतिलमाषकान् ।
मुद्गांश्च यववेणूंश्च यवसाख्यान्यनन्तरम् ॥ ४४ ॥

हिरण्यं रजतं ताम्रमायसं त्रपुसीसकम् ।
सौवर्णं कूर्मरूपं च सौवर्णं चक्रमम्बुजम् ॥ ४५ ॥

राजतं पाञ्चजन्यं च समाहृत्य ततःपरम् ।
कदळीपनसाम्राणां विल्वामलकयोरपि ॥ ४६ ॥

दाडिमीमातुलुङ्गस्य नाळिकेरस्य कालतः ।
पक्वानि समुपाहृत्य फलानि च ततः परम् ॥ ४७ ॥

चन्दनागरुकर्पूरकुंकुमादीन्युपाहरेत् ।
कोष्ठं मांसी हरिद्रे द्वे मुराशैलेयचम्पकान् ॥ ४८ ॥

वचाकच्चोरमुस्तानि ह्रीवेरोशीरजान्यपि ।
मल्लिकाजातिवकुळनन्द्यावर्तकचंपकान् ॥ ४९ ॥

पाटलीपद्मकल्हाराण्युपाहृत्य ततः परम् ।
वस्त्रादीनि सितादीनि माल्यानि च विशेषतः ॥ ५० ॥

शालिपूर्वाणि धान्यानि कुशदूर्वादिकान्यपि ।
विल्वाश्वत्थकदम्बाम्रपल्लवादीनि यान्यपि ॥ ५१ ॥

हविः पाकोपयोग्यानि तण्डुलादीनि सत्तम ! ।
होमद्रव्याणि सर्वाणि पञ्चपात्राणि मृण्मये ॥ ५२ ॥

द्वादशाङ्गुळविस्तीर्णे पक्वापक्वे घटे दृढे ।
नृहरेः पूजनार्थं तु कुंभं सकरकं बृहत् ॥ ५३ ॥

एवमादीनि चान्यानि पुराऽऽहृत्य विधानतः ।
गृहीयात् पञ्चगव्यानि मृत्पात्रे नूतने शुभे ॥ ५४ ॥

गोमूत्रं गोमयं क्षीरं दधि मस्तु च पञ्चमम् ।
कपिलाया जराया वा पञ्चगव्यं प्रशस्यते ॥ ५५ ॥

* अत्रग्रन्थपातः ईश्वरसंहितायाः १९. तमाध्याये अस्मिन्नेव प्रकरणे समानानुपूर्विकतया दृश्यमानाः श्लोकाः [ ] एतदन्तः निदर्शिताः ।

तयोरभावे चान्यासां गवां गव्यं विधीयते।
नार्ताया न च गर्भिण्या न वृद्धायाः कदाचन ॥ ५६ ॥

नावत्सायां उपादेयं धेनोर्मूत्रं शकृद्द्वयम्।
भुविष्ठं गोमयं ग्राह्यं सोष्णं कृम्याद्यदूषितम् ॥ ५७ ॥

निष्पीड्य सम्यग्गृह्णीयाद्गोमयस्य रसं पुनः।
सद्यस्तप्तं घृतं शुद्धमहोरात्रोषितं दधि ॥ ५८ ॥

क्षीरं ग्राह्यमतप्तं च दशाहाज्जन्मनः परम्।
गोमूत्रं विष्णुगायत्र्या 'गन्धद्वारे'ति गोमयम् ॥ ५९ ॥

'आप्यायस्वे'ति च क्षीरं 'दधिक्राव्णे'ति वै दधि।
घृतं 'शुक्रमसी'त्येवं द्रव्याणि सह योजयेत् ॥ ६० ॥

विष्णुगायत्रिया यद्वा, पञ्चोपनिषदैस्तु वा।
'परमेष्ठी' शकृन्मन्त्रो गोमूत्रस्य तु 'पूरुषः' ॥ ६१ ॥

विश्वमन्त्रो भवेद्दध्नो निवृत्तिस्सर्पिषोभवेत्।
पयसः सर्वमन्त्रः स्यात्, सर्वेषां वाष्ट्वर्णकम् ॥ ६२ ॥

प्रोक्षणे स्नपने पञ्चगव्यमन्त्रा उदीरिताः।
सर्वदोषोपशान्त्यर्थं संप्राप्ते स्थापने सति ॥ ६३ ॥

सौदर्शननृसिंहस्य हृदाद्यैर्नेत्रपश्चिमैः।
अङ्गमन्त्रैः प्रकल्प्यानि क्षीरान्तानि शकृद्रसात् ॥ ६४ ॥

दधि द्विगुणमाघारात् पीयूषं त्रिगुणं ततः।
षड्गुणं मूत्रमेतस्माच्छकृद्वारि चतुर्गुणम् ॥ ६५ ॥

स्थापने कथितं मानमभिषेकविधावपि।
भूमिसंशोधनार्थं तत् प्रोक्षणे पञ्चकं समम् ॥ ६६ ॥

गोमयेन समं मूत्रं दधि स्याद्द्विगुणं ततः।
दध्नश्चतुर्गुणं सर्पिः सर्पिषोष्टगुणं पयः ॥ ६७ ॥

प्राशने पञ्चगव्यानां प्रमाणमिदमीरितम्।
स्थापनं स्नपनं ह्येतत् सर्वाघौघविनाशनम् ॥ ६८ ॥

ब्रह्मकूर्चसमोपेतं हन्यादागामिनं त्वघम्।
तद्विधानं समासेन शृणु वक्ष्यामि तत्वतः ॥ ६९ ॥

चूर्णेन यववेणुभ्यां समेतं तु कुशोदकम्।
ब्रह्मकूर्चमितिख्यातं वैष्णवाख्यौघसप्रभम् ॥ ७० ॥

कुशोदं द्विविधं प्रोक्तं शुष्काशुष्कविभागतः।
अशुष्कमथ निष्पीड्य वस्त्रेण रसमाहरेत् ॥ ७१ ॥

प्रहृत्य शुष्कमुदके प्रक्षिप्य जलमाहरेत्।
पवित्रं मन्त्रमुच्चार्य मूलं वास्त्रसमन्वितम् ॥ ७२ ॥

गोमूत्रसंमितं मानादृगृण्हीयात्तत् कुशोदकम्।
शकृद्रसप्रमाणेन चूर्णं तत्र नियोजयेत् ॥ ७३ ॥

चक्राख्यमन्त्रमुच्चार्य गायत्र्या विष्णुसंज्ञया।
ध्यात्वा च चक्रनृहरिं तद्द्रव्येषु नियोजयेत् ॥ ७४ ॥

यद्वा पृथक् स्थापयित्वा पञ्चगव्यैः कुशोदके।
हृदयाद्यस्त्रपर्यन्तैरभिमन्त्र्य च योजयेत् ॥ ७५ ॥

प्रशस्तं प्राशनं ताभ्यां प्रातः सर्वाघनाशनम्।
इति सम्यक् समाख्यातः पञ्चगव्यविधिस्तव ॥ ७६ ॥

मण्टपेऽथ पुरा क्लृप्ते यागस्नपनसिद्धये।
पञ्चगव्याधिवासार्थं यजनं प्रारभेद्गुरुः ॥ ७७ ॥

पूर्वेद्युः कर्मदिवसात् त्रिस्नायी समुपोषितः।
अहिर्बुध्न्ये मुहूर्ते तु ऋत्विग्भिः पाञ्चरात्रिकैः ॥ ७८ ॥

पुण्याहं प्रागवदुच्चार्य गव्यैरभ्युक्षयेत् स्थलीम्।
सद्रव्यामस्त्रमन्त्रेण प्राग्भागे धान्यविष्टरे ॥ ७९ ॥

दशारमष्टपत्रं तु चक्राब्जं भूपुरान्तके।
विलिख्य कर्णिकामध्ये त्रिकोणकृतसंपुटे ॥ ८० ॥

महाकुम्भं प्रतिष्ठाप्य सूत्रवस्त्रादिवेष्टितम्।
करकेण समोपेतं दिक्पालकलशान्वितम् ॥ ८१ ॥

पूरितं दधिमध्वाज्यक्षीरयुक्तेन वारिणा।
पिप्पलादिदलोपेतं गन्धस्रग्भिरलंकृतम् ॥ ८२ ॥

सकूर्चं सफलं सर्वरत्नहेमसमन्वितम्।
सर्वौषधिसमोपेतमक्षतैरपि चार्चितम् ॥ ८३ ॥

प्रदीप्य तैजसे पात्रे मृण्मये वा घृतेन तु।
कापिलेन चतुर्दिक्षु दीपं नेत्राभिमन्त्रितम् ॥ ८४ ॥

स्थापयेद्धान्यपीठस्थचक्राम्बुरुहमध्यतः।
कुम्भस्य पुरतः प्राग्वदुपविश्यासनोपरि ॥ ८५ ॥

प्राणायामादिकं कृत्वा भूतशुद्धिं यथाविधि ।
सौदर्शननृसिंहस्य मन्त्रं करशरीरगम् ॥ ८६ ॥

साङ्गं विन्यस्य हृदये चक्राम्बुरुहमध्यगम् ।
नादावसानगगनादवतार्य परादिना ॥ ८७ ॥

मूर्तिमन्त्रं स्वमन्त्रेण भावनामृतजैः शुभैः ।
अर्घ्याद्यैरखिलैर्भोगैरभ्यर्च्य प्रणवेन तु ॥ ८८ ॥

प्रीणयित्वा तथा हुत्वा नाभिकुण्डगतानले ।
बहिरभ्यर्चयेत् कुंभे(ण्डे) मध्यस्थे चक्रवारिजे ॥ ८९ ॥

समावाह्य स्वमन्त्रेण मूर्तैरर्घ्यादिभिः क्रमात् ।
जपावसानं विधिवत् कुण्डे चक्राब्जलक्षणे ॥ ९० ॥

चक्रे वा पङ्कजे शङ्खे तुर्यश्रे स्थण्डिलेऽपि वा ।
समिद्भिः सप्तभिर्हुत्वा पूर्णान्तं तदनन्तरम् ॥ ९१ ॥

चन्दनेन प्रसूनैश्च गुग्गुल्वगरुणाऽपि च ।
दुग्धेन दधिना क्षौद्रगुडखण्डान्वितेन च ॥ ९२ ॥

शाल्यादीनां तथा बीजैः पायसाद्यैश्च सर्पिषा ।
हुत्वाऽथ पूर्णया तृप्तिं नीत्वा सम्यक् समर्प्य च ॥

ततः कलशनिष्ठस्य पुरस्ताच्छोधिते स्थले ।
सर्वधान्यमये पीठे लिखिते चक्रपङ्कजे ॥ ९४ ॥

स्वास्तृते नववस्त्रेण छादिते चोर्ध्वतः कुशैः ।
प्रागुक्तं कुम्भमादाय द्वादशाङ्गुलसंमितम् ॥ ९५ ॥

बहिरन्तश्च संक्षाल्य सूत्रेणावेष्ट्य पूर्ववत् ।
चन्दनाद्यैः समालिप्य प्रणवेन समाहितः ॥ ९६ ॥

चक्राब्जकर्णिकामध्ये विन्यसेत्तमधोमुखम् ।
ततो मानेन तत्तुल्यमपक्वं मृण्मयं घटम् ॥ ९७ ॥

संप्रोक्ष्य पञ्चगव्येन सास्त्रेण कुशवारिणा ।
चतुर्गुणेन सूत्रेण पद्मैरन्तर्मुखैर्दलैः ॥ ९८ ॥

बन्धयित्वा तु सुदृढमास्यवर्जं समन्ततः ।
तं च तेनैव विन्यस्य जपंस्तारमवाङ्मुखम् ॥ ९९ ॥

स्तृणीयादूर्ध्वतो दर्भान् कुम्भयोः परमेष्ठिना ।
प्रोक्षयेदर्घ्यतोयेन प्राङ्मुखः पुरुषात्मना ॥ १०० ॥

विश्वमन्त्रेण विकिरेदक्षतानि तदूर्ध्वतः ।
उत्तानयेन्निवृत्या तौ पाणिभ्यामुत्तरान्तिमम् ॥१०१॥

सर्पिषाष्टोत्तरशतं विष्णुगायत्रिया हुनेत् ।
सर्वात्मनाऽथ संस्पृश्य संपाताज्येन मन्त्रवित् ॥१०२॥

द्रव्याणि पक्वकुम्भेऽस्मिन् हृन्मन्त्रेण नियोजयेत् ।
मृत्कन्दधातुरत्नानि बीजलोहफलानि च ॥ १०३ ॥

चन्दनादीनि पुष्पाणि तथा सर्वौषधीनि च ।
कुशपल्लवदूर्वाश्च पूरयित्वा तदूर्ध्वतः ॥ १०४ ॥

योजयेत् पञ्चगव्येन प्राङ्मुखः सकुशोदकम् ।
अर्चयित्वाऽर्घ्यगन्धाद्यैः साङ्गं मूलं समुच्चरन् ॥ १०५ ॥

आच्छाद्य नववस्त्रेण दद्याद्भूतबलिं ततः ।
देवतायतनग्रामनगरेष्वपि पत्तने ॥ १०६ ॥

स्थापनास्पदमासाद्य शोभ(ध?)नं पञ्चगव्यकैः ।
तत्र मध्ये खनेच्छ्वभ्रं मूलमन्त्रमुदीरयन् ॥ १०७ ॥

अङ्गुष्ठोदरमावृत्य त्रिधा सूत्रेण वेष्टयेत् ।
तेनैव भ्रामयेन्मध्ये स्थाप्य तत्रावटं खनेत् ॥ १०८ ॥

हस्तमानमधस्ताच्च षडङ्गुलसमन्वितम् ।
संप्रोक्ष्य पञ्चगव्येन तत्र रत्नादिकं न्यसेत् ॥ १०९ ॥

शेषं ध्यात्वा तदूर्ध्वं तु अभ्यर्च्यार्घ्यादिभिः क्रमात् ।
वाससाऽऽच्छाद्य दिग्बन्धमाचरेदस्त्रमुच्चरन् ॥ ११० ॥

संस्पृश्य गव्यं कुम्भाभ्यां ध्यात्वा मूलं जपेद्गुरुः ।
प्रभातायां तु शर्वर्यां कृत्वा स्नानादिकीः क्रियाः ॥

कुम्भस्थं नृहरिं पूज्य जपान्तं पूर्ववर्त्मना ।
पुण्याहवाचनं कृत्वा मुहूर्ते शोभने गुरुः ॥ ११२ ॥

पद्मपत्रावृतं कुम्भं श्वभ्रे तारेण विन्यसेत् ।
परितः सर्वधान्येन पूरयित्वाऽचलं यथा ॥ ११३ ॥

पञ्चगव्यं समुद्धृत्य घटस्थं कवचं लपन् ।
तेनैव पूरयेत् कुम्भं श्वभ्रस्थं मूलमुच्चरन् ॥ ११४ ॥

समभ्यर्च्यार्घ्यपुष्पाद्यैः पूरयेन्मृद्भिराहृतैः ।
नृसूक्तं भद्रसूक्तं च स्वस्तिसूक्तं च पाठयेत् ॥ ११५ ॥

शान्तिहोमं ततः कुर्याद्द्रव्यैः पूर्वोदितैः क्रमात्।
शतं शतार्धं पादं वा यथाशक्ति समाचरेत्॥ ११६॥
दक्षिणा गुरवे देया प्रतिष्ठाफलमिच्छता।
इति ते पञ्चगव्यस्य स्थापनं परिकीर्तितम्॥ ११७॥
सर्वोत्पातप्रशमनं महापातकनाशनम्।
सर्वसौख्यप्रदं पुण्यं सर्वोपद्रववारणम्॥ ११८॥
सर्वारोग्यप्रदं नित्यं पुत्रपौत्रविवर्धनम्।
यद्यत् कामयते मन्त्री तत्तदाप्नोत्यसंशयम्॥ ११९॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे प्रायश्चित्त सम्प्रोक्षण पञ्चगव्यस्थापन विधानं नाम द्वात्रिंशोऽध्यायः।

---

॥ श्रीः ॥

# त्रयोविंशोऽध्यायः ॥

सनकः —

प्रशंसितं पुरा ब्रह्मन्! सुदर्शननृसिंहयोः।
एकरूपं महायन्त्रस्थापनं स्थिरलक्षणम्॥ १॥
विस्तरेण समाचक्ष्व मयि सानुग्रहो यदि।

शाण्डिल्यः :—

पुरा नारायणेनोक्तं पुण्ये बदरिकाश्रमे॥ २॥
ब्रह्मणः शीर्षविच्छेदमहापातकशान्तये।
पृच्छतः शङ्करस्याथ सर्वपापापनोदनम्॥ ३॥
सोऽपि तं विस्तराच्छ्रुत्वा कैलासशिखरोपरि।
प्रतिष्ठाप्य विधानेन यन्त्रे विष्टरसंस्थिते॥ ४॥
कल्पान्तानलसूर्याभमुभयाननमव्ययम्।
सर्वलोकमयं सर्वदेवतामयमद्भुतम्॥ ५॥
सर्वाधारमनाधारं सर्वशक्तिक्रियात्मकम्।
दुष्टदोषगणं सर्वं निर्दहन्तं स्वतेजसा॥ ६॥
समाराध्याऽचिरेणैव पूतभावोऽभवद्भवः।
तथान्ये पुरुहूताद्या विद्यामेनामवाप्य च॥ ७॥
शङ्करात् पूर्णसंज्ञानात् स्वस्वविभागानपालयन्।
प्रजापालनशीलानां भूपानामेतदर्चनम्॥ ८॥
नैरन्तर्येण कर्तव्यमन्यथा जायतेऽभूतिः।
जायते कथमेतेषामुपपातकिनामपि॥ ९॥
अकुर्वतां जगत्स्थित्यै मर्यादाया विलोकनम्।
कुर्वतां खलु दुष्प्रापं भूपतीनां तु किं पुनः॥ १०॥
तथान्येषां द्विजातीनां सर्वपापप्रणाशनम्।
प्रतिष्ठाप्यार्चनीयं तत् सर्वकामसमृद्धिदम्॥ ११॥
तद्विधानं विशेषेण शृणु गुह्यतमं परम्।
दिव्याद्यायतने चित्रे प्राङ्गणादौ तु कुत्रचित्॥ १२॥
ग्रामादौ तु नदीतीरे विपिने पर्वतोपरि।
प्रासादं मण्टपं वाऽथ सचित्रं सर्वतोमुखम्॥ १३॥
प्राक्पश्चिमाननं वाऽथ सगवाक्षकवाटकम्।
एकादितलसंयुक्तं चक्रलाञ्छनलाञ्छितम्॥ १४॥
मुखभद्रसमोपेतमारोहणसमन्वितम्।
सप्राकारं समापाद्य प्रासादाभ्यन्तरे ततः॥ १५॥
भद्रविष्टरमध्यस्थभूपुरे वज्रलाञ्छिते।
शेषादिभिर्दिक्षु मध्ये षट्कोणपुरभूषिते॥ १६॥
सवायुबीजवायव्यमण्डलेन विराजितम्।
दशारचक्रमध्यस्थदलाष्टकजान्तरे॥ १७॥

स्थापयेत्तं महायन्त्रं लक्षणेनोपलक्षितम् ।
आद्वादशाङ्गुलान्मानादेकैकाङ्गुलवर्धितात् ॥ १८ ॥

चतुर्विंशाङ्गुलान्तानि मानानि स्युस्त्रयोदश ।
तेष्वेकं निश्चयीकृत्य कर्तुरिच्छावशेन तु ॥ १९ ॥

पादाद्युष्णीपर्यन्तं द्विषोढा चाष्टधा भवेत् ।
वेरार्धमानमादाय स्वभागार्थं समन्ततः ॥ २० ॥

सूत्रेण कर्णिकावृत्तं मध्यस्थेन, ततो बहिः ।
एकैकांशानि पद्मानि षट् भवन्ति यथाक्रमम् ॥ २१ ॥

चतुष्पत्रं भवेदाद्यमष्टपत्रमनन्तरम् ।
द्विरष्टकेसरं विद्यात् तृतीयं षोडशच्छदम् ॥ २२ ॥

द्वात्रिंशत्केसरं तुर्यं द्वात्रिंशद्दळभूषितम् ।
अष्टाष्टकेसरोपेतं तथासङ्ख्यदळं बहिः ॥ २३ ॥

तत् केसरविनिर्मुक्तं अष्टपत्रं तथा बहिः ।
भूपुरादीनि सार्धेन संपुटान्तानि बाह्यतः ॥ २४ ॥

द्वाभ्यां द्वाभ्यां तथांशाभ्यां बहिरावरणद्वयम् ।
पूर्वस्मिन् केशवाद्यांश्च विष्ण्वाद्यांश्च ततो बहिः ॥२५॥

जगत्स्थितौ समुद्युक्तान्पीकेशजनार्दनान् ।
बहिश्चक्रगदादीनामंशं तेषामधोर्ध्वतः ॥ २६ ॥

भागद्वयं ततस्त्यक्त्वा वाराहनरसिंहयोः ।
समन्ताद्भूपुरस्याऽथ भोगार्थं (भागार्थं) यन्त्रकल्पने ॥

महायन्त्रस्य विस्तारे विभक्ते पञ्चधाऽथवा ।
सप्तधा, मध्यबाह्यस्थैर्नालांस्त्र्यंशैः प्रकल्पयेत् ॥ २८ ॥

किञ्चिद्विष्टरपीठोच्चान् नाळानामधिकायतिः ।
वराहवदनाकारा, पार्श्वयोर्मूलविस्तृते ॥ २९ ॥

दक्षिणाद्यनुपातेन स्वामूलादग्रपश्चिमम् ।
प्रमाणमेवं बुद्ध्वाऽत्र लोहदारुशिलादिकम् ॥ ३० ॥

समाहरेद्यथाशास्त्रं प्रमाणेन यथाविधि ।
संपाद्या फलकाकारा भागैकेन घना दृढा ॥ ३१ ॥

स्यात् षडंशघना शैली चतुरंशघनाऽथवा ।
आकर्णिकावनेर्बाह्यचतुरश्रपुराकृतिः (वधिः) ॥

प्रमाणादुत्तमादस्मान्मध्यमाधमवाञ्छया ।
त्र्यंशेनार्धेन वा कुर्यान्मुख्यकल्पमुदीरितम् ॥ ३३ ॥

वेरोष्टं द्विगुणीकृत्य तत्प्रमाणेन कल्पयेत् ।
फलकामध्यतस्त्यक्त्वा लम्बमानं यथापुरा ॥ ३४ ॥

शेषं द्विरष्टधा भङ्क्त्वा कर्णिकार्धेन तद्बहिः ।
प्राग्वदावृतिपद्मानि, भूपुरादीन्यथ त्रिभिः ॥ ३५ ॥

ततस्त्रिभिस्त्रिभिः कार्यं मूर्तीनामावृतिद्वयम् ।
अर्धेन चतुरश्रं तु, मूर्तीनामावृतिद्वयम् ॥ ३६ ॥

एकैकं त्र्यंशसम्भूतं प्रमाणेन यथा भृशम् ।
कल्पयेत् केशवाद्यांश्च विष्ण्वाद्यांश्च द्विरष्टधा ॥ ३७ ॥

कुर्याद्विकावृतौ बुद्ध्या संमन्त्र्य ध्यानयोगतः ।
मध्यतः कर्णिकायां तु परिधौ चन्द्रमण्डलम् ॥ ३८ ॥

तन्मध्ये तारकं कुर्यात् तन्मध्येन सुदर्शनम् ।
भुजैः षोडशभिर्युक्तमष्टाभिर्वाऽनलप्रभम् ॥ ३९ ॥

पिङ्गलोचनकेशाढ्यं रक्ताम्बरधरं विभुम् ।
दंष्ट्राकराळवदनविवरोद्भूतपावकम् ॥ ४० ॥

कुटिलभ्रुकुटीभङ्गभंगुराळकपट्पदम् ।
ललाटलोचनोद्गीर्णज्वालाज्वलितदिङ्मुखम् ॥ ४१ ॥

ऊर्ध्वज्वालागणालीढकिरीटतटशोभितम् ।
श्रीवत्सकौस्तुभोरस्कं ग्रैवेयकविराजितम् ॥ ४२ ॥

पादावलम्बिनीं दिव्यां दधानमुपवीतवत् ।
प्रत्यालीढेन तिष्ठन्तं चक्राक्रमणरूपिणा ॥ ४३ ॥

पादयोर्दक्षिणांगुष्ठप्रान्तरेखात् तथेतरात् ।
पार्ष्णेः स्वमध्यतो मानं देहलब्धांगुलेन च ॥ ४४ ॥

चत्वारिंशत् साष्टकं स्यात् प्रत्यालीढं चिरान्वितम् ।
मुख्यदक्षिणहस्तादिमुख्यवामकरावधि ॥ ४५ ॥

द्विरष्टबाहुभिर्धत्ते प्रादक्षिण्यक्रमेण तु ।
शक्तिं खड्गं, तथा चाग्निं, मङ्कुशं, दण्डकुन्तके ॥

परशुं च, सहस्रारं दरं च सशरं धनुः ।
पाशं, हलं, ततो वज्रं, गदां च मुसलं, तथा ॥ ४७ ॥

त्रिशूलमेतान्यस्त्राणि प्रत्यंकं वीर्यवन्ति च ।
दुष्प्रधर्षं भयघ्नानि वहन्तमरिसूदनम् ॥ ४८ ॥

अन्यथाष्टभुजो धत्ते मुख्यदक्षकरादिकैः ।
पद्मां, कुशौ, च मुसलं, चक्र, मत्युग्रतेजसम् ॥ ४९ ॥

शङ्खं च, सशरं चापं, पाशं, कौमोदकीं क्रमात् ।
कृत्वैवमर्धचित्रं तु नवतालेन शिल्पिना ॥ ५० ॥

पादयोरन्तरे तस्य तिष्ठतः कर्णिकावनौ ।
शान्तिपुष्टिवशीकारविद्वेषाकर्षमारणान् ॥ ५१ ॥

उच्चाटनं वा यः कर्तुमिच्छेत् साधकसत्तमः ।
तस्य साध्यं लिखेन्मन्त्री शक्त्या संपुटितं विभोः ॥

इन्दुबिम्बस्य पर्यन्ते पट्कोणं क्रमशो लिखेत् ।
प्रागादिकोणषट्के तु प्रवर्तकनिवर्तके ॥ ५३ ॥

मन्त्राक्षराणि सादीनि सबिन्दूनि च वै पुरा ।
उपक्रम्य च वर्माख्ये लिखेदन्तर्मुखानमून् ॥ ५४ ॥

बहिः कोणान्तरालेषु प्रोक्तोऽयं दक्षिणादितः ।
आचक्रादीन्यथाङ्गानि ज्वालाचक्रान्तिमानि च ॥ ५५ ॥

चतुर्दलाग्रे प्रागादौ वर्माख्ये च सबिन्दुके ।
तदन्तरालेष्वन्तस्था बिन्दुना चान्तराननाः ॥ ५६ ॥

केसरेष्वष्टपत्रस्य स्वरानन्यांश्च बिन्दुभिः ।
दलेष्वष्टाक्षराणानि तथा भूतानि, तद्बहिः ॥ ५७ ॥

द्विरष्टपत्रकिञ्जल्कनिचये प्राक्प्रयोगतः ।
कादिसान्तानि वर्णानि सबिन्दूनि यथापुरा ॥ ५८ ॥

तद्दलेषु द्विषट्कार्णः, वर्माख्ये शिरसा सह ।
षोडशाक्षर इत्युक्तो, द्वात्रिंशत्केसरादिके ॥ ५९ ॥

आनुष्टुभं महामन्त्रं नृवराहनृसिंहयोः ।
बहिरष्टाष्टपत्रेषु पातालनृहरेर्मनुम् ॥ ६० ॥

प्राग्वदक्षरशो न्यस्य, ततोऽष्टदलपङ्कजे ।
नारसिंहं तथाष्टार्णं, तद्बाह्यस्थे तु भूपुरे ॥ ६१ ॥

सप्तद्वीपसमुद्राख्ये वज्रैः कोणेषु लाञ्छिते ।
प्राग्रन्ध्रेषु महादिक्षु पार्थिवं बीजमुत्तमम् ॥ ६२ ॥

तन्नाममन्त्रसंयुक्तं, अन्तस्थाः कोणभूमिषु ।
ततः सपार्थिवं बीजं कोणाभ्यन्तरबाह्ययोः ॥ ६३ ॥

तद्बहिः प्रातिलोम्येन स्वरषोडशकं न्यसेत् ।
सकारादीनि कान्तानि तथाभूतानि तद्बहिः ॥ ६४ ॥

परितोऽन्त्ययुगेनैव साध्यनामविदर्भणम् ।
कृत्वा प्रति प्रयोगेण बहिर्भूपुरसंपुटात् ॥ ६५ ॥

पाशांकुशाभ्यामावेष्ट्य द्वाभ्यां वा बहुभिस्तु वा ।
पुरोदितक्रमेणैव स्वस्थाने केशवादयः ॥ ६६ ॥

बाह्यावरण भूमिष्ठाः प्रागाद्यासु च विष्णवः ।
तत्कोणेषु हृषीकेशः, तच्छिद्रेषु जनार्दनाः ॥ ६७ ॥

कल्पनीयाश्च, तन्मन्त्राः प्रणवाद्या यथाक्रमम् ।
सजीवाः संश्रयोपेता नमस्कारसमन्विताः ॥ ६८ ॥

अमुकं रक्ष रक्षेति तदन्ते साध्यभूषिताः ।
प्रागादिदिक्षु तद्बाह्ये त्वन्तस्थाश्चाष्टभिः सह ॥ ६९ ॥

यशौ रषौ लसौ चाथ वहावपि सबिन्दुकौ ।
विलिखेत् पुनरप्येतानैशान्याऽनल पश्चिमम् ॥ ७० ॥

पाशाङ्कुशाभ्यामावेष्ट्य द्वाभ्यां वा बहुभिस्तथा ।
अधस्तान्नृवराहं च सर्वोर्ध्वं नृहरेर्मनुम् ॥ ७१ ॥

क्रमशः केशवादीनां ध्यानं चाकर्णयामलम् ।
केशवः स्वर्णवर्णोऽब्जशङ्खचक्रगदाधरः ॥ ७२ ॥

नारायणो नीरदाभः शङ्खचक्रगदाब्जभृत् ।
माधवोऽब्जगदाशङ्खचक्री नीलाब्जसन्निभः ॥ ७३ ॥

गोविन्दो धवलश्चक्रगदाशङ्खपयोजभृत् ।
विष्णुर्गदाम्बुजदरचक्री बन्धूकसप्रभः ॥ ७४ ॥

रक्तश्चक्रदराम्भोजशङ्ख( गदा )भृन्मधुसूदनः ।
त्रिविक्रमश्चक्रगदापद्मशङ्खी जपारुणः ॥ ७५ ॥

शङ्खचक्रगदापद्मधरः स्याद्वामनोऽरुणः ।
पद्मचक्रगदाशङ्खी श्रीधरश्चन्द्रसप्रभः ॥ ७६ ॥

विद्युत्प्रभो हृषीकेशो गदाचक्रदराब्जभृत् ।
गदाब्जचक्रविद्याभृत्पद्मनाभोऽरुणप्रभः ॥ ७७ ॥

दामोदरः पद्मशङ्खगदाचक्रधरोऽरुणः ।
मुख्यदक्षकराम्भोजात् मुख्यवामकरावधि ॥ ७८ ॥

पद्मादिकं धारयन्त आयुधानां चतुष्टयम् ।
किरीटकौस्तुभधरा वनमालाविभूषिताः ॥ ७९ ॥

पीताम्बरधराः सर्वे प्रसन्नवदनेक्षणाः ।
करुणापूर्णहृदया जगदुद्धरणोद्यताः ॥ ८० ॥

यन्त्रतेजोऽसहिष्णूनां नराणां तापशान्तये ।
आसारैरमृतैर्नित्यं सेचयन्तः समन्ततः ॥ ८१ ॥

विष्णुः प्राच्यादिदिग्भागे हृषीकेशा विदिक्स्थिताः ।
जनार्दनादिछिद्रगताश्चाष्टपादे(?) चतुर्भुजाः ॥ ८२ ॥

पृष्ठदक्षिणवामाभ्यां चक्रशङ्खधरास्तथा ।
मुख्यवामकरेणैव वरदा वाऽभयप्रदाः ॥ ८३ ॥

विष्णवो दक्षिणैर्मुख्यैर्ज्वलत्पावकभीषणाः ।
चक्रकौमोदकीशार्ङ्गान् धारयन्तः सखड्गकान् ॥ ८४ ॥

वह्न्यादिकोणदेशस्था हृषीकेशाः सुवर्णभाः ।
शङ्खं हलं च मुसलं वहन्तः शूलपश्चिमम् ॥ ८५ ॥

प्रागाग्नेयादिकच्छिद्रदेशस्थाश्च जनार्दनाः ।
ज्वलन्मरतकाभाश्च वीक्षमाणाश्च दिक्स्थितान् ॥८६॥

दण्डं कुन्तं च शक्तिं च पाशं चाङ्कुशमेव च ।
वज्रं परशुसंज्ञं च तथा शतमुखानलम् ॥ ८७ ॥

दधानाः सुसमैः स्थानैरुत्थिताः स्वस्तिकादिना ।
सुखासीनास्तु वा सर्वे केवला वा सशक्तिकाः ॥ ८८ ॥

संकल्प्याः तदधः सर्वयज्ञाङ्गः सूकराननः ।
कृष्णपिङ्गलवर्णाङ्गः पुण्डरीकनिभेक्षणः ॥ ८९ ॥

पश्चिमाभ्यां च पाणिभ्यां पूर्ववच्चक्रशङ्खभृत् ।
मुख्येन दक्षिणेनैव भीतानामभयप्रदः ॥ ९० ॥

भूम्याः स्वाङ्के निषण्णाया वामेनाश्लेषतत्परः ।
परस्तान्नृहरिर्देवस्तुहिनाचलसन्निभः ॥ ९१ ॥

करैरष्टभिरत्युग्रः पृष्ठतो दक्षिणादितः ।
शङ्खचक्राम्बुजगदाः खड्गं च सशरं धनुः ॥ ९२ ॥

धत्ते षड्भिस्तु मुख्याभ्यां हिरण्यकशिपुं रुषा ।
विदारयंश्च स्वाङ्कस्थं नखरैः क्रकचोपमैः ॥ ९३ ॥

उद्धृत्य साम्बुजं पाणिं केवलं वाऽभयप्रदः ।
हिरण्यरुधिरस्रोत·पङ्क्तितोरस्थलः शुभः ॥ ९४ ॥

सर्वानेतान् सजीवेन शक्तिबीजेन वेष्टयेत् ।
वहिः प्राच्यादिदिग्देशे साकारानस्त्रविग्रहान् ॥ ९५ ॥

चक्रकौमोदकीशार्ङ्गनन्दकान् विलिखेदिमान् ।
केशवाद्यास्तथास्त्रान्ताश्चतुस्त्रिंशत्तु मूर्तयः ॥ ९६ ॥

स्वतन्त्रं कल्पयेन्मन्त्री यद्वा चावरणक्षितौ ।
कृत्वैवं प्राङ्मुखं यन्त्रमपराङ्गं प्रकल्पयेत् ॥ ९७ ॥

कर्णिकावलयं कुर्यात् प्राक्प्रमाणेन मध्यतः ।
तदन्तरे कोणषट्कं प्रकाशाह्लादसंपुटम् ॥ ९८ ॥

त्रिधा विभज्य तद्बाह्यं क्षेत्रार्धं च तदन्तरे ।
विरचयेदुम्बराह्वे (?) कमलं द्वादशच्छदम् ॥ ९९ ॥

चतुर्विंशद्दलं चक्रं नाभिनेमित्रयान्वितम् ।
प्रधिभिश्चावृतं बाह्ये नेमिस्थैस्तस्य बाह्यतः ॥ १०० ॥

शक्तिभिश्च जयाद्याभिरष्टाभिः परिवारितम् ।
पूर्वं द्वादशपत्राब्जकर्णिकामध्यकल्पिते ॥ १०१ ॥

त्रिकोणसंपुटाकारे प्रकाशाह्लादलक्षणे ।
षट्कोणे लक्षयेद्देवं कल्पान्तहुतभुक्प्रभम् ॥ १०२ ॥

नृपञ्चवक्त्रं ज्ञानादिगुणपूर्णमहार्णवम् ।
त्रिलोचनं चतुर्बाहुं चतुश्चक्रधरं परम् ॥ १०३ ॥

योगपट्टपिनद्धाङ्गं जान्वारूढभुजद्वयम् ।
श्रीवत्सकौस्तुभोरस्कं भूषितं मकुटादिभिः ॥ १०४ ॥

हारशेखरकेयूरकटकैर्नूपुरान्तिमैः ।
भक्तानां स्वानुरक्तानां सिद्धान्तनिरतात्मनाम् ॥ १०५ ॥

अशोकविटपिच्छायाव्याजेनार्तिविनाशनम् ।
साधुसंरक्षणोद्युक्तचेष्टितं हृष्टमानसम् ॥ १०६ ॥

अधस्ताच्चरणाम्भोजात् साध्यं बीजपुटीकृतम् ।
विलिख्य, कोणषट्केषु प्रागाद्येषु त्रिकं त्रिकम् ॥

सुदर्शननृसिंहस्य मन्त्रार्णानि यथाक्रमम्।
तदङ्गानि च तद्बाह्ये कोणाभ्यन्तरभूमिषु ॥ १०८ ॥

लिखेदावृत्तियोगेन क्षार्णं प्रथिजणेषु च।
प्रागादि चक्रबाह्ये तु [1]जया चन्द्रप्रभाविनी ॥ १०९ ॥

नवदूर्वाङ्कुरश्यामा[2] मोहिनी,[3] विजया ततः।
राजोपलप्रभा कान्ता[4] ह्लादिनी पाटलप्रभा ॥

[5]अजिता कनकप्रख्या, [6]माया नीलोत्पलप्रभा।
रक्ताऽ[7]पराजिता[8] सिद्धिर्धूम्रवर्णा स्वकं पतिम् ॥

वीक्षमाणाश्च सततं, नीलोत्पलविलोचनाः।
नवयौवनलावण्यविभवेनोपबृंहिताः ॥ ११२ ॥

करण्डमकुटोपेताः सर्वाभरणभूषिताः।
विचित्रक्षौमवसनाः सर्वर्तुकुसुमान्विताः ॥ ११३ ॥

द्विभुजा दक्षहस्तस्थपुष्पमालाभ्यलंकृताः।
वामे चन्द्रांशुसङ्काश चामरव्यजनोद्यताः ॥ ११४ ॥

भूपचरौ नृसिंहस्य भीमोग्रौ भीषणद्युती।
दंष्ट्राकरालवदनौ ज्वलत्पावकलोचनौ ॥ ११५ ॥

नीलनीरदसंकाशौ द्विभुजौ दण्डचक्रिणौ।
उदग्रकायावत्युग्रौ वीक्षयन्तौ परस्परम् ॥ ११६ ॥

रक्ताम्बरधरौ रक्तकुसुमस्रग्विमण्डितौ।
संपाद्यैवं महायन्त्रं सुदर्शननृसिंहयोः ॥ ११७ ॥

स्थापयेद्विधिवन्मन्त्री मध्ये प्रासादमण्टपे।
क्ष्मापरिग्रहमारभ्य संपन्ने सर्वकर्मणि ॥ ११८ ॥

विन्यस्ते विष्टरे यन्त्रे प्रतिष्ठाप्य विधानतः।
त्रैकाल्यमर्चनं कार्यं तल्लक्षणमथोच्यते ॥ ११९ ॥

तद्दैर्घ्यं यन्त्रविस्तारादधिकं द्वादशाङ्गुलम्।
विभक्ते यन्त्रविस्तारे सप्तधा वाऽथ पञ्चधा ॥ १२० ॥

एकैकमन्तयोस्त्यक्त्वा भागैर्मध्यगतैस्ततः।
पञ्चभिर्वा त्रिभिः कार्या विष्टरस्य तु विस्तृतिः ॥१२१॥

एकैकं मध्यतः स्थाप्य पार्श्वयोः सषडङ्गुलम्।
यन्त्रपार्श्वस्थनालाभ्यां सुषिरद्वयमाचरेत् ॥ १२२ ॥

शिष्टानि मार्जयेन्मन्त्री चतुरश्रप्रसिद्धये।
त्रिचतुःपञ्चधा वाऽथ यन्त्रोच्छ्राये विभाजिते ॥१२३॥

तत्तदेकांशमानेन कार्यः स्याद्विष्टरोच्छ्रयः।
पीठवत्तदलंकृत्य पद्माङ्कैः परितो बहिः ॥ १२४ ॥

तदूर्ध्वं विष्टरं यन्त्रं कल्पयेत्तद्विधिं शृणु।
पीडमध्यगतं भागं मध्यस्थेन तु तन्तुना ॥ १२५ ॥

कर्णिकार्थं परिभ्राम्य शेषे षोढा विभाजिते।
द्विरष्टकेसरोपेतमष्टपत्राब्जमस्तके ॥ १२६ ॥

भागेन तद्बहिस्तद्वद् दशारं चक्रमुज्ज्वलम्।
वायुमण्डलमध्येन षट्कोणं तु बहिस्त्रिभिः ॥ १२७ ॥

वज्राङ्कितं कोणभूषु भागार्धेन तु भूपुरम्।
यन्त्रमध्यमनालस्य निवेशार्थं तु मध्यतः ॥ १२८ ॥

वेधयेत् तत्प्रमाणेन साध्यनाम समन्ततः।
विलिख्य तद्बहिर्वर्ण्य केसराणां द्विरष्टके ॥ १२९ ॥

षोडशार्णं नृसिंहस्य तद्विषट्काक्षरावधौ।
हुंफट्स्वाहा समोपेतो नृहरेः षोडशाक्षरः ॥ १३० ॥

प्रागाद्यष्टदलेष्वस्य मन्त्रमानुपूर्व्यं परम्।
चतुष्टयक्रमेणैव प्रत्येकस्मिन् दले न्यसेत् ॥ १३१ ॥

बहिर्दशारचक्रस्य प्रागराद्येषु मन्त्रपम्।
सौदर्शननृसिंहस्य हनशब्दसमन्वितम् ॥ १३२ ॥

विलिखेद्द्वन्द्वयोगेन, बाह्ये वायव्यमण्डले।
विलिखेद्वर्तुलाकारे वायव्यं बीजमुत्तमम् ॥ १३३ ॥

वर्म चास्त्रसमेतं च विलिखेदन्तरान्तरा।
बाह्यस्थे कोणषट्के तु लिखेदाग्नेयमक्षरम् ॥ १३४ ॥

कल्पयेत् प्रतिकोणं तु बहिर्ज्वालासमन्वितम्।
कोणेषु भूपुरस्यान्तः पार्थिवं बीजमुल्लिखेत् ॥ १३५ ॥

अङ्कारोऽथ बहिर्भागे परितो भद्रपीठवत्।
कण्ठदेशं समाश्रित्य द्वौ द्वौ प्राच्यां दिशि क्रमात् ॥

अन्योन्यमभिवीक्षन्तौ कल्पयेदुत्तमोत्तमौ।
यन्त्रसन्धारणोद्युक्तौ व्यात्तास्यावुग्रलोचनौ ॥ १३७ ॥

अनन्तगुलिकौ प्राच्यां, याम्यायां शङ्खवासुकी।
सतक्षको महापद्मः प्रतीच्यां उत्तरे तथा ॥ १३८ ॥
कार्कोटकस्तथापद्मो, विशेषस्तत्र कथ्यते।
विभज्य कर्णिकाभूमेर्भूपुरान्तं विधान्तरे ॥ १३९ ॥
नृसिंहयन्त्रं कुर्वीत, बाह्यतो यन्त्रविष्टरम्।
दिक्षु नारायणाख्याणि तत्र कूर्चमयानि च ॥ १४० ॥
सिताद्विधातुजैर्वर्णैः कुङ्कुमाद्यैर्विमिश्रितैः।
विलिखेन्मुख्यमूर्त्यादि यथाशोभं मुखद्वये ॥ १४१ ॥
सुदर्शननृसिंहाभ्यां वर्णशोभा समीरिता।
कर्णिका कनकप्रख्या, केसराण्यरुणानि तु ॥ १४२ ॥
पाण्डुरक्तानि पत्राणि, भूपुराणि समन्ततः।
कनकाभानि कार्याणि, मूर्तीनां प्रागुदीरितम् ॥१४३॥
चक्रनाभिद्वयं कुर्याद्धेमपूर्वारुणप्रभम्।
शरदाकाशसंकाशान्यराणि, अरुणमन्तरम् ॥ १४४ ॥
हेमकुन्दसितं कुर्यात् क्रमान्नेमित्रयं शुभम्।
पीतेन वा वलक्षेण लिखेन्मन्त्राक्षराणि वै ॥ १४५ ॥
पद्मकेसरपत्रेषु भूपुरेषु समन्ततः।
षट्कोणान्तरबाह्येषु चक्रनाभ्यरनेमिषु ॥ १४६ ॥
पृथक् कृतानि वर्णानि मान्त्राण्यन्तर्मुखानि च।
तारद्वयान्तरस्थानि बिन्दुयुक्तानि चान्ततः ॥ १४७ ॥
लेख्यान्येतानि सर्वत्र, मुख्यप्रणवसंपुटम्।
प्राकारसमुपेतानि नमस्कारान्वितानि च ॥ १४८ ॥
कुर्यान्नारायणाख्राणि कूर्चानि हरितानि च।
बद्धानि पद्मपाशेन ततो हयमुखानि च ॥ १४९ ॥
भूर्जपत्रे विलिख्येत कुंकुमागरुजै रसैः।
हरिचन्दनकर्पूरगव्यपञ्चकसाधुभिः ॥ १५० ॥
सुवर्णसूच्या विधिवत् समाप्य गुलिकाकृतिम्।
सुवर्णपट्टेनावृत्य प्रतिष्ठाप्य विधानतः ॥ १५१ ॥
रक्ष्याणामायुरारोग्यधनधान्यादिवृद्धये।
पुत्रपौत्रादिसन्तानविजयेष्टादिसिद्धये ॥ १५२ ॥
धारयेच्छिरसा मन्त्री साधुसंरक्षणे रतः।
यन्त्रमेतत् समाख्यातं सुदर्शननृसिंहयोः ॥ १५३ ॥
स्थापनं सर्वमूर्तीनां यथावत् प्रागुदीरितम्।
तथैवैतत् प्रतिष्ठाप्य त्रिकालं वैककालिकम् ॥ १५४ ॥
पूज्यते यदि राजा च राष्ट्रं च सुखमेधते।

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे सुदर्शननृसिंहमहायन्त्रस्वरूपकथनं नाम त्रयोविंशोऽध्यायः।

---

॥ श्रीः ॥

# चतुर्विंशोऽध्यायः ॥

सनकः —

मुने! सम्यक् समाख्यातं सुदर्शननृसिंहयोः।
पूर्वापरमुखं यन्त्रं नानामन्त्रार्णपूरितम् ॥ १ ॥
मध्यमारभ्य मन्त्राणां साङ्गानां लक्षणं परम्।
न्यासार्थमर्चनार्थं च समाचक्ष्व यथाक्रमम् ॥ २ ॥

शाण्डिल्यः —

साधु पृष्टं त्वया प्राज्ञ रहस्याम्नायलक्षितम्।
सनक! त्वं शृणुष्वात्र मन्त्रजातं यथास्थितम् ॥ ३ ॥
संकर्षणात् पुरा तुष्टाच्छंकरेण मयाऽपि च।
हिताय सर्वलोकानां यन्त्ररूपं गुणोत्तरम् ॥ ४ ॥

सुगुप्ते भूतले शुद्धे वर्णचक्रं परिस्तरेत्।
अकारादिक्षकारान्तं सर्वार्णमयरूपिणम् ॥ ५ ॥

स्वक्षनाभ्यरनेमीभिः प्रथिभिश्चाप्यलंकृतम्।
कारणं सर्वमन्त्राणां अक्षे प्रणवमालिखेत् ॥ ६ ॥

अकाराद्या विसर्गान्ताः स्वरा नाभ्यङ्गमाश्रिताः।
ककारादीनि भान्तानि तदराणां त्रिरष्टके ॥ ७ ॥

मादिहान्तानि नेमौ तु क्षार्णं प्रथिगणे स्थितम्।
शब्दब्रह्ममयं चक्रं पुरा वर्णगणं ततः ॥ ८ ॥

प्रणवाद्यैर्नमोन्तैश्च संज्ञाभिः क्रमशस्ततः।
विन्यस्य मातृकायन्त्रं स्वं देवं विधिवद्गुरुः ॥ ९ ॥

समभ्यर्च्यार्घ्यपुष्पाद्यैर्मातृकामन्त्रविग्रहम्।
ततः समुद्धरेन्मन्त्रान् सर्वाभिमतसिद्धिदान् ॥ १० ॥

जेतुं शक्याऽऽत्मनो यातु सृष्टिस्थितिलयोन्मुखी।
क्रियाशक्तिः समुद्दिष्टा संकल्पजननी पुरा ॥ ११ ॥

कौलरूपमधिष्ठाय तयैतद्बृंहितं जगत्।
कालचक्रं जगच्चक्रं तस्मात् सौदर्शनं वपुः ॥ १२ ॥

तमधिष्ठाय सा शक्तिर्जीवभूता व्यवस्थिता।
विनाकृतं तया सर्वमसत्कल्पमिदं भवेत् ॥ १३ ॥

तस्मात् समुद्धरेच्छक्तिमग्नीषोमसमप्रभाम्।
अक्षाधारां तु वै नित्यामनाद्यन्तां च वैष्णवीम् ॥ १४ ॥

पूर्वं नेम्यन्तिमद्वन्द्वं तदाद्यं सानलद्वयम्।
नाभितुर्यान्तिमद्वाभ्यां पिण्डमेतदलंकृतम् ॥ १५ ॥

सौदर्शनमहाशक्तिः सर्वसिद्धिप्रदायिनी।
जीवभूता षडर्णस्य प्रकाशानन्दरूपिणी ॥ १६ ॥

हृदयाद्यङ्गसिद्ध्यर्थं पिण्डमेतत् स्वरोज्झितम्।
दीर्घराद्यैस्त्रिभिश्चान्त्यैर्भवयेत्त्रपश्चिमम् ॥ १७ ॥

प्रणवादीनि चैतानि कुर्याद्धि हृदयादिभिः।
नमःस्वाहा वषड्हुंफड्वौषड्भिर्जातिभिः सह ॥ १८ ॥

क्रमाद्वियोजनीयानि विज्ञानादिगुणैः सह।
शक्तेः प्रकृतिरूपस्य षडर्णस्योद्धृतिं शृणु ॥ १९ ॥

पूर्ववत् समुपाहृत्य चान्तिमे द्वयमन्तिमम्।
तत्राद्यं सतृतीयं स्यात् सार्णं(यान्त्यं)सान्त्यंततोन्तिमम्॥

सपञ्चमस्वरं तच्च कुर्याच्चेन्द्वाद्यभूषितम्।
पश्चादेकादशाराणयुक्तं तद्द्विगुणारगम् ॥ २१ ॥

अन्त्यार्णमविमुक्तं तु कुर्यात् पञ्चमषष्ठयोः।
अयं सौदर्शनो मन्त्रः षडर्णः समुदीरितः ॥ २२ ॥

तृतीयः पञ्चमः षष्ठः प्रत्येकं त्र्यक्षरः स्मृतः।
अन्येऽवर्णसमोपेता वर्णाः स्युर्व्यक्षरास्त्रयः ॥ २३ ॥

एष कालात्मनो विष्णोर्विश्वरूपस्य वाचकः।
सतारया च शक्त्यायमष्टार्णः परिकीर्तितः ॥ २४ ॥

क्षेत्रक्षेत्रज्ञयुक्त्या तु यथा प्रकृतिगः पुमान्।
स्थूलसूक्ष्मात्मको ध्येयस्तथा सौदर्शनो हरिः ॥ २५ ॥

दर्शनं परतत्त्वस्य स्यात्तदाख्यानदर्शनम्।
तन्निष्ठानामिदं नित्यमज्ञानतिमिरापहम् ॥ २६ ॥

छिनत्ति संशयं तेषां समु(दु)पायप्रवृत्तये।
रूपान्तरमिदं तस्य संशयच्छेदकारिणः ॥ २७ ॥

नूनं वर्णाश्रमाचारनिष्ठानामाननेन तु।
भिनत्ति दूषकान् जन्तून् स्वकविद्याप्रभावतः ॥ २८ ॥

लाञ्छितानामनेनाशु भक्तानां भावितात्मनाम्।
करस्थो विजयस्तु स्यादिह लोके परत्र च ॥ २९ ॥

किं पुनर्विषये यन्त्रे स्थापिते पूजिते सति।
मुने! मन्त्रप्रभावोऽयमेवमुक्तः परन्तप! ॥ ३० ॥

लक्षणं हृदयाद्यस्य मन्त्रस्यास्य क्रमाच्छृणु।
प्रागेव हृदयादीनां मन्त्रार्णानि यथाक्रमम् ॥ ३१ ॥

विन्यसेद्बीजभूतानि तारान्ते बिन्दुना ततः।
आविसूतां क्रमादन्ते तथा सूर्याक्षरद्वयात् ॥ ३२ ॥

महासुदर्शनज्वालापदयोरन्तिमेऽपि च।
चक्रायेति पदं षोढा शिरोन्तं योजयेत् क्रमात् ॥ ३३ ॥

विज्ञानादिगुणोपेतैः तुर्यान्तैर्हृदयादिभिः।
नमः स्वाहादिजात्यन्तैः प्रागुक्तविधिना लिखेत् ॥३४॥

ध्येयान्याकारवर्त्तीनि भोगस्थानेषु मूलवत् ।
वर्णभूषणवस्त्रास्त्रभुजसंस्थानचेष्टितैः ॥ ३५ ॥

वर्मास्त्रेज्ञेयमन्त्रस्य चरमार्णद्वयं स्मृतम् ।
नमो नारायणायेति स्यादष्टार्णं सतारकम् ॥ ३६ ॥

अस्य साङ्गान्युपाङ्गानि मन्त्रार्णैर्बिन्दुभूषितैः ।
चरमार्णेन शेषाणि चरणान्तान्यपि क्रमात् ॥ ३७ ॥

गुणैश्च हृदयाद्यैश्च तुर्याद्यैर्जातिभिस्सह ।
स्वरूपं षोडशार्णस्य मन्त्रस्य प्रागुदीरितम् ॥ ३८ ॥

हृदयादिपदान्तानि कल्पनीयानि पूर्ववत् ।
तत्र द्वादशमं बीजं हुंफट्स्वाहान्तमुच्चरेत् ॥ ३९ ॥

विभोर्वराहवक्त्रस्य मन्त्रमानुष्टुभं शृणु ।
स्वराद्यं पञ्चमं वर्णमेकीभूतं समं पुरा ॥ ४० ॥

प्राग्वर्णमेवमुद्धृत्य जातिमाद्यां समाहरेत् ।
अरान्तं तत् तृतीयं च तदन्ते नेमिपञ्चमम् ॥ ४१ ॥

नाभ्येकादशमोपेतमरषोडशकं ततः ।
वराहरूपाय पदं तदूर्ध्वं व्याहृतित्रयम् ॥ ४२ ॥

पतये पदमन्तेऽस्य भूपतित्वमनन्तरम् ।
मे देहीति ततः पश्चाद्दापयेति पदं ततः ॥ ४३ ॥

शिरसा सह मन्त्रोऽयं द्वात्रिंशार्णः प्रकीर्तितः ।
अङ्गानि कल्पयेदस्य विभक्तैः पञ्चधा पदैः ॥ ४४ ॥

क्रमशः सप्तभिः षड्भिः सप्तभिश्चाथ सप्तभिः ।
पञ्चभिर्वर्णसंभूतैः प्रणवाद्यैर्गुणोत्तरैः ॥ ४५ ॥

हृदयाद्यस्त्रपर्यन्तैस्तुर्यान्तैर्जातिभिः सह ।
अङ्गक्लृप्तिरियं प्रोक्ता मन्त्रस्यास्य सुलोचन! ॥ ४६ ॥

शक्तिः स्वाहास्य भूर्बीजं परिज्ञेयं ततोपरि ।
मन्त्रं नृसिंहरूपस्य प्राक्सङ्ख्यार्णं समुच्चरेत् ॥ ४७ ॥

पुरो दयाद्यं अग्रान्तं नाभ्यर्णान्ताद्यसंयुतम् ।
कवीनां मध्यमं, पूर्वं रमायाः, संमतान्तरम् ॥ ४८ ॥

स्वाहान्तं, विष्टराद्यं च, कृष्णान्तं चोरुपूर्वकम् ।
नाभिपञ्चदशार्णेन संयुतं, तदनन्तरम् ॥ ४९ ॥

पूजान्तं, लोर्घ्वकं वाद्यमनन्तान्तं सबिन्दुकम् ।
सहस्राद्यं, अपूर्वान्तं, सर्वतोन्तमतः परम् ॥ ५० ॥

मुकुटाद्यं, मुखान्तं च, नेम्याद्यर्णसमन्वितम् ।
किन्नरान्तरमादाय कच्छपाद्यर्णोपरि स्थितम् ॥ ५१ ॥

अस्यन्तं, बिन्दुसंयुक्तं, हरेराद्यं, समं, ततः ।
गंभीरमध्यं धिषणमध्यमं कर्षणान्तिमम् ॥ ५२ ॥

नाभ्यन्ताद्येन संयुक्तं, ततो भद्राद्यमेव च ।
उच्चिद्रान्तमनुस्वारं अमृताभ्यन्तरं, द्विधा ॥ ५३ ॥

तयोरन्तेऽमृतान्तं स्यात् वायुं तस्योपरि स्थितम् ।
ततोऽग्न्यन्त्यं रमान्तं च रम्यान्तं हं समुद्धरेत् ॥ ५४ ॥

एवमानुष्टुभो मन्त्रः कीर्तितो नृहरेः परः ।
पञ्चमं सस(त)कान्ताद्यं बीजमस्य प्रकीर्तितम् ॥ ५५ ॥

शक्तिश्चैवं सविज्ञेयमिन्दुपूर्वं सबिन्दुकम् ।
पादैश्चतुर्भिः, सर्वैश्च प्रणवाद्यैरनुक्रमात् ॥ ५६ ॥

पञ्चाङ्गान्यस्य मन्त्रस्य हृदयादीनि कल्पयेत् ।
पादान्ते योजयेदेतानन्तात्मनः उच्यते ॥ ५७ ॥

ततः प्रियात्मने इति, ज्योतिरात्मने इत्यपि ।
तुर्यो मायात्मने इति मन्त्रे चन्द्रात्मने पदम् ॥ ५८ ॥

ज्ञानादिहृदयादीनि जात्यन्तानि यथापुरा ।
पातालनृहरेर्मन्त्रश्चाष्टाष्टाक्षर उच्यते ॥ ५९ ॥

क्रमात् स्वरान्तपूर्वाभ्यां युक्तं प्रथ्यर्णमुच्चरेत् ।
अरद्विदशकं पश्चात् नेम्याद्यं प्रोतमोस्वरात् ॥ ६० ॥

अरान्तं च तृतीयं च तदन्ते नेमिपञ्चमम् ।
नाभ्येकादशमोपेतमक्षरं षोडशारगम् ॥ ६१ ॥

[ बिन्दुयुक्तं ततः शान्तहरेरेखाभिरन्वितम् ।
कुशेशयान्तमग्नीति च तदन्ते नेत्र पूर्वकम् ॥ ६२ ॥

त्रातुराद्यं यशाद्यं च साद्यं पर्वतमध्यमम् ।
अष्टारमं समादाय नेमिपञ्चकसंस्थितम् ॥ ६३ ॥

रविनेमिपदं पश्चाच्छान्ताद्यं यमलादिकम् ।
द्विनवारं च सान्तं च द्वयमेतद्विधोच्चरन् ॥ ६४ ॥

अरेकविंशं षष्ठं च द्विकमेतत्तथोच्चरन् ॥ ६५ ॥
नेमितृतीयमक्षान्तं भवेतां पूर्ववद्द्विधा ॥ ६६ ॥]
क्रमेण भूषयेदेतमन्ते वर्मास्त्रशीर्षकैः ॥ ६७ ॥
पातालन्नृहरेर्मन्त्रः चतुष्पञ्चार्णकः स्मृतः ॥ ६८ ॥
बीजमाद्यक्षरं प्रोक्तं शक्तिः स्वाहा च सानुगा ॥ ६९ ॥
अङ्गानि कल्पयेत् क्षार्णैः पूर्ववत् स्वरभूषितैः ॥ ७० ॥
अन्ते बिन्दुसमोपेतैः प्रणवाद्यैरनुक्रमात् ॥ ७१ ॥
ज्ञानाद्यस्त्रावसानैश्च तुर्यान्तैर्हृदयादिभिः ॥ ७२ ॥
पूर्ववत् समुपेतानि नमः स्वाहेति जातिभिः ॥ ७३ ॥
नारसिंहमथाष्टार्णमन्त्रं सर्वार्थसिद्धिदम् ॥ ७४ ॥
नमसः प्रणवाद्यस्य नरेत्यर्णमथान्तिमे ।
सिंहायेति पदान्तोऽयं नृसिंहाष्टार्ण ईरितः ॥ ७५ ॥
क्ष्रौं बीजमस्य नाभ्यर्णस्तृतीयः शक्तिरुच्यते ।
कल्पयेद्धृदयादीनि बीजेनैव यथा पुरा ॥ ७६ ॥
क्रमशः केशवादीनां मन्त्राणां लक्षणं शृणु ।
नवमं चाष्टमं नेमावराद्यं मातृकान्तिमम् ॥ ७७ ॥
त्रिधैकैकं क्रमात् कृत्वा बीजद्वादशकं यथा ।
पौनःपुन्येन सर्वेषां बलवान् योजयेदधः ॥ ७८ ॥
नाभिषष्ठस्वरोर्ध्वस्थानङ्कयेद्बिन्दुनोपरि ।
तारादिहृदयान्तानि संज्ञाभिस्तुर्यया सह ॥ ७९ ॥
केशवः प्रथमो वाच्यस्ततो नारायणः परः ।
माधवश्चैव गोविन्दो विष्णुश्च मधुसूदनः ॥ ८० ॥
त्रिविक्रमो वामनाख्यः श्रीधरः पद्मलोचनः ।
हृषीकेशः पद्मनाभो दामोदर इति श्रुतः ॥ ८१ ॥
बीजैर्दीर्घस्वरोपेतैः प्राग्वदङ्गानि कल्पयेत् ।
तेषां श्रियादिकान्तानां शृणु मन्त्राननुक्रमात् ॥ ८२ ॥
मातृकान्त्यत्रयं क्षाद्यं चतुर्धा प्रस्तरेत् पुरा ।
विष्वकूसुयोन्यान्यर्णानि त्वधोभागे यथाक्रमम् ॥ ८३ ॥

अग्न्यम्बुपृथिवीवारिवह्निभूज्वलनाः क्रमात् ।
वारिद्वयं च सोमं च पार्थिवद्वितयं ततः ॥ ८४ ॥
योजयेदनलं वर्णं षट्स्वस्ताष्टसु मूर्धनि ।
अधोनचन्द्राद्वयोः सर्वेषां चोर्ध्वतः पुनः ॥ ८५ ॥
स्वरशक्त्या समेतेन नाभ्यन्ताद्येन भूषयेत् ।
स्वरजात्यादियुक्तानि बीजानि हृदयादयः ॥ ८६ ॥
वह्निश्चक्रगदाशार्ङ्गखड्गाद्यैर्दिक्षु भेदिताः ।
विष्णवो वासुदेवाद्या एतेषां वाचकान् शृणु ॥ ८७ ॥
आद्ये चान्ते स्वरे नाभौ समुद्धृत्य सतारके ।
पूर्वं चक्रधरायेति संज्ञया विष्णवे नमः ॥ ८८ ॥
अन्ये गदाधरायेति तृतीये शार्ङ्गधारिणे ।
खड्गधारिण इत्यन्ते चतुर्थस्य नियोजयेत् ॥ ८९ ॥
द्विषट्कार्णेन चोद्दिष्टा विष्णूनां वाचकाः पृथक् ।
साङ्गान्युपाङ्गान्येतेषां मन्त्राद्यैः प्राग्वदाचरेत् ॥ ९० ॥
बीजानि यानि विष्णूनां विलोमेन स्वरान्तिमान् ।
तान्युक्तानि हृषीकेशव्यूहानां समुदीरिताः ॥ ९१ ॥
जनार्दनानां वक्ष्यन्ते मन्त्राः प्राच्यानलान्तरात् ।
इकारादीनि चत्वारि चैकारादीन्यनुक्रमात् ॥ ९२ ॥
कुर्यात् प्रणवपूर्वाणि तेषामन्ते यथा पुरा ।
पूर्वं दण्डधरायेति सर्वेषां नमसा न्यसेत् ॥ ९३ ॥
हृदादिचरणान्तानि मन्त्राणैस्तु यथा पुरा ।
नृसिंहकोडयोर्मन्त्रस्ते प्रागेव प्रदर्शितः ॥ ९४ ॥
अन्तस्थाश्च ततोष्टार्णो वर्णान्ते च स्वरा हलः ।
सुप्रसिद्धाः समाख्यातास्त्वपराङ्क निबोध नु ॥ ९५ ॥
सुदर्शनषडर्णस्य प्राकूस्थमर्णचतुष्टयम् ।
पुराहृत्य ततः पश्चात्तस्त्राद्ये चलान्तिमे ॥ ९६ ॥
नेमिस्थं पञ्चमं वर्णं अरषोडशकोपरि ।
नेमिनाभ्योस्तृतीयं च वियोज्य तदनन्तरम् ॥ ९७ ॥
नेम्याद्यं सानलं द्वान्तं नाभ्यन्तास्तद्द्वयाङ्कितम् ।
पिण्डमेतन्नृसिंहस्य विद्युद्वर्णसमन्वितम् ॥ ९८ ॥

सिंहान्त्यं हृदयाद्यं च द्विधोद्धृत्य द्वयं ततः ।
वर्मास्त्रे च शिरो जात्यायुक्तेयं द्विनवाक्षरम् ॥ ९९ ॥

अस्यैव दशामो वीजं हनाद्यं शक्तिरुच्यते ।
षडङ्गमस्य ताराद्यं हृदयाद्यं क्रमाच्छृणु ॥ १०० ॥

ओंकाररहितं वीजं षोढा कृत्वा यथा पुरा ।
स्वरैराद्यैर्विसर्गान्तैर्नपुंसकविवर्जितैः ॥ १०१ ॥

योजयित्वा तदूर्ध्वं तु पदानि क्रमशो न्यसेत् ।
चक्रराजपदं पूर्वं ज्वालाचक्रपदं ततः ॥ १०२ ॥

जगच्चक्रपदं पश्चादसुरान्तकसंज्ञितम् ।
पञ्चमं दीप्तचक्राख्यमन्ते माहासुदर्शनम् ॥ १०३ ॥

चतुर्थ्यन्तं नियोज्यान्ते पश्चाज्ज्ञानादिभिस्तथा ।
तुर्यान्तैर्हृदयाद्यैश्च स्वाहाद्याभिश्च जातिभिः ॥ १०४ ॥

द्वादशार्णं नृसिंहस्य वीजं पूर्वं मुने ! शृणु ।
नेमिसप्तममादाय प्रागरार्णोपलक्षितम् ॥ १०५ ॥

युक्तं स्वरान्त्यपूर्वाभ्यां कुर्याद्वीजं परं त्विदम् ।
नतिप्रणवमध्यस्थमेकवीरं महाप्रभम् ॥ १०६ ॥

सर्वेषां सिंहमन्त्राणां ध्यानभेदात्मनामिदम् ।
जीवभूतं स्वरूपस्य वाचकं विद्धि कामदम् ॥ १०७ ॥

मूर्तिमन्त्रान् शृणुष्वाथ द्वादशाक्षरमण्डितम् ।
प्रणवं हार्दवीजातिः तुर्यान्तं भगवत्पदम् ॥ १०८ ॥

नारसिंहाय दद्याद्वै पदं पञ्चाक्षरं ततः ।
विश्वत्वात्तन्नृसिंहस्य मन्त्रोयं द्वादशाक्षरः ॥ १०९ ॥

तारान्तस्येद..................दशाक्षरः ।
वक्ष्यन्ते हृदयादीनि नेत्रान्तानि यथाक्रमम् ॥ ११० ॥

षोढास्य वीजं ताराद्यमाकारादिसमन्वितम् ।
विन्दुनाङ्कितमेतेषां योजनं प्राग्वदाचरेत् ॥ १११ ॥

अङ्गोपाङ्गमयी व्याप्तिः सवीजैर्द्वादशाक्षरैः ।
सविन्दुभिर्गुणाद्यैश्च कल्प्यं वा नतिभिः सह ॥ ११२ ॥

व्यापकोऽयं नृसिंहस्य मूर्तिभेदगतस्य च ।
साङ्गो मन्त्रः समुद्दिष्टः सर्वाभिमतसिद्धिदः ॥ ११३ ॥

अक्षमध्यगता वर्णा वर्णिताश्चक्रमध्यगाः ।
संज्ञाः सविन्दुप्राग्वर्णा नतिप्रणवमध्यगाः ॥ ११४ ॥

तुर्यान्ताद्दशक्तिसंवस्य जयाद्यस्य तु वाचकाः ।
भीमोग्राभ्यां च भूताभ्यां तथा मन्त्रद्वयं भवेत् ॥

विष्टरेऽभिनिविष्टानां मन्त्राणां लक्षणं शृणु ।
साध्यनामस्वरूपं तु व्यापकं वक्ष्यते पुनः ॥ ११६ ॥

तारान्ते वीजं शक्तिश्च दैवतं तस्य चेत्ततः ।
शान्तिं पुष्टिं च वश्यं च विजयं चैवमादिकम् ॥

द्वितीयान्तं समुच्चार्य कुरुवीप्सान्वितं ततः ।
यच्छ यच्छ पदान्तं वा, प्राक्स्थितैः प्रणवान्तिमैः ॥

अङ्कयेदवसाने च साध्यलक्षणमीरितम् ।
द्विरष्टवर्णं नृहरेर्मन्त्रमानुष्टुभं परम् ॥ ११९ ॥

पूर्वमेव समुद्दिष्टं वाह्ये वायव्यमक्षरम् ।
वर्मास्त्रजातियुक्तं च वाह्नं पार्थिवमक्षरम् ॥ १२० ॥

विस्तरेण पुरा प्रोक्तं तस्मान्नेह प्रतन्यते ।
वक्ष्यते यन्त्र धर्तॄणां नागानां क्षाद्यमान्वितम् ॥

विन्दुस्वरान्वितं वीजं प्रणवाद्यं ततः परम् ।
युक्तं प्रत्येकसंज्ञाभिस्तुर्यान्ताभिर्नमोऽन्तिमम् ॥

इति शेषादिनागानां मन्त्रा सम्यगुदीरिताः ।
शक्त्या सतारया यान्त्रैः सौदर्शनषडक्षरैः ॥ १२३ ॥

एकैकं भेदयेद्वर्णमष्टार्णस्योर्ध्वतोऽप्यधः ।
नारायणाख्यमन्त्रोऽयं कल्पान्तहुतभुक्प्रभः ॥ १२४ ॥

अभिधायाक्षरं पूर्वं चक्राद्यस्त्रगणस्य तु ।
युक्तं वह्निविसर्गाभ्यां, वीजं वा, प्रणवान्वितम् ॥

ततः संज्ञा चतुर्थ्यन्ता योजनीया फडन्तिमा ।
चक्रादिषोडशास्त्राणामिति मन्त्राः प्रकीर्तिताः ॥

ज्ञात्वैवं यन्त्रमाहात्म्यं योऽर्चयेद्विधिपूर्वकम् ।
दिग्वन्ध, वह्निप्राकार, गायत्र्या, वाहनादिकैः ॥

यागोपकरणैर्मन्त्रैर्भोग, दान विवर्जितैः ।
क्रमात् सर्वफलावाप्तिर्मन्त्रसिद्धिश्च जायते ॥ १२८ ॥

दशादिग्बन्धमन्त्राणां वक्ष्यते लक्षणं पुरा।
ओं पूर्वं पुरुषायेति स्वाहान्तं तदनन्तरम् ॥ १२९ ॥
अस्त्रेण बन्धयामीति, स्वाहान्तं च षडक्षरम्।
इति दिग्बन्धमन्त्रोऽयमीरितो दुष्टदोषहृत् ॥ १३० ॥
प्रणवं प्राक् समुद्धृत्य मनुं वाह्निजाययोः।
आयान्तं विन्यसेच्चक्रंअग्निप्राकारसंज्ञितम् ॥ १३१ ॥
कीर्तितां चक्रगायत्रीं शृणु चक्रप्रसादनीम्।
जातिपूर्वं पुरस्कृत्य चक्रायेति समुद्धरेत् ॥ १३२ ॥
द्वितीयं विष्णुगायत्र्यां नृसूक्ताद्यक्षरत्रयम्।
नेत्राभ्यां पदमादाय नेमिपूर्वान्तियोजितम् ॥ १३३ ॥
धीमहीति तदन्ते नो विनिवेद्योऽनिवारितः।
गायत्र्यन्तं समुद्धार्य तदन्ते चतुरक्षरम् ॥ १३४ ॥
सौदर्शनी समुद्दिष्टा गायत्री तारकाक्षरा।
सतारका पुरा चेयं भवेदेकाक्षराधिका ॥ १३५ ॥
तारद्वयं पुरोद्धृत्य परमं पदमुद्धरेत्।
धामेतियस्थितं चाथ नेम्याद्यं द्विनवारकम् ॥ १३६ ॥
द्विदशारगतं वर्णं नाभिपञ्चममूर्धनि।
ततस्तु गृहकाम्ययो इति पञ्चार्णमुद्धरेत् ॥ १३७ ॥
युतं नेमिद्वितीयेन द्विनवारगतं ततः।
षोडशारगतं वर्णं द्वितीयस्वरसंयुतम् ॥ १३८ ॥
नेमिपञ्चमवर्णं च षोडशारगतं पुनः।
नाभिद्वितीयसंभिन्नं नेम्यन्तं तारपश्चिमम् ॥ १३९ ॥
तृतीयस्वरसंयुक्तं तृतीयं नेमिमण्डलात्।
नेम्यन्तमाद्यस्वरोपेतमरान्तं च स्वरान्तरम् ॥ १४० ॥
नेम्याद्यं षोडशारस्थं नेम्यष्टममिकारगम्।
न्यूनविंशारगोर्ध्वं तद्द्विनवाक्षरमूर्धनि ॥ १४० ॥
स्वरं तृतीयं संयोज्य, ततश्च द्विनवारगम्।
पुनर्मन्त्रशरीरेति प्रणवान्तं ततो नमः ॥ १४१ ॥
पुनश्च नमसा युक्तो मन्त्र आवाहनोचितः।
प्रदाने सर्वभोगानां मन्त्रस्ते संप्रकाश्यते ॥ १४२ ॥

प्रणवं पूर्वमुच्चार्य सर्वभोगैककारणम्।
नेम्यन्तं बिन्दुसंयुक्तं त्रिधेदं पदमप्यथ ॥ १४३ ॥
गृहाणेति शिरोऽन्तोयं भोगदानस्य वाचकः।
आवाहने तथार्चायां विसर्जनविधौ तथा ॥ १४४ ॥
प्रणवं पूर्वमुद्धृत्य संबोध्य भगवन्निति।
मन्त्रमूर्तपदं दद्यात् स्वपदं च द्वितीयया ॥ १४५ ॥
आसाद्य क्षमस्वेति प्रणवान्तं समुद्धरेत्।
परप्रयुक्तमन्त्राणां शक्तिह्रासनतत्परः ॥ १४६ ॥
समस्तवीर्यमन्त्राढ्यं मुने! मन्त्रवरं शृणु।
प्रणवं पूर्वमुद्धृत्य प्रणवाद्यं सबिन्दुकम् ॥ १४७ ॥
षड्वर्णस्यास्त्रमन्त्रप्राक्षड्वर्णं प्रणवोज्झितम्।
प्रोक्तस्यार्णद्वयं पूर्वं चक्रराजपदं ततः ॥ १४८ ॥
सर्वशब्दं दहद्वन्द्वपूर्वं दुष्टभयंकरम्।
चिन्तामूलं पदं पश्चाद्धिन्द्धि भिन्धीति वै ततः ॥
द्विधा विदारय पदं (र?) मन्त्रं ह्रासय ह्रासय।
भक्षयेति पदद्वन्द्वं भूतानीति ततः परम् ॥ १५० ॥
त्रासय त्रासयेत्यन्ते वर्मास्त्रे च शिरोन्तिमे।
एकसप्ततिमन्त्रोऽयं शक्तिह्रासाख्य ईरितः ॥ १५१ ॥
मन्त्रमानुष्टुभं वक्ष्ये सर्वेषामभयप्रदम्।
भगवन्निति संबोध्य सर्वेति पदमुद्धरेत् ॥ १५२ ॥
विजयेति पदं पश्चात् सहस्रारेति तत्परम्।
अपराजितेति शरणं पदं त्वामित्यनन्तरम् ॥ १५३ ॥
प्रपन्नोऽस्मीति तत्पश्चाद्द्वितीयान्तश्चश्रीकरम्।
श्रीपदाद्यं ततः पश्चात् सुदर्शनमिति क्रमात् ॥ १५४ ॥
प्रपत्तिरिति विख्याता सर्वपापक्षयंकरी।
वक्ष्ये नृसिंहगायत्रीमपराङ्गस्य पूजने ॥ १५५ ॥
वज्रेति त्र्यक्षरं पूर्वंश्च्छुलायेत्यतः परम्।
आयान्तं तीक्ष्णदंष्ट्रेति विद्महेति पदं ततः ॥ १५६ ॥
वज्रेति त्र्यक्षरस्यान्ते नखायेति च धीमहि।
आद्यं च चरमाद्यं च गायत्र्याः पदमुद्धरेत् ॥ १५७ ॥

सिंहेति सविसर्गं च गायत्र्यन्तं ततो न्यसेत् ।
आचरेदुक्तमन्त्राभ्यामावाहनविसर्जने ॥ १५८ ॥

दिग्बन्धं च सहास्त्रेण प्रागुक्तेन समाचरेत् ।
अन्येषामङ्गमन्त्राणां विनियोगो यथा पुरा ॥ १५९ ॥

इति निगदितमेतन्मन्त्रजालं यथाव-
न्मुखयुगळसमेते यन्त्रराजे निविष्टम् ॥

हृदि बहिरपि भोगैर्यानि योज्यानि तानि ।
प्रकटयतु कदाचित् कष्टबुद्धेः परस्य ॥ १६२ ॥

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे यन्त्रराजमन्त्रोद्धारविधानं नाम चतुर्विंशोऽध्यायः ।

श्रीः

# पञ्चविंशोऽध्यायः ॥

सनकः :—
भगवन्! सम्यगाख्यातं सुदर्शननृसिंहयोः ।
मन्त्ररूपं महायन्त्रं भजतामीप्सितप्रदम् ॥ १ ॥

तस्माद्यजनरूपं च वद सानुग्रहोऽसि मे ।
शाण्डिल्यः :—
हिताय सर्वलोकानां यन्त्रमेतदुदाहृतम् ॥ २ ॥

विधिना पूजितो येन सर्वं तेन समाप्यते ।
मया ते श्रोतुकामाय वक्ष्यते यजनक्रमः ॥ ३ ॥

प्राग्वत्स्नानादिकं कृत्वा प्रविश्य यजनालयम् ।
प्रक्षाल्य पादावाचम्य सोत्तरीयः स्वलंकृतः ॥ ४ ॥

धृतोर्ध्वपुण्ड्रः कुसुमैः द्वास्थानभ्यर्च्य पूर्ववत् ।
कवाटोद्घाटनं कृत्वा प्रविश्याभ्यन्तरे विभुम् ॥ ५ ॥

प्रणिपत्य च गायत्र्या पाणिप्रक्षाळनादिमम् ।
अर्चायां विष्टरे यन्त्रे कृत्वा 'मार्गत्रयं' ततः ॥ ६ ॥

प्रासादं शोधयित्वाऽस्य पुरतः फलकादिके ।
प्रोक्षिते चास्त्रमन्त्रेण संमुखं रुचिरासने ॥ ७ ॥

समासीनः स्वपार्श्वस्थ याशीयं चाधिवासनम् ।
करशुद्धिं स्थानशुद्धिं कृत्वाऽस्त्रेण यथापुरम् ॥ ८ ॥

पाणिभ्यामुक्तमन्त्रेण संयुक्तेनास्त्रमुद्रया ।
पूजास्थानगदान् विघ्नान् बाह्यतोऽदृश्यविग्रहान् ॥ ९ ॥

विरेच्य बन्धनं कुर्यात् दिक्षु चैव विदिक्षु च ।
कवचेनावकुण्ठ्याथ प्राणानायम्य पूर्ववत् ॥ १० ॥

तत्वानि चोपसंहृत्य देहस्थान्यात्मना सह ।
सर्वतत्वविनिर्मुक्तं विग्रहं केवलं ततः ॥ ११ ॥

शोधयेद्धारणाभिश्च शोषणाद्याभिरूर्ध्वतः ।
तुर्याद्यन्ते पदे देवं सुदर्शनतनुं स्मरेत् ॥ १२ ॥

बलात्मनाऽस्य मरुता कवचेन तनुं स्वकाम् ।
शोषयित्वा, दहेद्देहं दक्षांगुष्ठाग्र(देश)पतः ॥ १३ ॥

कल्पान्तपावकज्वाला सहस्रायुतदीधितिम् ।
भावयित्वा शिखामन्त्रं तेन दग्धमनुस्मरेत् ॥

हन्मन्त्रं पूर्णचन्द्राभममृतासारवर्षिणम् ।
वामांगुष्ठाग्रतो ध्यात्वा सेचितं तेन भावयेत् ॥ १५ ॥

विनियुक्तांस्ततो मन्त्रान् धर्माद्यां छोषणादिषु ।
मन्त्रेश्वरे लयं यातानिति सञ्चिन्त्य भावयेत् ॥ १६ ॥

आनन्दामृतसंपूर्णशीतांशुशतसप्रभम् ।
तत्प्रान्तैरमृतौघैश्च बृंहितां भावयेत्तनुम् ॥ १७ ॥

तस्मात्तत्वानि विन्यस्य संहृतानि यथाक्रमम् ।
स्वात्मना तामधिष्ठाय मन्त्रन्यासं समाचरेत् ॥ १८ ॥

अकारादिक्षकारान्तमातृकां मन्त्रमातरम् ।
विन्यसेत् करयोः पूर्वं विग्रहेचक्रमालपन् ॥ १९ ॥

कृत्वैवं व्यापकन्यासमादित्यातपसप्रभः।
दक्षेतरक्रमेणैव शाखासु तलयोरपि ॥ २० ॥

अंगुष्ठादिकनिष्ठान्तमेकैकस्याश्चतुश्चतुः।
एवं द्विविंशकं न्यस्य तलयोर्दशकं ततः ॥ २१ ॥

मध्ये च त्रि(द्विक्) चतुष्के च पञ्चकं पञ्चकं तथा।
प्रणवद्वयमध्यस्थान्येवं न्यस्त्वा करद्वये ॥ २२ ॥

व्यापकन्यासपूर्वं तु स्वशरीरेऽपि विन्यसेत्।
मूर्ध्नः पादतलं यावत् पाणिभ्यां तपनांशुवत् ॥ २३ ॥

व्यापयित्वा ततो न्यासं पृथगेव समाचरेत्।
केशान्ते वक्त्रवृत्ते च नेत्रयोः श्रवणद्वये ॥ २४ ॥

घ्राणरन्ध्रद्वये गण्डद्वये दक्षेतरक्रमात्।
उत्तराधरयोगेन दन्तयोस्तच्छदद्वये ॥ २५ ॥

मूर्ध्नि न्यसेत् स्वरानन्यान् सविसर्गाननन्तरम्।
कवर्गं दक्षिणे बाहौ सन्धिपञ्चगतं क्रमात् ॥ २६ ॥

वामे तथा चवर्गं च पादयोर्दक्षिणादितः।
सन्धिगौ टतवर्गौ च पूर्ववत्तुन्दपार्श्वयोः ॥ २७ ॥

पृष्ठे नाभौ च हृदये पवर्गं धातुसप्तके।
यादिसान्तानि वर्णानि हकारं हृदयान्तरे ॥ २८ ॥

क्षकारं हृदयाकाशे न्यस्यैवं मातृकां पुरा।
ततः शक्त्या षडर्णं तु न्यसेत् करशरीरगम् ॥ २९ ॥

करन्यासं पुराविद्धि तच्छृणुष्व मुनीश्वर!।
पुटीकृतेन ताराभ्यां मन्त्रेणैव सशक्तिना ॥ ३० ॥

नखान्तं मणिबन्धाद्यं प्राग्वत् पाणिद्वयं मृजेत्।
आद्यन्ते तारशक्त्याढ्यैः षड्भिर्वर्णैः सबिन्दुकैः ॥

अङ्गुष्ठादिकनिष्ठान्तं न्यस्त्वा मध्यमपर्वसु।
विन्यसेत् करजाग्रेषु चरमं वर्णमेव च ॥ ३२ ॥

एवमङ्गानि विन्यस्य हृदयादीनि विन्यसेत्।
मूलाग्रपर्वस्वङ्गानि वर्णन्यासक्रमेण तु ॥ ३३ ॥

पाणिभ्यामालभेद्देहमामूर्ध्नश्चरणावधि।
कृत्वैवं व्यापकन्यासमङ्गन्यासं, समाचरेत् ॥ ३४ ॥

मूर्ध्नि वक्त्रे च हृदये नाभौ गुह्ये च पादयोः।
सृष्टिन्यासो भवेदेव स्यादङ्गोपाङ्गवत् स्थितिः ॥ ३५ ॥

पादयोर्गुह्यके नाभौ हृदि वक्त्रे च मूर्धनि।
पादादिश्च शिरोऽन्तस्तु संहृतिन्यास उच्यते ॥ ३६ ॥

हृदि मूर्ध्नि शिखायां तु स्कन्धयोः करमध्यतः।
नेत्रयोर्न्यसनीयानि स्वैर्मन्त्रैरुदितैः क्रमात् ॥ ३७ ॥

हृदयादीनि विन्यस्य पश्चात् पाणितलद्वये।
विन्यसेदस्त्रसंघं च अष्टकं वा द्विरष्टकम् ॥ ३८ ॥

किरीटं कौस्तुभं मालां श्रीवत्सं च यथापुरम्।
दक्षिणोत्तरयोरंसे इच्छाशक्तिं स्वपार्श्वयोः ॥ ३९ ॥

ऊरुमूले मनस्तत्त्वं न्यस्त्वा मन्त्रमयं स्वकम्।
भावयेदहमित्यन्तः सुदर्शनवपुर्हरिः ॥ ४० ॥

गायत्र्या वर्तयेद्बाह्ये स्वात्मानं चक्रमुद्रया।
चक्रज्वालावलिं विप्र! परितो मंत्रवित्तमः ॥ ४१ ॥

भावनाजनितं यागमाचरेदादिचोदितम्।
नियम्य करणग्रामं प्राग्वद् वै ज्ञानगोचरं ॥ ४२ ॥

आसनं कल्पयेन्मान्त्रमामूलाद्धृदयावधि।
आधारशक्तेरारभ्य विद्यावासनपश्चिमम् ॥ ४३ ॥

पुरोक्तं भावयेदूर्ध्वं मन्त्रैश्वर्यं विविग्रहम्।
साधारणमिदं ज्ञेयं सुदर्शननृसिंहयोः ॥ ४४ ॥

पृष्ठभागेऽवतीर्णाभ्यां वहिर्वा हृदयाम्बरे।
विष्टरासनसङ्कल्पकार्यं भावापनोपहृत् ॥ ४५ ॥

हृत्पद्मकर्णिकोर्ध्वस्था शब्दब्रह्ममयी पुरा।
अक्षगर्भगतं नादं नदन्ती मन्त्रगर्भितम् ॥ ४६ ॥

शक्तिः शान्तात्मनो विष्णोः साधकैश्च वशीकृता।
शब्दशक्तिः समुद्गीता विष्टराकैसमध्यगा ॥ ४७ ॥

वर्णत्वं समनुप्राप्ता सन्ततिर्नादरूपिणी।
अकारादिक्षकारान्तवर्णपारावसानतः ॥ ४८ ॥

निस्तरङ्गे परे व्योम्नि कलनारहिते शुभे।
तुर्यातीते पदे देवः प्रकाशानन्दबृंहितः ॥ ४९ ॥

सद्ब्रह्मवासुदेवाख्यः पूर्णषाड्गुण्यविग्रहः ।
महाविभूतिसंपूर्णः सर्वशक्तिमयः प्रभुः ॥ ५० ॥

संशान्तपरमानन्दस्वरूपः सततोदितः ।
शङ्खचक्राङ्कितनुर्वरदाभयपाणिकः ॥ ५१ ॥

सहस्रसूर्यसङ्काशः सहस्रेन्दुगभस्तिमान् ।
स्वप्रकाशैः किरीटाद्यैः नूपुरान्तैरलंकृतः ॥ ५२ ॥

श्रीवत्सकौस्तुभोपेतो वनमालाविराजितः ।
पीतकौशेयवसनः प्रसन्नवदनेक्षणः ॥ ५३ ॥

दन्तपंक्तिशशिज्योत्स्नाविद्योतितदिगन्तरः ।
सेवितश्च श्रिया पुण्या विशेषाभ्यां समन्ततः ॥

शङ्खचक्रादिदिव्यास्त्रैः सर्वतत्त्वात्मकैः सदा ।
विज्ञानभावनाभाव्यो निराशीःकर्मकारिभिः ॥ ५५ ॥

अभ्यासयोगसिद्ध्यर्थं बहिरन्तश्च नित्यशः ।
बिम्बपीठादिकल्पेषु वृत्तिस्थानेषु तेषु च ॥ ५६ ॥

षड्व्यूहादिरूपेण पूजितः सर्वमृच्छति ।
ततो नित्योदितस्तस्मात् प्रकाशाह्लादलक्षणात् ॥

साधर्म्यलक्षणं प्राप्य भक्तानुग्रहकाम्यया ।
क्रियाशक्तिमधिष्ठाय जगदुद्धरणोद्यताम् ॥ ५८ ॥

चिदंशं प्रादुरभवत् प्रकाशानन्दबृंहितम् ।
दुर्दर्शनं प्रकाशेन साधुसन्तापकारिणाम् ॥ ५९ ॥

आह्लादेन स्वभक्तानां सुदर्शनमितीरितम् ।
षडध्वोर्ध्वगतो देवो भूत्वा कालानलात्मना ॥ ६० ॥

भक्तानां दुरितं हन्ति चिन्तितो नृहरिर्हरिः ।
येन संपूजिताचेतौ तेजसातीव निर्भरौ ॥ ६१ ॥

स तेजस्वी च भू( पू )तात्मा सर्वत्र च सुखी भवेत् ।
ज्ञात्वैवं मन्त्रसद्भावमाराध्ययजनक्रियाम् ॥ ६२ ॥

परस्माद्भगवत्तत्त्वाच्चित्स्वरूपं परात्मकम् ।
मनसा मन्त्रमुच्चार्य विष्टरोर्ध्वेऽवतार्य च ॥ ६३ ॥

वाच्यवाचकभावेन द्विधा सौदर्शनं वपुः ।
साकारो वाच्यरूपः स्यान्मन्त्ररूपस्तु वाचकः ॥ ६४ ॥

प्रशस्तौ तावुभौ स्यातां परापरविभागतः ।
वाच्यरूपं परं विद्यादपरं मन्त्रयन्त्रितम् ॥ ६५ ॥

ज्ञात्वैवमुदयं कुर्यात् परसूक्ष्मादिभावनम् ।
ज्योतीरूपं परं विद्यात् नादान्ताह्लादलक्षणम् ॥

चिच्छक्तिलक्षणं सूक्ष्मं शिरःपाण्यादिगर्भितम् ।
लिङ्गमात्रं प्रकाशाढ्यं भाविप्रसरधर्मि यत् ॥ ६७ ॥

सः स्थूलो व्यक्तरूपः स्याद्वाच्यवाचकरूपयोः ।
मन्त्राणां शब्दरूपाणां तिस्रोऽवस्थाः परादिकाः ॥

पश्यन्त्याद्याः परिज्ञेयाः स्वं परं त्वपरं त्रिधा ।
आद्यस्तत्रैव तारः स्याद्द्वितीयो बीजसंज्ञितः ॥ ६९ ॥

तृतीयः पदमन्त्राद्यस्त्विति भाव्यो भवेन्नृभिः ।
सान्निध्यं संमुखीभावः सन्निरोधोऽपि पूर्ववत् ॥ ७० ॥

मन्त्रन्यासादिकं कृत्वा लयभोगार्चनं तथा ।
सकर्णिकेसरदलसंयुक्तेष्वम्बुजेष्वपि ॥ ७१ ॥

भूपुरादिषु सर्वत्र मन्त्राणां लिङ्गरूपिणाम् ।
मूर्तीनां केशवादीनां मन्त्राणामर्चनं ततः ॥ ७२ ॥

प्रागुक्तैर्विधिवन्मन्त्रैर्भोगयागवदाचरेत् ।
शिरोर्ध्वे देवदेवस्य भावयेदिन्दुमण्डलम् ॥ ७३ ॥

तस्मुतैरमृतौघैश्च कुर्यादर्घ्यादिकल्पनम् ।
षोडशैरुपचारैर्वा द्विगुणैर्वा चतुर्गुणैः ॥ ७४ ॥

राजवत्प्रीणनं कृत्वा होमं कुर्यात्तथाविधम् ।
नाभिचक्रकृते कुण्डे षट्कोणे गुणमेखले ॥ ७५ ॥

निर्मथ्य भावनोद्भूतामरणिं ज्ञानरज्जुना ।
समुत्पाद्य च चिद्वह्निं सर्वसंस्कारसंस्कृतम् ॥ ७६ ॥

सदैवोर्ध्वशिखं दीप्तं शुद्धं भगवदात्मकम् ।
नाभिकुण्डगतं ज्ञात्वा तेजः शक्त्युपबृंहितम् ॥ ७७ ॥

हृदब्जगगनोर्ध्वस्थं मूलमन्त्रं समुच्चरेत् ।
प्लुतध्यानसमोपेतं तस्यान्तेऽस्मिन् लयं गते ॥ ७८ ॥

निस्तरङ्गे परे प्राप्ते ब्रह्मस्थं पूर्णवारिभिः ।
ध्यानस्रुवेण चाहृत्य सन्धिमार्गेऽमृतधारया ॥ ७९ ॥

हृदयादवतीर्णस्य ज्वालाग्रावस्थितस्य च।
मन्त्रनाथस्य शिरसि वसुधारामिव क्षिपेत् ॥ ८० ॥

चिदग्निमेवं सन्तर्प्य ज्वालाग्रावस्थितं प्रभुम्।
हृदब्जकर्णिकान्तस्थं भूयो भाव्याहुतिक्रियाः ॥ ८१ ॥

समाप्य विधिवत् पूजामपराङ्गे हरिं स्थितम्।
स्वमन्त्रेणार्चयित्वाऽथ होमान्तं भावनामृतैः ॥ ८२ ॥

तदन्ते यन्त्ररूपस्य मुखद्वयगतस्य च।
यन्त्रसंस्थस्य पूर्णान्तं कृत्वा सन्तर्पणं ततः ॥ ७३ ॥

विष्टरस्थं यजेद्ब्राह्मे त्वर्चारूपमुखद्वये।
मूर्तैरर्घ्यादिभिर्भोगैर्विधिवत्समुपाहृतैः ॥ ८४ ॥

प्राग्वदर्घ्यादिपात्राणां पूजनं स्थापनं तथा।
देहविन्यस्तमन्त्राणां गर्भद्वारस्थपूजनम् ॥ ८५ ॥

धातारं च विधातारं प्रचण्डं चण्डपूर्वकम्।
पूर्वपश्चिमयोर्बाह्यमण्टपद्वारयोः क्रमात् ॥ ८६ ॥

जयं च विजयं चाथ सुभद्रं चाथ भद्रकम्।
सूर्याचन्द्रमसौ पूज्यौ दक्षेतरगवाक्षयोः ॥ ८७ ॥

कृत्वैवं द्वारयागं तु प्रविश्याभ्यन्तरं ततः।
आधारशक्तेरारभ्य यन्त्रविष्टरपश्चिमम् ॥ ८८ ॥

मन्त्रमासनमभ्यर्च्य गणनाथादिकं तथा।
प्रतिष्ठितस्य देवस्य कुर्यादावाहनं ततः ॥ ८९ ॥

बिम्बहृत्कमलाकाशाच्चैतन्यममलं परम्।
प्रकाशानन्दरूपं च नित्योदितमनूपमम् ॥ ९० ॥

कर्णिकामध्यमाश्रित्य निविष्टमनुभावयेत्।
मूलमन्त्रं समुच्चार्य प्रबुद्धं भास्वरं ततः ॥ ९१ ॥

मन्त्रन्यासं ततः कुर्याद्यथा देहे स्वके तथा।
स्थानेषु हृदयादीनि चक्राद्यस्त्रवराणि च ॥ ९२ ॥

भूषणादीनि विन्यस्य मस्तकादेः समानि च।
रत्नराशिप्रकाशानि लयाख्येनार्चयेत्ततः ॥ ९३ ॥

कर्णिकादिषु यन्त्रस्थान् भास्वद्रूपांस्तथैव च।
आसनाद्यैश्च सांस्पर्शैर्हृदयंगमपश्चिमैः ॥ ९४ ॥

प्रीणयित्वा विधानेन मूर्तिसङ्घसमन्वितम्।
जप्त्वा मन्त्रं यथाशक्ति तन्निवेद्य यथा पुरा ॥ ९५ ॥

पाश्चात्ययन्त्रमध्यस्थमेवं नरहरिं ततः।
साङ्गं सपरिवारं च सयन्त्रार्णं समर्चयेत् ॥ ९६ ॥

इति सङ्क्षेपतः प्रोक्तं महायन्त्रार्चनं परम्।
प्रीणयेदग्निमध्यस्थं समिद्भिः प्राग्दीरितैः ॥ ९७ ॥

अभीष्टफलसिध्यर्थं काम्यैरपि विशेषतः।

इति श्रीपाञ्चरात्रे पारमेश्वरसंहितायां क्रियाकाण्डे सौदर्शनमहायन्त्र बाह्याभ्यन्तरयागनिर्णयो नाम पञ्चविंशोऽध्यायः।

---

श्रीः

## षड्विंशोऽध्यायः ॥

सनकः :—

पञ्चरात्रार्थतत्त्वज्ञ! भगवन्! भविनां प्रिय!
मय्यनुग्रहबुद्ध्या त्वमग्निमध्यगतार्चनम् ॥ १ ॥

यथाविधि समाचक्ष्व सर्वसिद्धिप्रसाधनम्।

शाण्डिल्यः :—

मुनीन्द्र! सकलप्राज्ञ! सिद्धिमोक्षप्रदं शुभम् ॥ २ ॥

कुण्डमध्यगतं यागं शृणु वक्ष्ये समाहितः।
होमार्थं मण्टपं कुर्याद्वितत्तं वह्निदिग्गतम् ॥ ३ ॥

धूमनिर्गमनोपेतं गवाक्षगणमण्डितम्।
तन्मध्ये वेदिका कार्या चतुरश्रा चतुष्करा ॥ ४ ॥

द्वादशाङ्गुलमानोच्चा प्रासादासनलक्षणा।
चक्राब्जलक्षणं कुण्डं तदूर्ध्वं कल्पयेच्छुभम् ॥ ५ ॥

मध्ये सूत्रत्रयं दद्यात् प्राक्प्रत्यग्दक्षिणोत्तरम्।
हस्तद्वयेन, तन्मध्ये चतुरश्रं प्रकल्प्य च ॥ ६ ॥

एकादशाङ्गुलायामं सूत्रं संस्थाप्य मध्यतः।
खातार्थं वृत्तमापाद्य बहिरावृतियोगतः ॥ ७ ॥

त्यजेदङ्गुलमोष्ठस्य, द्व्यङ्गुलं कर्णिकायनेः।
त्र्यङ्गुलं केसराणां च, द्व्यङ्गुलं पत्रसन्ततेः ॥ ८ ॥

तदग्रस्याङ्गुलं त्र्यं, नामेरेकाङ्गुलोन्नतम्।
द्व्यङ्गुलं स्यादरक्षेत्रं नेमेरेकाङ्गुलं भवेत् ॥ ९ ॥

द्व्यङ्गुलं मेखलायाः स्यादेवमावृतियोगतः।
मानमाखातपर्यन्तं मेखलान्तं हृदि स्थितम् ॥ १० ॥

कृत्वाऽथ नेमिपर्यन्तं क्षेत्राणां वृत्ततां नयेत्।
मेखला मध्यबाह्यस्था स्यात्तुर्याश्रा यथा भवेत् ॥

समेखलं द्विहस्तं तन्निर्माणमधुना शृणु।
खातार्धमन्तरावृत्तादन्तरं निखनेत् समम् ॥ १२ ॥

त्रिपादमर्धं पादं वा बाह्यतो दशनच्छदात्।
साधयेत् कर्णिकादीनि नेम्यन्तानि यथाक्रमम् ॥

द्वादशांगुलमानोच्चा कार्या स्यात् कर्णिकान्तरा।
विस्तारसदृशोच्छ्राया बाह्यतः केसरान्विता ॥ १४ ॥

यथाभिमतसङ्ख्यानि पद्मपत्राणि साधयेत्।
पद्मसङ्ख्यासमं क्षेत्रं महापद्मसमन्ततः ॥ १५ ॥

केसरभ्रमकुण्डेन पत्राग्रभ्रमणावधि।
पक्षमध्यमसूत्राणि प्राक्प्रत्यग्दिक्षु पातयेत् ॥ १६ ॥

दळमध्यगसूत्रेण दळमध्योर्ध्वगामिना।
दळमध्यप्रसादार्थं लाञ्छयेदर्धचन्द्रवत् ॥ १७ ॥

चन्द्रशृङ्गं च मध्यं च पत्राग्रे सङ्गतानि च।
पक्षसूत्रेण पत्राग्रं जनयेत् कुलिशाग्रवत् ॥ १८ ॥

दळसङ्ख्यासमेतानि स्वक्षेत्राणि च साधयेत्।
विभज्य दळवत् क्षेत्रं सूत्राण्यास्फालयेत्तथा ॥ १९ ॥

अष्टधा वाऽथ षोढा वा कृत्वैकैकं क्रमेण तु।
सन्त्यज्य पार्श्वगौ भागौ बाह्यसूत्रस्य मध्यतः ॥ २० ॥

स्थापिताभ्यां च सूत्राभ्यां गदाभ्यामग्रमध्यमात्।
मत्स्यवल्लाञ्छनं कुर्याद्यावन्मूलभ्रमावधि ॥ २१ ॥

प्रथयो नेमिभूमिष्ठाः कार्याश्चोर्ध्वेऽथवा बहिः।
संसाधयेद्यथामध्यादिष्टकाभिर्मृदा सह ॥ २२ ॥

मेखलावधिपर्यन्तं नीचान्यङ्गानि मीलयेत्।
विस्तारोच्छ्रायतुल्यानि समानि सुदृढानि च ॥ २३ ॥

कर्णिकाकेसरोर्ध्वस्था योनिः पिप्पलपत्रवत्।
जिह्वया संस्पृशन्त्योष्ठं कार्या योन्युपमाश्रिता ॥ २४ ॥

केसरावनिमाक्रम्य पृष्ठतोर्ध्वाङ्गुलेन तु।
पार्श्वयोर्मध्यसूत्रस्य बालचन्द्रद्वयोपमा ॥ २५ ॥

प्रोन्नता कर्णिकाभूमेः पृष्ठतश्चाङ्गुलेन तु।
आमूलादग्रपर्यन्तं क्रमान्निम्ना गजोष्ठवत् ॥ २६ ॥

कोणेषु चैवं कुण्डस्य कार्यं शङ्कचतुष्टयम्।
एवमेतत् समुद्दिष्टं बहुधा मानतो भवेत् ॥ २७ ॥

आद्वादशाङ्गुलान्मानादेकैकाङ्गुलवर्धनात्।
द्विचतुर्हस्तपर्यन्तमेकाशीत्यधिकं शतम् ॥ २८ ॥

एतेष्वेकतरं प्रोक्तमन्येषामेवमेव हि।
तत्साधनं विहा(धा?)य तत् अङ्गव्यूहं प्रकल्प्य च ॥

ततो यथोचितस्थाने होमद्रव्याणि विन्यसेत्।
संस्कृत्य विधिवत् कुण्डं वह्निमुत्पादितं तथा ॥ ३० ॥

संस्कृताज्यस्य विप्रुड्भिः संस्पृशेदिन्धनादिकम्।
सन्तर्पणं तथाग्नेश्च तस्मिन्मन्त्रासनादिकम् ॥ ३१ ॥

यन्त्रविष्टरसंस्थानमन्तराह्वनं तथा।
हृदयादवतारं च महायन्त्रस्य विष्टरे ॥ ३२ ॥

समिद्भिश्चाथ नित्याभिः काम्यैश्च हवनं तथा।
स्विष्टकृद्धवनं चाथ प्रायश्चित्ताहुतिं त्वपि ॥ ३३ ॥

